# निवेदना।

अथ **श्रीकृष्णानन्दसरस्वती**प्रणीतं **सिद्धान्तसिद्धाञ्जनं** नाम कश्चिद् वेदान्तग्रन्थः। सिद्धान्तानां सिद्धाञ्जनमिव सिद्धाञ्जनं सम्यग्दर्शनसाधनमिति तथा व्यपदिश्यते। अद्वैतसिद्धान्तसिद्धाः परमार्थाः परोद्भावितनानादूषणनिराकरणपटुभिर्युक्तिन्यायोपपत्तिसमन्वितैर्विचारैरिह स्थाप्यन्ते। प्रकरणात् प्रसङ्गाच्च येऽर्था विचारविषयतां गताः, ते विषयानुक्रमण्या सामान्यतो बोद्धुं शक्याः।

अस्य संशोधनाधारभूतौ द्वावादर्शौ। तत्र क. ख. संज्ञः शुद्धस्तालपत्रात्मको द्रमिलग्रन्थलिपिः **वटिवीश्वर**ग्रामवास्तव्यैर्महाविद्वदग्रेसरश्रीस्वामिदीक्षितपुत्रैः श्रीमद्भिः पण्डित**तानन्तनारायण**शास्त्रिभिर्मह्यमुपकृतः, अन्यस्तु क. संज्ञितः **कुम्भकोण**स्थाङ्गलविद्यामन्दिरप्रवक्तृभूतपूर्वैः श्रीमद्भिः एम्. ए. पदाङ्कैः **सुन्दररामार्यैः**। तत्र द्वितीयो ग्रन्थकर्तृशिष्येण तत्रभवता **रामानन्द**यतिना लिखित इत्यवगम्यते—

"सौम्याब्दे मृगभास्करे दिनमणाविन्दोः कला पञ्चमी
पुण्यत्यश्चितपौष्णभे रविदिने लग्ने शुभयावपि।
कृष्णानन्दगुरुप्रसादमहितस्तद्ध्यानधन्याशयो
**रामानन्द**यतिः स्वयं लिखितवान् सिद्धान्तसिद्धाञ्जनम्॥"

इति ग्रन्थान्ते लेखकश्लोकदर्शनात्। लक्ष्यते च महती तत्र जराजर्जरता पत्रेषु, लुप्तानि च कतिपयानि तत्र तत्र पत्राणि। द्वाविमावादर्शौ प्रथममलिख्येतामिव। द्वितीया लिपिर्ग्रन्थकारेण निर्मिता न वेत्यनिश्चयः। उक्तादर्शद्वयाधारेण संशोध्य मुद्रणे आरब्धे **चोलान्तर्गतमन्नार्कुडि**ग्रामवास्तव्याः सर्वशास्त्रविशारदमहामहोपाध्यायश्रीत्यागराजमखीन्द्रपौत्राः श्रीमन्तः पण्डित**यज्ञस्वामिशास्त्रिणः** कस्यचित् **सिद्धान्तसिद्धाञ्जन**ादर्शस्य जीर्णपत्रस्य स्ववशे सत्तां मह्यमवेदयन्, तस्य च देशान्तरगतागतपीडामहता पश्यन्तोऽस्मन्मुद्र्यमाणपत्रेषु तत्संवादविसंवादौ स्वयं परीक्ष्य मह्यं निवेदनीयौ चावोचन्। तथा तयोर्निवेद्यमानयोर्ये पाठभेदा ग. संज्ञितात् तस्मादादर्शादवगताः, ते तत्तत्सम्पुटेषु परिशिष्टतया योज्यन्त इति व्यवस्थाश्रिता। एवं कृतोपकारेषु पण्डित**यज्ञस्वामि**शास्त्रिषु **श्रीमदनन्तनारायण**शास्त्रिषु श्रीम**त्सुन्दररामार्ये**षु चाहमत्यन्तं कृतज्ञतां वहामि। अतिविपुलस्यास्य ग्रन्थस्य चतुर्भिः सम्पुटैः प्रकाशनं ग्राहकाणामनुकूलमिति मत्वा प्रथमः सम्पुटोऽयमिदानीं प्रकाश्यते, अन्यांश्च क्रमेण प्रकाशयिष्यामः।

अस्य ग्रन्थस्य **रत्नतूलिका**भिधानं किमपि व्याख्यानं **भास्करदीक्षितेन** प्रणीतमुपलभ्यते। तस्यामुखे—

"तत् (वेङ्कटपतियज्व)सूनुर्विवृणोत्येष सिद्धाञ्जनकृतिं गुरोः।
सर्वतोमुखयागस्य कर्ता भास्करदीक्षितः॥"

इति दर्शनात्, प्रकरणसमाप्तौ "**श्रीकृष्णानन्दसरस्वती**गुरुचरणारविन्दपरिचरणलब्धसकलविद्यावैशद्यस्य सर्वतोमुखयाजिनो **भास्करदीक्षित**स्य कृतौ सिद्धान्तसिद्धाञ्जनव्याख्यायां **रत्नतूलिका**याम्" इति लेखनाच्च **भास्करदीक्षितस्य सिद्धान्तसिद्धाञ्जन**कर्ता गुरुरिति स्पष्टम् । **भास्करदीक्षित**श्च **तञ्जापुरा**धिपतेः क्रैस्ताब्दीयसप्तदशशतकान्तस्थितस्य **शाहजिराजस्य** समकालिकेषु **तिरुविशैनल्लूरा**ख्यग्रामदायप्रतिग्राहिषु पण्डितेष्वन्यतम इति तद्गुरोरस्मद्ग्रन्थकारस्य सप्तदशशतकोत्तरार्धे जीवितसमयः सम्भाव्यते । सा चेयं सम्भावना रेवतीरविवारयुक्तायां सौम्याब्दमकरशुक्लपञ्चम्याम्. 'सौम्याब्द' इत्याद्युदाहृतश्लोकप्रकाशितायां ग्रन्थलिपिकरणसमाप्तितिथेः १६७० तमक्रैस्ताब्दजनवरिमासीयषोडशदिवसरूपत्वं गणितवता श्रीमता एल्. डि. स्वामिकण्णुपिळ्ळ महाशयेन दृढीकृता ।

अनन्तशयनम्
१६-३-१९१६

**त. गणपतिशास्त्री.**

# सिद्धान्तसिद्धाञ्जनप्रथमभागस्य विषयानुक्रमणी।

| विषय | पृष्ठम् |
|---|---|

# पाठभेदः ।

| पृष्ठे. | पङ्क्तौ. | क ख ग्रन्थपाठः. | ग. ग्रन्थपाठः. |
|---|---|---|---|
| ४१ | ७ | सा॰यत्वस्यावर्जनीयत्वाद् | सा॰यत्वाभावाभिप्रायत्वाद् |
| ,, | १८ | ब्दप्रा | ब्दप्रसिद्धिप्रा |
| ५३ | १८ | र्थत्वा | र्थत्वावेदका |
| ५९ | २० | प्रामाण्य | प्रमाण |
| ९३ | २५ | इति हेत्व | इति कल्पनाहेत्व |
| ,, | २९ | षस्य भे | षस्याभेदन्यायस्य शब्दान्तरा-॰यासादिभे |
| ९४ | १९ | स्य त | स्य तादर्थ्यस्य त |
| ९७ | २० | तक | तकक |
| १०२ | २१ | र्यम् । | र्य युक्तम् । |
| १२५ | १९ | त्ति | त्त |
| १२७ | १७ | नन्दाप्ति | नन्दावाप्ति |
| १३१ | ५ | उत्था | व्युत्था |
| १४३ | २ | क्तिशे | क्तिविशे |

# शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | २२ | षोढा | सोढा |
| ७ | २६ | भवा | भावा |
| ४६ | २ | र्थाभा | र्थत्वाभा |
| ,, | ३ | प्रि | प्रा |
| ७९ | १४ | कार्य | क्र्य |
| ९२ | १८ | (गा ८ भावा) | योगा |
| १०२ | २३ | मपे | मनपे |
| ११६ | २६ | स्य हि | स्येह |
| १२५ | १९ | त्मावो | त्माववो |
| १३१ | ५ | उत्था | व्युत्था |
| ,, | १० | चावृ | च वृ |
| १४३ | ३ | व स्या | व न स्या |

॥ श्रीः ॥

# सिद्धान्तसिद्धाञ्जनं

## श्रीकृष्णानन्दसरस्वतीप्रणीतम् ।

---

गणेशाय नमस्तस्मै यन्मूला मन्त्रमातृका ।
सोऽहमात्मा यतः सोऽपि ता च शक्तिं परां भजे ॥ १ ॥

श्रीपारिव्राज्यसाम्राज्यलक्ष्मीललितमूर्तये ।
वासुदेवयतीन्द्राय गुरवे करवै नमः ॥ २ ॥

जडीकृतजगत्यन्तस्तमस्सम्भेदमर्मणे ।
रामभद्रयतीन्द्राय महते महसे नमः ॥ ३ ॥

जगज्जन्मस्थेमाप्ययनियमसीमादिमगुरु-
र्विचेयो योगेनानिदमुदयवाचामवधिषु ।
प्रकाशानन्दात्मा परिमुषितनिश्शेषकलुष-
स्त्रिभेदातीतो धीनटनचटुसाक्षी विजयते ॥ ४ ॥

स्वालोकक्षणविप्लुतस्वपरधीभेदेऽन्यराजन्यके
माकूतस्मितविभ्रमाञ्चितमुपायान्त्या निजस्यन्दनम् ।
रुक्मिण्या मिषति त्वशेषदिविषद्वर्गे रथारोपण-
व्याजालिङ्गनतो हरेरवतु नः स्तैमित्यमानन्दजम् ॥ ५ ॥

परिचयमुपयामो भारतीपादपद्मे
यदुपनिहितलाक्षापङ्कलक्षण्यमुद्रा ।

प्रणयकलहनम्रे पद्मभूमौलिदेशे
प्रथमशरविलास पञ्चबाणस्य धत्ते ॥ ६ ॥

ये वेदान्तसुधोदधि सुमनसा निश्श्रेयसाय स्वय
निर्मथ्योदहरन्निरूपणगुणावृत्तेन चेतोमथा ।
अद्वैतामृतमासुरानुशयिनाभास्वादनीयेतर *
तानास्माकगुरोरुपैमि भगवत्पादादिमान् देशिकान् ॥ ७ ॥

सम्पद्यन्ते सरसिरुहभूसम्पद. किम्पचाना
लिम्पन्त्यन्त करणमिह यन्नैव नैलिम्पभोगा ।
सम्पत् सा न. समजनि यत' सानुकम्पैरपाङ्गै-
स्त पर्येमि प्रणतिभिरह वासुदेव यतीन्द्रम् ॥ ८ ॥

सन्तः सन्तु सहस्रश. समदृश सर्वप्रियम्भावुका
जागर्ति त्रिजगद्गुरुर्मनसि न श्रीरामभद्रो यमी ।
औदासीन्यमनादृतावधि दया सान्द्रा धुताधिः शम
शब्दब्रह्म पर च यस्य विषये लोकोत्तरं वर्तने ॥ ९ ॥

श्रीपरहंसवतस चतुराननन्व्यदिव्यगतिशीलम् ।
श्रीमत्स्वयम्प्रकाशं परमगुरु नौमि योगीशम् ॥ १० ॥

येन ज्ञानदृगाञ्जिता न रजसा सक्षुभ्य सक्षिप्यते
शश्वत् पश्यति शान्तसन्ततनभ प्रत्यृग्मन्तर्हितम् ।
तृष्णादूषिकया न दुष्यति न वा निद्राति तत्तादृश
कृष्णानन्दसरस्वती वितनुते सिद्धान्तसिद्धाञ्जनम् ॥ ११ ॥

मृषोत्कर्षश्लाघारभसमविषोढा समयिना-
मनारूढ दोषं सदसि परिहस्ये परिहरन् ।
तथापि त्र्य्यन्तप्रवणभगवत्पादसरणौ
यते मादृङ्मन्दप्रकृतिमतिभेदं शमयितुम् ॥ १२ ॥

* पञ्चमीबहुव्रीहि. । इतरदिति वा पाठ ।

पुरोभागी भागी पुरुषपशुतायामगुणवित्
समस्तो नाम स्तादपि किमियता नः सुवचसाम् ।
स चापि स्यादेकः क्वचिदपि गुणज्ञो गुणवता-
मपर्यन्तानन्ता निरवधिरनेहापि भ वान् ॥ १३ ॥

इह मम कृतबुद्धयो निबन्धे
धियमवधाय निगूढभावबन्धे ।
गुणमभिदधतामथागुणं वा
द्वितयमभावविदोदितं दुनोति ॥ १४ ॥

प्रगल्भन्ते येषां प्रकृतिमुषिताशेषकलुषा
धियः शास्त्राम्भोधौ जगति ऋजवस्ते कतिपये ।
ममामीषामञ्चन्मतिमुकुरबिम्बेषु महतां
निबन्धः सन्धत्तामनिशमनुबिम्बव्यतिकरम् ॥ १५ ॥

## उपोद्घातप्रकरणम् ।

इह खलु तावदतीतानेकभवपरम्परासमर्जितसुकृतसम्पदावर्जितभगवदनुग्रहासादितसत्त्वप्रसादतया सम्पन्नविवेकवैराग्यादिसाधनो मात्रयापि दुःखानुषङ्गदविष्ठां पुरुषार्थकाष्ठामभिलषंस्तदुपायं पर्येषमाणो यद्यधीतसाङ्गस्वाध्याय स्यात्, तत एव तदुपायमात्मतत्त्वज्ञानमधिगम्य जिज्ञासते । अथ प्रागेव स्वाध्यायाध्ययनात् प्रव्रजित. स्यात्, ततो यावदुपयुक्तवेदानुवचनादपि तदधिगमे तस्य जिज्ञासा न विरुध्यते। ननु सर्वेषाम् उपनयनप्रभृति समान आचार्यकुले वासः । 'बुद्ध्वा कर्माणि यत् कामयेत, तदारभेत' (आप० ध० प्र. २ ख. २१. सू० ९)इति स्मरणात् । उपकुर्वाणस्य सतो विद्याग्रहणानन्तरमेव प्रव्रज्या युक्ता, न प्रागिति चेद्, न । विद्याग्रहणस्यातदधिकारनिमित्तत्वात् । 'यदहरेव विरजेत्, तदहरेव प्रव्रजेदि'ति वैराग्यमात्रस्यैव तदधिकारहेतुत्वश्रवणात् ।

"यदा मनसि वैराग्य जायते सर्ववस्तुषु ।
तदैव सन्न्यसेद् विद्वानन्यथा पतितो भवेत् ॥"

इति स्मरणाच्च । न च विवेकवैराग्यादेर्विद्याग्रहणानन्तर्यनियमहेतुरस्ति । तस्य सत्त्वशुद्ध्यधीनतया कालनियमायोगात् । न चाश्रमिणामेवैष सत्येव वैराग्ये पारि-

व्राज्यानियम इति शङ्क्यम् । आचार्यकुलादेः प्रव्रज्याधिकाराहेतुत्वेन प्रत्यु-क्तत्वात् । 'ब्रह्मचर्यं समाप्य गृही भवेदि'त्यादिश्रवणस्य च कषायपाकसम्भवा-भिप्रायत्वात् ।

"कषायं पाचयित्वा तु श्रेणीस्थानेषु च त्रिषु ।
प्रव्रजेत्तु परं स्थानं पारिव्राज्यमनुत्तमम् ॥"

इति स्मरणात् । प्राचीनसुकृतैरेव परिपक्वकषायस्य प्रथममेव विवेकवैराग्यादि-समुदये बाधकाभावात् । अन्यथा (सो स्वो)पनयनादूर्ध्वं 'स तानि प्राग्वा त्यजे-दि'ति प्रागुपनयनादपि सन्न्यासविधिविरोधापातात् । यद्येवमविधिपरिगृहीतो वेदान्तो जिज्ञासितोऽपि न फलवदर्थावबोधमाधातुमर्हति । वैधाध्ययनसंस्कारा-भावात् । विशिष्टानुपूर्वीकमकलस्वाध्यायविषयत्वादध्ययनविधेः एकदेशाध्य-यनस्याशास्त्रीयत्वाद्, उपनीताधिकारिहीनत्वाच्च । स्वाध्यायो हि शक्य-सर्वफलार्थतयाध्ययनेन संस्क्रियते, विशेषाभावात्, अन्यथा लोकावगत-कारणादेवाक्षरावाप्तौ तद्विधिवैयर्थ्यप्रसङ्गादिति चेद्, मैवम् । नहि विचारिता-दपि वेदान्ताद् अविधिगृहीतत्वापराधेनार्थतत्त्वज्ञानमेव न जायते । लोकवेद-साधारणसामग्रीकशब्दनिष्पाद्यज्ञानस्वरूपे संस्कारानुपयोगात् । न खल्वाहवनी-यादिसंस्कारः समिदादिदाहेऽप्युपयुज्यते । नापि जनितस्य विज्ञानस्य वैफल्य क्षममुत्प्रेक्षितुम् । अविद्यादिनिवृत्त्यवसानदृष्टफलस्यानुभविकत्वात् । न च शूद्रादेरिव स्वाध्यायग्रहणं प्रव्रजितस्य वेदान्तग्रहणं दुरितायेति प्रमाणमस्ति, येन तद्दुरितमलीमसे चित्तसत्त्वे ज्ञानमेव नोदीयेत[1] । 'नाध्येतव्यं न वक्तव्य-मि'ति निषेधस्य च वैधानुपयुक्ताध्ययनप्रवचनविषयत्वात् । यद्वा 'सर्वेषु वेदे-ष्वारण्यमावर्तयेदुपनिषदमावर्तयेदि'ति प्रव्रजितस्योपनिषदध्ययनं पृथग्विधिविधे-यमस्तु । न च परिव्रजतः स्वाध्यायविधिप्रापितवेदत्यागे विहिते प्रतिप्रसवो-ऽयम् उपनिषदध्ययनस्य, न विधिः आवर्तयेदिति गृहीतस्य गुणनाभिधानादिति

---

१ विगृ', २ 'ष्वावर' क पाठः

---

[1] 'ईङ् गतौ' इति धातुः ।

वाच्यम् । सर्वेषु वेदेष्विति विशेषणात् । न च स्वाध्यायविधिः स्वपदोपादाने सति सर्ववेदविषयो भवितुमर्हति । न चानधीतानामावृत्तिः सम्भवति । न च सर्ववेदाध्यायिविषयमिदं सर्वेषु वेदेष्विति, 'वेदानधीत्य वेदौ वे'त्यादिस्मरणादिति वाच्यम् । इतरस्योपनिषदावृत्तिप्रतिप्रसवाभावप्रसङ्गात् । उपनिषदमावर्तयेद् यदि कश्चित् सर्ववेदाध्यायी स तु सर्वेषु वेदेष्विति विभागकल्पनागौरवाच्च । न च सर्वेषु वेदेषु यथास्वमुपनिषदमावर्तयेदित्यर्थः, विशेषणवैयर्थ्यादेव । उपनिषदमावर्तयेदित्येव तस्य तस्य स्वस्वाध्यायोपनिषदावृत्तिसिद्धेः । तस्मात् 'सर्वेषु वेदेषूपनिषदमधीयीते'ति विधिरेवायमधिगम्यते । न च वाक्यभेदः उपनिषदमधीयीत, ता च सर्ववेदगतामिति । 'सर्ववेदेष्वधीयीते'त्येव विधाने सति आक्षिप्तसामान्यस्योपनिषदमिति विशेषोपसंहारमात्रत्वात् । 'सा वैश्वदेवी'त्यादौ आमिक्षेत्यादिवत् । न चाशक्यार्थविधानम् । न खलु सर्वासु शाखास्वित्याह । सर्वेषु वेदेष्विति तु प्रतिवेदमेकैकोपनिषदध्ययनेऽपि समाप्यते । अथवा 'सर्ववेदगतयोपनिषदाधीयीते'ति नित्ये विशिष्टविधौ न कोऽपि दोष इति । अपिच ब्रह्मविद्यार्थस्योपनयनमपि तत्र तत्र श्रूयमाणम् उपनिषदध्ययनविधिं स्वाध्यायविधिव्यावृत्तं तदेकदेशविषयम् अवष्टभ्नाति । न चैवं स्वाध्यायविधिना अधीतवेदस्यापि प्रव्रजितस्य पुनरुपनयनोपनिषदध्ययने प्रसज्येयातामिति दोषः । इष्टत्वात् । 'उप त्वायानी'त्यादिलिङ्गदर्शनात् । न चाधीतवेदार्थावधारणार्थमेवेदमुपनयनमिति नियन्तुं शक्यम् । विशेषहेत्वभावात् । न चोपनयनस्यानेकध्यकल्पनादोषः । आगमिकार्थस्य यथागमं प्रतिपत्तव्यत्वात् । 'महाशाला महाश्रोत्रिया' इति प्रक्रम्य 'तान् हानुपनीयैतदुवाचे'ति ब्रह्मविद्यार्थं पृथगुपनयनप्राप्तिदर्शनात् । 'नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीते'ति तदनेकत्वानुगमाच्च । तस्माद् युक्तं प्रागध्ययनादपि प्रव्रजितस्य वेदान्तमात्राध्ययनादपि ब्रह्मजिज्ञासेति । तदेतदाह भगवान् भाष्यकारः—

"धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः ।"

इति । यदि स्वाध्यायविध्यध्यापितसाङ्गस्वाध्यायः, तदा कश्चिद् विचार्य धर्ममनुष्ठाय तत्प्रसादलब्धविवेकादिसाधनो ब्रह्म जिज्ञासते । कश्चित्तु स तादृश एव प्राचीनसुकृतसम्पदासादितविवेकादिः प्रथममेवानुपयोगादनपेक्ष्य धर्मजिज्ञासां ब्रह्मजिज्ञासामेवारभते । अन्यः पुनरुत्कटतमसुकृतसम्भारपरिपाकवशादनधीतवेद एव

विवेकादिसम्पत्त्या निरस्तसमस्तैषणो निश्रेयसीयस्तदुपायमन्विच्छति । स सर्वोऽपि पृथगुपनिषदध्ययनमालम्ब्य विशेष्यतेऽधीतवेदान्तस्येति । अन्यथा हि न वक्तव्यमधीतवेदान्तस्येति । स्वाध्यायविधिप्रवर्तितस्यैकदेशाध्ययननिष्ठानायोगात् । जिज्ञासालम्बनस्य च योग्यतया वेदान्तस्य सन्निधिलभ्यत्वात् । अतो नायमर्थः — यदि कश्चिदनधीतवेदान्तः, स धर्म जिज्ञासताम्, अधीतवेदान्तस्य तु तामनपेक्ष्य ब्रह्मजिज्ञासोपपत्तिरिति । एतेन यत् केनचिदत्र प्रलपितं — 'वेदान्तमात्राध्ययनमशास्त्रीयम् । कृत्स्नाध्ययने तु धर्मजिज्ञासाप्राथम्यम् अध्ययनक्रमादिने'ति, तत् सम्प्रदायाज्ञानमूलतया निरस्तम् । धर्मजिज्ञासाप्राथम्य हेतवश्चाग्रे निरसिष्यन्ते । यत्तु एव सुकृतातिशयादेव धर्मजिज्ञासानपेक्षावद् ब्रह्मजिज्ञासानपेक्षापि किं न स्यादिति । तन्न । अतीतभवनिष्पादितसकलब्रह्मविचारस्य प्रतिबन्धक्षये सहजसिद्धज्ञानस्य वामदेवादेरिव विचारानपेक्षत्वेऽप्यक्षतेः । अतादृशस्य ज्ञानार्थतयैव ब्रह्मविचारापेक्षणात् । नहि स्वर्गादिवद् धर्मैकसाध्यं ब्रह्मज्ञानम् । तस्य प्रमाणफलत्वात् । एवंविधपुरुषधौरेयस्य दुर्लभतमतया च प्रायशः क्रमयोगेन वर्तन्ते शास्त्राणि । न चैतावता क्वचिद्व्यसितमुदसनीयम् । विषयविशेषोपपत्ते । तममु जिज्ञासुमधिकृत्य ब्रह्मजिज्ञासाशास्त्रमारभमाणो भगवान् बादरायणः शास्त्रप्रवृत्त्यङ्गमनुबन्धमादावसूत्रयद् —

**'अथातो ब्रह्मजिज्ञासा ।'**

इति । अस्य सूत्रस्य तावत् 'तद्विजिज्ञासस्व,' 'सोऽन्वेष्टव्यः स विजिज्ञासितव्य', 'आत्मा वारे द्रष्टव्य श्रोतव्य' इत्यादिविचारविधे विप्रकीर्णश्रुताधिकारिविशेषणतया विविधाज्ञानविरुद्धावभासविषयप्रयोजनतया च विचिकित्सिताधिकारिविषयप्रयोजनसम्बन्धानुबन्धस्यापेक्षिततन्निर्णयोपयोगिन्यायोपदर्शकत्वेन श्रुतिसङ्गति । तत एव सकलशास्त्रोपोद्घाततया समर्थनीयारम्भकविचारद्वारा ब्रह्मविषयतया च शास्त्रप्रथमाध्यायप्रथमपादसङ्गतयः । ब्रह्मणि विचारविधिसमन्वयप्रतिपादनाद्वा प्रथमाध्यायसङ्गतिः । सूत्रे ब्रह्मशब्दोपादानाद् 'आत्मा श्रोतव्य', 'तद् विजिज्ञासस्वे'ति तुल्यविषयत्वप्रदर्शनमुखेनात्मब्रह्मसामानाधिकरण्यलक्षणस्पष्टब्रह्मलिङ्गोपक्षेपेण प्रत्यगेकरसे ब्रह्मणि विचारविधिसमन्वयाभिधानात् स्पष्टब्रह्मलिङ्गवाक्यान्तरविचारावतारहेतुतया पादसङ्गतिरिति ॥

---

## अनुबन्धचतुष्टयप्रदर्शनम् ।

तत्राथेत्याधिकार्यनुबन्ध. सूच्यते । ब्रह्मजिज्ञासेति विषयानुबन्ध । अर्थात्तु विचारस्य प्रमाणाधिष्ठानतया प्रत्यक्षाद्ययोग्यतया च सन्निहितो योग्यश्च वेदान्त इत्यव्यवहितविषयानुबन्धो लभ्यते । अर्थादेव फलसम्बन्धानुबन्धाव पीति । चतुर्लक्षणं चैतदुपक्रम शास्त्रम्। चतुर्धा चेह ब्रह्म जिज्ञास्यते कि ब्रह्म, कथ लक्षण, किमस्य साधन, कथ फल चेति। तत्राद्यद्विकेन सलक्षण ब्रह्म प्राधान्येन प्रतिपाद्यते । उत्तरद्विकेन च ससाधन फलम् । यद्यपि चाद्यलक्षणे ब्रह्मणि वेदान्ताना समन्वय', द्वितीये स्मृत्याद्यविरोध. प्रतिपाद्य इत्याद्यद्विकेऽवान्तरभेदः, उत्तरद्विके च साधनं तृतीये, चतुर्थे फलमिति प्रतिपाद्यभेद', तथाप्यविरोधस्य प्रमाणप्रतिष्ठार्थतया प्रमाणस्य च प्रमेयभूतब्रह्मशेषतया साधनस्य फलशेषतया च प्रधानविषयैकत्वे द्विकद्विकविभागो न विरुध्यते । आद्यद्विकेनोपेय ब्रह्म प्रतिपाद्यते, उत्तरद्विकेनोपायो भक्तिरिति कश्चित्। तन्मन्दम्। आद्यद्विके तावत् प्रथमलक्षणे 'तत्तु समन्वयाद्'(ब्र० अ० १. पा० १. सू० ४) इति ब्रह्मणि समर्थितसमन्वयाना वेदान्ताना गतिसामान्यप्रपञ्चनेन, द्वितीये प्रमाणविरोधपरिहारेण च प्रमाणतात्पर्यस्यापि सूचनात्। उत्तरद्विकेच विद्याफलस्य चतुर्थे प्रायेणोपवर्णनात्। अथ प्रमाणं प्रमेयार्थमित्याद्यद्विकस्योपेयविपयत्वमुच्येत, उपायश्चोपेयार्थ इत्युत्तरद्विकस्यापि तदेकविषयत्वे नार्थभेद. स्यात्। एतेन विषयविषयिरूपप्रतिपाद्यभेदेन द्विकद्विकभेद इति प्रत्युक्तम् । जगद्व्यापारवर्जमैश्वर्यादिरूपस्य तुर्याध्यायप्रतिपाद्यफलभेदस्याविषयित्वात् । यत्तु फलस्य मुक्तेरपि भगवदनुभवरूपतया विषयित्वेन क्रोडीकाराद् न तुर्याध्यायप्रतिपाद्यभेद इति । तन्न । प्रमाणस्यापि तर्हि समन्वयादिप्रतिपाद्यस्य विषयित्वेन क्रोडीकारे द्विकद्वयार्थभेदायोगादिति ॥

---

## शारीरकपदार्थ. ।

ताममूं चतुर्लक्षणी शारीरकमीमासामाचक्षते । शरीरमेव शरीरकं, तत्र भव. शारीरको जीवः, न ब्रह्म । तस्यान्तर्यामिरूपेण वा स्वरूपेण वा शरीर एव भवाभावेन शारीरकाव्यपदेश्यत्वात् । असाधारण्येन हि व्यपदेशा भवन्ति । तस्य

ब्रह्मात्मना मीमांसेत्यर्थानुगमात् । एतेन जगच्छरीरं परमात्मा शारीरकः, 'तस्यैष एव शारीर आत्मे'ति श्रुतेः, तद्विषयं शास्त्रं शारीरकमीमांसेति परोक्तमपास्तम् । परमात्मनः शारीरत्वस्याग्रे निरसिष्यमाणत्वात् । सेयं शारीरकमीमांसा पश्चि[illegible] परम[illegible] निगमान्तविषयविवेचनी विविधकुबुधजनजल्पितविकल्पशतकण्टकिना मा भूदिति परमपदलाभनियतविश्रमाभ्यर्थिजनसार्थं कृतार्थयितुकामेन भवभयाभितमनुजनभागधेयसम्भारसमुद्भूतनिभृतदयाविधेयहृदयतया परानुग्रहैकप्रयोजनकृतशरीरपरिग्रहेण श्रीशङ्करेण भगवता भाष्यकारेण व्याख्याता ॥

---

**अथशब्दार्थः ।**

तत्र,

**"अथशब्द आनन्तर्यार्थः परिगृह्यते, नाधिकारार्थः"**

इति भाष्यम् । इदं तु परस्यापि समानम् । नायमर्थः — अथातो ब्रह्मजिज्ञासा, ब्रह्मजिज्ञासा प्रस्तूयत इति । प्रारम्भादेव प्रारभ्यमाणत्वावगमे तदुक्तिवैयर्थ्यात् । श्रोतृबुद्धिप्रणिधानस्य च न्यायपरे सूत्रे मन्दफलत्वात् । अथापि कथञ्चित् प्रस्तोतव्यत्वमुच्येत । तन्न । न्यायसूत्रस्योपदेशपरत्वायोगात् । सूत्रमूले च प्रारम्भविध्यभावेन तदपेक्षितन्यायपरत्वासम्भवात् । अनिरूपिताधिकारितया प्रतिपत्तृशून्यस्य विधेरनुपपत्तेश्च । 'ब्रह्मजिज्ञासाया अनधिकार्यत्वादि'ति भाष्यीयो हेतुस्तु वक्ष्यमाणन्यायेनाश्रयणीयाया जिज्ञासापदावयववृत्तौ यावदतो न विचारो लक्ष्यते सूत्रार्थवन्वादिविमर्शविलम्बात्, तावदधिकारार्थत्वभङ्गेनानन्तर्यार्थः प्रत्येष्यत इति । मङ्गलं त्वन्यार्थोदकुम्भदर्शनेनेवार्थान्तरप्रयुक्ताथशब्दश्रवणेनैव भवदपि यदि ब्रह्मजिज्ञासेत्यतो विभज्य तदर्थं कल्प्येत अथ मङ्गलं भवतीति, वाक्यं भिद्येत । अथार्थैकत्वं ब्रह्मजिज्ञासा मङ्गलमिति, स्तुतिमात्रं सूत्रं स्यात् । अतः सा कर्तव्येति वा विभज्याध्याह्रियेत, स च नान्यथासम्भवे युक्तः । पूर्वप्रकृतापेक्षयाऽर्थान्तरपरत्वं च एकविषये विकल्पान्तरोपन्या-

---

१. 'क' ख. पाठ.

सविषयमेव दृष्टम् । यथा बुद्धिर्नित्या अथानित्येति । न चेह विकल्पान्तरमुपन्यस्यते । अथैवं मनुषे — नायमस्ति नियमः, विषयैक्ये विकल्पान्तरोपन्यास एव प्रकृतादर्थादर्थान्तरपरत्वम् अथ शब्दस्येति । 'जाया मे स्यादथ प्रजायेय, वित्तं मे स्यादथ कर्म कुर्वीये'त्याद्यविकल्पान्तरोपन्यासेऽपि प्रकृतजायादिसत्त्वमपेक्ष्य प्रक्रियमाणप्रजननाद्यर्थान्तरपरत्वदर्शनात् । एवमिहापि पूर्ववृत्त किञ्चिदपेक्ष्य ब्रह्मजिज्ञासारूपार्थान्तरपरोऽथशब्दो भविष्यतीति । सत्यम् । किन्तु विरोधगर्भया वा हेतुत्वगर्भया वा प्रकृतापेक्षया अर्थान्तरपरत्वमथशब्दस्य भवदपि भवेत् । तत्तावदेकमथेदमेकमित्यादावपि तादात्म्यविरोधगर्भत्वादपेक्षाया. । एवञ्च प्रकृते हेतुभावगर्भायामपेक्षायामानन्तर्यविषयत्वावश्यम्भावेन लाघवादानन्तर्यपरत्वमेवाथशब्दस्य । तदिदमुक्तं भाष्ये—

"पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकात् ।"

इति । विषयविवेचनेऽनुज्झितानन्तर्यार्थत्वाद् लाघवेन तादर्थ्ये सम्भवति प्रकृतापेक्षावच्छिन्नमर्थान्तरम् अर्थान्तरावच्छिन्ना प्रकृतापेक्षा वा नाथशब्दार्थ. गौरवादित्यर्थ. । नन्वानन्तर्यमप्यर्थान्तराश्रय प्रकृतापेक्षावच्छिन्नं च । अयमस्मादनन्तर इति प्रतीते. । एतेन तादर्थ्येऽपि तुल्यं गौरवम् इति चेद्, न । पूर्वप्रकृतापेक्षाया आनन्तर्यप्रतीतौ परिकरमात्रत्वेनाशाब्दत्वात्, परत्वादिप्रतीतावपरत्वाद्यपेक्षावदिति । नापि प्रश्नपरत्वम्, प्रतिवचनानुपलम्भात् । नापि कार्त्स्न्यपरत्वं, विशेषणवैयर्थ्यात् । जिज्ञासाकर्तव्यतामात्रं हि साधयितुमिष्टमनेन सूत्रेण । नैकदेशकार्त्स्न्यविकल्पिता सा, असंशयपदत्वात् । अपि च अधिकाराद्यर्थेऽथशब्देऽतश्शब्दो हेतुपर सन्नप्रकृतविषय. कल्प्येत । प्रकृतविषयत्वे तस्य तत्रैव हेतुत्वेनानन्वयात् । नह्यधिकर्तव्यत्वादधिकर्तव्या जिज्ञासा, मङ्गलत्वान्मङ्गलमिति वा सङ्गच्छते । इष्टफलत्वादधिकर्तव्या जिज्ञासा मङ्गलं वेति तु सङ्गच्छते । न चैवमप्रकृतविषयत्वं प्रकृतविषयत्वे सम्भवति युक्तमाश्रयितुम् । तस्माद्युक्तम् 'अथशब्द आनन्तर्यार्थे परिगृह्यत' इति । यत्तु अथशब्दस्य स्वारस्यमानन्तर्यार्थत्वे हेतुरुच्यते । तदालोचनीय सर्वत्र प्रसिद्ध्यविशेषे किं नाम स्वारस्यमिति । प्रसिद्धिप्राचुर्यादानन्तर्ये शीघ्रप्रत्यय इति चेत् । किमर्थं तर्ह्यथशब्द आनन्तर्ये भवतीति वचनम् । प्रथमतरप्रतीतानन्तर्यव्यवधानादर्थान्तरस्या-

प्राप्तावनिराकार्यत्वात् । वृत्तविशेषाप्रतीत्या प्रसिद्धिप्राचुर्ये सापवादे प्राप्तिरर्थान्तरस्यापीति चेत् । कुतः पुनरिदानीं वृत्तविशेषलाभः । उत्तरभागविचारपरब्रह्मजिज्ञासापदसामर्थ्येन पूर्वभागविचाररूपवृत्तविशेषस्याक्षेपादिति चेत् । तर्हि समभिव्याहृताना सम्भूयकारित्वेन प्रथममेव तेन तदाक्षेपेऽर्थान्तरशङ्कानुपपत्तिः । यदपि वृत्तहेतुपरातश्शब्दतिरस्कृतयानन्तर्यार्थत्वनिर्णयोऽथशब्दस्येति । तदपि न । एतदुक्तं भवति— अतोऽपि न तृप्तिरित्यादावतश्शब्दस्य प्रकृतिप्रत्यययोरवृत्तेऽहेतौ च प्रयोगदर्शनेन वृत्तहेतुपरत्वानिर्णयात् । यदि च वृत्तानन्तर्यपराथशब्दपूर्वकतया तन्निर्णयः, प्राप्तं तर्हीतरेतराधीनार्थनिर्णयकत्वादितरेतराश्रयत्वम् । अथ विपराभ्यां जेरात्मनेपदं विधीयते । अन्तरान्तरेण युक्ते द्वितीया । तत्र बहुवि जयति वनम् । परा जयति सेना । नगरस्यान्तरा नदी, बाह्येत्यर्थः । वनस्यान्तरेण, वर्त्ममध्येनेत्यर्थः । एवमादावनतिप्रसङ्गाय परस्परसाहचर्यादुपसर्गौ निपातौ च निर्णीयेते । तथा गुरुभार्गवौ, रामकृष्णावित्यादौ परस्परसाहचर्याद् ग्रहविशेषयोर्बलकेशवयोर्वा प्रत्ययो जायते, न स्वगुरुजामदग्न्ययोः, न वा दाशरथ्यर्जुनयोः । एवमिहापि परस्परसाहचर्यादथातश्शब्दयोरर्थविशेषप्रत्यये नान्योन्याश्रयदोष इति चेद्, मैवम् । नह्युदाहरणेषु तदेव कार्यकाले साहचर्यं साक्षादेव तत्तद्विशेषनिश्चयहेतुः, किन्तूपसर्गेषु निपातेषु गणिते पुराणादौ च तत्तद्विशेषनियतसाहचर्यानुस्मरणद्वारेणैव । अन्यथा सन्देह एवेति व्याख्यानतो विशेषप्रतिपत्तिर्नान्यथा । अत एव भाष्ये लक्षणप्रतिपदोक्तपरिभाषा अन्यतरानिर्णयो वातिप्रसङ्गपरिहारायोपन्यस्यते । 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति, अथवान्तरेणशब्दो दृष्टापचारः । अयं तु खल्वन्तराशब्दोऽदृष्टापचार' इत्यादिना । यद्यप्ययमपि दृष्टापचारः अन्तरायां पुरीति, तथापि निर्णीतान्यतरसाहचर्यादेवान्यतरनिर्णयो न तु साहचर्यमात्रादित्यभिप्रायः । प्रकृते तु लक्षणप्रतिपदोक्तपरिभाषैव निर्णयहेतुः । न चैवमथातश्शब्दयोरर्थनिर्णयहेतुरस्ति स्वसामर्थ्यादन्यत्र । यत्तु अथशब्दः आनन्तर्यार्थः स्वस्वारस्याद्, अतश्शब्दस्वारस्याच्च । अतश्शब्दो वृत्तहेतुभावपरः, स्वस्वारस्यादथशब्दस्वारस्याच्चेत्युच्यते । न तु परस्परार्थनिर्णयापेक्षया परस्परार्थनिर्णय इति नान्योन्याश्रय इति । तन्न । परशब्दस्वारस्यं हि न साक्षात् परशब्दार्थनिर्णयहेतुः । किन्तु स्वार्थनिर्णयद्वारा । तत्र च तदेवानिवार्यमन्योन्याश्रयत्वम् । अपिच स्वारस्यशब्दितात् प्रसिद्धिप्राचुर्यादतश्श-

ब्दस्य वृत्तहेतुपरत्वनिर्णये च व्यर्थम् 'अतश्शब्दो वृत्तस्य हेतुभावे' इति वचनम् । यदपि ब्रह्मजिज्ञासापदसामर्थ्येन पूर्वभागविचाररूपवृत्तविशेषाक्षेप इति । तदपि न । उत्तरभागविचारत्वप्रत्ययो हि पूर्वभागविचारसत्तामात्रमाक्षिपति । पूर्वोत्तरभावस्य सावधिकत्वात् । तस्य वृत्तत्वाक्षेपस्तु कुतस्त्य । उत्तरभागविचारस्य सहेतुकत्वप्रतिपत्तेरिति चेद्, एवं तर्हि कार्यत्वाद् वृत्त कारणमाक्षिपतु । किमुत्तरभागविचारत्वरूपसामर्थ्यवर्णनेन । न चोभयसामर्थ्येन पूर्वविचारमेव वृत्त हेतुमाक्षिपतीति युक्तम् । अथशब्दस्यानन्तर्यार्थत्वासिद्धौ कार्यत्वस्यैव ब्रह्मजिज्ञासायामप्रतिपत्ते' । वृत्तविशेषाक्षेपाभावे च तव तस्यानन्तर्यार्थत्वासिद्धेः । उत्तरविचारत्वेन पूर्वविचारसत्तामात्राक्षेपेऽपि तस्य तदानन्तर्यपरत्वनिर्णयासम्भवात् । आनन्तर्यप्रत्ययस्य वृत्तत्वप्रत्ययसापेक्षत्वात् । तस्य चानन्तर्यप्रत्ययाधीनत्वादसम्भव उक्तः । तस्माद् यत्किञ्चिदेतत् ॥

---

## आनन्तर्यप्रतियोगि ।

अथ कस्मादानन्तर्यमथशब्देनोपदिश्यते । ब्रह्मजिज्ञासाप्रवृत्तिहेतुभूतात् पूर्ववृत्तादिति ब्रूम । अथ तदेव निर्वक्तव्यम् । निरुक्तमेव भगवता भाष्यकृता —

**"नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगविरागः, शमदमादिसाधनसम्पत्, मुमुक्षुत्वं च ।"**

इति । जिज्ञासा तु मुमुक्षुत्वानुषङ्गसिद्धेति न पृथगुक्ता । ननु किमर्थमिदमुपादिश्यते, विवेकादिमतो मोक्षमाणस्य स्वत एव तत्साधनजिज्ञासाविचारप्रवृत्त्यादिसिद्धेरिति चेत्, सत्यम् । किन्त्वयमधीतवेदवेदाङ्गो नित्यादीनि यावज्जीवादिविधिप्रयुक्त्या नियतानुष्ठानानि प्रतिपद्य तदनुष्ठानसीमानभिज्ञतया समुपजातमुमुक्षाजिज्ञासोऽपि ब्रह्मविज्ञानेन कर्मणामनुपकारमुपमर्दं च सम्भावयन् तदकरणनिमित्तप्रत्यवायपरिहारायोज्झित्वा मोक्षतत्साधने कर्मस्वेव प्रविवृत्सुर्ब्रह्मजिज्ञासाया नाधिक्रियेत । तन्मा भूदिति तदुपदेशः । तथा च सति मुमुक्षाजिज्ञासोदय एव कर्मानुष्ठानावधिरित्यतोऽवसिताधिकारतया जीर्णस्येव तदकरणेऽपि प्रत्यवायाभावं प्रतिपद्यमानस्य निरन्तरायमनन्तर विचारप्रवृत्तिरुपपद्यत इति । अथ

कथमुक्तानन्तर्यमेवाथशब्देनोपदिश्यते, न कर्मविचारानन्तर्यम् । सम्भवात् सामर्थ्याद् ब्रह्मविचारविधिप्रदेशेषु श्रवणाच्चेति वदाम. । न च धर्मविचारस्य ब्रह्मविचारात् प्रागभावनियमसम्भव । न वा सामर्थ्यम् । नापि विधिप्रदेशेषु श्रवणमिति । तदिदमुक्त भाष्ये—

"तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च, न विपर्यये" ।

इति । धर्मजिज्ञासाया ऊर्ध्वं च तेषु हि सत्स्विति विवेकादिपूर्वभावनियम उक्त. । धर्मजिज्ञासाया. प्रागपीति तस्या अनियतत्वं, सत्सु तेषु शक्यते न विपर्यय इति अन्वयव्यतिरेकाभ्या सामर्थ्यं, धर्मजिज्ञासाया ऊर्ध्वं च न विपर्यय इति तस्या असामर्थ्यं चोक्त भवति । हिशब्देन च प्रसिद्धिपरेण विवेकादेर्विधिप्रदेशेषु श्रवण सूच्यते, अर्थादितरत्र तदभावश्चेति ॥

---

### अतश्शब्दार्थः ।

अतश्शब्दो हेत्वर्थ. । ननु यत्किञ्चिदानन्तर्यमवक्तव्य, हेत्वानन्तर्यपरे चाथशब्दे हेतुरर्थसिद्ध इति किमतश्शब्देन । नैवम् । अथशब्दाक्षिप्तहेत्वसिद्धिशङ्कापरिहारार्थत्वात् । ननु न तावद्विवेकादेः स्वरूपासम्भवशङ्का सम्भवति । विवेकादिमदधिकारिणो जिज्ञासोपदेशे तस्यैव स्वानुभवसिद्धतदसम्भवशङ्कानुपपत्तेः । न च तटस्थशङ्कापीह निराकार्या । अधिकारिणो विधिप्रतिपत्त्यविघातात् । न चानेनैव विवेकादिराधीयते, प्रागधिकाराज्ञाने तत्राप्रवृत्ते., अधिकारिणः प्रवृत्ति., प्रवृत्तस्याधिकार इतीतरेतराश्रयापातात् । न च विवेकादेरनुष्ठेयतया अङ्गत्वमपीति तद्विधावसम्भवशङ्का स्यादिति शङ्क्यम् । तथाप्यतद्विधिविषयत्वेनास्य सूत्रस्य तत्सम्भवसाधने अर्थान्तरत्वात् । अथ सतोऽपि विवेकादेर्हेतुत्वासम्भवशङ्केति चेत् । कुतः पुनरेषा शङ्का । न खलु हेत्वन्तरश्रवणं तन्निषेधो वा क्वचिदुपलभ्यते । 'यस्माद् वेद एवाग्निहोत्रादीना श्रेयस्साधनानाम् अनित्यफलतां दर्शयती'त्यादिभाष्यविरोधाच्च । तत्र विवेकादिस्वरूपासम्भवशङ्कासमाधान हि गम्यते । तस्मादतश्शब्दो हेत्वर्थ इत्ययुक्तमिति । उच्यते ।

अधीतवेदमात्रस्य तावदापाततोऽस्ति नित्यानित्यविवेकादिः । किन्तु धर्मापवर्जितपापतमःपिधानतया कर्मब्रह्मकाण्डयोः 'अपाम सोमममृता अभूम', 'य एवं वेद प्रतितिष्ठति, अन्नवानन्नादो भवति', 'अग्निहोत्रं जुहुयात् स्वर्गकामः', 'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'तमेवं विद्वानमृत इह भवति', 'तमेव विदित्वा अतिमृत्युमेती'त्यव्यवस्थितनित्यानित्यफलश्रवणेऽपि 'तद्यथेह कर्मचितो लोकः क्षीयत' इत्याद्यविशेषितकर्मफलानित्यत्वमधीयानस्य क्वचिदपि ब्रह्मविज्ञानफलानित्यत्वाध्ययनशून्यस्य कर्मफलानित्यत्वे ज्ञानफलनित्यत्वे च भवत्युत्कटतमा सम्भावना । एवंरूपविवेकेनैव यदि किञ्चिदपास्ताशेषाशिवममृताख्य फलमश्नुवीय, अलमवर्जनीयदुरितभूयिष्ठेन कर्मफलेनेत्येवं विरज्य शमादिसम्पत्त्या प्रव्रजितस्य मुमुक्षोः ब्रह्मजिज्ञासायां प्रवृत्तस्य तदशैथिल्याय विवेकादिदार्ढ्यमापादयितुं प्रागेव सम्भावितकर्मफलानित्यत्वोपपादकन्यायोऽतश्शब्देन सूच्यते । प्राग् ब्रह्मजिज्ञासाप्रवृत्तेरूर्ध्वं च विवेकवैराग्यादितारतम्योपपत्तेः । अत एव हि प्रवृत्तस्य वैराग्यदार्ढ्याय रहतिपाद आरभ्यते । तदयमर्थ कर्मफलनित्यत्वशङ्काकलङ्कशूकोऽपि नानुवर्तितव्यः, येन मात्रयापि विवेकादिशैथिल्ये ब्रह्मजिज्ञासाप्रवृत्तिकातर्यमापद्येथा । नापि ज्ञानफलानित्यत्वसम्भावनातुषोऽपि कल्पयितव्य । 'तद्यथेह कर्मचितो लोकः क्षीयते[1], एवमेवामुत्र पुण्यचितो लोकः क्षीयते', 'जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति', 'अनेवविद् महत् पुण्यं करोति तद्धास्यान्ततः क्षीयत' इति कर्मफलानित्यत्वश्रवणात् । यत् क्रियते व्यावर्तते वा तदनित्यमिति न्यायोपबृंहितत्वात् । अल्पाधिककर्माभ्यासविधिसामर्थ्येन च तदनित्यत्वाधिगमात् । 'अक्षय्य ह वै चातुर्मास्ययाजिनः सुकृत भवति', 'हिरण्यदा अमृतत्व भजन्ते' इत्यादेश्चानुग्राहकन्यायाभावाद् वर्तमानापदेशत्वाद् न्यायानुगृहीतश्रुत्यन्तरविरोधे सत्यविरोधापेक्षतदर्थविधिकल्पनायोगाद् अन्यानर्थक्यप्रसङ्गाच्च गुणवादत्वात् । ब्रह्मज्ञानाच्च 'निचाय्य त मृत्युमुखात् प्रमुच्यते', 'ब्रह्मविदाप्नोति परमि'त्यादिपरमपुरुषार्थश्रवणाद्, 'अन्नवानन्नादो भवती'त्यादेर्यथादृष्टेनैव स्तुतिमात्रपरत्वोपपत्तेः, तस्यानुषङ्गिकफलत्वेऽपि नित्यपरमफलाविघाताच्चेति ॥

---

१. 'ते जु' ख. पाठ

परमते अथातश्शब्दवैयर्थ्यम् ।

नन्वेवमतश्शब्देनैव ब्रह्मजिज्ञासाहेतुसिद्धौ किमथशब्देन । न । सर्वथैवानुपस्थितेऽत शब्दवृत्त्यसम्भवेन हेतुत्वप्रत्ययायोगात् । यस्य तु ब्रह्मजिज्ञासापदसामर्थ्याक्षिप्ततया बुद्धिस्थ. कर्मविचार . तस्य तत्र हेतुभावोऽतश्शब्देन शक्यावगम इति ध्रुवमथशब्दवैयर्थ्यम् । यत्तु आनन्तर्योक्तिमुखेन तस्य हेतो' शास्त्रान्तरश्रवणव्यवधिनैरपेक्ष्यद्योतनार्थोऽयम् अथशब्द इति । तन्न । नहि कर्मविचारपूर्ववृत्तत्ववादिनः शास्त्रान्तरव्यवधानप्रसङ्ग', येनानन्तर्याभिधायिना तन्निवर्त्येत । ब्रह्मजिज्ञासायामनवसरग्रस्तशास्त्रान्तरसापेक्षविवेकादिपूर्ववृत्तत्वव्युदासायानन्तर्यपरोऽथशब्द इति चेत् । अहो परविद्वेषव्यसनिता तान्त्रिकहतकस्य । य' स्वार्थोपपत्तिनिरपेक्ष परार्थविघातायैव प्रणिधत्ते । अपि च स्वतो वा शास्त्रान्तरापेक्षया वा वृत्ते सति विवेकादावानन्तर्यं ब्रह्मजिज्ञासायामस्माकमप्यनुपहतम् । वृत्ते पूर्वविचारे सत्युत्तरविचार एवानन्तरितो न शास्त्रान्तरसापेक्षविवेकाद्यवसर इत्यानन्तर्यमुच्यत इति चेत् । न । कर्मविचारपूर्वभावनियमाभावेन तस्यानन्तर्यप्रतियोगित्वासिद्धेः । न च विवेकादि शास्त्रान्तरसापेक्षमेवेति वक्ष्यते । एवमथशब्देनैव परस्य विवक्षितार्थसिद्धौ अतश्शब्दवैयर्थ्यम् । नहि वृत्तस्य हेतुतामनपेक्ष्यानन्तर्यमेव ब्रह्मजिज्ञासायामथशब्दो विदधीत, येन तत्र हेतुतया तद्धेतुतापरोऽतश्शब्दो युज्येत । यत्किञ्चिदानन्तर्यं हि न वक्तव्यम् अनुक्तसिद्धत्वात् । यद्युच्येत — उत्तरविचाररूपब्रह्मजिज्ञासापदसामर्थ्योपस्थापितपूर्वविचाररूपेण धर्मजिज्ञासेत्ये(व?) तदानन्तर्येऽथशब्दोक्ते तन्निर्वाहाय तस्य हेतुभावोऽतश्शब्देन बोध्यत इति । एवं हि उत्तरविचारात्मना अवधिभूतपूर्वविचाराक्षेपवद् ब्रह्मजिज्ञासात्मना विरोधिभूतलोकजिज्ञासाक्षेपस्याप्युपपत्तेस्तदानन्तर्यमेवाथशब्देन किमिति नोच्येत । न चैतदात्मनास्याक्षेपो न त्वन्यात्मनान्यस्येति नियमहेतुरस्ति । एवमाक्षेपाविशेषेऽपि धर्मविचारस्य ब्रह्मविचारहेतुत्वानुसन्धानमेव तदानन्तर्योपग्रहनियमहेतुरेषितव्य इत्यतोऽथशब्दसामर्थ्यावगते धर्मविचारहेतुत्वे कृतमतश्शब्देन । न च ब्रह्मजिज्ञासाया हेत्वानन्तर्ये प्रतिज्ञाते हेतुराकाङ्क्ष्यते, येन तादर्थ्येनातश्शब्दार्थवत्त्वं स्यात् । न च धर्मविचारस्य हेतुत्वमप्यथशब्देन प्रतिज्ञायते, वृत्तहेतुभावासिद्धौ तस्य तदानन्तर्यार्थत्वभङ्गप्रसङ्गाद्, अतश्शब्दार्थहेत्वासिद्धिप्रसङ्गाच्च । न च कर्मविचारे प्रतीतहेतुभावस्यैवासिद्धिशङ्कापरिहारपरोऽतश्शब्दो नानर्थक इति श-

ङ्क्यम् । कर्मफलरक्तस्य ब्रह्मजिज्ञासाप्रवृत्त्ययोगेन तद्विरागाय कर्मफलाल्पास्थिरत्वनिर्णयहेतुत्वेन कर्मविचारस्य ब्रह्मजिज्ञासाहेतुत्वावगममुपजीव्य तदानन्तर्यमथशब्देन प्रतिज्ञायत इति वक्तव्यम् । तत्रैव सबीजे हेतुत्वावगमे कुतस्तदसिद्धिः शङ्क्येत । विचारितकर्मण एवाल्पास्थिरफलत्वमतो निर्णीयत इति चेत् । एवं तर्हि प्रागस्मात् कर्मविचारहेतुत्वानवगतौ तदानन्तर्यमथशब्दार्थो न गृह्येत, हेतुभूतवृत्ताज्ञानात् । एतेन ब्रह्मज्ञानार्थं कर्मणामुपादेयाना स्वरूपविवेकहेतुत्वेन कर्मविचारस्य ब्रह्मविचारहेतुत्वावगमो व्याख्यातः । यथायोग प्रागेव कर्मविचारस्य ब्रह्मविचारहेतुत्वावगमेऽतश्शब्दवैयर्थ्यात् । अन्यथाथशब्देन तदानन्तर्यग्रहायोगात् । अपि च परमते विचारस्यावैधत्वेनाधिकारपरिच्छेदानपेक्षत्वादथातश्शब्दयोरेवानर्थक्यम् । स्वरूपसतैव हेतुना विचारप्रवृत्तिकार्यसिद्धौ तदुपदेशस्याधिकारपरिच्छेदार्थत्वात् तस्य चानपेक्षणीयत्वात् । अपि च कर्मविचारानन्तर्यमथशब्दार्थ(त्व?)मुपयता तस्य ब्रह्मविचारनिरपेक्षहेतुत्वोपगमात् काम्यकर्मविधीनामननुष्ठानलक्षणमप्रामाण्यमापादितम् । न चैच्छिकविचारमकुर्वतामेवोपद्रष्टृवचनादिना काम्यकर्मानुष्ठानमुपपद्यत इति शङ्क्यम् । एव हि कर्मफलानित्यत्वमुपश्रुत्य विचारितवेदान्तस्य ब्रह्मज्ञानाङ्गकर्मानुष्ठानमपि तथैव सम्भवतीत्यनियतवृत्तो धर्मविचारो न ब्रह्मजिज्ञासाहेतु स्यात् । न च पाक्षिकादस्मादानन्तर्यमथशब्दार्थो नियन्तु शक्यः । यदपि कृतकर्मविचाराणामेवादृष्टवैगुण्यादमुमुक्षुतया काम्यानुष्ठानमुपपद्यते, विवेकादिपूर्ववृत्तत्ववादिभिरपि तस्मिन् क्वचित् विचाराभावस्यादृष्टवैगुण्योपपाद्यत्वादिति । तदप्ययुक्तम् । तथाप्यदृष्टसाद्गुण्ये मुमुक्षुत्वादेव ब्रह्मजिज्ञासोपपत्तौ कर्मविचारानर्थक्यात् । नहि मुमुक्षानपेक्ष धर्मविचारोऽदृष्टसाद्गुण्येऽपि ब्रह्मजिज्ञासाप्रवृत्तिहेतुः, येन न विनिगम्येत । यदपि समीचीनः कर्मविचारो ब्रह्मजिज्ञासाप्रवृत्तिहेतु , असमीचीनस्तु काम्यानुष्ठान इति । तदपि तुच्छम्, तथा विभागानाकलनात् । कर्मविचारस्य हि कर्मफलाल्पास्थिरत्वप्रतीतिपर्यन्तत्वाभावोऽसमीचीनत्वमयुक्तम् अल्पाधिककर्माभ्यासविधिप्रत्ययसामर्थ्यात् । 'फलस्य कर्मनिष्पत्तेस्तेषा लोकवत् परिमाणतः फलविशेष. स्यात्' (जैमि० १. २. १. १७) इति न्यायाच्च । अर्थवादनयनेयत्वोन्नयनाद् उपनिषदामात्मज्ञानानन्तस्थिर-

फलप्रत्ययविघटकत्वमसमीचीनत्व तु ध्रुवम् । तथा च ब्रह्मविचारप्रवृत्तिविघाताय कर्मविचार. स्यादित्यग्रे स्फुटामिति । अपि च यदि हृदयस्याग्रे अवद्यति, अथ जिह्वाया., अथ वक्षस.' इत्यादाविव धर्मब्रह्मविचारयो· क्रमप्रमाणमाहत्योपलभेमहि, सर्वानुपपत्तिपरिहारेणापि कथञ्चिदिह तदानन्तर्यमेव प्रतिपद्येमहि । न तूपलभामहे । नापि विचारविधिप्रकरणे विवेकादेरिव तस्योपादानमस्ति । न वा धर्मविचारमन्तरा ब्रह्मविचारो न भवति. न वा तस्मिन् सत्यवश्य भवति, येन सामर्थ्यादेव तदानन्तर्यमिह प्रतिपद्येत । अपि च सत्या क्रमापेक्षाया पौर्वापर्यनियमाय प्रमाणमत्र मृग्येत, तदपेक्षा च शास्त्रस्य जिज्ञास्यैक्ये भवति. तत्तदंशभेदस्य युगपद् जिज्ञासितुमशक्यत्वात् । यथा द्वादशलक्षण्या धर्मरूपजिज्ञास्यैक्ये यथायोग क्रमनियम आद्रियते. फलैक्ये च कर्मणोऽपि. यथाग्नेयादीनां तदङ्गानां च । तथा अधिकृताधिकारस्य च. यथा दर्शपूर्णमासाधिकृताधिकारस्य गोदोहनादेरप्प्रणयनक्रम आद्रियते । न चैतत्रितय धर्मब्रह्मजिज्ञासयोरिति विवृत भाष्ये । तस्माद् विवेकादिसाधनसम्पत्त्यानन्तर्यमथातश्शब्दाभ्यामुपदर्श्यते ब्रह्मजिज्ञासाधिकारपरिच्छेदाय, न कर्मविचारानन्तर्यमिति युक्त. पन्था. । तथा च 'अध्ययनमात्रवतः' (ब्रह्मसू० ३. ४. १२) इति सूत्रवृत्तौ कर्मविचारनिरपेक्षो ब्रह्मविचार इति तान्त्रिकेणैव दर्शित - 'वेदार्थविचारे पुरुष स्वयमेव प्रवर्तते, तत· कर्मार्थी कर्मविज्ञाने प्रवर्तते, मोक्षार्थी ब्रह्मविज्ञान' इति । न च मोक्षार्थी विचारितकर्मेति पूर्यते विद्यायाः कर्माङ्गत्वनिरासाय, उत्सूत्रहेत्वन्वेषणप्रसङ्गात् । कर्मोपादानाय हि कर्मविचारानन्तर्यमिष्यते । तथा च कर्मज्ञानयोरेकपुरुषानुष्ठेयत्वे समसमुच्चयानुपगमेनाङ्गाङ्गिभावस्यावर्जनीयत्वात् । कर्मणामदृष्टद्वारा विद्याङ्गत्वाद् वरं कर्तृदेवतासंस्कारद्वारा विद्याया एव कर्माङ्गत्वमित्यापद्येतेति । एतेन कर्मविचारानन्तर्याभिधायिनाथशब्देन तत्रत्याधिकार्येवात्रापीति सूच्यत इति केनचिदुक्त निरस्तम् । कर्मविचारस्य हि ब्रह्मविचारहेतुत्वे विचारितकर्मैवाधिक्रियता किमधीतवेदोपलक्षणेन । विचारस्य प्रमाणाश्रयत्वाद् वेदाध्ययनमपि हेतुरिति चेत् । तर्हि उभयानन्तर्यमथशब्दार्थोऽस्तु । किं तत्सूचनक्लेशेन । नच अर्थलाघव प्रयोजनम् । नहि वेदाध्ययनानन्तर्येऽभिहिते विचारितकर्मा लभ्यते । अभिहिते तु कर्मविचारानन्तर्येऽकृतवैधसाङ्गवेदाध्ययनस्य कर्मविचाराप्रवृत्त्याधीतवेदो लभ्यत इति वाच्यम् । अभिधेयानन्तर्येऽनभिधेयप्रतियोगिभेदस्य तदभिधानागौ-

र्वेकरत्वात् । कर्मविचारस्य तदहेतुत्वे च तदानन्तर्याभिधायी अथशब्द इति बालिशभाषितम् । आनन्तर्यप्रतियोगितया विचारप्रवृत्तिहेतुवेदाध्ययनस्यैवाक्षेपौचित्याच्छिरोवेष्टनेन किं नासिकाग्रहणेन । न च धर्मशास्त्रप्रणयनानन्तरमिदं ब्रह्मशास्त्रं प्रणीतमित्येतावता तद्विचारानन्तरमेतद्विचारप्रवृत्तिरिति नियन्तु शक्यते, अतिप्रसङ्गात् । अनन्तरशास्त्रप्रणयनस्य च सामग्रीसमवधानापेक्षतयानुपयोगिकर्मविचारोपजीवनतात्पर्यकल्पनायोगात् । नहि भगवतो बादरायणस्य न्याया न प्रतिभासन्ते, येन न्यायज्ञानापेक्षयापि तदुपजीवनं कल्प्येत । तत्र तत्र परोदीरितन्यायोपदर्शनं तु लाघवार्थमित्यग्रे दर्शयिष्यत इत्यास्ता तावत् ॥

---

## जिज्ञासापदवृत्तिः ।

**"ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ब्रह्मण इति कर्मणि षष्ठी, न शेषे ।"**

इति भाष्यम् । समानमिदं परस्यापि । एवं सत्येव विविदिषितजिज्ञासाया ब्रह्मैव विषयः प्रयोजनं चेति प्रत्याख्येत । तृतीयासमासे हि जिज्ञासाया विषयः प्रयोजनं चेत्युभयमपि न सिध्यति । सप्तमीसमासे विषयसिद्धावपि न प्रयोजनसिद्धिः । चतुर्थीसमासे तु न विषयसिद्धिः, तदनुपपत्तिश्च तादर्थ्यप्रकृतिविकारभावाभावात् । ननु नेह षष्ठी विद्यते, कुतो व्याख्यायते । उच्यते । यदि समासे लुप्ता विभक्तिः स्मृता बोधयतीति पक्षः, सा व्याख्यायमाना न दुष्यति । यदि च प्रातिपदिकस्य लुप्तविभक्त्यर्थे लक्षणा, तथापि न स योग्यतादिना कर्मत्वं करणत्वमित्येव लक्ष्यते । प्रातिपदिकेनाविभक्त्यर्थलक्षणायां हि योग्यताद्यनुसरणम् । यथा गङ्गायां घोष इत्यादौ । प्रातिपदिकेन नियतविभक्त्यर्थलक्षणा त्वनुशासनाधीना । यदि हि कृद्योगे कर्मणि षष्ठी तस्याः समासो वा नानुशिष्येत, इह तदर्थं कर्मत्वं न लक्ष्येत । तदिह समासार्थाभिव्यञ्जनाय विग्रहवाक्यगता षष्ठी व्याख्यायते । ननु प्रतिपदविधाना षष्ठी न समस्यते । न । कृद्योगा च षष्ठी समस्यत इति प्रतिप्रसवोपपत्तेः । कथं तर्हि सर्पिषो ज्ञानमित्यादौ न समासः, सापि हि कृद्योगेति । न । कृद्योगविहिता हि सा समस्यते । न चैषा तथा । 'ज्ञोऽविदर्थस्य करणे' (२. ३. ५१) इत्यर्थविशेषोपाधिमात्रविहितत्वात् । अत एव सर्पिषो जानीत इति तिङन्तोपपदापि

सा न दुष्यति। एवमादिविषये च प्रतिपदविधानषष्ठीसमासनिषेधोऽपि सावकाशो भवति ॥

---

## उपपदविभक्तेः कर्मत्वाभिधायकत्वम्।

अत्र केचित्—उपपदविभक्तिः प्रयुज्यमानापि दाराः कलत्रमित्यादिवत् प्रयोगसाधुत्वमात्रफला। तद्विधानमपि तादर्थ्येनैवोपपन्नम्। अर्थविशेषाश्चाक्षिप्यन्ते। अत एव हि उपपदविभक्तेः कारकविभक्तिबलीयस्त्वमिति वदन्ति। तत्र मते कर्मणि षष्ठीति नाभिधेयत्वाभिप्रायम्। कर्मण्याक्षेप्य इति व्याख्येयम्।

अपरे मन्यन्ते—'कर्तृकर्मणोः कृति' (२. ३. ६५)इति तावत् कृद्योगा षष्ठी विधीयते। तत्र पाणिनेर्व्याकरणस्य कृतिरित्यत्र कोऽयं कर्तृकर्मणोराक्षेपो नाम। किमर्थापत्तिः, उताहो लक्षणा। नार्थापत्तिः। विना ताभ्यां प्रातिपदिकस्य तदर्थस्य वानुपपत्त्यभावात्। नापि प्रत्ययस्य, साधुत्वमात्रफलत्वोपगमात्। अथ समभिव्याहृतक्रियान्वयानुपपत्त्या तदाक्षेप इत्युच्येत। एवं हि 'कर्मणि द्वितीया' (२. ३. २) इत्यादिविधावपि घटं पश्यति कटे शेते इत्यादौ तथैव कारकविशेषाक्षेपे द्वितीयादेरपि साधुत्वैकफलत्वापत्तेः। सप्तम्यन्तनिर्देशस्योभयत्रापि तुल्यत्वात्। लक्षणापि हि न प्रातिपदिकस्य। समभिव्याहृतक्रियान्वयानुपपत्तिरूपबीजस्य सर्वत्र समत्वेनातिप्रसङ्गात्। अथ विभक्तेः कर्मादौ लक्षणेत्युच्येत। तन्न। अर्थविशेषनिर्देशेन द्वितीयादितुल्यविधित्वे सति लाक्षणिकत्वकल्पनायोगात्। एतावांस्तु विशेषः—कर्मणि द्वितीया कर्तरि तृतीया[1] कृद्योगे तु तयोरेव षष्ठीति यदत्र विधीयते। न चैतावता तस्याः शक्तिविरोधः। पदान्तरयोगस्य शक्यार्थविशेषव्यवस्थामात्रहेतुत्वात्, भानोर्गावः प्रकाशन्त इत्यादौ भानुपदयोगे गवार्थविशेषव्यवस्थादर्शनात् ॥

---

१. 'या च कृ' क. पाठः.

## सुब्विभक्तौ लक्षणाभावः।

न च सुब्विभक्तौ लक्षणा युक्ता । 'तान्येकवचनद्विवचनबहुवचनान्येकशः' (१. ४. १०२) इत्यन्वर्थगुरुसज्ञा विधाय पुनः 'द्व्येकयोर्द्विवचनैकवचने' (१. ४. २२) 'बहुषु बहुवचनम्' (१. ४. २१) इति नियमविरोधात् । न च वाच्यं 'द्वित्वैकत्वयोरि'ति धर्मग्रहणे कर्तव्ये धर्मिग्रहणं ज्ञापयति — अनेकद्रव्ये पटादाववयवावयविनोरेकान्तभेदाभावेऽपि नावयवबहुत्वेनैकस्मिन् पटे बहुवचन पटा इति, न वावयव्येकत्वेन तन्तुष्वेकवचन तन्तुरिति, किन्तु तत्र तत्र तत्तद्वचनव्यवस्थैवेति । सञ्ज्ञाविधानेऽपि धर्मिग्रहणात् तत एवोक्तनियमलम्भनात् । न चैकस्य विधिनियमपरत्वमयुक्तं, प्राप्त्यपेक्षत्वान्नियमस्येति वाच्यम् । विषयविशिष्टसंज्ञाविधाने नियमस्यार्थलभ्यत्वात् । अन्यथा 'सोमेन यजेते'त्यादिविशिष्टविधानगते । तत्रापि द्रव्यांशस्य नियाम्यत्वात् । अतः गङ्गापदस्येव तीरे वचनानामपि व्यत्यये लक्षणया प्रयोगप्राप्तौ तन्नियमाय 'द्व्येकयोरि'त्यादिविधिरिति सुब्विभक्तौ लक्षणानिवृत्तिरवगम्यते । नचातो नियमाद् वचनांशलक्षणानिवृत्तावपि विभक्त्यंशलक्षणा न निवर्तते, नियामकाभावादिति वाच्यम् । यतो द्वित्वैकत्वयोरिति धर्मग्रहणे कर्तव्ये धर्मिग्रहण ज्ञापयति — स्वार्थसम्बन्धितया प्रकृत्यर्थ एवावस्यन्ति वचनानि, न तेषां प्रकृत्यर्थे स्वार्थैकाधिकरण्यसम्बन्धेनार्थान्तरेऽपि लक्षणेति । न च वचनांशस्यैवायमपि नियम इति शङ्क्यम् । तस्योक्तनियमद्वयसामर्थ्यादेव तत्सिद्धौ कृतकरणानर्थक्यात् । अतो वचनस्य स्वेन रूपेण विभक्तिरूपेण वा स्वार्थैकाधिकरण्यसम्बन्धेनान्यथा वा संख्यान्तरे कारकान्तरे वा न लक्षणेति 'द्व्येकयोरि'ति सूत्रतात्पर्यपर्यवसानात् सिद्धः सुब्विभक्तौ लक्षणाभावः। तिङ्साधारण्ये सत्यस्य सूत्रस्य तत्रासम्भवद्प्रयुक्तत्वारस्यमहातव्यम् । सम्भवो ह्यनुसर्तव्यः। न त्वन्यत्रासम्भवादन्यत्र सम्भवस्त्यक्तव्यः ॥

नन्वेवम् 'अदितिः पाशानि'त्यादौ कथमवयवबहुत्वे लक्षणा । अथ न लक्षणा, 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' (१. २. ५८) इत्यनुशासनादिति चेद् , न । प्रयोगसमवायिनो मन्त्रस्य व्यक्तिवचनतया सन्निहितविशेषपरत्वेन जातेरनाचिख्यासितत्वात् । न च पाशप्रकृतेरेव पाशा-

वयवे लक्षणा, प्रत्ययस्तु स्वार्थवृत्तिरेवेति वाच्यम् । एवं हि पाशावयवाना-मकत्वङ्गतयानुष्ठेयार्थाप्रकाशकस्य मन्त्रस्यानर्थक्यमदृष्टार्थत्वं वा प्रसज्येत । 'गुणे त्वन्याय्यकल्पनैकदेशत्वात' (जै० ९. ३. १९) इति सूत्रं च विरुध्येत । उच्यते । न पाशप्रातिपदिकपरस्य बहुवचनस्य पाशावयवबहुत्वे लक्षणा सम्भवति । प्रत्ययाना-मौत्सर्गिकप्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्तिविरोधात् । किन्तु पाशावयवबहुत्वं पाशे समारोप्य तत्र स्वशक्त्यैव बहुवचनस्य वृत्तिः । यथा विष्णुत्वमारोप्य प्रति-मादौ विष्णुशब्दस्य, यथा वाग्नित्वमारोप्य दिव्यग्निशब्दस्य वृत्तिः 'अग्निर्मूर्धा च-क्षुषी चन्द्रसूर्यावि'त्यादौ । उक्तं च हरिणा -

"गोत्वानुषङ्गो वाहीके निमित्तात् कैश्चिदिष्यते ।
अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः ॥"

इति । सूत्रे चारोपितविषयत्वकल्पनैवान्याय्यकल्पनाभिमता । प्रकृत्यर्थसम्बन्धी ख-ल्वर्थः प्रत्ययस्य मुख्यः, 'तान्येकवचने'त्यादिधर्मिग्रहणस्वारस्यात् । न च वचनानां संख्येयपर्यन्तत्वाय धर्मिग्रहणं मा भूद्, अन्तरेण प्रकृतिं केवलानामप्र-योग इति प्रकृत्यर्थसम्बन्धस्य समभिव्याहारलभ्यत्वादिति वाच्यम् । व्युत्पत्ति-सिद्धप्रकृतिप्रत्ययसामानाधिकरण्यभङ्गप्रसङ्गाद्, एकार्थवृत्तित्वाभावाद्, एकस्मि-न्नेव गवि गाव इति प्रयोगसाधुत्वप्रसङ्गाच्च । अर्थाभावेऽपि हि साधवो दृश्य-न्ते गोदौ पञ्चाला वरणा आपो दारा इत्यादयः । अतः प्रकृत्यर्थसम्बन्धो-पाधिनैव संख्याकारकादिरर्थः प्रत्ययस्य मुख्यः । पाशानित्यादौ चाविद्यमानप्रकृ-त्यर्थसम्बन्धारोपात् तत्र लक्षणाव्यवहारो भवन्नपि गौणः । अन्यथा पाशानिति विभक्तिलक्षणाङ्गीकारे पाशावयवबहुत्वलक्षणाया व्युत्पत्तिविरोधात् पाशगतैकत्व एव लक्षणां ब्रूयुः । अथैवम् आरोपालम्बनत्वे पौरुषेयत्वं स्याद् । 'ब्राह्मणो यजेते'-त्यादावपि स्यात् । न च साम्प्रतिकोऽयमारोपः प्रकरणनिवेशप्रयोजनेनाग-मविवक्षारूपस्यैवास्यानादित्वोपगमात् । एवञ्च षट्सु यागेषु फलसम्बन्धवि-धानाय समुदायोपाधिगततद्वित्वारोपेण दर्शपूर्णमासाभ्यामिति द्विवचनम्, एक-स्मिन्नप्यग्नीषोमदेवतारूपेऽधिष्ठानद्वित्वारोपेण 'आशासाना मेधपतिभ्यामि'ति द्वि-

१. 'णा भ', २ 'ध्व' ख पाठः.

वचनम्, 'ओषधे त्रायस्वैन', 'स्वधिते मैन हिंसीरि'ति चेतनत्वारोपेण सम्बोधनमित्याद्युपपन्नम्। किं पुन 'यजमान. प्रस्तर' इत्यादौ *तत्सिद्ध्यादिरालम्ब्यते, न पुनरारोप.। कथ नाम गुणवादेन विध्यपेक्षिता स्तुति· सन्निकृष्येतेति। प्रोद्गातृणामित्यादौ तु न पाशन्यायोऽनुगम्यते। उद्गातृप्रातिपदिकलक्षणाया-मुद्गातृगणस्य चमसभक्षणप्राप्तौ प्रतिपत्तिभूमप्रयोजनात्। अभिधेयच्युतावर्थवशेन शब्दवृत्तिव्यवस्थितिरिति हि न्यायः। यथा 'समानमितरच्छयेनेने'त्यत्र सदृशसन्निहिताभिधेयासम्भवाद् इतरशब्दस्याप्यर्थवशेन सदृशे वृत्तिरिष्यते, न सन्निहिते। अत एवोद्भिदादौ †प्रवृत्तिविशेषप्रयोजनेन द्रव्यभेदवृत्तिराशङ्क्यते। परन्तु अर्थविशेषानियमाद् मत्वर्थलक्षणादोषाच्च कर्मनामत्व व्यवस्थाप्यत इति। एव सति 'सक्तून् जुहोति', 'अग्निहोत्र जुहोती'त्यादौ च पदार्थास्तान्मितिर्वा शाब्दमितौ करणामिति मते कथञ्चित् करणत्वोपस्थितौ शाब्दमिति· स्यात्, प्रत्ययस्तु यथायोग होमभावनाविषयताप्राप्तकर्मत्वानुवादः। अथवा 'व्यत्ययो बहुलम्'(३. १. ८५)इतिच्छन्दसि द्वितीयापि करणशक्ता स्यात्। अत एव विभक्तिविपरिणाम इष्यते नीतिनिपुणै·। एवं सति अग्निहोत्रेण होमेनेति सामानाधिकरण्यमुपपाद्येत, 'चतुर्होतार जुहुयादि'त्यादौ करणमन्त्रे द्वितीया चेति‡। कारकविभक्तिबलीयस्त्व तु पदान्तरयोगनिरपेक्षत्वनिबन्धनम्। उपपदविभक्तेश्च दौर्बल्यं तत्सापेक्षत्वकृतमेव, न लाक्षणिकत्वकृतमनर्थकत्वकृत वेति। अन्ये तु—नानार्थेषु व्यत्ययेन प्रत्ययविधानमेव सुब्विभक्तौ लक्षणाभावं गमयति। अन्याय्यापि ह्यनेका शक्ति· कल्प्यते लक्षणा मा भूदिति। अन्यथा लक्षणयैव तत्तदर्थविशेषोपस्थितिसम्भवेऽनेकशक्तिकल्पनावैयर्थ्यात्। युक्त हि गवादिपदानां गौर्वाहीक इत्यादौ लाक्षणिकत्वे सत्येव शक्यार्थेयत्तापरिच्छेदाय नामकोशेषु स्वर्गेषुरश्मिवाग्वज्राद्यर्थभेदपरिसङ्ख्यान, तेषां सम्बन्धनियमाभावेन लक्षणायोगात्। कारकविशेषाणां पुनरेकार्थसमवायेन सम्बन्धनियमसम्भवाद् लक्षणायोगेऽप्यनेकशक्तिवि-

---

* 'आदिशब्देन गौणवृत्त्युपपादक जातिसारूप्यादिक गृह्यते। तथा चोक्तम्—

"तत्सिद्धिजातिसारूप्यप्रशसालिङ्गभूमभि।
षड्भि सर्वत्र शब्दाना गौणी वृत्ति प्रकल्पिता॥"

(जैमि० न्या० अध्या० १. पा० ४. अधि० १८)

† जैमि० अध्या० ७ पा० १. अधि० २. ‡ जैमि० अध्या० १ पा० ४ अधि० २.

धानस्य लक्षणाव्यावृत्तिफलत्वादिति वदन्ति । सर्वथापि कृद्योगविहिता कर्मणि षष्ठी समासे लुप्तेति तदेव ब्रह्मणो जिज्ञासाकर्मत्वं ब्रह्मप्रातिपदिकेन लक्ष्यते ॥

---

### प्रकृतेर्लुप्तप्रत्ययार्थशक्तिनिरासः ।

कश्चिदाह — लुप्तविभक्त्यर्थेषु प्रातिपदिकस्य मुख्यमेवाभिधानम् । गङ्गाया घोष इत्यादौ सम्बन्धिनो हि लक्षणा, दृष्टा, न सम्बन्धमात्रस्य । विभक्त्यर्थश्च स्वय सम्बन्धरूप. । सम्बन्धस्य स्वपरनिर्वाहित्वेऽपि तदजानतोऽपि विभक्त्यर्थावगमात् । न चाज्ञातसम्बन्धो लक्षणा, अतिप्रसङ्गात् । तस्मात् प्रातिपदिकस्य न लुप्तविभक्त्यर्थे लक्षणेति । तन्मन्दम् । विभक्त्यर्थकारकभेदस्य सम्बन्धानिरेकात् । सम्बन्धमात्रत्वेऽपि वा वनं श्रितो वनश्रित इत्यादौ तुल्यवत्प्रकारत्वभानाय कथञ्चिदपि तत्सम्बन्धज्ञानस्योपगन्तव्यत्वात् । अन्यथा *'निषादस्थपतिं याजयेदि'त्यादावपि मुख्ये निषादप्रातिपदिकस्य षष्ठ्यर्थसम्बन्धाभिधाने निषादस्थपत्यधिकरणविरोधात् । षष्ठीसमासे लक्षणाप्रसङ्गेन हि तत्र पूर्वपक्षनिरास इति ॥

---

### ब्रह्मशब्दार्थः ।

ब्रह्मशब्देन च नित्यशुद्धबुद्धमुक्तस्वभावमस्पृष्टाशिवलेशं प्रत्यगेकरसमद्वितीय वस्तु जिज्ञासाकर्मत्वेन समर्प्यते । अन्यथा तस्यार्थान्तरपरत्वे तज्जिज्ञासा न मुमुक्षोरारभ्येत । यदि हीह सविशेष प्रत्यगात्मविलक्षणं ब्रह्म गृह्येत, निरवधिकबृहत्त्वबोधिब्रह्मश्रुतिस्तावदुपरुध्येत । उपासनानिष्ठं च शास्त्रमापद्येत । न चोपासिक्रिययाविद्यामयानर्थबाधेन निरतिशयानन्दावभासस्वरूपनिष्ठात्मा मोक्षो घटते, ज्ञानस्यैवाज्ञानविरोधित्वात् ।

कथं पुनरयमर्थो ब्रह्मशब्दादवगम्यते । ईदृगर्थे मानान्तराविषये लोकव्यवहाराभावेन व्युत्पत्त्यनुपपत्तेः । न च यूपाहवनीयस्वर्गादिवदलौकिकत्वेऽपि 'सत्य ज्ञानमनन्त ब्रह्म', 'यतो वा इमानि भूतानि जायन्ते', 'तद् ब्रह्मे'त्यादिभिर-

---

* 'जैमि० अध्या० ६. पा० १. अधि० १३.

यमर्थो व्युत्पाद्यत इति शङ्क्यम् । तेषामस्या दशायामनध्यवसितार्थत्वात् । अन्यथा कृतं विचारारम्भेण । अपि च, एकं वाक्य न पदार्थं व्युत्पादयितुं वाक्यार्थमवबोधयितुं च क्षमते, सकृत्प्रयुक्तस्य सकृदर्थकारित्वात् । न च सति सम्भवे वाक्यावृत्तिर्युक्ता । एतेन सूत्रवाक्यादपि ब्रह्मपदव्युत्पत्तिः प्रत्युक्ता । यूपादिशब्दाश्च भिन्नवाक्यैरेव व्युत्पाद्यन्त इत्यनन्तरमेव वक्ष्यते । न च परमाप्तप्रणीतसूत्राक्षरमात्रमप्यनर्थक युक्तं, ब्रह्मपदे चानर्थकेऽविदितार्थे वा सूत्रमेव तथा स्यात् । तस्माद् ब्रह्मपदार्थप्रतिपत्त्युपायो वक्तव्यः ॥

---

ब्रह्मपदव्युत्पत्तिः ।

उच्यते । बृहेर्वृद्धिकर्मणो मनिन्प्रत्ययान्तस्येदं रूपं ब्रह्मेति । निर्वक्तारोऽपि हि भवन्ति—

"बृहत्त्वाद् बृंहणत्वाच्च ब्रह्मेति परिपठ्यते"

इति । तनश्च तदेकोपाधिना जात्यादिष्वेव तद् व्युत्पाद्यते । सूत्रे च मुमुक्षुजिज्ञासाविषयसमर्पणपर ब्रह्मपद प्रसिद्धजातिजीवादिबाधे प्रकरणोपपदादिसङ्कोचहेत्वभावाद् देशकालवस्तुगुणदोषसम्बन्धपरिच्छेदरूपसर्वविधाल्पत्वविरोधिरूपमनवधिकबृहत्त्वमपूर्वमर्थं प्रतिपादयतीत्यवगम्यते । ततो मुमुक्षुजिज्ञासासमभिव्याहा(रो?रा)र्थोदीरितविमर्शसनाथया प्रथमावगतव्युत्पत्त्यैवापूर्वार्थोपस्थितौ सूत्रवाक्यार्थः प्रतिपद्यत इति न सङ्कटं किञ्चित् । तदिदमाह भगवान् भाष्यकारः—

**"ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते । बृहतेर्धातोरर्थानुगमात्"** ।

इति । नच विचारकर्तव्यतापरे सूत्रेऽयमर्थो विमृष्टोऽपि पदमात्रोपस्थितो निर्विचिकित्समधिगतो भवतीति तदधिगमाय लक्षणादिमुखेन विचारमारप्स्यते भगवान् सूत्रकारः—'जन्माद्यस्य यत.' (ब्र० १. १. २) इत्यादिना । जगत्कारणत्वमपि निर्विशेषस्यैव लक्षणं, न सविशेषस्येत्यग्रे दर्शयिष्यते । अत एव सविशेषस्य ब्रह्मणोऽत्र शास्त्रे जिज्ञास्यत्वमुत्सूत्रमौत्प्रेक्षिकमिति दर्शयति भगवान् भाष्यकारः—

---

१. 'क्षा' ग. पाठ.

"ब्रह्म च वक्ष्यमाणलक्षणं जन्माद्यस्य यत इति।"

इति। अत्राह। न बृहत्त्वोपाधिना सर्वत्र ब्रह्मशब्दस्यैका शक्तिरिति युज्यते, बृहन् कुम्भो महदाकाशमित्यादिवत् ब्रह्म कुम्भ इत्यपि प्रयोगापत्तेः। न च त्रसरेण्वादावापेक्षिकबृहत्त्वेऽपि ब्रह्मशब्दः क्वचित् कदाचित् प्रयुज्यते। न च पङ्कजादिपदयोरविशेषितपङ्कजनिकर्त्रादिवृत्तेरेव व्यक्तिविशेषविषयत्वनियामकपद्मत्वादिवद् ब्रह्मशब्दस्य कश्चिज्जात्यादिविषयत्वनियामकानुगतोपाधिरुपलभ्यते, येन शक्तिर्वा प्रयोगो वा नियम्येत। तदेवमनुगतनिमित्तासम्भवादनेकशक्तिकल्पनागौरवाद्, 'अन्यायश्चानेकार्थत्वमि'ति न्यायात्, स्वरूपतो गुणतश्च निरवधिकबृहत्त्वे पुरुषोत्तम एव ब्रह्मशब्दो मुख्यः अन्यत्र तु जात्यादौ बृहत्त्वगुणलेशयोगादौपचारिक एव। यथाह सूत्रकारः—'स्याच्चैकस्य ब्रह्मशब्दवत्'(ब्र० २. ३. ५) इति, 'परं जैमिनिर्मुख्यत्वात्' (ब्र० ४. ३. १२) इति च। गरुडपुराणमपि—

"वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणः।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने!॥"

इति,

"यस्मिन् प्रयुज्यमाने तु गुणयोगः सुपुष्कलः।
तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः॥"

इति च। मुमुक्षुजिज्ञासासमभिव्याहाराच्च। 'वेदाहमेतं पुरुषं महान्तमि'त्युक्त्वा 'तमेवं विद्वानमृत इह भवती'ति श्रुतेर्महापुरुषज्ञानस्यैव मोक्षहेतुत्वावगमात्। 'स सर्वभूतप्रकृतिं विकारान्', 'समस्तकल्याणगुणात्मकोऽसौ' 'स ईश्वरो व्यस्तसमस्तरूपः' इत्युक्त्वा, 'संज्ञायते येन' 'तज्ज्ञानमज्ञानमतोऽन्यदुक्तमि'ति स्मृतेश्च। तस्मात् स्वभावतो निर्दोषनिरतिशयासङ्ख्येयकल्याणगुणगणास्पदं पुरुषोत्तमशब्दितं ब्रह्मेह जिज्ञास्यमुपदिश्यत इति।

अत्र ब्रूमः। एवमलौकिके व्युत्पत्त्यनुपपत्त्या ब्रह्मपदगर्भे श्रुतिसूत्रे प्रतिपत्तिवन्ध्ये प्रसज्येयाताम्। न च सत्यज्ञानादिवाक्यैर्ब्रह्मपदं व्युत्पद्यते। तेषां वा-

---

१ 'स्य'. २. दे'. ३ 'स'. ४ 'क्षा' ख. पाठ

क्यार्थबोधनिष्ठत्वात् । नहि 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्युक्त्वा तद् यो वेद निहितं गुहायाम् इत्युच्यते, येन पूर्ववाक्यं व्युत्पत्तिपरं स्यात् । न च तस्यावृत्तिर्युक्ता । न चैवमस्य लक्षणवाक्यत्वानुपपत्तिः । लक्ष्यस्वरूपबोधपरत्वात् । 'ब्रह्मविदाप्नोति परमि'त्युक्तार्थसंग्रहाय ह्येतर्गुदाह्रियते । तत्र वेदनकर्मतयैव ब्रह्मव्युपादीयमाने सामानाधिकरण्यनिर्देशसामर्थ्याद् नान्तरीयकतया तद् ज्ञानादिरूपमवगम्यत इत्यत इद लक्षणवाक्यमुच्यत इति ।

स्वर्गादौ तु 'यन्न दुःखेन सम्भिन्नमि'त्यादिना व्युत्पादिते 'स्वर्गकामो यजेते'त्यादिवाक्यार्थो बुध्यते । तथा 'खादिरो यूपो भवती'ति खदिरविकारविशेषो यूप इत्यवगमे 'यूप तक्षती'त्यादौ यूपशब्दस्याव्युत्पन्नतया यूपात्मना तक्षणाद्यनन्वयितया च खदिर तक्षतीत्येव वाक्यार्थे प्रतिपद्यमाने यूपपदोपादानफल विमृशतो नूनं तक्षणादिसस्कृत खदिरविकारविशेषो यूप इत्यर्थाद् व्युत्पद्यते । ततो 'यूपे पशुं नियुञ्जीते'ति वाक्यार्थप्रतिपत्तिः । एव'मग्निमाधत्त' इति सम्कार्यत्वेऽवगते । 'नक्त गार्हपत्यमाधत्ते, दिवाहवनीयमि'त्यादिविशेषविधिषु गार्हपत्यादिरूपेण सम्कारविध्यनन्वयितया तत्पदोपादानफलविमर्शे नून नक्तमाहितो गार्हपत्यसञ्ज्ञो दिवाहित आहवनीयसंज्ञ इत्यर्थाद् व्युत्पद्यते । तत 'आहवनीये जुहोती'त्यादिवाक्यार्थावगमः । स्फ्यचषालचात्वालादिशब्दाश्च गोश्वाजादिशब्दवद् निगमादिनैव व्युत्पद्यन्ते । तथा च पातञ्जल दर्शन — 'वेदे याज्ञिकाः सञ्ज्ञा कुर्वन्ति, स्फ्यो यूपश्चषाल इति । तत्रभवतामुपचारादन्येऽपि जानन्ति इयमस्य सञ्ज्ञेति' इति । न हि 'स्फ्येनोद्धन्ति', 'चात्वालाद् धिष्णियानुपवपती'त्यादिसिद्धपदसान्निध्येऽपि तदर्थो व्युत्पाद्यते । वसन्ते सहकारे पिको मधुरं रौतीत्यादौ च बहुशो दृष्टसम्बन्धतया वसन्तादिपदार्थाना सम्भावनामात्रेण पिकशब्द कोकिले व्युत्पन्नो यदृच्छया न विसंवदते, कुसुमिते सहकारे पिको ध्वनतीत्यादौ कदाचिद् भृङ्गेऽपि व्युत्पत्तौ विसंवाददर्शनात् । नचैवमननुभूतचरसम्बन्धार्थकसिद्धपदसान्निध्येऽप्यसिद्धपदव्युत्पत्ति सम्भवति ।

"चित्रीयते चरन्नेष महिषः कर्कसङ्कटे"

इत्यादावप्रसिद्धार्थपदसमभिव्याहारे वाक्यार्थबोधस्यैव प्रतिबन्धात् । न चेह सत्यादिवाक्ये कारणवाक्ये वा ब्रह्मपदार्थानन्तर्भावेन वाक्यार्थः प्रतिपद्यते,

णेन 'यूपं तक्षती'त्यादाविवार्थाद् ब्रह्मपदं व्युत्पाद्येत । अस्यां दशा-याम् उक्तागमस्यानवधृतार्थत्वाच्च । न चोदाहृतपुराणवाक्येन[1] शक्त्यवधारणा युक्ता । अधीतस्वाध्यायस्य कर्मविचारानन्तरमेव ब्रह्मविचारमुपेत्य शास्त्रान्तराद्य-वसराभावेन नित्यानित्यविवेकाद्यसम्भवे यतमानस्य तान्त्रिकस्य तदयोगात् । अन्यथा पुराणादिनैव ब्रह्मतत्त्वावगमोऽप्यास्त्विति कृतं तद्विचारेण । निरुक्तव्याकरणाभ्यां तु वृद्धिपर्यायबृहत्त्वोपाधिना जातिजीवादिसाधारण्येव शक्तिरवधार्यते । तत्र तत्र प्रयोगे च प्रकरणोपपदादिना विशेषलाभ इति युक्तम् । तत्र कारणभूतस-विशेषविषये प्रयुज्यमानो ब्रह्मशब्दः पुष्कलार्थो भवति, स्वरूपतो गुणतश्च निरतिशयबृहत्त्वयोगात् । तत्रापि गुणानां ब्रह्मणो गुणेभ्यश्च ब्रह्मणो व्यवच्छि-द्यमानतया नात्यन्तिकं बृहत्त्वम् । तथापि कारणातीते सर्वविधाल्पत्वविरोधिस्व-रूपमात्रे निर्विशेषे प्रवृत्तिनिमित्तासम्भवेन कारणरूप एव ब्रह्मपदशक्तिः पर्यव-स्यति । अल्पत्वविरोधिस्वरूपलक्षणया तु ब्रह्मतत्त्वमुपस्थाप्यते 'सत्यं ज्ञानमन-न्तमि'त्यादिषु । न चा(त्र'त्रा)मुख्यग्रहणं न्याय्यम्, अविशेषितानन्त्यविरोधात्, प्रकरणादिविशेषपर्यवसानहेत्वभावाच्च, 'ब्रह्मविदाप्नोति परमि'ति मुक्तिहेतुवेद-नमात्रविषयत्वाभिधानाच्च । अत एव मुमुक्षुजिज्ञासासमभिव्याहारात् सौत्र-मपि ब्रह्मपदं न सविशेषविषयमित्यवोचाम । 'तमेवं विद्वानि'त्यादि च निर्विशेष-विषयं व्याख्यास्यते ॥

### ब्रह्मपदार्थमुख्यामुख्यत्वविवेकः ।

नन्वेवमेकनिमित्तैकशक्तिकत्वे ब्रह्मपदस्य किंकृतो मुख्यामुख्यत्वविभागः, 'परं जैमिनिर्मुख्यत्वात्' (ब्र०४. ३. १२) 'तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तः' इत्यादि । उच्यते । सामान्यशक्तस्य गवादिपदस्य खण्डादाविव ब्रह्मपदस्य जा-तिजीवादिविशेषेष्वौपचारिकता स्यात् । न चैवमपि परमात्मन्यपि विशेषेऽमुख्य-त्वापत्तिः । वेदान्तेषु तदुपबृंहणस्मृतीतिहासादिषु च प्रयोगप्राचुर्यात् प्रथमतरप्र-त्ययत्वे निरूढवृत्त्या मुख्यत्वोक्त्युपपत्तेः । तदिदमुक्तं 'वेदे भूरिप्रयोगाच्चे'ति ।

---

१ 'न ब्रह्मपदार्थानन्तर्भावे श' ख. पाठ.

अथवा परप्रकरणोपपदादिविशेषाभावे स्वरूपतो गुणतश्चासङ्कुचितबृहत्त्वेनैवाल्पत्वविरोधिस्वरूपेणैव वा ब्रह्मणि ब्रह्मपदादुपस्थिते तावतैवासङ्कीर्णस्वार्थवृत्तितया तत्र रूपान्तरोपस्थित्यनपेक्षणाद्, जात्यादौ च बृहत्त्वमात्रस्य साधारणतयाशक्यासङ्कीर्णरूपविशेषोपस्थित्यवश्यम्भावाद् मुख्यामुख्यविभागो न विरुध्यते । न चैवं त्र्यणुकादावपि प्रयोगापत्तिः, अप्रयोगादेवाप्रयोगसम्भवात् । 'आरोपे सति निमित्तानुसरणम्, नहि निमित्तमस्तीत्यारोप' इति न्यायात् । नहि यद् यत्र शक्तं, तत् तत्रावश्य प्रयोक्तव्यमिति नियम । पुमन्तदैवतपद्मादिशब्दस्यामरकमलादिशक्तावपि तत्राप्रयोगादेवाप्रयोगदर्शनाद् लिङ्गभेद इव प्रत्ययभेदे शक्येऽप्यप्रयोगोपपत्ते. ॥

---

## भगवच्छब्दार्थः ।

एतेनालौकिकज्ञानादिमति ज्ञानादिमत्येव वा भगवत्पदशक्तिरपि व्याख्याता । न च परमेश्वरे

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णा भग इतीरणा ॥"
"ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥"

इति निर्दोषसमग्रज्ञानादिसमुदायस्य भगवत्पदशक्यत्वस्मरणाद्, अन्यत्र च

"उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥"

इति स्मृतेः, 'वसिष्ठो भगवानृषि.' इत्यादिप्रयोगाच्च यथागममुभयी शक्तिः प्रतिपत्तुं युक्ता । गौरवात् । नन्वत एव भगवच्छब्दं प्रकृत्य

"तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वित' ।
शब्दोऽय नोपचारेण त्वन्यत्र ह्युपचारतः ॥"

इति स्मरणादनीश्वरे शक्यगुणलेशयोगेन गौणत्वं स्यादिति चेद्, न। सामान्ये-नैकशक्त्युपपत्तौ गौणत्वकल्पनाया अन्याय्यत्वात्। स्मृतेरपि विषयविशेषेण प्रयोगप्राचुर्याप्राचुर्याभ्यां शक्यार्थपौष्कल्यापौष्कल्याभ्यां च निरूढाभिप्रायत्वोपपत्तेः। अत एव 'परिभाषासमन्वित' इत्युक्तम्। परिभाषेति हि समयेनाव्यभिचरितप्रयोग उच्यते। वैयाकरणपरिभाषेत्यादिदर्शनात्। अत एव 'ज्ञानशक्तिबलैश्वर्ये'त्यत्र तिरश्चामपि ज्ञानादीनि भगवच्छब्दवाच्यानीत्यभिप्रायेणाशेषत इत्युपात्तम्। परमात्मन एव ह्यभिन्नस्य ज्ञानशक्त्यादेरविद्यामयः प्राणिभेदेषु खिल्यभावः। तस्यैव सर्वमयत्वात्। न तु समुदायाभिप्रायेण। समुच्चितैकविभक्तिनिर्देशादेर ज्ञानादिसमुदायासिद्धेः। अपि च ज्ञानादि प्रत्येकमेव शक्यमस्तु। अनेकार्थत्वस्य समुदायशक्तिपक्षेऽप्यवर्जनीयत्वात्। न चैकोपाध्यवच्छेदादनर्थान्तरं समुदायः शक्यतावच्छेदकः, येनैकार्थ्यं स्यात्॥

---

## वनशब्दार्थः।

न खलु वनशब्दस्यैकदेशस्थत्वमप्यर्थः। गौरवात्। किन्त्वेकदेशपरिचिता वृक्षा एवानिरूपितभेदा अपि बहवो वनशब्दवाच्या इति शक्त्यनेकत्वम्। यदाहुः— 'वृक्षा हि बहवो वनमि'ति। अन्यथा मानान्तरानवगम्ये वनशब्दबुद्ध्योराभासत्वप्रसङ्गात्। न च वृक्षाश्रयं बहुत्वं बह्वाश्रयं वा वृक्षत्वं वनशब्दप्रवृत्तिनिमित्तमित्यैकार्थ्यं शङ्क्यम्। अतिप्रसङ्गात्। एकदेशाद्यवच्छेदस्य चापेक्षायाम् उक्तस्यानपेक्ष्यत्वात्। न च तदतिरिक्तो वृक्षेषु समुदायो नाम। तस्य पर्याप्यवृत्तित्वे छिन्नशिष्टे एकस्मिन्नपि वृक्षे वनशब्दप्रयोगापत्तेः। व्यासज्यवृत्तित्वे च वृक्ष एकस्मिन् वृक्णे समुदायविनाशात् तत्रैव वनशब्दस्य समुदायान्तरविषयत्वकल्पनायाम् अनेकार्थत्वापरिहारात्। न च समुदायभेदानुगतमेकं सामान्यम्। मानाभावात्। देशकालकार्याद्युपाधिनापि सर्वत्र समुदायव्यवहारोपपत्तेः। न च वनत्वं नाम सामान्यभेदः। वृक्षजातिभेदैरेव साङ्कर्यात्। वनशब्दस्य युगपदनेकवृत्तित्वेऽपि[1] 'ग्रहं सम्मार्ष्टी'त्यादौ ग्रहशब्दस्येव नैकवचनानुपपत्तिः।

---

१ 'था' ख. पाठ.

[1] जै० ३. १. अधि० ७. १३, १४, १५.

अथवा तदुपाधिसंख्यारोपेण वचनानि भवन्ति वनमित्यादीनि । वर्णेषु बुद्ध्यादिसंख्यारोपेण पदमित्यादिवत् । कालादावेकस्मिन्नेवोपाधिसङ्ख्याश्रयवचनभेददर्शनात् कालः कालौ काला इति ।

तदेवमिह प्रत्येकशक्तिपक्षे समुदितशक्तिपक्षे च तुल्ये शक्त्यनेकत्वे न ज्ञानादिसमुदायोपाधौ क्लृप्तु युक्तम् । 'विना हेयैर्गुणादिभिरि'ति च न निर्दोषत्वमपि वाच्यकोटिनिविष्टमित्यभिप्रायः । गौरवात् । किन्तु ज्ञानादिमात्रशक्तिक पिपीलिकादावपि भगवत्पदं किं न प्रयुज्येतेति शङ्किते दोषाभिभूततया ज्ञानादेरसत्कल्पत्वाद् अप्रयोग इत्यभिप्राय । 'ऐश्वर्यस्य समग्रस्ये'त्यत्रापि सामग्र्यं दोषानभिभवो भगवत्पदप्रयोगाप्रतिबन्धायोच्यते । एतदभिप्रायेणैव

"एवमेष महाशब्दो मैत्रेय' भगवानिति ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यग ॥"

इति स्मर्यते । तस्माद् दोषानभिभूतोद्भूतज्ञानशक्त्यादिमति भगवत्पदप्रयोग इति न गौण. कल्पनीय. । प्रह्लादादौ च य' परस्य गौणप्रयोगाभावहेतु', स एव नस्तदभावहेतु । यदि च परस्य प्रयोग इष्ट स एव नो मुख्यः प्रयोग इति । अस्तु वा भगवच्छब्दस्य परमेश्वरे मुख्यत्वम्, अन्यत्र गौणत्वम् । ब्रह्मशब्दस्य तु निरुक्ताद्यवगम्या शक्तिः साधारण्येव युक्ता । अन्यथा जिज्ञासासूत्रस्य प्रतिपत्तिवन्ध्यतापत्तेरिति ॥

---

**जिज्ञासाशब्दार्थः ।**

ज्ञातुमिच्छा जिज्ञासा । नन्वत्र विचारकर्तव्यत्वपरे सूत्रेऽविवक्षितावयवार्थस्यैव विचारलक्षणा युक्ता । तस्य विध्युपपत्तेः । अन्यथा ब्रह्मजिज्ञासा भवतीत्यनुवादमात्रत्वापत्ते', 'तद्विजिज्ञासस्व' 'आत्मा वा अरे द्रष्टव्यः श्रोतव्य.' 'सोऽन्वेष्टव्य स विजिज्ञासितव्य.' इत्यादिविधिश्रुतिमूलत्वानुपपत्तेश्च । न खलु ज्ञानं प्रमाणवस्तुपरतन्त्र विधीयते, नापि वस्तुसौन्दर्यज्ञानाधीनेच्छा । अपुरुषतन्त्रत्वात् । न च तथैव विचारो लक्ष्येत, लाक्षणिकजिज्ञासापदोपादानानर्थक्याद् अथातो ब्रह्मविचार इत्येव सूत्रं प्रणीयेत । 'स्वायत्ते शब्दप्रयोगे नावाचक

प्रयोक्तव्यमि'ति न्यायात् । सम्भवन्मुख्यशब्दे च लाक्षणिकप्रयोगे हि प्रयोजनं मृग्यते । गङ्गाया घोष इत्यादौ च पावनत्वादिप्रत्ययः प्रयोजनम् । इत्युभयथापि दोष इति । उच्यते । तदेव लाक्षणिकपदोपादानप्रयोजनं दर्शयितुमवयवार्थोऽनुवर्ण्यते । विविदिषितविचारस्येष्यमाणज्ञानफलत्वप्रत्ययः प्रयोजनम् । निष्फलविचारविधानायोगात् । स्वरूपावगतिपर्यन्तं हि ज्ञानमशेषसंसारबीजानर्थनिबर्हणं परमपुरुषार्थत्वादेषितव्यमिति । तदिदमाह भगवान् भाष्यकारः —

**"ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा निश्रेयसप्रयोजना प्रस्तूयते ।"**

इति । अन्ये तु शब्दतः प्रधानस्येच्छाया अनधिकार्यत्वेन तत्समानवाक्येऽप्यथशब्दस्याधिकारार्थत्वनिरासेन प्रकरणमात्रोपात्तसाधनचतुष्टयसम्पत्त्यानन्तर्यार्थतया विशिष्टाधिकारिसूचनायावयववृत्तिनिरूपणमित्याहुः ।

कश्चिदाह— 'इष्यमाणं ज्ञानमत्र विधीयत' इति । तद् बालिशभाषितम् । प्रमाणफलज्ञानस्यापुरुषतन्त्रत्वेनाविधेयत्वात् । न च विचारात्मकं ज्ञानं विधीयेत । तस्येष्यमाणत्वायोगात् । फलविषयत्वादिच्छायाः । फलोपाधिका साधनेऽपि स्यादिच्छेति चेत् । किं पुनरायुष्मता फलमभिपन्नम् । न विचारानुगृहीतवाक्यजा प्रमितिः । असुखदुःखाभावत्वात् । भगवत्स्वरूपगुणविभवविषयस्यापि परोक्षस्याप्रयोजनत्वात् । अनुकूलवेदनीयापरोक्षस्यैव प्रयोजनत्वात् । अथ तदपि साक्षात्कारपर्यन्तध्यानात्मतापन्नं सुखापरोक्षसाधनमितीष्येत, आवश्यकत्वात् तदेव स्वरूपावगतिरूपं ब्रह्मज्ञानमिष्यमाणमिह गृह्यताम् । बहिरङ्गानपेक्षतया स्वारसिकत्वात् । किमनेन बकबन्धयत्नेन । तस्य चाविधेयत्वात् तल्लक्षितो विचार एव विधीयत इति ।

अथ कथमेवं सति विचारो लक्ष्येत । इष्यमाणापरोक्षज्ञानेन तदिच्छया वा जिज्ञासापदमुख्यार्थेन विचारस्य साधनतया साध्यतया वा सम्बन्धानधिगमात् । विचार्यतत्त्वापरोक्षहेतुभावस्य क्वचिदपि धर्मविचारादावभावात् । अत एव तद्विषयेच्छासाध्यताया अप्यभावात् । इष्यमाणसाधनतया हीच्छया किञ्चित् साध्येत, नान्यथा । न खलु शैत्येच्छया वह्निः साध्यते । न चाज्ञातमुख्यसम्बन्धो लक्षणा । अतिप्रसङ्गात् । तस्मादश्लिष्टा विचारलक्षणेति ।

उच्यते । यद्यपि प्रागतो न्यायादन्तरेण विधिं विचारस्येष्यमाणब्रह्मसाक्षात्कारफलत्वमशक्यमधिगन्तुं, तथापि तत्साक्षात्कारेऽपि निर्णयांशेनाधिगतसम्बन्धो विचारो लक्षयिष्यते । धर्मविचारादौ तस्य विचार्यतत्त्वनिर्णयफलत्वावगमात् । तच्च न साक्षादेव । विचारस्य तर्कमयत्वात् । अनुग्राह्ये च प्रमाणेऽपरोक्षफले तादर्थ्येनेह विचारविधानं युक्तम् । यद्वा, 'द्रष्टव्यः श्रोतव्य' इत्यापाताधिगतवैधसाधनतासम्बन्धस्य विचारस्य जिज्ञासापदेनेष्यमाणज्ञानसाधनतया ज्ञानेच्छासाध्यतया वोपस्थितिरुपपन्नेति न किञ्चिदश्लिष्टम् । जिज्ञासाशब्दश्चाखिलो विशिष्टमर्थमिष्यमाणज्ञानं ज्ञानेच्छां वा प्रतिपाद्य विचारं लक्षयति, द्विरेफादिसमासवत् । नहि द्विपदेन रेफपदेन वा भ्रमरो लक्ष्यते, किन्तु समासेन विशिष्टमर्थं प्रतिपाद्येति ।

केचित्तु—सना विचारोऽजहल्लक्षणयोपस्थाप्यते । ज्ञानपदेन च साध्यावस्थं ज्ञानमिति वदन्ति । तच्चिन्त्यम् । प्रत्ययमात्रार्थेन ज्ञानानन्वयिनेच्छामात्रेण विचारस्य सम्बन्धनियमाभावात् । अभिधेयाविनाभूते च प्रवृत्तिर्लक्षणोच्यते । न चैवमविनाभावादेवाक्षेपसिद्धेः शब्दवृत्तिवैयर्थ्यमिति वाच्यम् । समभिव्याहृतपदानां सम्भूयकारित्वोपपादनार्थत्वात् । शब्दशक्तिमूलाक्षेपस्यैव वा लक्षणापर्यायत्वोपगमाच्च । न च निश्चितप्रमाणभावेनापाताधिगते निर्णयेच्छा विचारं व्यभिचरति, येन सन्प्रत्ययमात्रेणेव जिज्ञासापदेनापि स न लक्ष्येत । यद्युच्येत—जिज्ञासापदस्य न विचारे लक्षणा युक्ता । तस्य क्वचिदप्यशक्तेः । शक्तस्यैव शक्याविनाभूते लाक्षणिकत्वात् । द्विरेफ इति च समभिव्याहृतान्वितस्वार्थवृत्ते रेफपदस्यैव भ्रमरे लक्षणा, न समासस्येति । तर्हीहापि समभिव्याहृतान्वितस्वार्थवृत्ते प्रकृते. प्रत्ययस्य वा विचारे लक्षणास्तु. न तु पर्युदस्तप्रकृत्यर्थस्य प्रत्ययमात्रस्य । उक्तदोषात् ॥

---

## सन्नन्तनिर्देशफलम् ।

अथापि स्यात्—जिज्ञासापदस्य विचारे नाजहल्लक्षणा । काकेभ्यो दधि रक्ष्यतां, छत्रिणो यान्तीत्यादाविव लक्ष्यतावच्छेदकानुगतोपाधेरेकान्वयस्य चाभा-

वात् । जहल्लक्षणायां च नेष्यमाणज्ञानफलविचारकर्तव्यत्वावगम., येन लाक्षणिकपदोपादानं सौत्रमर्थवत् स्यादिति । न, इष्यमाणज्ञानसाधनतालक्षितविचारस्य विहितस्य फलापेक्षाया तस्यैव सन्निहितस्येष्यमाणज्ञानस्यार्थादेव फलत्वप्रत्ययोपपत्ते. । गङ्गापदलक्ष्यतीरमात्रस्य प्रतिसम्बन्ध्यपेक्षाया सन्निहितगङ्गाया एव तथात्वावगमात् । यदि ह्यत्र ब्रह्मविचार इत्येव सूत्र प्राणेष्यत, विचेतव्यफलो विचारविधिः प्रासङ्क्ष्यत । अधिकारगृहीतस्यापि मोक्षस्य दविष्ठतयानिर्ज्ञातद्वारतया च द्रागिति तत्सम्बन्धेनाशक्यप्रत्ययत्वात् । जिज्ञासेति तु सूत्रिते विज्ञानेन तन्नान्तरीयकेण मोक्षेण च निर्दिष्टफल एव विचारविधि स्यात् । सन्नन्तनिर्देशोऽपि तदर्थ एव । अन्यथा साध्यतयानधिगत विज्ञान न साधनविचार लक्षयित्वा शक्नोति तस्य फलत्वेन सम्बन्धुमिति ।

यत्तु, सन्नन्तनिर्देशो विचारस्य रागप्राप्तत्वज्ञापनार्थ इति । तदसारम् । 'ब्रह्मविचार. कर्तव्य' 'ब्रह्माधिगम. कर्तव्यः' 'इष्यमाण ज्ञान विधेयम्' 'इच्छाविषयभूत विचारात्मकं ज्ञानमेव तात्पर्यतो विधीयते' इत्यादिस्ववचनविरोधात् । अज्ञातज्ञापनमत्र विधिरिष्ट इति चेत् । किमिहाज्ञात जिज्ञापयिषितमायुष्मतः । ज्ञातमेव तावद्विचारे विचार्यप्रमितिहेतुत्व, शक्यत्वे हितसाधनत्वे चावगते विचारस्य रागत एव कर्तव्यताप्राप्तिरिष्टा । कार्यव्युत्पत्तिविमर्शविरुद्धावगम विचारस्य कर्तव्यस्य शक्यत्व ज्ञाप्यते इति चेद्, न । वेदान्तेषु ब्रह्मज्ञानानन्तस्थिरफलापाताधिगमेन मुमुक्षोरधिकारिणोऽभावे शास्त्रानारम्भप्रसङ्गात् । तेषु तदधिगमे च स्वानुभवविरोधेन कार्यव्युत्पत्तिविमर्शस्यैव निरोधात् । अस्मादेव न्यायात् तेषु तदधिगमोपगमे च प्रवृत्तस्य तदधिगमस्तदधिगमे च मुमुक्षो. प्रवृत्तिरित्यन्योन्याश्रयापत्तेः । अथ हितसाधनत्वमज्ञातं ज्ञाप्येत, तर्हि तन्मुखेन विधित एव विचारकर्तव्यतावगम इति न जिज्ञासेति तस्य रागप्राप्तत्वं युक्त सूचयितुम् । सूत्रस्य विषयस्वभावपरिवृत्तिप्रसङ्गात् । रागत प्रवृत्तिश्च विचारे निषेधिष्यते ।

अत्र केचित्— ब्रह्म जिज्ञासितव्यमिति यदि नियमः, यदि वा परिसङ्ख्या, उभयथापि कपिलसुगताद्यभिमतप्रधानादितत्त्वजिज्ञासाव्यावृत्तिरिह विवक्षितेति

अत्राह— ब्रह्मणो जिज्ञास्यत्वमात्रे सिद्धे हि तस्यैव जिज्ञास्यत्वसिद्धिः । न चोभयं जिज्ञासासूत्रप्रतिपाद्य ब्रह्म जिज्ञास्य ब्रह्मैव जिज्ञास्यमिति च, वाक्यभेदप्रसङ्गात् । अपि च, अधीतक्रमेण पूर्वभागविचारानन्तरमुत्तरभागविचारस्य न प्रधानादिनिरासापेक्षा, तदानी तदप्रसक्तेः । वेदान्तार्थश्रद्धाद्रढिम्ने तु ईक्षत्यादौ वेदान्तानामतत्परत्वोपादानेन, 'विप्रतिषेधाच्चासमञ्जसम्' (ब्र० २. २. १०) इत्यादौ तदागमाप्रामाण्यतत्प्रमेयदौस्थ्योपपादनेन च तन्निरसनमग्रे भविष्यतीति व्यर्थं कृतकरणमिति । तन्न । 'ब्रह्मविदाप्नोति परमि' त्युपश्रुत्य ब्रह्म निश्चिचीषतो विचार्यतत्त्वनिर्णयफलतया विचारस्य प्राप्तत्वेन विचारविधेर्विषयनियमार्थत्वोपपत्तेः। अपि च, अनन्वितपदानतिरेके सत्यर्थभेदेन सूत्रमावर्त्यमानमपि न वाक्यभेददोषमावहति। चोदनासूत्र हि धर्मस्वरूपपर तत्प्रमाणपर च व्याख्यात शबरस्वामिना। अलङ्कारो हि सूत्रस्य विश्वतोमुखत्वमनेकार्थत्वम् । अन्यथा तत्र तत्र विवक्षितार्थवर्णकभेदोपन्यासो न सङ्गच्छेत। न च प्रधानाद्यप्राप्त्या तन्नियमानुपपत्ति. । तापत्रयातुरस्य तन्निवृत्त्युपायान्वेषिणो व्यक्ताव्यक्तज्ञविज्ञानाद्युपायान्तरस्य यदृच्छोपदेशादिनापि प्राप्तिसम्भवात् । अन्यथा सर्वथैवाप्रसङ्गादग्रेऽप्यनिषेध्यत्वापातात् । नापि कृतकरत्वम् । अत्र प्रतिज्ञामात्रोक्तस्य परत. प्रपञ्चनोपपत्ते । चोदनासूत्रोक्तधर्मप्रमाणस्य 'तस्य निमित्तपरीष्टि.' (जै० १ १. ३) इत्यादिना प्रपञ्चनसम्प्रतिपत्तेः,

"इष्ट हि विदुषामेतत समासव्यासधारणम्"

इति। नस्माद् यदि प्रधानादीनामपि कथमपि जिज्ञास्यत्वप्राप्तिः शङ्क्येत, तन्नियमोऽपि सूत्रेणानेन क्रियमाणो न दुष्यतीति । तस्माद् न्यायनिर्व्यूढसद्भावविवेकादेरनन्तर निःश्रेयसफला ब्रह्ममीमासा प्रतिपद्यते ॥ इति सूत्रार्थसङ्ग्रह ॥

---

## धर्मब्रह्मविचारयोरैकशास्त्र्यचोद्यम् ।

अत्राह— धर्मब्रह्मविचारौ तावदेक शास्त्रम् । यथाह वृत्तिकारः— 'सहितमेतच्छारीरक जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरि'ति । युक्त चैतत् । 'अर्थैकत्वादेक वाक्यम्' (जै० २. १. ४६) इति प्रधानप्रतिपाद्यैक्यादे-

कप्रबन्धत्वं व्याख्येयवेदस्य तावदवसीयते । प्रतिपाद्यैक्यं च वेदस्य पुरुषार्थपरत्वाद् ब्रह्मपरत्वाद्वा । ब्रह्मपरत्वं च 'सर्वे वेदा यत् पदमामनन्ति', 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिश्रुतिस्मृतिभ्यः । ततश्चैकग्रन्थव्याख्यानत्वाद् धर्मब्रह्मजिज्ञासे एकं शास्त्रं सम्प्रतिपन्नवत् । न च वक्तृभेदः शास्त्रभेदप्रयोजकः, जयादित्यवामनवृत्त्यादौ व्यभिचारात् । नापि प्रतिज्ञाभेदोपक्रमः, 'अथातो धर्मजिज्ञासा' (जै० १. १. १) 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' (जै० ४. १. १) इति प्रतिज्ञाभेदेऽपि शास्त्रैक्यात् । साधारणप्रतिज्ञावैधुर्ये सति स शास्त्रभेदक इति चेदस्तु । प्रस्तुते तदसिद्धिः। भागद्वयासाधारणार्थप्रतिज्ञाद्वये कृते साधारणप्रतिज्ञानस्यार्थसिद्ध्युपपत्तेः । साधर्म्यवैधर्म्यसमजात्योरुद्देशे तदुभयानुगतप्रतिधर्मोद्देशवदिहापि वेदार्थजिज्ञासेत्यनुगतरूपोपपत्तेः । अर्थविशेषप्रतिज्ञा तु मुखतः क्रियते, प्रतिपादनौपयिकतयावश्यकत्वाद् न साधारणी । अस्तु वा 'अथातो ब्रह्मजिज्ञासे'ति साधारणप्रतिज्ञा । धर्मविचारस्तु ब्रह्ममीमांसातृतीयलक्षणतुरीयपादसङ्गतोऽपि पृथक् क्रियते विस्तीर्णत्वात् । तन्त्रान्तरे यथाह्निकभेदेन निग्रहान्तर्भूतच्छलजाती तदन्तर्भूतहेत्वाभासाश्चाध्यायभेदेन द्विरुद्धं निरूप्यन्ते तद्वत् । प्रतिपत्तिसौकर्यलक्षणक्रमात् तु कर्मविचारस्य पूर्वभावः । अस्तु वा 'अथातो धर्मजिज्ञासा' इत्येव साधारणप्रतिज्ञा । अलौकिकश्रेयस्साधनं हि धर्मः ।

"श्रेयस्साधनता ह्येषां नित्यं वेदात् प्रतीयते ।
ताद्रूप्येण च धर्मत्वम् ॥"

इति भट्टोक्तेः । ब्रह्मणश्च श्रेयस्साधनतया धर्मत्वात् । भारते च —

"ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥"

इति सिद्धेऽपि ब्रह्मणि धर्मशब्दप्रयोगाच्च । तत्र

"द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते"

इत्यभियुक्तोक्तेः । सिद्धरूपधर्मस्य पूर्वभागे, उत्तरभागे च 'आत्मेत्येवोपासीते'त्युपासनादिसाध्यधर्मस्य च साङ्कर्येऽपि कर्मात्मा साध्यधर्मः, ब्रह्मात्मा सिद्धध-

र्मश्च प्रधानप्रतिपाद्यो व्यवतिष्ठते । तथा च सत्या साधारणप्रतिज्ञायां धर्मशब्दस्य साध्यधर्मे प्रसिद्धिप्राचुर्येण बुद्धिस्थत्वाद्वा धर्मजिज्ञासापदतन्त्रतया वा अर्थतो वा विशेषप्रतिज्ञासिद्धिरिति चोदनासूत्रे धर्मलक्षणं कृत्वा तस्मिन् निरवशेषे विचारिते बहुग्रन्थव्यवधानाद् धर्मशब्दस्य ब्रह्मणि प्रसिद्धिप्राचुर्याभावे-नाशब्दार्थत्वशङ्का च मा भूदिति पुनः 'अथातो ब्रह्मजिज्ञासे'ति प्रतिज्ञाय तस्य लक्षणमुक्तं जन्मादिसूत्र इति न वैयर्थ्यम् । ननु कर्मणामपि परमपुरुषा-राधनरूपतया आम्नायस्योदाहृतश्रुतिस्मृतिभ्यामाराध्यब्रह्मैकार्थ्यावगमान्नोक्तव्य-वस्था युक्ता । न । परदेवताराधनरूपतामनपेक्ष्यैव स्वप्राधान्येन कर्मणामाद्यतन्त्रे विचार्यत्वात् । अत एव विनापि परदेवताज्ञानमनुष्ठितकर्मणामन्तवत्फलमुच्यते "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद् भवती'ति,

"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥"

इति च । उत्तरतन्त्रे चाराधनीयपरमपुरुषविचारमपेक्ष्य तदाराधनरूपता पश्चाद-वगम्यते । एतेन जिज्ञास्यभेदान्न शास्त्रैक्यमिति प्रत्युक्तम् । षट्कद्वयार्थभेदव-दध्यायार्थभेदवच्चान्तरालिकार्थभेदस्य शास्त्रैक्याविरोधित्वात् । फलभेदोऽप्यत एव निरस्तः । षट्कद्वयचिन्तितप्रकृतिविकृतिप्रयोजनभेदवदस्याशास्त्रभेद-कत्वात्, अलौकिकश्रेयोलक्षणैकरूपफलेऽभ्युदयनिःश्रेयसरूपावान्तरभेदस्याप्रयो-जकत्वात् ।

नाप्यर्थविरोधादशास्त्रैक्यम् । असिद्धेः[1] । अक्रियार्थानामानर्थक्यमाशङ्क्य विध्येकवाक्यतया प्रामाण्यसमर्थनस्य जैमिनीयस्य सामान्यविषयस्य स्वातन्त्र्येण स्वयं पुरुषार्थपर्यवसायितया वेदान्तानां ब्रह्मणि प्रामाण्यसमर्थनेन विशेषविषयेण वैयासिकेन केवलमपवादात् । उत्सर्गापवादभावे च 'आहवनीये जुहोति' 'पदे जुहोति', 'कर्मण्यण्' (३. २. १) 'आतोऽनुपसर्गे कः' (३. २. ३) इत्यादाविव शास्त्रैकत्वाविरोधात् । न च कर्मसु सन्निधानानुपपत्त्यादिना देवतानिराकरणे तात्पर्य

---

१ 'वि' त्र पाठ.

जैमिनेः, येन देवताभ्युपगमवादेन वैयासिकेन विरुध्येत। अश्रुतवेदान्तानामश्रद्धा कर्मणि मा भूदिति नहिनिन्दान्यायेन कर्मप्राधान्यपरत्वात् तस्यान्वारुह्यवादत्वाद्वा- नित्यसयोगनिरासेन वेदप्रामाण्ये कर्मावश्यकताया च तात्पर्यातिशयात्। तथा च यथा—

'अर्थाष्टार्थव्ययेनापि जयति क्षेत्रहारिणम्।
लब्धक्षेत्रैर्न दुष्प्राप स्यादर्थ इति निश्चयात्॥'

तद्वदिह सिद्धे प्रामाण्ये पुनरभिमतसिद्धि प्रत्यापत्स्यत इति। कथमन्वारुह्यवाद- त्वम्। 'सम्पत्तेरिति जैमिनि—' (ब्र० १.२ ३१) 'अन्यार्थं तु जैमिनिः—' (ब्र० १.४ १८) 'पर जैमिनि—' (ब्र० ४.३.१२) 'ब्राह्मेण जैमिनि.—' (ब्र० सू० ४ ४.५) इत्यादौ ब्रह्मस्वरूपगुणोपासनफलाभ्युपगमदर्शनात्।

अथापि स्यात — 'विप्रतिपत्तौ हविषा नियम्येन कर्मणस्तदुपाख्यत्वात्' (जैमि० ८ १ ३२) इत्यष्टमाधिकरणे ऐन्द्रे[1] पुरोडाशे द्रव्यसामान्यादाग्नेयविध्यन्त प्राप्नोति, न देवतासामान्यात सान्नाय्यविध्यन्तः, शब्दोद्देश्यमात्ररूपतया 'गुणत्वेन देवताश्रुते*' (जै० ८१ ३४) इति देवताप्राधान्यानिरसन यागदेशसान्निधानेन हविर्भोक्तृतया देवताप्राधान्याभ्युपगमेन वैयासिकेन विरुध्यत इति। न। तत्र गुणत्वस्याभ्युच्चयमात्रत्वात्, द्रव्यस्यापि यागे गुणत्वात्। सूत्रशेषोक्ता तु 'कर्मण- स्तदुपाख्यत्वादि'ति मूलयुक्ति यद्यपि द्रव्यदैवत यागस्य रूपमित्युभयोपाख्य कर्म, तथापि कर्मरूपसमवायिनो द्रव्यस्य हविष्ट्वेन शास्त्रगम्यत्वेऽपि स्वरूपेण पुरोडाशादेरविलम्बप्रत्ययतया प्राधान्येन प्रबलतया कर्मणस्तदुपाख्यत्वमुच्यते। देवता तु स्वरूपेणापि विलम्बितशास्त्रगम्येन्यप्राधान्येन दौर्बल्यान्न तया विध्यन्त- नियम इत्ययमर्थो विवक्षितो जैमिनेः। श्रुतिलिङ्गादौ प्रत्यक्षानुमानादौ च प्रबल- दुर्बलभावस्य विलम्बाविलम्बहेतुकत्वान्न देवतानिरासे तात्पर्यम्। 'चोदना पुनरा- रम्भ' (जैमि० २ १.५) इति च क्षणिकस्य कर्मण कालान्तरभाविफलसिद्धि- द्वारमात्र समर्थ्यते, न तु कर्मफलदातेश्वरो वार्यते। तच्च द्वारमपूर्वसंज्ञितमीश्वर प्रसाद एवास्तु। न कश्चिद्विरोध।

नन्वेव जैमिनेरपि सर्वसम्प्रतिपत्तौ 'धर्मं जैमिनिरत एव' (ब्र० सू० ३.२.

---

१. 'न्द्र' क पाठ

---

* 'श्रुति' इति मुद्रितजैमिनीयसूत्रपाठ

४०) 'स्वर्गकामो यजेते'ति श्रुते , अपूर्वद्वारा कालान्तरभाविफलजननोपपत्तेश्च धर्म एव फलदातेति जैमिनिमतमनूद्य 'पूर्वं तु बादरायणो हेतुव्यपदेशात्' (ब्र० ३ २.४१), 'फलमत उपपत्ते ' (ब्र० ३ २.३८) इति निर्दिष्टः पूर्वः परमेश्वर एव फलदाता । तस्य धर्माराधितस्य सेवितस्येव राज्ञः फलदत्वोपपत्तेः । अचेतनस्य धर्मस्य चेतनानधिष्ठितस्य तदनुपपत्तेश्च । 'अन्नादो वसुदान' इत्यादिश्रुतेः ।

"लभते च ततः कामान् मयैव विहितान् हितान्"

इत्यादिस्मृतेश्च । 'एष ह्येव साधुकर्म कारयती'ति हेतुकर्तृव्यपदेशाच्चेति दूषणम् । तथा 'शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनि.' (ब्र० ३.४ २) कर्तुरात्मन कर्मार्थतया तद्विज्ञान विषयद्वारा कर्माङ्ग, प्रोक्षणादिवत् , 'ब्रह्मविदाप्नोति परमि'ति फलश्रुतिरर्थवादः । यथान्येषु प्रयाजादिषु 'वर्म वा एतद्यज्ञस्य क्रियते' इत्यादिरिति तन्मतमनूद्य 'अधिकोपदेशात् तु बादरायणस्यैव तद्दर्शनात्' (ब्र० ३.४ ८) कर्तृव्यतिरिक्तस्यापहतपाप्मत्वादिगुणकस्य परमात्मनो वेद्यत्वेनोपदेशाद् 'एष आत्मापहतपाप्मे'त्यादिषु तद्दर्शनाद् विद्या पुरुषार्थसाधनमिति दूषणम् । तथा 'परामर्शं जैमिनिरचोदना चापवदति हि' । (ब्र० ३.४.१८) 'त्रयो धर्मस्कन्धा' इत्यादौ ऊर्ध्वरेतसामाश्रमस्य परामर्शमात्र, न त्वनुष्ठेयत्वं, चोदनाभावात् 'वीरहा वा एष देवाना योऽग्निमुद्वासयते' इत्याद्यपवादाच्चेत्यनूद्य 'अनुष्ठेय बादरायणः साम्यश्रुते ' (ब्र० ३ ४.१९) अनुष्ठेयम् आश्रमान्तर गार्हस्थ्यवत् तेन सह परामर्शसाम्यादित्यादिदूषणम् । इत्येवजातीयकमनुपपन्नमिति चेत् ।

उच्यते । विपक्षनिरासार्थत्वेन सर्वोऽयमन्वारुह्यवादो जैमिनेरुपन्यस्य निरस्यते । कथमन्वारुह्यवादत्व, ब्रह्मतदुपासनतत्फलाभ्युपगमस्यात्रैव दर्शितत्वात् । 'तद्भूतस्य तु नातद्भावो जैमिनेरपि—' (ब्र० ३.४.४०) इति नैष्ठिकाद्याश्रमभ्रंशस्य जैमिनेरनभिमतत्वोपन्यासेनाश्रमान्तरानुष्ठानाभ्युपगमसूचनाच्च । अन्यथा कस्य भ्रंशोऽनभिमतः स्यात् । अपि च ब्रह्मण आश्रमान्तरस्य वा निरसनीयत्वे तस्य द्वादशलक्षण्यामसूत्रयिष्यत । तत्रासूत्रितम् । अपि तु धर्मसिद्धौ यतमानस्याभ्युच्चितमजानन्तस्तदेव तत्त्व मा भौत्सुरित्यौडुलोम्यादिमतवदुपन्यस्य निरस्यत इत्यदोष. । 'भावं जैमिनि —' (ब्र० ४.४.११) इति मुक्तस्य देहेन्द्रिया-

दिभावोपगमो जैमिनेर्बादरायणस्यापीति नात्र विरोध. । तस्माद् 'अथातो धर्मजिज्ञासा' (जै० १. १ १) इत्यादि 'अनावृत्ति शब्दात' (ब्र० ४ ४. २२) इत्येवमन्तमेकं शास्त्रम् । तच्च व्याख्येयपाठक्रमादिना सङ्गतिविशेषेण च विशिष्टक्रममिति धर्मजिज्ञासानन्तरमेव ब्रह्मजिज्ञासारब्धव्येति ॥

---

धर्मब्रह्मजिज्ञासयोर्भिन्नशास्त्रत्वम् ।

अत्राभिधीयते । यत्तावत् साधकमुक्त वेदरूपैकग्रन्थव्याख्यानत्वादेक शास्त्र धर्मब्रह्मजिज्ञासे इति । तत्र न तावदेकप्रतिपाद्यत्व साध्य, बाधात् । 'अथातो धर्मजिज्ञासा' 'अथातो ब्रह्मजिज्ञासे'ति व्याख्येयवेदप्रतिपाद्यार्थभेदोपक्षेपेण प्रतिज्ञाभेदात् । यत्तु शास्त्रयोरेकदेशालम्बनत्वमुक्त प्राचीनै, कार्यनिष्ठ एव वेदभागो विचार्यतया प्रक्रान्तो विचारितश्च न वस्तुतत्त्वनिष्ठः, वस्तुतत्त्वनिष्ठ वेदभाग विचारयितुमिदमारभ्यत इत्यादि । न तदितरेतरत्रेतरेतरस्याविचार्यत्वाभिप्रायम् । अक्रियार्थाविशेषप्रवृत्तार्थवादनयविरोधात् । सर्वापेक्षासूत्रविरोधाच्च । प्रतिपाद्यार्थप्रतिपादनप्रवृत्तिमुखभेदेनोभयत्र सकलवेदविचारेऽपि भागशब्दोपादानाविरोधाच्च । यदपि वेदस्यार्थविवक्षामुक्त्वा धर्मग्रहण कुर्वतो जैमिनेरभिप्रायवर्णन धर्मातिरिक्तोऽपि सिद्धरूपो वेदार्थोऽस्ति, स च पर्युदस्तो जैमिनिना न्यायान्तरविषयत्वादिति गम्यत इति । तदपि परप्रत्ययनेयमत्युपच्छन्दनमात्रम् । अन्यथा समन्वयाधिकरणविरोधात् । जैमिनेरपि सिद्धरूपवेदार्थाभ्युपगमे तन्मते 'आम्नायस्य क्रियार्थत्वात —' (जैमि० १. २. १) इति वेदस्य कार्यार्थतया ब्रह्मप्रमाणत्वाभावेन तत्पूर्वपक्षानुपपत्तेः । ननु 'तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति', 'सर्वे वेदा यत पदमामनन्ति', 'विष्णुनामा स वेदेषु वेदान्तेषु च गीयते' इत्यादौ कर्मणामन्यार्थत्वं ब्रह्मणः स्वप्राधान्येन सर्ववेदप्रतिपाद्यत्व चावगम्यत इति चेत् । सत्यमवगम्यते बादरायणस्य, न तु जैमिनेः । अक्रियार्थानामन्तरेण विधिशेषत्व प्रामाण्यानभ्युपग-

---

१ 'क्त्वा ग्र' ख पाठ.

मात् । 'एतेन कर्त्रादिप्रतिपादनद्वारोपनिषदा नैराकाङ्क्ष्यं व्याख्यातमि'ति तन्त्रवार्त्तिककृता अर्थवादन्यायातिदेशात् ।

एतेन प्रतिज्ञाभेदो भागद्वयासाधारणार्थविषय इति प्रत्युक्तम् । साधारणार्थप्रतिज्ञाभावे तदसिद्धेश्च । प्रतिज्ञाभेदस्य व्यवस्थितैकदेशार्थविषयत्वाज्ञाने ताद्र्थिकत्वानुपपत्तेश्च । साधर्म्यवैधर्म्यसमोद्देशे च युक्त तदनुगतप्रतिधर्मसमोद्देश आक्षिप्यत इति । यदि हि 'साधर्म्यवैधर्म्योत्कर्षापकर्ष—' (न्यायदर्श० अ० ५. आ० १. सू० १) इत्यादिना जातिभेदानुद्दिश्य †"साधर्म्यवैधर्म्याभ्या साध्योपसहारे तद्विपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ' (न्यायदर्श० अ० ५ आ० १ सू० २) इति लक्षितौ प्रतिधर्मावान्तरभेदौ न स्याता, तर्हि शब्दोऽनित्यः कृतकत्वाद् घटवद्, व्यतिरेकेण व्योमवदिति वा साध्योपसहारे कृते घटवैधर्म्येणाकाशसाधर्म्येण वामूर्तत्वेन नित्य. स किं न स्यादिति प्रतिवादिन' साध्यविपर्ययार्थ युक्तव्याप्त्याद्यङ्गमनुपेत्य प्रत्यवस्थानमिव तत्रैव प्रत्यक्षादिना तथा प्रत्यवस्थानं जातिर्न स्यात् । तच्चायुक्तम् । जातिर्नाम स्थापनाहेतो प्रतिषेधासमर्थो हेतुः । "असदुत्तरं जाति-रि'त्याद्यभियुक्तोक्तसामान्यलक्षणक्रोडीकारात् । जात्यन्तरानन्तर्भावाच्च प्रतिधर्मसमायामनभ्युपेतयुक्ताङ्गसाधनेन प्रत्यवस्थानमिति लक्षिताया तत् सङ्गृह्येत, सूत्रे च विभागोपादानस्य सर्वजातीनामवान्तरभेदसद्भावप्रदर्शनफलत्वात् । न चैवमिह साधारणप्रतिज्ञाक्षेपकारणमस्ति । प्रस्थानभेदेनापि प्रतिज्ञाभेदोपपत्ते. । न च ब्रह्मजिज्ञासेति साधरणप्रतिज्ञा जैमिनेरिष्टा । कृत्स्नाम्नायस्यापि धर्मकार्थ्योपगमात् । तथा च शबरस्वामी—'दृष्टो हि तस्यार्थ. कर्मावबोधनं नामे'ति । न च बादरायणस्य तदेकशास्त्र्यमुपगन्तु युक्तम् । अतदर्थतया कॢप्तमपि योग्यमपेक्षितं तादर्थ्यमर्हति । ग्रामे कल्प्ये पूर्वं तटागवदिति न्यायादिति वाच्यम् । विरोधात् । जैमिनीयधर्मविचारे प्रवृत्तस्योपनिषदामपि कर्मैकपरत्वावबोधनेन तत्रैव निरूढा-

१ 'कार्यं' ख पाठ.

† 'साधर्म्यवैधर्म्याभ्यामुपसहारे तद्धर्मविपर्ययोपपत्ते साधर्म्यवैधर्म्यसमौ' इति मुद्रितन्यायदर्शनपाठ

भिनिवेशस्य ब्रह्मविचाराप्रवृत्ते', वरघाताय कन्योद्वाहनन्यायापातात् । एतेनात्रैव सङ्गतोऽपि धर्मविचारः पृथक् क्रियते, बाहुल्यादिति प्रत्युक्तम् । जैमिनीयविचारस्य विरोधेनानपेक्ष्यत्वात् ।

"उपजीव्योऽपि विटपी विरोधी वास्तुकर्मणि ।
अनपेक्ष्यो यथा तद्वदुद्देश्यपरिपन्थि यत् ॥"

इति न्यायात् । न चेह सङ्गतिरपि धर्मविचारस्य । प्राचीनकर्मभिरेव विशुद्धसत्त्वस्य प्रव्राजितस्य ब्रह्मविचारप्रवृत्तस्य तद्विचारप्रयोजनाभावात् । न च 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र० ३. ४. २६) इति तार्तीयन्यायस्य विद्यामनुतिष्ठता कर्माणि शमादिवदनुष्ठेयानीति विवक्षितोऽर्थः, येन तद्विचार इह समगस्यत । अग्रे विद्याकर्मसमुच्चयस्य निरसिष्यमाणत्वात् । शास्त्रयोनित्वात्' (ब्र० १. १. ३) इत्यविशेषादशेषशास्त्रप्रमाणकत्वे ब्रह्मणो निरूपिते सर्वस्य शास्त्रस्य क्रियानिष्ठत्वन्यायेन तदाक्षिप्य सिद्धेऽपि ब्रह्मणि प्रामाण्यमात्रमुपपादित समन्वयाधिकरणे न कृत्स्नस्येति कर्मणा तादर्थ्योपादानेन क्रियाभागस्यापि ब्रह्मपरत्वप्रतिपादनाभिप्रायत्वोपपत्तेश्च । किन्तु तत्रैव सङ्गतावपीहाभिधीयते कर्मणा साधनांशनिवेशादिति । यत्तु 'अथातो धर्मजिज्ञासे'त्येवालौकिकश्रेयस्साधानतारूपेण साधारणविचारप्रतिज्ञेति । तन्न । जैमिनेः प्रतिज्ञातब्रह्मविचाराकरणायोगात् । न च तस्य विघ्नो विस्मरण वा । द्वादशलक्षणीलक्षितन्यायाविषयमवशेषित सङ्क्षेपे विचारयतो महर्षेस्तदयोगात् । न च तुल्यन्यायतया तदकरणं, बादरायणस्यापि तदनारम्भप्रसङ्गात् कृतकरणानर्थक्यात् । न चान्येन करिष्यत इत्युपेक्षा युक्ता । अपि च न धर्मशब्द सिद्धसाध्यसाधारणालौकिकलौकिकश्रेयस्साधनैकशक्तिकः । धर्मं जैमिनिरत एव' (ब्र० ३.२.४०) इति जैमिनिमतेन ब्रह्मप्रतिद्वन्द्वितया धर्मशब्दप्रयोगात् । आपस्तम्बस्य च 'यत्त्वार्याः क्रियमाण प्रशसन्ति, स धर्म' इति क्रियायामेवालौकिकश्रेयस्साधने धर्मशब्दप्रयोगात् । द्रव्यक्रियागुणादीनामपि क्रियारूपाविष्टानामेव धर्मशब्दाभिधेयत्वात् ।

"श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभि. ।
चोदनालक्षणैः साध्या तस्मात् तेष्वेव धर्मता ॥"

---

१, 'र', २. 'तोऽपि' ख. पाठ

इति श्रेयस्साधनत्वचोदनालक्षणत्वयोः सिद्धरूपेणानुपपत्तेः । 'भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत' (जै० २. १. १) इति भावार्थस्यैव विधेयत्वोपगमात् । अविधेयस्य च धर्मत्वे 'चोदनालक्षणोऽर्थो धर्मः' (जै० १. १. २) इति सूत्रविरोधात् ।

"साध्यत्वरहिते चेष्टाविधेये नित्यमर्थता"

इति भट्टवचनस्य च क्रियावत् स्वरूपेण साध्यत्वस्यावर्जनीयत्वात् । विधेयताया क्रियानुप्रवेशेन साध्यत्वस्यावर्जनीयत्वात् । 'अन्यत्र धर्माद्' इति ब्रह्मणो धर्मशब्दार्थादन्यत्वश्रवणाच्च । श्रेयस्साधनतयैव कर्तृकालादेरपि धर्मत्वप्रसङ्गाच्च । अलौकिकश्रेयोसाधारणसाधनत्वस्य च ब्रह्मण्यसम्भवात् । 'कृष्णं धर्मं सनातनम्' इति च धर्माराध्यत्वात् तत्फलदानेन जगद्धारणयोगाद् धर्मसंस्थापनाच्च श्रीकृष्णस्य धर्मतया स्तुत्युपपत्तेः । अपि च त्वन्मते सर्वशब्दवाच्यत्वाङ्गीकारेणोत्कर्षविशेषशालिधर्मशब्दनिर्देश्यत्वोपपत्तेर्ब्रह्मणि धर्मशब्दवृत्तौ न क्रियाधर्मप्रसिद्धिविरोधेन यत्नान्तरमनुसरणीयम् ।

अपि चैवम् 'अथातो धर्मजिज्ञासे'त्येव सिद्धे पुनः 'अथातो ब्रह्मजिज्ञासे'ति प्रतिज्ञावैयर्थ्यम् । अलौकिकश्रेयस्साधनतैकरूपप्रतिज्ञायामप्यर्थविशेषप्रतिज्ञाप्रतिपादनौपयिकीति चेद्, न । धर्मे तदभावेन वैरूप्यकल्पनापत्तेः । साध्यधर्मे धर्मशब्दप्राचुर्यात् तस्य बुद्धिस्थत्वे च स एव मुख्योऽर्थोऽन्यो गौण इति न युगपदुभयग्रहण, युगपद् वृत्तिद्वयविरोधात् । अन्यथा 'अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्—' (जै० ९. १. ३६) इति मन्त्राणा प्रथमप्रत्याय्यमुख्यार्थविनियोगन्यायविरोधात् । मुख्यगौणयोरुभयोरपि तुल्योपस्थितिप्रसङ्गात् । उभयविशेषलक्षणायां चोक्तदोषानतिवृत्तेः । एतेन तन्त्रतापि निरस्ता । अलौकिकश्रेयस्साधनतासामान्यशक्तस्य क्रियारूपविशेषे लक्षणावश्यम्भावेन वृत्तिद्वयविरोधस्य तन्त्रतोक्तिमात्रेणापरिहरणीयत्वात् । अथावृत्तिः सूत्रस्य, तत्कल्पना तावदेको दोषः । अपि च आवृत्तावपि स एवायं धर्मशब्द इति कथमर्थविशेषलाभः । लक्षणसूत्रसमभिव्याहारादिति चेत् । तर्हि प्रसिद्धिप्राचुर्याल्लक्षणसूत्रसमभिव्याहाराच्च प्रथममेव क्रियाधर्मप्रतीतौ कुतः साधारणप्रतिज्ञा । सूत्रस्यान्यतः साधारणप्रतिज्ञार्थत्वासिद्धावावृत्त्यसिद्धेः । आवृत्तस्यैव लक्षणसूत्रसमभिव्याहार इति नियन्तुमशक्यत्वात् । तस्माद् नैकप्रतिपाद्यकत्वमैकशास्त्र्यं साध्यम् । स्वतन्त्रभिन्नार्थविषयप्रतिज्ञाभेदबाधात् ।

नाप्येकप्रयोजनकत्व, बाधादेव । बादरायणमते वेदस्य ब्रह्मैदम्पर्येण क-

र्मणामपि तादर्थ्यान्निःश्रेयसैकफलत्वेऽपि जैमिनेः स्वप्रधानानामेव कर्मणामभ्युदयफलत्वोपगमात् । अत एव नैकपुरुषानुष्ठेयत्वं साध्यं, राजसूयबृहस्पतिसवादिवदितरेतरासम्भिन्नाधिकारिकर्तृकत्वात् । शेषशेषित्वेऽधिकृताधिकारे वा प्रमाणाभावाच्च । एकग्रन्थव्याख्यानत्वं चैकशास्त्र्येऽप्रयोजकं बहुलमर्थविरोधात् । विध्येकवाक्यतया क्रियार्थवादप्रामाण्यसमर्थनस्य वेदान्तसाधारणत्वात् ।

ननु तदुत्सृष्टं जैमिनिना सिद्धे वेदान्तप्रामाण्यसमर्थनेन केवलमपोद्यते । तथा च टीकायाम् 'अथातो धर्मजिज्ञासे'ति धर्मोपाधौ तदीयविचारप्रवृत्तिमादर्श्याक्रियार्थानर्थक्यचोद्यसमाधाने कर्मकाण्डीयविषयतया व्यवस्थापिते । न चार्थवादादेरेव प्रामाण्याङ्गीकारानङ्गीकाराभ्यामर्थविरोधः । सिद्धे मानान्तरेण विरुद्धे वा सिद्धान्तिनोऽपि तदनङ्गीकारात् । अतादृशे च बोधकतामात्रस्य परेणापि स्वीकारात् । अत एव 'स प्रजापतिरि'त्यादौ मानान्तराविरुद्धार्थोपपादनं 'नित्यः कश्चिदर्थः स्याद्, आकाशो वायुर्वा प्रजापतिरि'त्यादि शाबरं दृश्यते । अन्यथा यथातथापि स्तुतिनिन्दोपलक्षणसम्भवेन तदानर्थक्यात् । प्रयोजनपर्यन्तता चार्थवादादेर्विधिशेषतयैवेति न विवादः । तस्मादुत्सर्गापवादौ नैकशास्त्र्यविरोधीति ।

उच्यते । नात्रोत्सर्गापवादः, तुल्यविषयविरोधात् । 'एतेनोपनिषदामि'त्यादिवार्त्तिकस्य सूत्रतात्पर्यनिरूपणाया च जैमिनिमतं हीदं चोदनालक्षणोऽर्थ एव वेदप्रतिपाद्य इति, चोदनेति क्रियायाः प्रवर्तकं वचनं, तमाशङ्क्य सिद्धवस्तु वेदप्रतिपाद्यमिति सूत्रकारैः साधयितुं युज्यत इति स्ववचनस्य च कर्मविधिशेषतयोपासनविधिशेषतया वा वेदान्तानामपि प्रामाण्यं, न स्वत इति जैमिनेर्मतमित्येवमर्थकत्वे तेषामेव सिद्धान्तेऽनन्यशेषतया प्रामाण्याङ्गीकारात् । अक्रियार्थानर्थक्यचोद्यादेरर्थविशेषव्यवस्था च न जैमिनेरेषोऽभिप्राय इति किं तर्हि यद्यक्रियार्थानामर्थवत्त्वाय विध्येकवाक्यता, न सा वेदान्तानां, स्वार्थवृत्त्यैवार्थवत्त्वादिति जैमिनिसिद्धान्तसकलाक्रियार्थविध्येकवाक्यत्वभङ्गेनाशाभ्युपगममात्रम् । अत्र साक्षितया तदीयधर्मजिज्ञासोपक्रमोपन्यासस्तु परप्रत्ययनेयमत्युपच्छन्दनमित्युक्तम् । धर्मजिज्ञासेत्यारभ्य वेदान्तानां विधिशेषत्वाभिधाने विरोधोद्धाटनं वा । सकलाम्नायस्य धर्मैकार्थताया दूष्यत्वात् । वेदान्तानामुपासनाविधिनिष्ठत्वस्यापि निराकार्यत्वात् । न चाक्रियार्थानर्थक्याप्रामाण्यचोद्यसाधारण्येऽपि विधिशेषतया तत्समाधानमर्थवादादिमात्रविषयम् । वेदान्तानां स्वत एव पुरुषार्थतया प्रामाण्यप्रकारोपपादनं तु न कृत्स्नमभिसन्धिनिगूहनार्थमिति वाच्यम् । येन विध्यर्थवादमन्त्रनामधेयविभागस्य वेद-

स्य सर्वप्रकार प्रामाण्य व्युत्पाद्य स्मृत्याचारयोरपि व्युदपादि, स खल्वक्रियार्थानामविशेषेणानर्थक्यादप्रामाण्यचोद्यमुद्भाव्य क्वचिदेव समाधायान्यत्राभिसन्धि निगूहत इत्यसारोत्प्रेक्षणस्यायुष्मतो मतिमान्द्यनिमित्तत्वात् । कुतश्च जैमिनेरुपनिषद्प्रामाण्यचोद्यसमाधानाभिसन्धिनिगूहनमुत्प्रेक्ष्यते । तद्विषयसूत्राभावादिति चेत् । नन्वर्थवादविषयमेव सूत्र 'विधिना त्वेकवाक्यत्वात्—' (जै० १. २. ७) इति । अविधिशेषतया प्रामाण्योपपादकं नास्तीति चेत् । तत एव विधिशेषतया तत्प्रामाण्यं जैमिन्युपज्ञमिति ब्रूमः । अविधिशेषतया सदपि प्रामाण्यं नोपपादयति, व्युत्पाद्यधर्मोपमर्दभयादिति चेत् । ननु कुतस्त्यमुपमर्दभयं तव कर्मसमुच्चयमिच्छत. ।

अपि च पूर्णाहुत्या सर्वकामावाप्तिफलस्य गर्गत्रिरात्रब्राह्मणविद्यया मुखशोभाफलस्य च 'अन्यानर्थक्यात्' (जै० १. २. ४) 'तथा फलाभावात्' (जै० १. २. ३) इतीतरकर्मानर्थक्यमनुपलम्भबाधं च दोषमभिधाय समादधे 'सर्वत्वमाधिकारिकम्' (जै० १. २. १६) 'विद्याप्रशसा' (जै० १. २ १५) इति । तच्च समान वेदान्तेषु । 'सर्वांश्च लोकानाप्नोति, सर्वांश्च कामान्' इति प्रजापतिविद्ययैव सर्वलोककामावाप्तौ 'तेषां सर्वेषु लोकेषु कामचारो भवती'ति तदूनफलदहराद्युपासनानर्थक्यात् । यद्यपि सर्वकर्मापेक्षिताग्निसंस्कारतया पूर्णाहुतेरवश्यापेक्ष्यायाः सर्वकर्मावाप्तिफलत्वे स्यादन्यानर्थक्य, नेतरेतरनिरपेक्षासु विद्यासु । तथाप्यल्पगुणविषयत्वादल्पया प्रजापतिविद्यया तावति फले तदेकदेशफलस्य बहुगुणविषयत्वाद् महतो विद्यान्तरस्यानर्थक्यमेव । अग्निहोत्रेणाल्पेन स्वर्गावाप्तावग्निष्टोमाद्यानर्थक्यस्याप्यन्यानर्थक्यन्यायविषयत्वात् । 'फलस्य कर्मनिष्पत्तेस्तेषा लोकवत् परिमाणतः फलविशेषः स्यात्' (जै० १. २. १७) इति कृषिन्यायेन कर्मतारतम्येन फलतारतम्यकल्पनया तस्यापि समाधानात् । तथा ज्योतिर्विद्यायां 'तदेतद् दृष्टं च श्रुतं चेत्युपासीत, चक्षुष्यः श्रुतो भवती'ति वर्तमाननिर्दिष्टसुन्दरत्वयशस्वित्वफलानुपलम्भाच्च । तत्र तदन्यानर्थक्यसमाधानं यदि वेदान्तेषु नानुगम्येत 'विकल्पोऽविशिष्टफलत्वात्' (ब्र० ३. ३. ५९) इति न्यायात् । न तावता तत्राभिसन्धिनिगूहनं जैमिनेरयुक्तिकमाश्रयितव्यम् । सर्वथैवात्मविद्यायाः कर्माङ्गतोपगमादपापश्लोकश्रवणवदविवक्षितार्थानि फलवचनानि प्रशसामात्रमिति तदभिप्रायोपपत्तेः । तदिद रात्रिसत्रन्यायेन तत्फलविधिपरत्वाङ्गीकारप्रवृत्तवैयासिकदर्शनेन विरुद्धम् ॥

न च देवतानिरासो जैमिनेरतात्पर्यादन्वारुह्यवादत्वाद्वा तदभ्युगमेन न विरोध इति युक्तम् । देवताधिकरणे देवतादिषु मन्त्रादिप्रामाण्यनिरासेन शब्दातिरिक्तदेवता नभ्युपगमे तात्पर्यावगमात् । अहृदयवादफलाभावाच्च । देवतातत्प्राधान्याभ्युपगमेऽपि तदाराधनात्मसु कर्मसु श्रद्धाविच्छेदाप्रसङ्गाद्,

"वर्णाश्रमाचारवता पुरुषेण पर. पुमान् ।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ॥"

इति निषेधेन प्रकारान्तराप्रसक्तेः । ऐन्द्र आग्नेय इत्याद्याराध्याराधननिबन्धनाच्च विग्रहवत्त्वे देवतानाम् ऋत्विजामिव सन्निधाय हविरस्वीकरणे कर्मलोपभिया तदनादरप्रसङ्गस्यापि तदन्तर्धानादिशक्तिकल्पनया केवलमुद्देश्यत्वेन सन्निधानानपेक्षया वा सुपरिहरत्वात् । स्थानाद्युपाधिकस्य कस्यापि नित्यार्थस्य सम्भवेन तादर्थ्ये सत्यनित्यसयोगानवकाशाच्च ।

एतेन कर्मणा देवताप्रीत्यर्थत्वे फलदानात् प्रागपि तत्प्रीणित[1]देवतानाशसम्भावनया फलाऽभशङ्कया[2] कर्मण्यश्रद्धा स्यात् । श्रुतवेदान्तानां तु तत्तद्देव. तान्तर्यामी सकलकर्माराध्यो निखिलकल्पानुयायी फलदातेत्याश्वासोपपत्तिरिति प्रत्युक्तम् । देवतावादिवेदस्य कथमप्यनित्यसंयोगापरिहारात् । अश्रुतवेदान्तानामपि नरपत्युत्तमर्णन्यायेन फलसिद्ध्याश्वासोपपत्तेः । यथा तत्स्थानस्थोऽन्योऽपि ऋणं दायीति विस्रम्भान्नरपतेरुत्तमर्णो भवति, एवं कल्पान्तरेऽप्यद्यतनेन्द्रवाय्वादिस्थानाधिकृतेन्द्रवाय्वादिदेवता कर्मफलं दास्यति, तस्याः समस्ततत्कार्यकारित्वादिति विश्वासाच् श्रद्दधानः कर्मणा तद्देवतानामाराधको भविष्यतीति कुतः कर्मण्यश्रद्धासम्भावनापि । अथवा कर्माराध्या देवतां व्युत्पादयता जैमिनिना इयदिदमपि व्युत्पाद्यतां सर्वदेवतान्तर्यामीश्वरो नित्यः फलदातेति । एवंकारमपि कर्मण्यश्रद्धा परिहरिष्यते । न त्वनभिमतदेवतानिरासः । तथा च गीतासु —

"यो यो यां या तनु भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचला श्रद्धां तामेव विदधाम्यहम् ॥

---

१. 'त्प्रणीत', २ 'ङ्काया क' क पाठ..

स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हितान् ॥"

इति । वस्तुतस्तु अतिथिप्रीत्यर्थे कर्मण्यातिथ्ये कथमश्रद्धा परिहरणीया जैमिनिना । 'अतिथौ तत्प्रधानत्व तस्य प्रीतिविधानत्वाद्' इति हि सूत्रम् । अथ तत्रातिथिप्रीत्यन्तमनुष्ठितं कर्मैव फलदमिति श्रद्धाप्येत, अन्यत्रापि देवताप्रीत्यन्तमनुष्ठितं तथेति श्रद्धाप्यतां, मा भूदतिथिवद् देवता फलदेति । इयांस्तु विशेषः — एवं कृतेऽतिथिः प्रियते इति प्रत्यक्षतोऽवगम्यते । शास्त्रेण तु देवतेत्यवगमनीयमिति ।

अपि च देवतानिरासाधीनायामाम्नायप्रामाण्यादिसिद्धौ पुनस्तत्सिद्ध्युपायाभावेन तदभ्युपगमबाधः । न चात्र क्षेत्रजयन्यायः । तत्रेष्टार्थव्ययविजितक्षेत्रद्वारार्थान्तरप्राप्तेरविरोधात् । प्रकृते च प्रामाण्यसिद्ध्यर्थमेव निरस्ताया देवतायाः पुनरङ्गीकारे तन्निरासैकजीविततत्सिद्धिविघातात् । आष्टमिकाधिकरणे च देवताराधनरूपत्वात् कर्मणा फलदात्री देवता प्रधानमिति तत्सामान्यमेव विध्यन्तनियमे हविस्सामान्याद् बलीय इति प्राप्ते 'गुणत्वेन देवताश्रुति' ' (जै० ८. १. ३४) इति नाभ्युच्चयमात्र, गुणत्वस्य द्रव्यसाधारण्येऽपि शब्दोद्देश्य(त्व)मात्रेण रूपेण गुणत्वमिति विशेषविवक्षया गुणत्वमित्यनुक्त्वा 'गुणत्वेन देवताश्रुतिरि'ति सूत्रणात् । नावमिकाधिकरणे च देवताप्राधान्यनिरासाद् 'देवता वा प्रयोजयेदतिथिवद् भोजनस्य तदर्थत्वात्' (जै० ९. १. ६) इति देवताप्राधान्य पूर्वपक्षयित्वा 'अपि वा शब्दपूर्वत्वाद् यज्ञकर्म प्रधान स्याद् *गुणत्वेन देवताश्रुतिः' (जै० ९. १. ९) इति कर्मप्राधान्य सिद्धान्तमभिधाय'अतिथौ तत्प्रधान त्वमभावः कर्मणि स्यात् तस्य †प्रीतिविधानत्वात्' (जै० ९ १. १०) इत्यतिथिप्रीतिपर्यन्ततयातिथ्यविधिवद् देवताप्रीत्यर्थतया कर्मविधानाभावान्न देवताप्राधान्यमित्यभिधानात्, अभ्यासे च तात्पर्यावगमात् । अत एव विग्रहवच्चेतनदेवतानिरासो जैमिनेरार्थिको विवक्षितः, शब्दमात्रोद्देश्यमात्रतया देवताया. प्राधान्यनिरासाभिप्रायत्वात् । यत्त्वत्र यज्ञकर्मप्राधान्यमङ्गग्राहकतयोच्यते फलसाधनतया च । सिद्धान्तेऽपि देवताप्राधान्ये कर्मणो वैधफलसाधनताहानापत्तेः । तस्य

---

* 'गुणत्वे दे', † 'प्रीतिप्रधानत्वात्' इति मुद्रितजैमिनीयसूत्रपाठ ।

प्रीतिविधानत्वादित्यपि न यागस्य देवताप्रीत्यर्थाभावादातिथ्यवैषम्यमुच्यते। किं तर्हि येन यावता द्रव्येणातिथिः प्रियते, तेन तावता स पूजनीय इत्यातिथ्यस्य प्रीतिविधानत्वम्। नैवं यागस्य। आज्यचरुपुरोडाशादिभिरेव चतुर्गृहीतद्विरवत्त-परिमितैरेव विधितो देवताप्रीतेरिष्टत्वात्। तस्माद् न देवतानिरासाभिप्रायो जैमिनेरिति। तन्न। देवताप्रीत्यर्थत्वे यागस्य तदुद्देश्यत्वाम्नानावगतेऽङ्गवैकल्ये तदसिद्ध्योद्देश्यसिद्ध्यर्थस्य तत्प्रयुक्तत्वाद् देवताया अपि तत्प्रयोजकत्वलक्षणाङ्ग-ग्राहकत्वावश्यम्भावात्। कर्मणि वैधफलसाधनताप्रतिपत्त्यनुबन्धित्वेऽपि फलवद् देवतायाः कर्माराध्यतया प्राधान्योपगमात्। अन्यथा 'फलमत उपपत्तेः' (ब्र० ३. २. ३८) इति न्यायविरोधात्। राजानमुपास्स्वेतिवदमुं यजामु यजेति विधेरिष्टदेवता कर्मणैव फलसाधनीत्यभिप्रायावगमाच्च। प्रीतिविधानत्वमपि यागस्य सिद्धान्ते न निवार्यम्। यागस्य देवपूजात्मकत्वात्। 'आहुत्यैव देवता हुतादः प्रीणाती'त्यर्थवादाच्च। इयांस्तु विशेष.—अतिथिप्रीत्यर्थं द्रव्यं लोकतोऽवगम्यते, देवताप्रीत्यर्थं तु विधित इति, न चैतावता प्राधान्यं हीयत इति। अत एवापूर्वाधिकरणविरोधसमाधानमपि निरस्तम्।

यत्तु 'मध्वादिष्वसम्भवादनधिकारं जैमिनिः' (ब्र० १. ३. ३१) इत्यधिकारनिरासाद् देवतायाः सद्भावो जैमिनेः सूच्यत इति। तद् 'ज्योतिषि भावाच्च' (ब्र० १. ३. ३२) इत्युत्तरसूत्रपर्यालोचनविधुरस्य प्रलाप.। यत्तु ज्योतिषि ब्रह्मणि अधिकारस्य भावाद् मध्वादिष्वनधिकारो देवानाम्। देवमनुष्यादिसाधारणे ब्रह्मोपासने 'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमि'ति देवानामुपासकत्ववचनस्यान्योपासनानिवृत्तिपरत्वादिति। तन्न। ज्योतिष्येव भावादिति हि तदा सूत्र्येत। अन्यथा तादर्थ्यानभिव्यक्तेः। अपि च नेद देवानां ब्रह्मोपासनाधिकारविधिपरम्, अफलत्वाद्, अर्थित्वादेरपर्युदासाच्च[1] स्वत एव भावात्। बृहस्पतिसवादावब्राह्मणादेरिवादेवस्यानधिकारपरत्वायोगाच्च। ब्रह्म-प्रतिपादनपरं त्विदं 'तद् ब्रह्म, यद्देवा उपासत इति मनुष्या उपासीरन्नि'ति। तत्र निर्निबन्धननियमानुबन्धेनान्योपासनानिवृत्तिपरत्वकल्पनममूलम्। अन्यथा 'ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्त' इति दर्शनाद् मनुष्याणामप्य-

१ 'दप' क. पाठ.

न्योपासनानिवृत्तिप्रसङ्गात् । अपि च वाक्यादस्मादेव देवानां ब्रह्मोपासनाधिकारे प्रतिपत्तव्ये तदन्योपासनाधिकाराभावे च वाक्यावृत्तिगौरवमापद्येत । न चार्थित्वसामर्थ्यादिन्यायादेव तदधिकारसिद्धिः । देवानामर्थित्वादिसिद्धेरेवमादिवादमूलत्वात् । अपि च यत् तदवस्थब्रह्मोपासनं शास्त्रे विहितं, तत्र सर्वत्रैव देवानामधिकारे 'तदुपर्यपि बादरायणः सम्भवात्' (ब्र० १. ३. २६) इत्येव सिद्धे किं 'मध्वादिष्वसम्भवादनधिकारं जैमिनिः' (ब्र० १. ३. ३१) इत्यधिकरणारम्भेण । यत्तद्विधासम्भवचोद्यस्य सर्वस्यैवाविशेषोपात्तसम्भवन्यायापनेयत्वात् । न च अत्र मधुवाक्यस्य ब्रह्मोपासनपरत्वं प्रतिपाद्यते, 'य एतामेवं ब्रह्मोपनिषदं वेदे'त्युपसंहारदर्शनात् । यथाह वृत्तिकारः — 'अस्ति हि मध्वादिषु सम्भवो ब्रह्मण एव सर्वत्र निचाय्यत्वादि'तीति वाच्यम् । अधिकारचिन्तासङ्गतिप्रसङ्गात् । न चेह ब्रह्मोपासनपरत्वे कश्चिन्न्यायः सूत्रकृता सूच्यते । ब्रह्मोपनिषदमित्युपसहारस्य 'तद्धैतद् ब्रह्मा प्रजापतय उवाचे'ति ब्रह्मप्रवचननिमित्तसमाख्यामात्रविषयत्वेऽप्युपपत्तेः । 'सूर्य आत्मा जगतस्तस्थुषश्चे'त्यादित्योपासनस्यापि ब्रह्मोपनिषत्त्वोपपत्तेश्च । तस्माद् वस्वादिव्यामिश्रासूपासनास्वधिकारासम्भवान्न ब्रह्मविद्याधिकार इत्यभ्युच्चितवादहानेन भूतमये ज्योतिषि भावाच्चादित्यादिशब्दानामर्थित्वादेरसम्भवादनधिकारो देवानामिति स्वाभिसन्धिसारेण मन्त्रादिप्रामाण्याक्षेपेण प्रत्यवतिष्ठते जैमिनिरित्येव युक्तम् । यद्यपि सम्भवादित्येवासम्भवशङ्का यावती समाधेया गम्यते, तथापि मन्त्रादिप्रामाण्योपक्षेपेण देवानामधिकारः सम्भाव्यते । तत्र व्यतिरेकानुपलब्ध्यभावं यौक्तिकमाशङ्क्य 'विरोधः कर्मणीति चेन्न—' 'शब्द इति चेन्न—' (ब्र० १. ३. २७,२८) इति परिहृते, पुनः 'ज्योतिषि भावाच्च' (ब्र० १. ३. ३२) इति प्रत्यक्षतो व्यतिरेकादप्रामाण्यमाशङ्क्य तत्समाधानेन स एव सम्भवः समर्थ्यते, भाव तु देवानामधिकारस्य ब्रह्मविद्याया बादरायणो मन्यते, सम्भवादेव । अस्ति हि मन्त्रादिप्रामाण्यम् । न हि ज्योतिषि व्यपदेशो मन्त्रादिप्रतिपन्नचेतनदेवतात्मतामपवदाति, 'ब्राह्मणो यजेते'त्यादिष्वपि प्रसङ्गादिति न्याय्यतरम् । 'फलमत उपपत्तेः' (ब्र० ३. २. ३८) 'पुरुषार्थोऽतश्शब्दाद्—' (ब्र० ३. ४. १) इत्यादौ स्वमतोपक्षेपं परमतमाशङ्क्य समाधानेन तथा सूत्रकाराभिप्रायविज्ञानात् । यत्तु 'य एतामेवं ब्रह्मोपनिषदं वेदे'ति ब्रह्मविद्यात्वश्रवणाद् वस्वादीनामुपास्यत्वप्रतिपत्तेश्च

सशये बुभुत्सितार्थपरीक्षणमिह कार्यमिति । तदिहासङ्गत्यादिना परिहृतम् । [१]प्रातर्दननयनेयं च परस्येति कृतकरणापत्तिश्च, तत्रापि 'मामेव विजानीहि' 'प्राणोऽस्मि प्रज्ञात्मे'ति श्रवणाद् जीवरूपेण स्वरूपेण परमात्मोपासन व्याख्यातमिति । यत्पुनर्ब्रह्मसूत्रेषु 'धर्मं जैमिनिः—'(ब्र० ३ २. ४०) इत्यादेः पूर्वपक्षस्य निरसनीयस्यान्वारुह्यवादत्वमुक्तम् । तन्न । तन्मुख्यसिद्धान्तत्वे बाधकाभावात् । 'पर जैमिनिः —' (ब्र० ४. ३. १२) इत्यादितदीयसिद्धान्तोपन्यासस्य चान्वारुह्यवादविषयत्वाद् ब्रह्मसंन्यासाद्युपगमतन्निरासाभ्यां विप्रतिषेधेनासामञ्जस्योद्घाटनपरत्वेनाप्युपपत्तेर्वा । यदपि स्वशास्त्रेऽसूत्रितत्वाद् ब्रह्मसंन्यासाद्यपलापो नेष्टो जैमिनेरिति । तन्न । अत एव ब्रह्मसंन्यासादेरनिष्टत्वापत्तेः, अक्रियार्थानामानर्थ(क्य ? क्यात्) सोमविद्याप्रजमृणश्रुतिसयोगादिति ब्रह्मसन्यासाद्यपलापस्यार्थत. सूत्रितत्वाच्च । तस्मादर्थविप्रतिषेधाद् धर्मब्रह्मजिज्ञासाशास्त्रभेदसिद्धिरिति । अत्रायमर्थसक्षेपः —

धर्मब्रह्मविभिन्नप्रमेयचिन्ताप्रतिज्ञानात् ।
धर्मब्रह्मैकार्थ्यं कृत्स्नाम्नायस्य नाशतो द्वितयम् ॥
जैमिनिवेदविभाजोरिष्ट तस्मान्न शास्त्रैक्यम् ।
बहुलाच्चार्थविरोधात् सिद्धः शास्त्रस्य भेदो नः ॥

---

## मीमांसयोः क्रमनियमाभावः ।

अथापि स्यादेक शास्त्रं धर्मब्रह्मजिज्ञासे, तथापि न क्रमनियमः । यदि हि अध्ययनविधिरर्थज्ञानपर्यन्तो विचार प्रयुञ्जीत, तत एवाध्ययन इव विचारेऽपि क्रमो नियम्येत । न च तदुभयमध्ययनविधेरिष्ट तान्त्रिकस्यापि 'अध्ययनमात्रवतः' (ब्र० ३. ४. १२) इति सूत्रविरोधात् । कः पुनरत्र दोषः । अत्राह — अध्ययनविधेरर्थज्ञानपर्यन्तत्वे 'आचार्यकुलाद् वेदमधीत्य अभिसमावृत्य' 'वेदमधीत्य स्नायाद्' इति श्रुतिस्मृत्योस्तदैकार्थ्येन कृत्स्नवेदार्थज्ञानस्य यज्ञाद्यनुष्ठानशेषत्वेन विनियोगादात्मब्रह्मशब्दसामानाधिकरण्येन वेदान्तेषु ब्रह्मज्ञानस्य सम्प्रतिपन्नकर्त्रात्मद्वारा प्रोक्षणादेरिव व्रीह्यादिद्वारा कर्मशेषत्वोपपत्तेः, असम्प्रतिपन्नातिरिक्तात्मकल्पने तज्ज्ञानस्य कर्मसु विनियुक्तस्य समुद्रमनोध्यानवददृष्टार्थत्वाद्, दृष्टसम्भवेऽदृष्टकल्पनायोगाद्, न जीवाधिकोपदेशो वेदान्तेष्वित्यप्रामाणिकेश्वरविचाररूपं शास्त्रमनारम्भणीय प्राप्नुयात् । अक्षरग्रहणपर्यन्तत्वे तु तस्य कर्मस्वर्थज्ञानस्याविनियोगेन कर्मानुष्ठायिजीवातिरिक्तात्मप्रतिपादनसम्भवात् प्रामाणिकपरमात्मविचाररूप शास्त्रमारम्भणीय स्यादिति ।

---

[१] ब्र० सू० अध्या० १ पा० १. अधि० ११.

अत्रेदं वक्तव्यम् — अध्ययनविधावर्थज्ञानपर्यन्तेऽपि कथमर्थज्ञानस्य कर्मशेषतावगतिरिति । न हि क्त्वाश्रुतिर्विनियोजिका, 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'त्यादावपि प्रसङ्गात् । श्रुतिलिङ्गाद्यन्यत्वेन तद्गतो विधानस्यापि लिङ्गमात्रत्वात् । सामर्थ्यं तु तत्तत्कर्मानुष्ठाने तत्तज्ज्ञानस्यैवेत्यात्मज्ञानस्य तच्छेषत्वासिद्धे । तस्यापि पारलौकिकफलकर्मानुष्ठापनसामर्थ्येऽप्यधिकोपदेशात् । न ह्यपहतपाप्मादिलक्षणात्मज्ञानमपि तदौपयिकम् । केवलव्यतिरेकाभावात् । तज्ज्ञानविनियोगविध्यभावे सति तद्दृष्टार्थत्वायाधिकोपदेशान्यथासिद्धेरनवकल्पनात् । तत्सामर्थ्यस्य च तदन्यथासिद्ध्यधीनत्वात् । आत्मब्रह्मशब्दसामानाधिकरण्य च ब्रह्मरूपावसानमपि स्यादिति ।

वय तु ब्रूम — अध्ययनविधेरर्थज्ञानपर्यन्तत्वे गुरुकुलादसमावृत्तस्यैव दृष्टफलार्थज्ञानाय विचार आक्षिप्येत, 'वेदमधीत्ये'ति क्त्वाश्रुतेरानन्तर्यमनादृत्य पूर्वकालत्वमात्रवृत्त्युपपत्तेः । स्नानाभिसमावृत्त्योर्वा गुरुकुलवासवर्जमस्नानादिनियमनिवृत्तिलक्षणत्वाश्रयणात् । यथाह वार्त्तिककार'—

"इहास्नानादिनियमो य' कृतो ब्रह्मचारिण. ।
अवधित्वमनाश्रित्य सोऽवसानमपेक्षते ॥
ततोऽपेक्ष[illegible]रात् [illegible]निवर्तनम् ।
विरोधसाहचर्या[illegible] [illegible] लक्षयेत् ॥"

इति । अध्ययनविध्येकार्थतया वेदमधीत्येत्यर्थज्ञानावधिकाध्ययनानन्तरमभिसमावृत्तिविध्यविरोधाच्च । सर्वथैव वेदान्तविचारे शमदमसंन्यासादिसाधनोपदेशानर्थक्यम् । अथाध्ययनविधिरर्थज्ञानाय विचार प्रयुञ्जानोऽन्यत्र निरपेक्षोऽपि ब्रह्मविचार शमादिसाधनापेक्ष. प्रयोक्ष्यते शाखाभेदाध्ययनमिव शिरोव्रतातिसापेक्ष इति चेत् । न । कृत्स्नकर्मविधीनागननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात् , प्रागेवोपनिषदर्थविचारौपयिकतया सन्यासादिसाधनानुष्ठाने पुनर्निवेशाभावात् । 'अरण्यमियाद् न पुनरेयात्' 'सन्यस्याग्नीन् न पुनरावर्तयेद्' इति श्रवणात् ।

"आरूढो नैष्ठिक धर्मं यस्तु प्रच्यवते पुनः ।
प्रायश्चित्त न पश्यामि येन शुध्येत् स आत्महा ॥"

इति निन्दास्मरणाच्च । आह च सूत्रकार. — 'तद्भूतस्य तु नातद्भाव ' — (ब्र०

चारानन्तरमेवोपयम्य कर्मविधयोऽनुष्ठास्यन्ते । कालान्तरे च संन्यासादिसव्यपेक्षोऽध्ययनविधिरुपनिषदर्थविचार प्रयोक्ष्यत इति । तथा सति वेदैकदेशमविचार्याचार्यकुलादभिसमावर्तमानस्याध्ययनविध्यनुष्ठानमन्तराले विहतमिति 'वेदमधीत्य स्नायादि'त्यादि विरुध्येत । अथावृत्त्या गुरुमुखोच्चारणानूच्चारणस्याध्ययनशब्दत्वप्रसिद्धेस्तस्य च नान्तरीयकाक्षरग्रहणपर्यन्तस्य साङ्गस्य करणस्य निष्पत्त्यैवाध्ययनविधिचारितार्थ्यात्, फलनिष्पत्तेरविध्यधीनत्वाद् अधीत्य समावृत्तौ न विरोध इति चेत् । एव तर्हि वेदार्थविचारो नाध्ययनविधिनानुष्ठाप्येत । उपद्रष्टृवचनादिनाप्यनुष्ठानसम्भवे चानियतकर्तव्यो विचारः प्रसज्ज्येत । तत्र च वेदमधीत्याभिसमावृत्त्येत्याद्यवगतवेदाध्ययनानन्तरकालीनगुरुकुलावसानस्य बाधेन तदनन्तरविचारकर्तव्यतापरम् 'अथातो धर्मजिज्ञासे'ति सूत्रमुपरुध्येत । अत्र सामान्यज्ञानाधीनधर्मविशेषजिज्ञासायामन्वयव्यतिरेकसिद्धहेतोरध्ययनादानन्तर्यस्यावाच्यत्वाद्, अनन्तरधर्मजिज्ञासाविरोधिगुरुकुलावसाननिवृत्तेरेवाथशब्दलक्ष्यत्वात्। यथाह भाष्यकार. — 'अधीते वेदे द्वयमापतति गुरुकुलाच्च समावर्तितव्य वेदवाक्यानि च विचारयितव्यानि । तत्र गुरुकुलान्मा समावर्तिष्ट । कथ नु वेदवाक्यानि विचारयेदित्येवमर्थोऽयमुपदेशः' इति । वार्त्तिककारोऽपि —

"आनन्तर्यवचोयुक्तिराश्रितैवात्र लक्ष्यते ।
श्रुतार्थ तु परित्यज्य लक्षणार्थो विधीयते ॥
प्रतीता धर्मजिज्ञासा वेदाध्यायादनन्तरा ।
तत्कालस्यावरुद्धत्वात् स्नानाभाव तु लक्षयेत् ॥"

इति । स्नानमत्र गुरुकुलनिवृत्तिः समावर्तनम् । 'वेदमधीत्य स्नायादि'ति स्मृतेः 'वेदमधीत्याभिसमावृत्त्ये'ति श्रुत्यैकार्थ्यात् । तस्मादध्ययनविधेरर्थज्ञानफलत्वे फलनिष्पत्तेरविध्यधीनत्वेऽपि दृष्टफलार्थज्ञानस्य साङ्गाध्ययनेऽपि विना विचारमनुत्पत्तौ सर्वौषधावहननवत् सकृद् द्विस्त्रिर्वा व्रीह्यवहननेऽपि विनावृत्ति दृष्टफलतण्डुलानुत्पत्ताविवातत्फलत्वशङ्काया अवहन्तिविधेरावृत्त्याक्षेपपर्यन्ततयैवाध्ययनविधेर्विचाराक्षेपपर्यन्ततया समाधेयत्वाद्, विचारावसाने तस्मिन्नौपनिषदा वादाः कथमपि धर्मैकार्थाः कल्प्येरन्निति 'अथातो ब्रह्मजिज्ञासे'ति नारभ्येत । पार्थ-

जिज्ञासे'ति नारभ्येत, ब्रह्मार्थविचाराय पृथगारम्भेऽपि 'ब्रह्मजिज्ञासे'त्येव स्यात् । अथ वैधे भागद्वयविचारे युगपत्प्राप्तेऽशक्यत्वात् क्रमापेक्षयाम् अध्ययनक्रमेण पूर्वभागे विचारितेऽवसरदानायाथातश्शब्दावित्युच्येत, फल्गुफलः सूत्रभागः कल्प्येत । तस्मादौपनिषदविचारस्य विशिष्टाधिकारिकत्वाद् अध्ययनविधेरर्थज्ञान-फलत्वे तदयोगाद् अक्षरावाप्तिमात्रफले तस्मिन्नापातप्रतिपन्नफलवदर्थनिर्णयाय यथाधिकार यथाविषय च विचारारम्भ उपपद्यत इति ।

कः पुनरेव सत्यध्ययनविधावधिक्रियताम् । अत्राह — स्वाध्यायग्रहणकाम एवाधिक्रियते, 'स्वाध्यायोऽध्येतव्य' इति तस्य कर्मत्वावगमात् । कर्तुरीप्सि-ततमस्यैव कर्मत्वात् । फलकामस्य सफले कर्मण्यधिकारादिति । यथोक्त श्रुतप्रका-शिकाया — स्वाध्यायसिद्धिरधिकारिविशेषण स्यात् । 'स्वाध्यायोऽध्येतव्य' इति स्वाध्यायस्याध्ययनासध्यत्वावगमादिति, अक्षरराशिग्रहणफलमित्यनेन स्वाध्याय-ग्रहणकामत्वमध्ययनाधिकारिविशेषणमिति सूचितमिति च ।

अत्र ब्रूम — एव ह्यध्ययनकाम एवाधिक्रियताम् । अध्ययनस्य सुख-दुःखाभावान्यत्वेन कामनायोग. स्वाध्यायग्रहणस्यापि । अर्थज्ञानादिपरम्परया पुरुषार्थावसानं चाध्ययनस्यापि, अक्षरग्रहणार्थज्ञानादिपारम्पर्योपपत्तेः । अध्य-यनप्रवृत्तिदशायामध्ययनस्य पुरुषार्थपर्यवसानाज्ञानं च स्वाध्यायग्रहणस्यापीति । अपि च 'अग्नीनादधीते'त्यादावग्निकामनाधिकार. स्यात् , कर्मनिर्वृत्त्या पुरुषार्थ-पर्यवसानोपपत्तेः । तत्र चोत्तरक्रतुविधिप्रयुक्तानुष्ठानत्वोपगमाविरोध. । अपि च तत्साध्यकामस्य तदधिकारित्वेऽङ्गसाध्यनानात्वेन साङ्गप्रधानैकाधिकारित्वभङ्ग. । अपि च कामाधिकारित्वेऽध्ययनमनित्य स्यात्, कामस्याधिकारहेतोरनियाम्यत्वात् । तत्र च 'अश्रोत्रिया अननुवाक्या अनग्नय शूद्रसधर्माण' इति निन्दावचनमुपरुध्येत । आचार्यककामाधिकारकाध्यापनविधेरनित्यतया नित्याध्ययनस्य तत्प्रयुक्तिनिरा-करण च पीड्येत । नित्यक्रतुविधिनेवाग्निकामनाया. स्वाध्यायकामनाया नित्य-जपयज्ञादिविधिना प्रयुक्त्युपगमे चाधानमिवाध्ययन न स्वविधिप्रयुक्त स्यात् । तस्मादुपनीतोऽधिक्रियत इति युक्तम् ॥

---

## उपनयनस्याध्ययनाङ्गत्वाभाव ।

ननु उपनयनमध्ययनाङ्गतयानुष्ठेय, नाधिकार । अन्यथा तस्योद्देश्य-

तावदुपनयनमध्ययनाङ्गम् । 'अष्टवर्षं ब्राह्मणमुपनयीते'ति ब्राह्मणादिसंस्कारतया पुरुषार्थत्वात् ।

"गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामुपमृज्यते ॥"

इत्यादौ मौञ्जीनिबन्धनोपलक्षितोपनयनस्यैनश्शान्त्यर्थतास्मरणात् । 'यस्यैते चत्वारिंशत् संस्कारा अष्टावात्मगुणा. स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति' इति स्मरणात् । किञ्च,

"अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिता ॥"

इत्युपनयनासंस्कारे पातित्यस्मरणाद्, उचितविहितकर्मानर्हताया एव पातित्यशब्दितत्वात् । 'संस्कृतस्य च कर्मानुष्ठानयोग्यतापत्तेरुपनयनादिर्नियमः' इति स्मरणात् । कर्मणामुपकारकमात्रमुपनयनं संस्कृतानामेव कर्मार्थतयाग्निसंस्कारकमिवाधानम् । तच्चादृष्टांशेन साधारण्येऽपि धात्वर्थभूताचार्यासत्तिरूपदृष्टांशेनापि प्रयोजनमपेक्षमाणम् अध्ययनविधावधिकारिसापेक्षे कर्तृविशेषणम् अधिकारनिमित्तं भवति । हन्तैवम् इतरेतराकाङ्क्षया वाक्यविनियोगादध्ययनाङ्गमुपनयनमापन्नं, सामर्थ्याद् अध्ययनैकाश्रयत्वाच्चेति चेत् । न । एकाश्रयत्वमात्रस्याङ्गत्वप्रयोजकत्वात् , वैधाचार्योपगमननियमस्य प्रागुपनयनाविधेः सामर्थ्यानवगमात् । अध्ययनविधौ कर्त्राक्षेपपर्यवसन्ने तत्संस्कारकतया तद्विधेः विनियुक्तव्रीहिप्रोक्षणादिवद् दौवारिकान्याङ्गत्वाप्रतीतेः । अन्यथा विशेषाभावेन सर्वकर्तृकेऽध्ययनविधौ शूद्रपरिवर्जनाभावप्रसङ्गात् । उपनयनसंस्कारस्य च यथाविधानं ब्रह्मणादिकर्त्रविशेषणतया शूद्रे रथकारादिवदनपेक्ष्यत्वात् । अथ 'पद्यु (ह) वा एतच् श्मशानं यच्छूद्र.' तस्माच् शूद्रसमीपे नाध्येतव्यम्'

'अथ हास्य वेदमुपशृण्वतस्त्रपुज्यतुभ्या श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदः' इत्यादिनिषेधाद्

"यस्य येनार्थसम्बन्धो दूरस्थेनापि तस्य सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥"

इति न्यायेन तदेकवाक्यतापन्नाध्ययनविधेस्त्रैवर्णिककर्त्राक्षेपपर्यवसाने सन्निधिबलेन ब्राह्मणादिपदोपस्थिते तत्रोपनयनं विधीयमानमङ्गीक्रियतामिति चेत् । न । एव विहितवेदाध्ययनाभावेऽपि शूद्रस्याविहितवेदाध्ययनप्रसङ्गात् । निषेधस्य विहिताध्ययनकर्तृनियमार्थत्वोरीकारात् । तद् मा भूदिति स्वत. पुरुषार्थे शूद्रस्याध्ययननिषेधेऽध्ययनविधेरुपनीतमनपेक्ष्याविशिष्टकर्त्राक्षेपे शूद्रस्य विहितप्रतिषिद्धमध्ययन प्रसज्ज्येत । वैधाध्ययनातिरिक्तविषयतया सामान्यतन्निषेधस्य विहिताध्ययनमेव वा प्रसज्ज्येत । तस्मात् सर्वार्थोपयोगितयोपनयनसस्कारो दृष्टाशेनाध्ययनाधिकारिनिमित्तमिति युक्तम् । न चैव 'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षे'त्यत्र दध्यानयन वैश्वदेवाङ्ग न स्यात् । उपनयनवदवगतविनियोगकारकगोचरे विधानाभावात् । अर्थज्ञानद्वारा सामर्थ्यावगतविनियोगे स्वाध्याये सस्कारतया विधीयमानाध्ययनं च क्रत्वङ्ग स्यादिति वाच्यम् । सा वैश्वदेवीति तच्छब्देन प्रकृतपरामर्शिना आमिक्षासामानाधिकरण्यापन्नस्त्रीलिङ्गेन दध्यानयनसस्कृतपयःपरामर्शे सस्कारविशिष्टस्यैव विनियोगावगमात् स्वत. पुरुषार्थत्वाभावात्, तत्प्रकरणसम्बन्धेन तदङ्गत्वौचित्याच्च । 'अष्टवर्ष ब्राह्मणमुपनयीत, तमध्यापयीते'त्युपनयनस्य तच्छब्दश्रुत्याविशेषेऽपि बैजिकादिदोषनिर्हरणार्थत्वावगतेः । अतत्प्रकरणसम्बन्धवाक्यस्य चाधिकारिसम्बन्धेऽप्युपपत्तेश्च वैशेष्यात् । 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'त्यत्रेव 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'ति क्त्वाश्रुत्यविशेषेऽपि ह्यङ्गाङ्गित्वाभावः । पृथगधिकारश्रवणादिवैशेष्यात् । न चाध्ययनस्यार्थज्ञानादिद्वारा क्रत्वङ्गतापत्तिः । अनुष्ठेयार्थज्ञानस्य हितैषिवचनादप्युपपत्तौ स्वाध्यायस्य तादर्थ्यानियमात् । सामर्थ्यसाधारण्येन व्यभिचारात् । अन्यनिमित्तज्ञानानुष्ठितात् फलसिद्धावध्ययनसस्कारानर्थक्यात् । स्वाध्यायादेवानुष्ठेयार्थज्ञानमेषितव्यमिति चेत् । एव तर्हि सस्कृतस्यैव तस्य तादर्थ्यावधारणादनवगतविनियोगे सस्कारविधानादध्ययन क्रत्वङ्ग स्यात् । न चाध्यय-

प्रत्यवमर्शनाभावात् । सामर्थ्यस्य स्वाध्यायस्वरूपमात्रानुगतत्वात् । नित्यतयाध्ययनस्य स्वतः पुरुषार्थत्वाच्च । सस्कृतविनियोगे संस्काराङ्गत्वस्यापुरुषार्थत्वनिबन्धनत्वात् ।

ननु 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते, ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इत्युत्पत्त्यैव ब्राह्मणस्य विद्यादिसम्बन्धबोधनादवगतकर्तृभावे ब्राह्मणे विधीयमानसस्कारो विद्याङ्गता प्रतिपद्यत इति चेत् । एव सत्युपनयन सोमाद्यङ्गं स्यात्, तुल्यन्यायत्वात् । न चायमवधानार्थवादो ब्रह्मचर्याङ्गकाध्ययनादेर्ब्राह्मणसम्बन्धपरः । अपि चैवम् ऋणश्रुतेर्ब्राह्मणसम्बन्धविधिपरत्वे सोमविद्याप्रज न त्रैवर्णिकविषये नित्य स्यात्, ब्राह्मणसम्बन्धावरुद्धत्वात् । अथ ब्राह्मणग्रहणमुपलक्षणमित्युच्येत, कुतः पुनरेव निश्चय । अध्ययनविधावधिकारिसापेक्षे गुर्वासत्तिपर्यन्तोपनयनसस्कृतस्य त्रैवर्णिकस्यापि सामर्थ्यसाम्येनाधिकारित्वान्वयादिति चेत् । न तर्हि उपनयनमध्ययनाङ्गम्, उपनीतस्यैवाधिकारिणः कर्तृत्वावगमात् । यत्तु 'वसन्ते ब्राह्मणमुपनयीत' (आप० ध० १. १. १. १८) इति द्वितीयाश्रुत्या उपनयनस्य तादर्थ्यावगमात् तस्य च तदीयकार्यपुरुषार्थाध्ययनाङ्गतानतिरेकाद् उपनयनमध्ययनाङ्गमिति । तन्न । न ह्यध्ययनमात्रमुपनीतकार्यम् । कर्मणामपि तत्कार्यत्वादुपनयनं तदङ्गमपि प्रसज्ज्येत । अथ कर्माणि स्वविधिसामर्थ्यादत्रैवर्णिकानामपि पुरुषार्थतया कार्यत्वेन प्राप्तान्युपनयनपूर्वकाध्ययनविधुरेषु विद्याप्रयुक्तिकल्पनागौरवदोषेण तद्वत्सु त्रैवर्णिकेषु व्यवस्थाप्यन्ते । वचनात् तु क्वचिद् 'एतया निषादस्थपतिं याजयेदि'त्यादावत्रैवर्णिकार्थान्यप्यनुमन्यन्ते । तत्रैव सत्युपनीतमात्रकार्यत्वाभावेन कर्मणामुपनयनाङ्गकत्वाभावेऽपि स्वविधिनैवोपनीतमात्रकार्यतयावगम्यमानस्याध्ययनस्य तदङ्गकत्व स्यात् । तथा च स्मृति — 'उपनयन विद्यार्थस्य श्रुतित. सस्कार.' (आप० ध० १ १. १. ८) इति । नैवम् । बैजिकाद्येनश्शमार्थमध्ययनानधिकारिणा मूकादीनामप्युपनयनविधानेन तयोरङ्गाङ्गित्वायोगात् । न ह्यङ्गिप्रयुक्तिमनपेक्ष्यानुष्ठीयमानमङ्ग नाम भवति ।

"मूकोन्मत्तौ न सस्कार्याविति केचित् प्रचक्षते ।
कर्मण्यनधिकाराच्च पातित्य नास्ति चैतयोः ॥"

इति तदसंस्कारस्य परपक्षत्व ब्रुवता मनुना तयोरपि सस्कारस्य स्वपक्षत्वसूचनात् । एनश्शमार्थतया गार्भहोमादिसहपाठाच्च । तथा च अध्ययनविधिः स्वतः पुरुषा-

र्थतया सर्वसाधारणोऽपि स्वतोऽपेक्षिताचार्यासत्तिप्रयुक्तिकल्पनागौरव माभूदित्युपनयनविधिलब्धाचार्यासत्तिकेषूपनीतेषु व्यवस्थाप्यत इति तुल्यः कर्मविधिभिरध्ययनविधे(यः) स्वविधिस्वरसत उपनीतमात्रकार्यत्वाभावः । स्मृतावप्युपनयन विद्यार्थमित्यस्मरणाद् विद्यार्थस्येति संस्कारप्रतिसम्बन्धितया पुरुषोपादानात् तदर्थसंस्कारस्य तदीयसर्वकर्तव्योपकारकमात्रत्वावगमात् । न चादृष्टांशेन तथाभूतमप्युपनयनमाचार्यासत्तिरूपदृष्टांशेनाध्ययनाङ्गमपि स्यादिति वाच्यम् । तदंशेनाप्युपनयनप्रभृत्यनुष्ठेयनियमग्रहणस्य

"उपनीय गुरुः शिष्य शौचाचाराश्च शिक्षयेद्"

इत्यादिस्मृतेराचार्यायत्तत्वेन साधारण्यात् । तस्मात् स्वतःपुरुषार्थत्वे सति श्रुत्यादिविनियोजकाभावान्नाध्ययनाङ्गमुपनयनम् ॥

---

### उपनयनस्याध्यापनाङ्गत्वाभावः ।

अथ एव नाध्यापनाङ्गमपि । ननु 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीते'त्यात्मनेपदश्रुतेः स्वरितञित. कर्त्रभिप्राये क्रियाफले तद्विधानाद् अध्यापनक्रियासाध्यमाचार्यकं कर्तृगामि क्रियाफलमिति फलवत्सन्निधानात् तदेकफलमुपनयनमध्यापनाङ्ग स्यात् । उपनेयासत्त्यध्ययनद्वारा तस्य तत्र सामर्थ्याच्च । अथ 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु निय.' (१. ३ ३६) इत्यकर्त्रभिप्रायार्थोऽयमारम्भ. । न च कर्तृगाम्याचार्यकफलोद्देश्यक एवोपनयनेऽकर्तृगाम्युपनेयसंस्कारोऽपि विद्यत इत्येतावता तत्प्रवृत्तिः । कर्त्रभिप्रायादिविवक्षाया' प्रधानफलविषयत्वात् । अन्यथा यजन्ति याजकाः, पचन्ति पाचकाः इत्यादौ 'स्वरितञितः—' (१. ३. ७२) इत्यात्मनेपद स्यात् । दक्षिणादिफलस्य कर्त्रभिप्रायत्वात् । एव तर्हि तत्रात्मनेपदमेव किं न स्यात् । न स्यात् । यागपाकारम्भफलस्याकर्त्रभिप्रायत्वाद्, यागपाकक्रियासन्तत्यविच्छेदप्रयोजकवरणप्रवर्तनादिरूपारम्भस्य स्वामिगामिस्वर्गान्नवत्त्वफलोद्देश्यकत्वात् । उक्त च हरिणा—

"यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः ।
तत्प्रधानं फल तेषां न लाभादि प्रयोजनम् ॥"

त्फरूपपरम्परासम्बन्धकल्पनापेक्षया तदङ्गतया साक्षात्फलसम्बन्धकल्पनस्य न्याय्यत्वात् आधानाङ्गे तु पूर्णाहुतौ कथञ्चिदुपकारकनामात्रेण परम्परयाप्युपकार्याग्निहोत्रादिकर्मफलसम्बन्धोऽनुकीर्त्यते स्तवनाय 'पूर्णाहुत्या सर्वान् कामानाप्नोती'ति । अनारभ्याधीताधानाङ्गस्यातदङ्गत्वेन साक्षादग्निहोत्रादिफलसम्बन्धासम्भवात् । उदुम्बरता पुन प्रकरणादङ्गमङ्गिफलमसाक्षात्सम्बन्धेन स्तूयते—'औदुम्बरो यूपो भवति, ऊर्ग्वा उदुम्बर , ऊर्क् पशव , ऊर्जैवास्मा ऊर्जं पशूनवरुन्ध' इति, सोमापौष्ण स्याङ्गिन पशुफलत्वात् । तद्वदिह स्यात् सन्निधानात् सम्भवाच्चेति चेत् । न । पुरुषस्य कर्तव्यप्राप्तियोग्यतापादनेनोपनयनस्य स्वत. पुरुषार्थतया श्रुत्यादिविनियोजकाभावेनाङ्गत्वानुपपत्ते । सन्निधानस्य सम्बन्धमात्रगमकत्वात् । सम्भवमात्रस्यातिप्रसक्तत्वात् । उपकारकमात्रेणाध्यापनफलसम्बन्धस्य कल्पनीयत्वात् । अथ

"उपनीय तु य शिष्य वेदमध्यापयेद् द्विजः।
सकल्प सरहस्य च तमाचार्यं प्रचक्षते ॥"

(मनु० अध्या० २. श्लो० १४०)

इति स्मृत्यनुमितायाम् आचार्यककाम शिष्यमुपनीयाध्यापयीतेति श्रुतावुपनयनाध्यापनयो क्त्वाश्रुत्यवगतकर्त्रैक्योपपादकतयाक्षिप्यमाण प्रयोगैक्य समप्राधान्येऽङ्गाङ्गित्वे विपर्यये च सम्भवदप्युपनेयासत्त्यादिदृष्टद्वाराध्यापननिवृत्तिसामर्थ्यादुपनयनस्य तदङ्गतामावहतीति चेत् । न । 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'त्यादाविव क्त्वाश्रुतेरवगतमपि कर्त्रैक्यमुद्दस्य कर्तृत्वाधिष्ठानपुरुषैक्यमात्रालम्बनत्वाभ्युपगमात् । वाक्यान्तरे स्वतन्त्रफलत्वावगत्याविशेषात् । अपि च 'उपनीय तु य शिष्यमि'त्यादि न साङ्गाध्यापनविधिपरम् । किन्तु 'आचार्याय दक्षिणा देये'त्यादिविध्यपेक्षिताचार्यसञ्ज्ञाविधिपर, न केवलेनोपनयनेन नापि केवलेनाध्यापनेन, किन्तूभाभ्यामाचार्यो भवतीति

"न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रमनुत्तमम् ॥"

इतिवत् तत्सञ्ज्ञाविधिप्रायपाठात् । अनन्तरश्लोके

"निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥"
(मनु० अध्या० २ श्लो० १४२)

इति संज्ञाविध्युपलम्भात् । अपि चैव

"स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति"

इत्यत्रापि गुरुत्वकामो निषेकादिक्रियाः कृत्वा वेदमस्मै दद्यादिति विधिकल्पने निषेकादीनामप्यध्यापनाङ्गत्व स्यात् । न चैवम् । तस्मादुपनयनस्यानन्याङ्गतयोपनीताधिकारिकमध्ययनमिति । तथा च न्यायरत्नमालायाम्—"अप्राप्तविधिरेवायं न यावद्धि फलवत्कर्मानुष्ठानोपयोगिज्ञानोपायतयाध्ययनानुष्ठानमुत्प्रेक्ष्यते, तावदेव द्विजातीनामुपनीताना तत्प्रक्रमाधीतया 'स्वाध्यायोऽध्येतव्य' इति प्रत्यक्षश्रुत्याध्ययन विधीयते, श्रुतेर्लिङ्गाच्छीघ्र प्रवृत्ते" इति ।

केचित् पुनः 'एतया अन्नाद्यकाम याजयेदि'त्यादाविव उपनयीताध्यापयीतेति वृत्त्यर्थप्राप्तानुवादित्वात् 'तस्मिन्नभिजनविद्यासमुदेत समाहित सस्कर्तारमीप्सेत्' (आप० ध० १. १ १. ११) इति स्वाजन्यलिङ्गाद् आचार्योपगमनस्योपनयनपदोपलक्षितस्य सामर्थ्याद् अध्ययनविध्यपेक्षिताचार्यासत्तिफलस्यार्थवशादपि प्राप्नुवत. 'अष्टवर्षो ब्राह्मण उपगच्छेत, सोऽधीयीते'ति नियमविधिपरिणामेन आचार्यासत्तिरूपदृष्टसमवाय्यदृष्टार्थतयोपनयनस्याध्ययनाङ्गतामाश्रित्य प्रदोषादिकालदीक्षादिवदधिकारिविशेषणत्वमविरुद्धमित्युपनीताधिकारिकमध्ययनमित्याहु ।

सर्वथापि साधिकारत्वात् स्वविधिप्रयुक्तानुष्ठान स्वाध्यायाध्ययनम्, आधानसस्कारेणारण्यादौ समारोप्यस्यापचारे नश्यतश्च देवतात्मनोऽग्नेरिवाध्ययनसस्कारेण स्वाध्यायस्यानुत्पाद्यतया सिद्धस्याध्ययने कारकभावोपपत्त्या पुरुषार्थविधिपरिणामोपपत्तेः। नित्य च तत् । अनधीयानस्य 'अश्रोत्रिया' इत्यादिदोषश्रवणात् । तथा च स्वप्रधानतया विधीयमानमदृष्टद्वारा पुरुषार्थ कर्मप्रधानतया च सस्कारार्थम् । संस्कृतश्च स्वाध्यायो ब्रह्मयज्ञजपफलवदर्थाववोधादावुपयोक्ष्यते । दृष्टरूपेण स्वाध्यायावाप्त्यर्थ च । अदृष्टार्थत्वेऽपि गुरुमुखोच्चारणानूच्चारणरूपस्याध्ययनस्य ब्रह्मयज्ञादौ स्वाध्यायविनियोगबलेनावृत्त्याक्षेपात् । एवमुपनयनमपि पुरुषार्थं माणवकस्य सस्कारार्थम्, आचार्यासत्त्याध्ययनार्थ च । यदि च कास्यादिशुद्धिरिव तदशुद्धेरुपनयनसस्कार एव पुरुषैनसो निबर्हणार्थ., मा भूत् स्वतन्त्रादृष्टार्थम् ।

न काचित् क्षतिः। आधानमपि 'अनाहिताग्निता स्तेयं' 'नास्तिक्यं चोपपातकम्' (मनु० अध्या० ११ श्लो० ६५, ६६) इति मनूक्तानाहिताग्नित्वनिमित्तोपपातकपरिहारार्थतया पुरुषार्थम्, अग्निसंस्कारार्थं च। यथा 'सूक्तवाकेन प्रस्तरं प्रहरती'ति विधीयमानं यागात्मनार्थकर्म देवतादिसंस्कारकर्म च, तद्वत्। अथ कथमेकस्मिन् वाक्ये स एव स्वाध्यायाध्ययने पुरुषार्थे गुणः संस्कारार्थे प्रधानम्। उपादेयश्च प्रथमे उद्देश्यश्च द्वितीये विधेयश्चानुवाद्यश्चेति प्रतीयेत। प्रस्तरणप्रहरणादावपि कथम्। विरुद्धत्रिकद्वयान्यतरस्कन्धस्य नान्तरीयकतया समाधानं च समानमुभयत्र। अन्ये तु आवश्यकजपाद्युपयोगिस्वाध्यायविधुरा एवाश्रोत्रिया निन्द्यन्ते। ततश्च स्वाध्यायावाप्तौ लोकावगतसाधनेऽध्ययने नियमार्थो विधिरिति साङ्गविहिताध्ययनावाप्तस्वाध्यायादेव पुरुषार्थसिद्धिरित्याहुः।

ननु सक्तुन्यायेन स्वाध्यायेनाधीयीतेति विधिं विपरिणम्य स्वाध्यायाध्ययनेन यच्छक्यमक्षरावाप्त्यादि तद् भावयेदित्यध्ययनविधेरर्थज्ञानफलत्वं यदि नाद्रियते, वेदाध्ययनानन्तरकालविहितस्नानबाधेन विचारप्रयोजकाभावात् तदनन्तरकालकर्तव्यतया विचारशास्त्रं नारभ्येत। अध्ययनविधेरर्थज्ञानरूपदृष्टफलपर्यवसानाय हि विचाराक्षेपः, तदभावे तदभावादिति ॥

---

### विचारस्य रागतः प्राप्तत्वम्।

अत्राह — अध्ययनविधिगृहीतसाङ्गस्वाध्यायात् फलवदर्थापातप्रतीतेः फलस्य च तदर्थनिर्णयायत्तानुष्ठानाधीनत्वात् तन्निर्णयरागादेवाधीतवेदः पुरुषः स्वयमेव विचारे प्रवर्तते। अथापि

"वेदाङ्गानि समस्तानि कृष्णपक्षेषु संपठेत्"

(मनु० अध्या० ४. श्लो० ९८)

'षडङ्गो वेदोऽध्येतव्यः' इत्यनुष्ठानसादेश्यादङ्गाध्ययनस्य वेदाध्ययनाङ्गत्वेऽकिञ्चित्करस्य तदयोगात् किञ्चित्कारापेक्षायां वेदाध्ययनस्वरूपसन्निपातित्वाभावेन विषयद्वारा तदर्थज्ञानफलोपकारित्वावश्यम्भावेऽध्ययनविधेरर्थज्ञानफलत्वाक्षेपात् तादर्थ्येन तत्प्रयुक्त एव विचारो न रागप्रयुक्त इत्यापद्यत इति चेत्। नानुष्ठानैककाल्यमात्रादङ्गाङ्गिभावः, दर्शादावभावात्। नापि वेदाध्ययनतन्त्रमध्यविधानादङ्गाध्ययनस्य तदङ्गता, तुल्यविधित्वेन तदसिद्धेः। अपि च विषयावच्छि-

न्नस्याङ्गाध्ययनस्य वेदाध्ययनाङ्गत्वे शिक्षादीना वेदाङ्गत्वसशब्दन विरुध्येत । तस्माद् वेदतदङ्गाध्ययनयो. स्वस्वविषयावाप्तिफलयोर्नाङ्गाङ्गितेति । न चैवं वेदाध्ययनवदङ्गाध्ययनस्याप्यक्षरावाप्तिमात्रफलत्वे वेदार्थापातप्रतीतेरप्यनुपपत्तेस्तन्निर्णयरागाभावात् प्रयोजकाभावेन विचारप्रवृत्तिरेव न स्यादिति वाच्यम् । शिक्षादीनामङ्गतया वेदस्य किञ्चित्कारापेक्षाया दृष्टसम्भवन्यायेन स्वरवर्णप्रकृतिप्रत्ययविभागादिज्ञानद्वारा तदर्थज्ञानोपयोगकल्पनया तदापातप्रतीतिसम्भवात् । न चैव रागप्रयुक्तत्वे विचारस्य 'आचार्यकुलाद् वेदमधीत्य. अभिसमावृत्त्य' 'वेदमधीत्य स्नायाद्' इति वेदाध्ययनानन्तरकालमेवाभिसमावर्तनप्रसङ्ग , अध्ययनविधेरप्यक्षरावाप्तिमात्रावसानतया विचारानाक्षेपकत्वेन बाधकाभावात् । किञ्चातः । वृत्ते निवेशे नैयमिकनैमित्तिकादिकमविद्वाननुतिष्ठन् अन्धतमसमापद्येतेति । न । अव्यक्तस्य सन्ध्योपासनादिवद् उपद्रष्ट्राद्युपदेशजन्मनापि तस्य ज्ञानेनानुष्ठानोपपत्तेः । न च शूद्रस्याप्येव प्रसङ्ग इत्यपशूद्रनयविरोध.,

"न शूद्राय मति दद्याद्
न चास्योपदिशेद् धर्म न चास्य व्रतमादिशेद्"
(मनु० अध्या० ४. श्लो० ८०)

इत्याद्युपदेशनिषेधात्, तस्य मन्त्राभावात् । 'तस्माच्छूद्रो यज्ञे अनवक्लृप्त' इत्याहत्य यज्ञानवक्लृप्तिवचनाच्च । यद्येवमनपेक्ष्य एव विचारः प्राप्त । सत्यम् । नानुष्ठानाय तदपेक्षा, स्त्र्यादीनामन्तरेणापि विचारमनुष्ठानात् । किन्तूपद्रष्टृवचने प्रामाण्यमूलत्वनिश्चयाय प्रष्टॄणामुपपादनाय च । न च वृत्ते निवेशे नैयमिकाद्यवरुद्धासवेशनकालस्य विचारावसरो न लभ्यते । अत एवाहापस्तम्ब.— 'सवत्सरे सवत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेद् भूय. श्रुतमिच्छन्' (१ ४ १३ १८) इत्यारभ्य 'तच्छास्त्रैर्विप्रतिषिद्धम्' (१ ४. १३ २०) 'निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते' (१.४ १३ २१) 'अग्निहोत्रमतिथय' (१ ४. १४. १) इत्यादि, इति वाच्यम् । श्रावयितुरिव श्रोतुरपि तदवसरलाभोपपत्ते । वृत्त्यर्थतया रागप्राप्तस्यैवाध्यापनस्य शास्त्रानुमतत्वेऽपि कर्मच्छिद्रेष्वेव कार्यत्वात् । श्रोतुरप्येव कर्मच्छिद्रसम्भवात्, तस्यापि हितैषिवचनतो यावदनुष्ठेयज्ञानसंभवात् । स्मृतिश्च नैरन्तर्येणाचार्यपरतया समिदाहरणादि कुर्वतो गुरुकुलवासो नैयमिकाद्यनुष्ठानोपरोधीति तन्निषेधाभिप्राया । अन्यथा श्रावणमपि न

स्यात्, श्रावयितुरपि 'निवेशे हि वृत्ते नैयमिकानि श्रूयन्त' इति हेतोस्तुल्यत्वात्। अत एव युधिष्ठिरादीना गृहिणामेव सतां भीष्मादेर्धर्मश्रवणं भारतादिषूपाख्यायते। तस्माद् रागत एव विचारप्रवृत्तिरिति ॥

---

**विचारस्य रागतः प्राप्तत्वनिरासः ।**

तदिदमापातरमणीयम्। वेदार्थमविचार्याचार्यकुलात् समावृत्तस्य दारसङ्ग्रहे तदनन्तरकर्तव्याज्ञानात्। हितैषिवचनमेलनैकान्त्याभावात्। अन्यथानपेक्ष्यतया विचारशास्त्रस्यैवानारम्भप्रसङ्गात्। यत्तु हितैषिवचने प्रामाण्यनिश्चयाय तदपेक्षेति। तन्न। प्राग्विचारात् तत्र तन्निश्चयेऽनुष्ठाननिर्वाहात् प्रत्यवायापातात्। यदपि प्रष्टुपदेशार्थो विचार इति। तदात्मनः शूद्राद्युपदेश्यत्वमिच्छतामनुरूपं, सुतरामपि क्षत्रियादेरुपदेष्टृत्वप्रसङ्गात्। अथौपमन्यवप्रभृतीना क्षत्रियाद् विद्याग्रहणमनुश्रूयते। सजातीयावरोपदेष्टृत्वं च क्षत्रियस्य न विरुध्यते, भीष्मादेर्युधिष्ठिराद्युपदेशलिङ्गादिति चेत्। युक्तं प्राचीनशालादीनामुपास्यविषये समुपजातसन्देहानामारुणिं ब्राह्मणमुपेत्य तस्याप्यविदितार्थत्वेनापदि क्षत्रियाद् विद्याग्रहणम्। तथा च लिङ्ग— 'न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति' इति। तथा स्मार्तमपि लिङ्गं ब्राह्मणालाभ एव क्षत्रियाद् वैदिकार्थग्रहणं दर्शयति। यथा—

"ततो राजा हतां ज्ञात्वा धेनुं व्याघ्रेण चर्त्विजः।
प्रायश्चित्तं स पप्रच्छ किमत्रेति विधीयते ॥
ते चोचुर्न वयं विद्मः कशेरुः पृच्छ्यतामिति।
कशेरुरपि तेनोक्तस्तथेति प्राह भार्गवम् ॥
शुनकं पृच्छ राजेन्द्र! नाहं वेद्मि स वेत्स्यति।
स गत्वा तमपृच्छच्च सोऽप्याह श्रृणु यन्मुने! ॥
न कशेरुर्न चैवाहं न चान्यः साम्प्रतं भुवि।
वेत्त्येक एव त्वच्छत्रुः खाण्डिक्यो यो जितस्त्वया ॥"
(विष्णुपु० अं० ६. अध्या० ६ श्लो० १४—१७)

इत्यारभ्य

"ततः सर्वं यथावृत्तं †धर्मधेनुवधं द्विज!।
कथयित्वाथ पप्रच्छ प्रायश्चित्तं हि तद्गतम् ॥"
(विष्णुपु० अं० ६ अध्या० ६ श्लो० ३२)

---

† धर्मधेनुः प्रवर्ग्यहविर्विशेषार्थं पयोदोग्ध्री धेनुः।

इत्यादि । एतेन भीष्मादीना धर्मोपदेष्टृत्वं व्याख्यानम् । तत्रैव भीष्मवदन्यो धर्मज्ञो नास्तीत्यर्थवाददर्शनात् —

"अद्यैव परिपृच्छध्व यद् वो मनसि वर्तते ।
ज्ञानान्यल्पीभविष्यन्ति भीष्मे लोकान्तर गते ॥"

न चैवमायतावापदमालक्ष्य क्षत्रियादेरुपदेशार्थो विचार इति युक्तम्, अपुरुषार्थे दुःखाकरे प्रवृत्त्ययोगात् । न च वृत्त्यर्थं क्षत्रियादेरुपदेश शास्त्रेऽनुज्ञायते । तस्माद् रागाधीने विचारे न त्रैवर्णिकस्य तत्सिद्धिः । अपि च उपयमानन्तर विचारमुपयत 'बुद्ध्वा कर्माणि यत् कामयेत, तदारभेत' (आप० ध० २. ९. २१. ५) इति स्मृतिरुपरुध्येत । अपि चैव परिणयानन्तर गुर्वधीनस्योदकाहरणादिशुश्रूषापरस्य कर्मलोपः स्यात् । यत्तूदकाहरणादिशुश्रूषाध्ययनधर्मो न विचारयतोऽस्तीति । तन्न । उदितशास्त्रविप्रतिषेधस्मृतेरनर्थकत्वप्रसङ्गात् । 'ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे' इत्युपाख्यविषयसंशयविच्छेदनार्थमपि प्रवृत्तानां प्राचीनशालादीना समिदाहरणादिलिङ्गदर्शनात् । धर्मधेनुवधनिमित्तप्रायश्चित्तोपदेशनार्थेन खाण्डिक्यविषये केशिध्वजस्य गुरुनिष्क्रयदानस्मृतिलिङ्गाच्च —

"निष्पादितो मया यज्ञः सम्यक् त्वदुपदेशतः ।
सोऽहं ते दातुमिच्छामि वृणीष्व गुरुदक्षिणाम् ॥"
(विष्णुपु० अ० ६. अध्या० ६० श्लो० ४२)

इति । 'नासमयेन कृच्छ्रं कुर्वीते'ति दुरवधारणग्रन्थादिग्रहणे शुश्रूषादिनियमस्मरणाच्च । तस्माद् यत्किञ्चिदपि वैदिकार्थसंस्पर्शि काव्यादिव्यतिरिक्त गुरोरधिगम्यते, तत्र शुश्रूषादावध्ययनतुल्यतैव । नियमान्तरे पर विशेष इति । यत्तु वित्तख्यात्यादिप्रयोजनान्तरस्पृहया शिष्यस्नेहेन वा शुश्रूषामनपेक्ष्य गुरोः श्रावणमुपपद्यत इति । तन्न । तथाप्यशुश्रूषमाणस्य श्रोतुर्धर्मलोपापत्तेः । शुश्रूषामात्रापेक्षिणामपि गुरूणा संभवाच्च । न च तदात्वे तेषा त्यागेनान्येषा ग्रहणमनापदि युक्तम्, †'तस्मिन्नेव विद्याकर्मान्तमविप्रतिपन्ने धर्मेभ्यः' (आप० ध० १ १. १ १२) इति स्मृतिविरोधात् । अपि च 'एका शाखामधीत्य श्रोत्रियोऽङ्गाध्याय्यनूचानः' इति लिङ्गदर्शनादङ्गाध्ययनानियमेनाध्ययनविधिगृहीतस्वाध्यायमा-

† तास्मिश्चैव' इति मुद्रितापस्तम्बीयपाठः ।

त्रादापाततोऽप्यर्थप्रत्ययाभावे तन्निर्णयरागाभावेन तदनुपपत्त्या विचारारम्भो न स्यात् । तस्मान्नियमेन विचारमिच्छता नियतमेव तत्प्रयोजकमास्थेयम् ।

तत्र नित्यादिविषयो विवेकज्ञानं तत्प्रवृत्त्यावपेक्षणमाणारतादर्थ्येन विचारं प्रयोजयन्ति । 'वेदमधीत्य स्नायादि'त्यादेरपि विध्याश्रितविचारप्रवृत्त्यविरोधिनि पूर्वकालत्वादिमात्रे वृत्त्युपपत्तेः । न चैव [illegible] विचारनियमो न स्यात्, प्रयोजकानियमादिति वाच्यम् । नित्यादिप्रतिपत्त्यन्वयितया [illegible] तत एव, विचार्यत्वात्, [illegible] । अन्यथा ततो [illegible] । विचारितेऽपि तु कार्ये स्विच्छातोऽनुष्ठानेन नानुपपत्तिः । न [illegible] । यद्यु-च्येत — विचारो न सर्वेषामवश्यकर्तव्यः, [illegible] । तत्र ये स्वभाव-विशुद्धसत्त्वाः [illegible] निर्विचिकित्स[illegible], कृतं तेषां विचा-रेण । ये तु [illegible] तेन न सहसा निवर्तन्ते, ते पुनरनुष्ठाननिर्णयाय [illegible]मूहा-पोहकुशलाः स्वयमेव परोक्तपद्धत्या वा विचारयेयुरिति । तथापि प्रागुद्वाहादेव विचारितावधृतवेदार्थस्यानन्तरकर्मानन्तरायसम्भवात् दारसंयोगानन्तरं विचार इत्येव नियम्यत इति ।

अन्ये मन्यन्ते — "यो ह वा अविदितार्षेयच्छन्दोदैवतेन मन्त्रेण यजति याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं वापद्यते प्र वा मीयते पापीयान् भवति यातयामान्यस्यच्छन्दांसि भवन्ति । अथ यो मन्त्रे मन्त्रे वेद सर्वमायुरेति श्रेयांश्च भवत्ययातयामान्यस्यच्छन्दांसि भवन्ति । तस्मादेतानि मन्त्रे मन्त्रे वि-द्याद्" इति श्रुत्या वेदार्थज्ञानस्य विहितत्वाद्, वेदनस्य देवताग्रहणस्यार्षेयमा-त्रोपलक्षकत्वाद्,

"अविदित्वा ऋषिं छन्दो दैवतं योगमेव च ।
सोऽध्यापयेद् यजेद्वापि पापीयान् जायते तु सः ॥"

इति स्मृतौ च योगशब्दोदितविनियोगस्याप्यर्थज्ञानस्याभिधानाद्,

"यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥"

इत्यर्थाज्ञाने निर्वीर्यतानियमाद्,

---

१ 'ण' ख पाठ

"स्थाणुरयं भारहरः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।
अर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥"

इति वेदार्थाज्ञानज्ञाननिन्दाप्रशंसावचनाच्च तज्ज्ञानस्य विधेयत्वोपगमनात्, आहत्य च तस्यापुरुषतन्त्रस्य विधानानुपपत्तेः, कारणस्य च स्वाध्यायस्यान्यतो लब्धत्वात् तदर्थनिर्णयानुकूलो विचार एवानेन विधीयते । न च तत्र मन्त्राणामृष्यादिविज्ञानविधानप्रतीतेस्तस्य चाङ्गाध्ययनसाध्यत्वादनपेक्षा मीमांसेति वाच्यम्, निर्विचिकित्सज्ञानस्य मीमांसापेक्षत्वात् । न चैवं सत्यसम्भवाय रागत एव विचारः स्यादिति युक्तम्, विचारानियमप्रसङ्गस्योक्तत्वात् । एतेन 'अक्षैर्मा दिव्यः कृषिमित् कृषस्व वित्ते रमस्व बहुमन्यमानः' इतिवत् कृष्यादाविव रागप्राप्ते विचारे तन्द्रालुप्ररोचनार्थं 'यदधीत'मित्यादि, इति निरस्तम् । प्ररोचनया विधिशक्त्यनुपजनने तन्नियमायोगात् । तस्मात् स्वविधिप्रयुक्तानुष्ठान एव विचार इति । तदेवमध्ययनविधितो न विचारक्रमनियमः ॥

---

धर्मविचारस्य प्राथम्यशङ्का ।

नाप्यर्थाद् वेदान्तविचारे, कर्मविचारस्यानुपयोगात् । यत्तु अनित्यफलाद् विरज्य नित्यफलप्रेप्सोर्हि वेदान्तविचारप्रवृत्तिः कर्मफलानित्यत्वाधिगममूला । न च तदधिगमो धर्ममीमांसाव्युत्पाद्यन्यायालोचनेन विना सम्भवति । 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' 'अपाम सोममम्रुता अभूम' 'हिरण्यदा अमृतत्वं भजन्ते' 'अनन्तं ह वा अपारमक्षय्यं लोकं जयति, योऽग्निं नाचिकेतं चिनुते' 'नास्येष्टापूर्ते क्षीयेते, योऽग्निं नाचिकेतं चिनुते' इत्यादिकर्मफलनित्यत्वाधिगमस्यान्यानर्थक्येन गुणवादत्वादिन्यायापोद्यत्वात् । अपि च विविदिषितब्रह्मविद्याङ्गतयानुष्ठेयानि कर्माणि, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेने'ति तत्र तेषां विनियोगात् । तेषां च कर्मविचाराधीनानुष्ठेयाननुष्ठेयरूपविभागज्ञानाभावे सर्वापेक्षानयविषयब्रह्मविद्यासाधनभावस्य दुरधिगमत्वात् । यज्ञादिपदार्थाज्ञाने तद्विनियोगरूपवाक्यार्थज्ञानायोगाच्च । तस्मात् फलद्वारेण कर्मणां हानाय स्वरूपेणोपादानाय च धर्मविचारप्राथम्यं नियम्यत इति ॥

---

धर्मविचारस्यानुपयुक्तत्वम् ।

अत्रोच्यते — अधीतवेदान्तापाताधिगतानन्तास्थिरफलाभिलाषवतस्तदुपायबुभुत्सया ब्रह्मविचार एव प्रवृत्तिः स्याद् विना धर्मविचारम् । कर्मफलफल्गुत्वा-

तयैव सर्वं कर्म धक्ष्यते । अथ न, कर्मफलान्यपि भुञ्जीयेति विचारितकर्मा काम्यानि च न विजह्यात् । अपि च फलाभिसन्धे

"एवान्यपि च कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानि"

'फले सक्तो निबध्यत' इत्यादिशास्त्रादन्यतो वा ब्रह्मज्ञानविरोधित्वावगमे तत एव तत्त्यागोपपत्तेः कृत कर्मविचारेण । अपि च इच्छामात्रोपनमदपरिमितदिव्यभोगानुगतनित्यनिरतिशयानन्दानुभव ब्रह्मविद्याफलमधीयानस्य क्लेशात्मकनानाकर्मसम्बन्धाधीतफलाभिसन्धे. स्वरसतो हानसम्भवेन कर्मविचारानर्थक्यम् । अपि च कर्मविचारेण तत्फलानित्यत्वाधिगमेऽपि तदधिकफलान्तरानवधारणाद् अनवलम्बनो न ततो निर्विद्येत । तथा चाभाणक.—

"अलाभे मत्तकाशिन्या जरठालिङ्गनं वरम्"

इति । न चापाताधिगतानन्तास्थिरफलावलम्बनो निश्चितमल्पमप्यास्वादितजातीयमह्नाय त्यक्तुमुत्सहेत । अपि निर्वर्तितकर्मविचारो वेदान्तानामपि तदुपदर्शितन्यायेन कथचित् कर्मैदम्पर्यमवस्यन् न पृथग् विचारमीक्षेतापीत्युक्तम्, कर्तृसस्कारज्ञानपरतया वा कर्तृप्रशसया वा पारिप्लवार्थतया वा वेदान्तानामप्रयोजकत्वावगमात् । तथा च दर्शित—'शेषत्वात् पुरुषार्थवादो यथान्येषु—' (ब्र० ३. ४. २) इति 'पारिप्लवार्था—' (ब्र० ३. ४ २३) इति च । तस्मान्न फलद्वारा हानाय कर्मणां विचारापेक्षा ।

नापि स्वरूपेणोपादानाय । यदि हि जिज्ञासादि ब्रह्मविद्यया समुच्चित्यानुष्ठानायेत्युच्येत, किं पुनस्तथानुष्ठितेन कर्मणा भवतीति वक्तव्यम् । न तावद् ब्रह्मविज्ञान, तस्य विचारोपस्कृतप्रमाणफलत्वात् । नापि भक्त्युपासनाशब्दित ध्यान, तस्यापि यथाविज्ञानमेव निष्पत्त्युपपत्तेः । निरन्तराभ्यासेन च तस्य साक्षात्कारपर्यन्तत्वोपपत्तेश्च । नापि मोक्षः, तत्राविद्यानिवृत्त्यशस्य

"भिद्यते हृदयग्रन्थिच्छिद्यन्ते सर्वसशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥"

मननस्य च तत्प्रतिष्ठार्थतयार्थप्राप्तत्वात् । तस्माद् ‘ओमित्येव ध्यायथ आत्मानम्’ इति ध्यानरूपताविशेष उच्यते । निदिध्यासितव्य इत्यादौ सन्नन्तनिर्देशाद् ध्यानस्य मुक्त्युपायतयेष्यमाणत्वाभिप्रायात् । ‘सत्त्वशुद्धौ ध्रुवा स्मृति’, †स्मृतिप्रतिलम्भे सर्वग्रन्थीना विप्रमोक्ष’ इति क्षणिकस्मरणस्वरूपेण ध्रुवत्वानुपपत्तेर्विजातीयप्रत्ययानन्तरितसन्ततिरूपत्व विशेषः प्रतिपाद्यते ।

“अब्बिन्दुसन्ततिरिव ध्यान चिन्तनसन्तति. ।
तैलधारावदच्छिन्ना ध्रुवानुस्मृतिसन्तति. ॥”

‘आत्मानमेव लोकमुपासीत’ ‘आत्मेत्येवोपासीत’ ‘मा ध्यायन्त उपासते’
“तेषामह समुद्धर्ता मृत्युससारसागरात् ”

इत्यादिषु तत्परत्व तदेकनिष्ठालक्षण विशेषोऽभिधीयते । तात्पर्यपूर्वकानुवृत्तावेव राजानमुपास्ते गुरुमुपास्त इत्यादिप्रयोगात् । ‘निचाय्य ‡ तं मृत्युमुखात् प्रमुच्यत’ इत्यादौ दर्शनसमानाकारताविशेषो निरूप्यते । *चायॅ[1] दर्शनकर्मत्वात् । सा च विशदतरावभासरूपता स्मृतेरपि न विरुध्यते,

“वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम् ”
“चिन्तयानो हृषीकेशमपश्यत् तन्मय जगत् ”

इत्यादिदर्शनात् । ‘यमेवैष वृणुते तेन लभ्य’ इत्यादौ प्रीतिरूपत्वविशेष उपक्षिप्यते । कथम् ।

“नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।”

किन्तु परमात्मनो मामय प्राप्नोत्वित्यनुग्रहणलक्षणेन वरणेन यस्य चाय परमात्मा निरतिशयप्रिय', स एव तस्य पियतम. सन् वरणीयो भवति । प्रीतिविषयश्च प्रिय इत्युच्यते । तथा च स्मृति —

---

१ ‘यॄ’ क पाठ .

---

† ‘तिल’ इति मुद्रितच्छान्दोग्योपनिषत्पाठ । ‡ ‘तन्मृ’ इति मुद्रितकठवल्लीपाठ ।
* मुद्रितधातुपाठे ‘चायृ’ इत्येव पठ्यते ।

"प्रियो हि ज्ञानिनोऽत्यर्थमय स च मम प्रियः"

इति,

"तेषा सततयुक्ताना भजता प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं त येन मामुपयान्ति ते ॥"

इति च । सततयुक्तानां परमात्मना सततयोगमाशंसमानानाम् । 'आशसाया भूतवच्च' (३ ३. १३२) इति कर्तरि क्त । तस्मिन् निरतिशयप्रीतिमतामित्यर्थ. । प्रीतिपूर्वक ददामीत्यन्वय । तथा च परमपुरुषानुग्रहद्वारा तल्लम्भनी प्रीतिर्मुक्त्युपायवेदनावस्थाभेदरूपत्वं नातिवर्तते । 'आत्मक्रीड आत्मरतिरि'त्यादौ चानुक्षण नवीन इवेष्टविषये निरतिशयस्वदनरूपरत्यात्मकत्वविशेष उदीर्यते ।

"या प्रीतिरविवेकाना विषयेष्वनपायिनी ।
त्वामनुस्मरत. सा मे हृदयान्मापसर्पतु ॥
युवतीनां यथा यूनि यूना च युवतौ यथा ।
मनोऽभिरमते तद्वन्मनो मे रमतां त्वयि ॥"

इत्यादिषु प्रीतिरत्यो. पुरुषार्थतयेष्यमाणत्वावगमात् । भक्तिरूपत्व चापरो विशेष ।

"नाह वेदैर्न तपसा न दानेन न चेज्यया"

इत्यादि साधनान्तर निषिध्य ।

"भक्त्या त्वनन्यया शक्य अहमेव विधोऽर्जुन[1] ।
ज्ञातु द्रष्टु च तत्त्वेन प्रवेष्टु च परतप ! ॥"

इत्यादे ,

"तमेव विद्वानमृत इह भवति । नान्य. पन्था अयनाय विद्यते'
इत्यादिश्रुत्यैकार्थ्यात्,

"पुरुष स पर पार्थ ! भक्त्या लभ्यस्त्वनन्यया"
"धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता ।

---

१ 'या' ख पाठ

समस्तजगता मूले यस्य भक्तिः स्थिरा त्वयि ॥"

इत्यादिस्मरणाच्च । स्नेहपूर्वकानुध्यानात्मा सेवापर्याया भक्ति. । उक्तं च —

"स्नेहपूर्वमनुध्यान भक्तिरित्यभिधीयते ।
भज इत्येष धातुर्वै सेवाया परिकीर्तितः ॥
तस्मात् सेवा बुधै. प्रोक्ता भक्तिशब्देन भूयसी ॥"

इति ॥

---

## विकल्पस्याष्टदोषत्वम् ।

न चामून्यन्यान्यन्यानि मुक्तौ साधनानि विधीयन्ते, अष्टदोषदुष्टविकल्पापत्तेः । विकल्पे ह्यन्यतरशास्त्रपरिग्रहे त्रिभङ्गयन्तरेणैकैकत्र प्रामाण्यत्यागाप्रामाण्यग्रहणत्यक्तप्रामाण्यग्रहणगृहीताप्रामाण्यत्यागरूपदोषचतुष्टयस्यावर्जनीयत्वात् । त्रिभङ्गयन्तरमनपेक्ष्याप्येकैकत्र प्रतिपत्तिबाधोऽनुष्ठानबाधोऽपूर्वबाध फलबाधश्चेति चत्वारो दोषा इत्यप्याहु । लघुगुरुयत्नविकल्पायोगाच्च । चशब्दाश्रवणाद् द्वन्द्वानिर्देशाच्च न समुच्चय । निरपेक्षसाधनत्वावगमविरोधाच्च । तथा चोदिताशेषविशेषोपसहारपर सूत्रम्— 'आवृत्तिरसकृदुपदेशात्' (ब्र० ४. १. १)इति ॥

---

## वेदनस्याप्रायणमनुष्ठेयत्वम् ।

तदेवरूपं वेदनमहरहरनुष्ठानाभ्यासाधेयातिशयमाप्रायणादनुष्ठेय, 'प्रायणान्तमोङ्कारमुपासीते'ति श्रुतिदर्शनात् ।

"क्षेत्रज्ञ. करणी ज्ञानं करण तस्य तेन तत् ।
निष्पाद्य मुक्तिकार्यं वै कृतकृत्य निवर्तयेत् ॥"

इति स्मृतेश्च । न ह्यत्र देहान्ते मुक्तस्योपासनानिवृत्तिर्विधेया, स्वतस्सिद्धे· । किन्तु मुक्ते प्रायणोत्तरकालत्वात् तावदनुष्ठेयमुपासनमिति । तथा च सूत्रम् — 'आ प्रायणात् तत्रापि हि दृष्टम्' (ब्र० ४ १. १२) इति । तदुत्पत्तये च यज्ञादीनि यावज्जीवमनुष्ठेयानि,

"स खल्वेव वर्तयन् यावदायुष ब्रह्मलोकमभिसम्पद्यते"

इत्येवशब्दगृहीतप्रकृतविद्याकर्मणोर्यावज्जीवमनुष्ठेयत्वश्रवणात् । तथा च भगवान् सूत्रकार· — 'सर्वापेक्षा च यज्ञादिश्रुते. —' (ब्र० ३. ४. २६) 'अग्निहोत्रादि तु तत्कार्यायैव —' (ब्र० ४. १. १६) 'सहकारित्वेन च' (ब्र० ३. ४. ३३) इति ।

तदिद प्रपञ्चित वाक्यकारेण — 'वेदनमुपासन स्यात् तद्विषये श्रवणात्' 'उपासन स्याद् ध्रुवानुस्मृतिदर्शनाद् निर्वचनाच्च' 'तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्य., सम्भवाद् निर्वचनाच्च' इति। अत्र शमादीनां काम्यनिषिद्धविषयत्वेन विहितकर्मसमुच्चयोपपत्ति सम्भवः। निर्वचन श्रुति.। विवेकादीना स्वरूप चाह — 'जात्याश्रयनिमित्तादुष्टादन्नात् कायशुद्धिर्विवेक' 'विमोक कामानभिष्वङ्ग·' 'आरम्बणसशीलनमभ्यास.' 'पञ्चमहायज्ञाद्यनुष्ठान शक्तित· क्रिया' 'सत्यार्जवदयादानाहिंसानभिध्या कल्याणानि' 'अपकारास्मृतिरनभिध्या' 'देशकालवैगुण्याच् शोकवस्त्वाद्यनुस्मृतेश्च तज्ज दैन्यमभास्वरत्व मनसोऽवसाद.' अतीत पुत्रमरणादि शोकहेतुः, भावि च भयहेतु। तदनुस्मृतेरभास्वरत्व मनसोऽवसादः। किमुक्त भवति, तज्ज दैन्यमिति। तद्विपर्ययोऽनवसाद· इत्यर्थलभ्यम्। तुष्टिरुद्धर्ष। स च देशकालसाद्गुण्यात् प्रियवस्त्वनुस्मृतेश्च मनस उत्सेक। स च विद्याविरोधी। तद्विपर्ययोऽनुद्धर्ष इत्यर्थलभ्यम्। अत्र यथाक्रम निर्वचनानि — 'आहारशुद्धौ सत्त्वशुद्धिः' 'शान्त उपासीत' 'अथ मुनि' 'सदा तद्भावभावित' 'क्रियावानेष ब्रह्मविदा वरिष्ठ.' 'तमेत वेदानुवचनेन' 'सत्येन लभ्य.' 'न येषु जिह्ममनृतं न माया च' 'नायमात्मा बलहीनेन लभ्य' 'शान्तो दान्त' इत्यादीनि। तस्मादिष्यमाणवेदनोपायकर्माधिगमाय प्रथमं तद्विचारापेक्षेति।

---

## कर्मणां वेदनानङ्गत्वम्।

अत्राभिधीयते — आस्तामुपासन वेदनमन्यद्वा मुक्तिहेतुरिति। न तावद् अभिमतवेदनोत्पत्तौ आहत्य कर्माणि सन्निपतन्ति, स्मृतिमयस्य ध्यानस्यानुभवसस्कारमूलत्वात्। स्मृतिसन्तत्यविच्छेदे सन्निपातीनि तानीति चेत्। अहो बतेदमप्रबुद्धित्वमाकीर्णकस्य, अनेककारकव्यापारपूर्वापरानुसन्धानवैयग्र्ये ध्येयस्मरणरूपस्यैवोच्छदात्। आलम्बनसशीलनसामर्थ्यादेव स्मृतिसन्तत्यविच्छेदोपपत्तेश्च। लोकवदेव ध्यानस्य निरन्तराभ्यासानुनिष्पादिदर्शनरूपापत्तावपि कर्मणामसन्निपातित्वात्। वेदने कर्माणि विनियुञ्जाना श्रुतिरुपयोग कमपि पश्यतीति चेत्। अहो बताय तन्त्रमात्रपरतन्त्रप्रज्ञस्याम्नायविस्रम्भ·। वाक्यकारः क्रियाया ध्रुवानुस्मृतिहेतुतामादिक्षदिति चेत्। अन्धगोलाङ्गूलन्यायोऽयमाकीर्णजन्मनः। सुखदुःखाप्तिहानिहेतुमात्रसम्पत्तिरेव धर्माधीनेति किमत्र विशेषविवक्षयेति चेत्। किमेव पाकादावपि

क्षुधादुःखहानसाधने प्रवर्तमानो विचार्यैव धर्मं समुच्चित्याचरतु । वेदनोद्देशेन विधानमत्र विशेष इति चेत् । न । दृष्टहेतुसम्भवे वेदने तदुपयोगस्याद्याप्यनिरूपणात् । शास्त्रार्थाधिगमे दृष्टहेतुकेऽपि तदप्रत्यूहाय देवताराधनाद्यनुसरणादिहापि विद्योत्पत्तिप्रतिबन्धकदुरितोत्सादने तदुपयोग इति चेत् । ननु प्रासङ्गिकनिजस्मृतिमात्रनिह्नुतनिखिलस्मर्तृदुरितराशि परमात्मानमनुध्यायत कुत प्रतिबन्धसभव । तथा च स्मृति· —

"हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयापि सम्पृष्टो दहत्येव हि पावकः ॥
सकृत् स्मृतोऽपि गोविन्दो नृणा जन्मशतार्जितम् ।
पापराशि दहत्याशु तूलराशिमिवानल ॥"

इति । श्रुतिरपि 'अस्य सर्वे पाप्मान प्रदूयन्ते' 'एवविदि पाप कर्म न श्लिष्यते' इत्याद्या । तथा च सूत्र —'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ—' (ब्र० ४. १. १३) इति । ततश्च उपायदशाप्रभृति भगवज्ज्ञानस्य प्रीतिरूपत्वेनेष्यमाणतया विचारात्मक ज्ञान विधेयमित्युपगमात् स्वस्मिन् प्रीतिमत स्वप्रियत्वेन भगवता वरणीयतया श्रवणादिप्रवृत्तिमात्रेण परमात्मपरिपालनीयस्य तदनुगुणविवेकवैराग्यशमदमादिक यमनियमादिक च समेधयतो न दुरितसम्भवः ।

"सर्वधर्मान् परित्यज्य मामेव शरण व्रज ।
अह त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच· ॥"

इति स्मृते । उक्त च श्रुतप्रकाशिकायाम् — 'अह स्मरामि मद्भक्तमित्युक्तप्रकारेण साक्षात्कारविरोधिनिवर्तनादिक भगवत एव भर इति न स्वरूपप्रच्युतिसभव·' इति । ननु श्रूयते — 'शृण्वन्तोऽपि बहवो यं न विद्यु·' इति । स्मर्यते च —

"योगाच्चलितमानस· । अप्राप्य योगसंसिद्धिम्"

इति । तच्च लिङ्ग विद्याप्रतिबन्धकभाव इति । सत्यम् । किन्तु उपस्थितविपाकेन प्रबलेन कर्मणा तत्प्रतिबन्ध· । तच्च विद्यया कर्मणा चाशक्यसमुच्छेदं· भोगान्त-

त्वात् । तथा च सूत्र — 'भोगेन त्वितरे क्षपयित्वा सम्पद्यते' (ब्र० ४. १. १९) इति । अत एवारब्धावसाने जन्मान्तरसञ्चितसाधनो गर्भ एव सन् वामदेव प्रतिपेद इत्युच्यते ; तथा च मन्त्रलिङ्ग 'गर्भे नु सन्नन्वेषाम वेदमह देवाना जनिमानि विश्वा' इत्यादि ।

अपर आह — नित्य तावदग्निहोत्रादि कर्म स्वच्छन्दविच्छेदे प्रत्यवाय-हेतुरिति यावज्जीवमनुष्ठेयम् । विद्या चाप्रायणमनुष्ठेया, अन्तिमप्रत्ययापेक्षणात् । स च चन्द्रादित्यादिप्रकाशवत् तारतम्यवती बहुप्रतिबन्धा च । कर्म च विद्या-सहकारित्वेनाम्नायते —

'विद्या चाविद्या च यस्तद्वेदोभय सह''

इति । तस्य यद्यपि न फलोपकारित्व, विदुष सुकृतदुष्कृतविधूननेन विद्यासामर्थ्यादेव मोक्षोपगमात् । तथापि विद्यास्वरूपोपकारित्वमेव कल्प्यते । तच्च न विविदिषोपजनेनैव, येन विद्याकर्मणी व्यवधायियाताम्[1] । न खल्वतिदेशोऽय, येन फलोपकारमुखेन सहकारिताश्रीयेत । विधिस्त्वेष । तदनुसारेणोपकारकल्पने च कारणान्तरप्रसूतेन स्वाकरणप्रयुक्तेन वा दुरितेनारब्धदुरितजन्येन व्याधिना निषिद्धरुच्यादिना वा मलिनचित्तस्य विद्यास्वरूपप्रतिष्ठयोरभावेन तत्तन्निवृत्त्या सर्वदैवाप्रायणानुष्ठेयविद्यास्वरूपोपकारित्व कर्मणामुपपादयितु न्याय्यम् । न चारब्धदुरितस्य भोगैकनाश्यतया विद्ययाप्यनिवर्त्यस्य न नित्यकर्मणा निवृत्तिरिति वाच्यम् । आरब्धभोगदुरितनिवर्तकश्रीरुद्रसहस्रनामजपादिवदमुष्य प्रबलत्वोपपत्तेः । अत एवारब्धदोषेण दुश्चरितरुचिर्भवतीति तदुपरमश्चोद्यते —

''नाविरतो दुश्चरितान्नाशान्तो नासमाहित ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥''

इति । नित्यकर्मणोऽपि प्रबलेनारब्धदुरितेनामतिपूर्वके प्रामादिके दुश्चरणे तद्विषयम् 'एवविदि पाप कर्म न श्लिष्यत' इति, बुद्धिपूर्वकतद्विषय च ।

''अपि चेत् पातक किञ्चिद् योगी कुर्यात् प्रमादतः ।
योगमेव निषेवेत नान्य यज्ञ समाचरेत् ॥''

इति । तस्माद् विद्यासद्भाव कर्मणाम्, उपयोगाद्, इति ।

---

१ 'दधीया' क पाठ

अत्रोच्यते — न तावद् यावज्जीवानुष्ठेयानि कर्माणि । 'जरया वास्मान्मुच्यते, त्रिंशतं वा वर्षाणि जीर्णो वा विरमेद्' इत्यवधिविधानात् । 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्' इत्यादिसन्न्यासविधानाच्च । न चानधिकृतविषय तत्, क्लीबोन्मत्तादीना कर्मस्विव प्रव्रज्यायामनधिकारात् ।

"काण कुष्ठं तथा कुब्जं खञ्जक वामन तथा ।
मूक च बधिर चैव सन्न्यास नैव कारयेत् ॥"

इत्यादिनिषेधात् । सकलकर्मत्यागसकल्पात्मकसन्न्यासस्यानेकाङ्गस्याप्राप्तकर्मभिः क्लीबादिभिरनुष्ठातुमशक्यत्वाच्च । न च 'स तानि प्राग्वा त्यजेदि'ति प्रागुपनयनादप्राप्तकर्मणामपि विधीयमानस्य सन्न्यासस्य न कर्मप्राप्त्यपेक्षेति वाच्यम् । 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते' इति जन्मनैव कर्मसम्बन्धश्रवणात् । यद्यप्यत्र यद्यृणशब्द ब्रह्मचर्यादिकमेव, न तत्सम्बन्ध', जायमानस्यानुपलम्भात् । अथ तद्विधिसम्बन्धः, सोऽपि न । जायमानस्य विधिप्रतिपत्त्यसामर्थ्यात् । तथापि कर्मविध्यधिकारयोग्यतामात्रमविरोधात् प्रतीयमान न निवार्यते, निरर्थकवाक्यप्रयोगायोगेनावदानस्तुत्यर्थतयापि कथञ्चिदर्थस्य कल्पनीयत्वात् । तस्मादधिकृतस्यैव कर्मसन्न्यासेन विदुषो न नित्याकरणे प्रत्यवायः । अन्यतः सम्भवतोऽपि दुरितस्य विद्ययैवाश्लेषविनाशोपगमात् । अपि च नित्यकर्मानिवर्तनीयबलवदारब्धदुरितनिमित्तरोगविगीतरुच्यादेरपि सबीजस्य जपयोगादिनिवर्त्यत्वे तेनैवावश्यकेन सर्वद्वारप्रतिबन्धनिवृत्त्या विद्यापरिपाकोपपत्तौ कृत कर्मभि. । पापाश्लेषवचनस्य 'अपि चेत् पातक किञ्चित्'

"उपपातकसङ्घेषु पातकेषु महत्सु च ।
प्रविश्य रजनीपाद ब्रह्मध्यान समाचरेत् ॥"

इत्यादेश्च विषयभेदकल्पने मानाभावात् । तदभावे जन्मान्तरेऽपि प्रतिबन्धक्षयमपेक्ष्य विद्याविपाकोपपत्ते । अपि चाग्निहोत्रादिकर्मणामनुष्ठिताना विदुषो विद्योपकारित्वे तदीयताप्रयोजकसम्बन्धशून्यत्वलक्षणाश्लेषो विरुध्येत । तदश्लेषश्च सूत्रितः — 'इतरस्याप्येवमसश्लेषः — ' (ब्र० ४. १. १४) इति । श्रूयते च — 'उभे उ हैवैष एते तरती'त्यादि । न चारब्धप्रतिबद्धफलविषय तदश्लेषसूत्र यादृच्छिकसुकृतविषयं काम्यविषय वेति नियन्तु शक्यम । विशेषहेत्वभावात् । तात्कालिकान्नारोग्यादिफलस्य च कर्मणो भिक्षाटनादिदृष्टप्रवृत्ततुल्य-

तया नाश्लेषविषयत्वम् । न च 'विद्यां चे'त्यादिसहकारित्ववचनं विशेषहेतुः, विविदिषाविरोधिदुरितनिवृत्त्यापि विद्योपकारितयान्यथासिद्धेः । न च कालविशेषसंकोचकल्पनमयुक्तमिति शङ्क्यम् । वेदानुवचनशास्त्रैकार्थ्योपपत्तौ सम्प्रति तत्संकोचाकल्पनात् । तस्माज् ज्ञानार्थप्रवृत्तिप्रतिबन्धकदुरितनिवृत्त्या कर्मणा तदुपयोगे वक्तव्ये तत्प्रवृत्तेरपि तदितरदोषसशीलनप्रगुणितप्रवृत्तिविषयगुणभूमपरिभावनाप्रकर्षमूलाभिरुचौ सत्या स्वत एव भावात् तदभिरुचिविरोधिविषयकषायास्वादकारिप्रबलदुरितारोचकचिकित्सायां कर्माणि विनियुज्यन्ते 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति । न च वेदनेच्छासदसद्भावयोर्विविदिषोद्देशेन कर्मविधानानुपपत्तिः, वेदनोद्देशेनापि तदनुपपत्तिप्रसङ्गात्[1] । ब्रह्मवेदने सति सिद्धस्यानुद्देश्यत्वात् । असति च तज्ज्ञानाभावेन तदुद्देशायोगात् । यद्युच्येत— श्रुते मते ब्रह्मणि तदुपासनोद्देशेन कर्मविधानमिति । तर्हि निरतिशयसुखाप्तिहेतुतयापाताधिगतब्रह्मवेदने जाताभिलाषस्यैव दुरितवशेन विषयरागाद्यरोचकोपहतस्य प्रवृत्तिपर्यन्ताभिरुचीच्छया कर्मभैषज्यसेवोपपत्तिरिति तुल्यम् । तथाहुः—

"प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः ।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥"

इति ॥

---

## देवानां कर्मानधिकारः ।

एवं सति देवादीनामपि 'तद् यो यो देवानां प्रत्यबुध्यत, स एव तदभवत्, तथर्षीणामि'त्यादिलिङ्गावगतो ब्रह्मविद्याधिकार उपपद्यते । तथा च सूत्रं—'तदुपर्यपि बादरायणः सम्भवात्' (ब्र० १. ३. २६) इति । कर्मसमुच्चये च विद्यया देवादयो नाधिक्रियेरन्, अत्रैवर्णिकतया देवादीनामनग्नित्वात् । 'वसन्ते ब्राह्मणोऽग्नीनादधीते'त्याद्यधिकारिनियमात् । अत्र्यार्षेयत्वाच्च कर्मस्वनधिकारात् ॥

---

## ब्राह्मण्यशब्दार्थः ।

यत्तु मनुष्यकर्तृकाधान एव त्रैवर्णिकत्र्यार्षेयाधिकारिनियमः । 'देवा वै सत्रमासत' 'विश्वसृजः प्रथमाः सत्रमासते'त्यादिलिङ्गात् । इन्द्रादीनां वृत्रवधादिपापप्रायश्चित्ततया क्रत्वनुष्ठानस्मरणाच्च । यद्वा न ब्राह्मणादेर्ब्राह्मण्यादावुत्पत्तिमात्र

---

१. 'ति प्रसि' ख पाठ.

ब्राह्मण्यादि, तदभिव्यङ्ग्यजातिविशेषो वा, आदौ ब्रह्मणो मुखबाहूरुपज्जाना पश्चाद्दृश्यश्रृङ्गविश्वामित्रादीना च तदभावप्रसङ्गात् । किन्त्वदृष्टविशेष. । स च देवादीनामपि सम्भवति। तथा च लिङ्ग वाजपेय प्रकृत्य 'त बृहस्पतिरुदजयत्, तेनायजत, तेनेन्द्रमयाजयदि'ति । वाजपेयश्च ब्रह्मक्षत्राधिकारिको गम्यते, 'स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञ' इति । श्रूयते च — 'ब्रह्म बृहस्पति., क्षत्रमिन्द्र' इति, 'मरुतो वै देवाना विश' इति च । अतोऽग्निसम्बन्धो युक्तः । न च यष्टव्यदेवतान्तराभावाद् यजनानुपपत्ति., अग्नीन्द्रादिशब्दवृत्तिनिमित्तज्ञान-शक्त्यैश्वर्यादिविशेषाणा निरुपाधिकाश्रयतया तत्तच्छब्दवाच्यस्य परमात्मनोऽव्य-वधानेन देवताभिराराध्यत्वादित्यादि ।

तन्न । अग्न्याधानसामान्यस्य ब्राह्मणाद्यधिकारनिबद्धस्य मनुष्यकर्तृकाधान इति विना हेतुं विशेषणायोगात् । अन्यथा असङ्करजन्ममनुष्याधान इति विशेष्य निषादस्थपतेरिष्टिविधानादाधानमवकल्प्येत । तथा च 'स्थपतीष्टिः प्रयाजवदग्न्या-धेय प्रयोजयेत्' (जै० ६. ८ २०) इत्याष्टमिकाधिकरणविरोधः । लिङ्गमात्र तु 'गावो वा एतत्सत्रमासते'त्यादिसाधारणमिति गवामप्यधिकारः स्यात् । यथास-म्भवं च सामर्थ्यस्य कल्पनीयत्वात् । न च वृत्रवधादिनिमित्त पापमिन्द्रादेः । 'न ह वै देवान् पापं गच्छती'त्यादिश्रुतेः । त्रिशीर्षाण त्वाष्ट्रमहनमि'ति प्रकृत्य 'तस्य मे तत्र न लोम च मीयत' इति लिङ्गाच्च। यत् पुनरदृष्टविशेष एव ब्राह्मण्यादि देवा-दीनामपीति । तन्न । तस्य जीवसमवायित्वात् । देहेषु च तज्जन्यतावच्छेदकानु-गतरूपाभावात् । भावे वा सैव ब्राह्मण्यादिजातिरस्तु । सा च न देवादिषु । मनु-ष्यत्वादिसाङ्कर्यमधिजग्मुषो ब्राह्मणत्वाद्यवधारणेऽपि देवादिसंशयप्रसङ्गात् । किन्तु मनुष्यत्वव्याप्यजातिरेव । यद्यप्यग्नीन्द्रादेर्ब्रह्मक्षत्रादिविभाग आम्नायते । तथापि न ताज्जात्यविवक्षैव । 'आग्नेयो वै ब्राह्मण' 'ऐन्द्रो राजन्य.' 'मारुतो वैश्यः' इत्यादिसम्बन्धभेदनियमनेनान्यार्थत्वात् । अन्यथात्रैव ब्राह्मणराजन्यादिशब्दस्य मानुषे सङ्कोचकल्पनापत्तेः । अत एव 'अग्निरेव देवेषु ब्रह्माभवद्, ब्राह्मणो मनु-ष्येषु, अग्नावेव देवेषु लोकमिच्छन्ते, ब्राह्मणे मनुष्येष्वि'त्यत्र ब्राह्मणत्वेन विव-क्षितेऽग्नौ ब्राह्मणशब्दो न प्रयुज्यते । चातुर्वर्ण्यसृष्टौ च 'अग्निमसृजते'त्येव ब्रूते न तु ब्राह्मणमिति । तदेतद् देवाना ब्राह्मण्याद्यभावे लिङ्गम् । तस्माद् 'ब्रह्म बृहस्प-तिरि'त्यादिप्रयोगो गौणः, पालनेन राजन्यानुग्राहकतया च क्षत्रस्येन्द्रस्य पौरो-हित्याद् ब्राह्मणानुग्राहकत्वाच्च । ब्राह्मणत्वाभिव्यञ्जक तु नैकरूपमिति मुखजाना-

मन्यजानां वा तदविरुद्धम् । एव च भृगुवचसा वीतहव्यस्य तपसा विश्वामित्रस्य च ब्राह्मण्यजात्यवच्छेद्यरूपपरिणामो वेदोज्झमन्यपरिश्रमेण द्विजस्य शूद्रत्वाद्यवच्छेद्यरूपपरिणामश्च कल्पनीयो नन्दिनहुषादीनामिव जात्यन्तरपरिणामः, न तु दुरधिगमादृष्टविशेष एव ब्राह्मण्यादि, 'ब्राह्मणो यजेते'त्यादिविध्यप्रतिपत्तिप्रसङ्गात्। इति देवानामग्न्यभावादकर्माधिकारो युक्तः। एवमप्यन्यार्षेयत्वानुद्धाराच्च । न चास्मदादीनामिन्द्रादिपदशक्येषु वज्रहस्तादिलक्षणेषु हविरुद्देश्येषु तेषा यौगिकेश्वरोद्देशविवक्षायामैन्द्राग्नेयादिशास्त्रमेकार्थमनुगमयितुं शक्यम् । तस्मादार्थवादिकमैतिहासिक वा कर्मानुष्ठान यदि देवानामुपपादनीय, तर्हि भवान्तरविषय तन्नेतव्यम्। अन्यथा देवानामपि कर्माधिकारे 'पुनरैत्यस्मै लोकाय कर्मणे' 'कर्मभूमिरियं ब्रह्मन्'

"अस्मिन् कृतं तत् परिगृह्य सर्वमुत्र भुङ्क्ते पुनरैति मार्गम्"

इत्याद्यसामञ्जस्यादिति दिक्। ननु सगुणासु दहरादिविद्यासु कर्मसमुच्चय इष्यते । तत्र चाधिकारो देवादीनामपीति । उच्यते । न तादर्थ्येन कर्मविधिरस्ति । यावज्जीवाद्यधिकारविहितानि तु समुच्चीयन्ते, प्रत्यवा(या[1]य)प्रतिबन्धेन विद्योत्पत्त्युपकारात् । तत्रैव सति कर्मानधिकारे देवादीनामसमुच्चितैव विद्या स्यात्। अथवा मा देवानधिकृत सगुणा विद्या। अर्चिरादिपर्वा हि गतिर्विद्योपक्रममादित्यादीनामसम्भविनी । न च क्वचिदगतिवाद विद्याविधिरस्ति, येन विद्याविधिसाधारण्ये गतिवादः सङ्कोच्येत । देवाधिकारवादश्च तत्र तत्र निर्विशेषविद्याविषयो नेष्यते । तस्मादकर्मसमुच्चयो विद्यायाः ।

न चैव 'सर्वापेक्षा—' (ब्र० ३ ४. २६) इत्यादिविरोध । न हि तत्र विद्या विविदिषा वा कर्मकार्यमिति निर्णीयते । किं तर्हि 'अत एव चाग्नीन्धनाद्यनपेक्षा' (ब्र० ३. ४. २५) इति पूर्वसूत्रे विद्याया अकर्माङ्गतया स्वतन्त्रपुरुषार्थत्वाद् ऊर्ध्वरेतसामपि विद्यासम्बन्धश्रवणाद्वाग्न्याधानादिकर्मानपेक्षायामुदितायामत्यन्ततदनपेक्षाप्राप्ताविदमुच्यते — 'सर्वापेक्षे'ति । तद्विविदिषाद्वारत्वेऽपि न विरुध्यते । एव ब्रह्मविद्याधिगमे पुण्यस्याप्यश्लेषऽभिहिते सर्वापेक्षाविरोधमाशङ्क्य 'अग्निहोत्रादि तु तत्कार्याय—' (ब्र० ४. १. १६) इत्युक्तम्। उत्पन्नया हि विद्यया नश्यन्ति कर्माणि, न श्लिष्यन्ते वा। अग्निहोत्रादीनां च ज्ञानफलापवर्गित्वादविरोध इत्यभिप्रायः। भाष्यकृतस्तु—'ज्ञानस्यैव

१. 'द्व' क. पाठ ।

प्रापकं सत् कर्म प्रणाड्या मोक्षकारणमित्युपचर्यत' इत्याहु । सहकारित्वं तु यद्यपि तुल्यवत्कार्यकारित्वे स्याद्, दर्शादिवद् दण्डचक्रादिवच्च । अङ्गस्यापि फलोपकारित्व एव, प्रयाजादिवत् स्वरूपसन्निपातिनो द्रव्यादेर्यागसहकारित्वाव्यपदेशात् । तथापि यावज्जीवादिविधिविहितत्वादाश्रमार्थानि कर्माणीति स्थिते तेषामेव विद्यार्थत्वे विविदिषार्थत्वे वा नित्यानित्यसयोगविरोधो मा शङ्कीति सयोगपृथक्त्वमात्रमुच्यते 'सहकारित्वेन च' (ब्र० ३ ४ ३३) विहितत्वाद्—' (ब्र० ३. ४. ३२) इति । ततश्च स्वोत्पत्तिव्यवधानेन विद्यया फले कर्तव्येऽदृष्टद्वारा विविदिषाद्वारा वा तदुत्पत्तिमपेक्ष्योपपद्यते तत्सहकारित्वं न तु विद्याफलमपेक्ष्यैव, कर्मणाममृतत्वसयोगाश्रवणात् ॥

---

## त्रयो धर्मस्कन्धाः ।

न च 'त्रयो धर्मस्कन्धा यज्ञोऽध्ययन दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्, सर्व एते पुण्यलोका भवन्ति, ब्रह्मसस्थोऽमृतत्वमेती'ति यज्ञादिधर्मस्कन्धेष्वन्यतमस्य ब्रह्मसस्थस्य मुक्तिहेतुत्वमुच्यते, ब्रह्मणि सम्था यस्येति सन्निकृष्टापेक्षत्वादिति वाच्यम् । 'सर्व एते पुण्यलोका भवन्ति, ब्रह्मसस्थोऽमृतत्वमेती'ति व्यवच्छिद्य व्यपदेशादमीषु ब्रह्मसस्थ इत्यप्रत्ययाद्, अत एव 'अथैष ज्योतिरि'त्यादाविव समासान्तर्गतसर्वनाम्नोऽप्युपपाद्यविषयत्वात् । अपि च धर्मस्कन्धा इत्याश्रमा गृह्यन्ते, अन्तरेणाश्रमसम्बन्ध पृथग्विधिविहितकर्मरूपभेदे सति त्रैराश्यकरणायोगात् । तथा च ब्रह्मसस्थ. परिव्राडुच्यते, परिशेषादिति युक्तम् । न च तप इत्येव सोऽपि गृह्यते, अरण्यनित्यतासामान्यात् । 'तपो नानशनात् परम्' इति श्रवणात् । 'अष्टौ ग्रासा मुनेर्भक्ष्या' इति [illegible]ज्ञोऽष्टग्रासीभोजननियमस्यानशनप्रायत्वात् । तस्य च मासे मासे चान्द्रा[illegible] [illegible]सख्यग्रासतया यतिचान्द्रायणत्वप्रसिद्ध्या च तन्नियतस्य यते. तपश्शब्दोपपत्तेश्चेति वाच्यम् । एवं कयापि कल्पनया सम्भवमात्रेणात्यन्तधर्मभेदेऽपि तप इत्येव गृह्यादेरपि ग्रहणप्रसङ्गात् । बहुकर्मायस्ततया गुरुकुलश्रान्ततया च तस्यापि तपस्वित्वात् । 'एतत् खलु वाव तप इत्याहुः, य' स्व ददाती'ति, 'तपो हि स्वाध्याय' इति च दानादौ तपश्शब्दनिगदात् तन्नियतम्य तन्निर्देशोपपत्तेश्च । निर्देशभेदे सति नान्तर्भाव इति तु तुल्य यतेरपि ब्रह्मसस्थ इति स्वधर्मनियतनिर्देशभेदात् । एव च चतुर्ष्वाश्रमेषु त्रय इति निर्देशोऽनाञ्जसो न कल्पितो भवति ।

'अण्डजानि च जरायुजानि च स्वेदजानि चोद्भिज्जानि चे'ति प्रसिद्धचतुर्विधभूतग्रामे 'तेषां खल्वेषा भूतानां त्रीण्येव बीजानि भवन्ति। आण्डजं जीवजमुद्भिज्जमि'ति परिसख्यान तु स्वेदजोद्भिज्जौ भूम्युदकोद्भेदप्रभवत्वेनैकीकृत्य कथञ्चिन्नीयते गत्यन्तराभावात्। तथा च सूत्र — 'तृतीयशब्दावरोध. सशोकजस्य' (ब्र० ३. १ २१) इति।

तस्मात् सर्वकर्मसन्न्यासिन कार्यान्तराभावेन ब्रह्मणि संस्था समाप्तिस्तदेकनिष्ठाधर्म इति गृह्याद्यतुल्यशीलफलतया पृथक् स्कन्धो निर्दिश्यते 'ब्रह्मसंस्थोऽमृतत्वमेती'ति। तत्र कुतोऽमृतत्वफले कर्म समुच्चीयेत ॥

---

**परीक्ष्य लोकान्।**

"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेद्"

इति कर्मत्यागेन मुमुक्षोर्ज्ञानार्थप्रवृत्त्युपदेशाच्च। न च कृतेन कर्मणा अकृतोऽसाध्यो लोको नास्ति। किन्तु सर्व एव कृता इति लोकान् कर्मणा चितान् प्राप्यान् परीक्ष्य न्यायैर्निश्चित्यानिर्वेद कर्मायादिति तदर्थ इति वाच्यम्। अकृत इति कर्मचितानिति च निष्ठार्थबाधेनार्हार्थलक्षणादोषात्। "तदेतत् सत्यं

मन्त्रेषु कर्माणि कवयो यान्यपश्यस्तानि त्रेताया बहुधा सन्ततानि।
तान्याचरथ नियत सत्यकामा एष व पन्था सुकृतस्य लोके ॥"

इति प्रक्रम्य

"एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति।
प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्य सुकृतो ब्रह्मलोकः ॥"

इति नित्यानामाश्रमकर्मणा सत्यशब्दितब्रह्मलोकफलत्वमभिधाय,

"प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवर येषु कर्म।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यु ते पुनरेवापियन्ति ॥"

इत्यादिना अवर काम्यकर्मेति भाष्यदर्शनात्,

"यत् कर्मिणो न प्रवेदयन्ति रागात् तेनातुराः क्षीणलोकाश्च्यवन्ते"

इति तत्रैव लिङ्गदर्शनाच्च काम्यकर्म निन्दित्वा नित्यस्यापि ज्ञानहीनस्य ब्रह्मलोकफलत्वानुपपत्ते

"तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यं चरन्तः ।
सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥"

इति विद्याकर्मसमुच्चयाद् ब्रह्मलोकफलमुपसहृत्य कैवल्याय कर्मत्यागेन केवलज्ञानविधानतात्पर्यविरोधाच्च । अन्यथा सर्व एव लोकाः कर्मसाध्याः । अतः कर्म कुर्यात् । 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदि'ति किं केन सङ्गच्छेत । न च

"न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः"

इति श्रुतेः ब्रह्मलोकस्य केवलकर्मासाध्यतया समुच्चित्य विद्या विधीयते तद्विज्ञानार्थमितीति वाच्यम् । 'तपःश्रद्धे ये ह्युपवसन्त्यरण्य' इत्येव सिद्धत्वात् ।

"तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते"

इति श्रुत्यन्तरे कर्मचितलोकेषु परीक्षणीयार्थस्य दर्शितत्वेन कर्मचितान् परीक्ष्येति तद्विरुद्धविषयत्वकल्पनायोगात् । 'न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्'

"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः"

इत्याहत्य सहोपासनया कर्मणोऽमृतत्वसाधनत्वनिषेधात् । अकार्यतया अमृतत्वस्याप्रसक्तधनसाधनत्वनिषेधायोगाद् धनसाध्यकर्मणश्च पृथङ्निषेधाद् न धनेनेति दैववित्तस्य विद्याया एव निषेधनीयत्वात् । प्रपञ्चितश्चाय प्राचीनैरकर्मसमुच्चयो मुक्तावित्यास्तां तावत् । तस्माद् विरोधिदुरितनिवृत्त्या विविदिषायामुपकारीणि कर्माणि, दुरितनिवृत्तिद्वारस्य कॢप्तत्वात् । 'तमेतमि'त्यविशेषेण नित्यकाम्यविनियोगेऽपि काम्यानामपि

"विड्वराहादिदेहेन न ह्यैन्द्रं भुज्यते पदम्"

इति स्वफलभोगोपयोगितया कतिपयदुरितनिवृत्तेरपेक्षणीयत्वात् । तथा च श्रुतिः—'धर्मेण पापमपनुदति'

---

विद्यां चाविद्यां च ।

"विद्या चाविद्या च यस्तद्वेदोभय सह ।
अविद्यया मृत्यु तीर्त्वा विद्ययामृतमश्नुते ॥"

इति। न ह्यत्रानित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या विवक्षिता, तस्या मृत्युरूपायास्तत्तरणोपायत्वायोगात्। 'मोहो मृत्युः सम्मतो य कवीनाम्' इति श्रवणात्। नापि मृत्युरत्र 'यमं त्वेके मृत्युमतोऽन्यमाहुरि'ति स्मृत्या यमः, अविद्या शब्दितकर्मकर्तव्यत्वायोगात्। किन्तु स्वतः सयोगपृथक्त्वेन वा विहितं कर्माविद्या, अविद्यामूलत्वात्। विविदिषाद्वारकविद्योत्पत्तिविरोधीनि नानाफलानि दुरितानीतराणि च मृत्युः। तथा चायमर्थः — विद्या ज्ञानम्। चकारात् तदनुबन्ध च। अविद्या कर्म। चकारात् तदुपकरण च। यो वेद अधिगच्छति। कि ते समुच्चिते। नेत्याह — उभय, पृथगधिकारत्वात्।

"अन्यदेवाहुर्विद्ययान्यदाहुरविद्यया"

इति विभागाभिधानात्। एकाधिकारत्वे च साधनरूपैकत्वे तदुभयमित्यनुपपत्तेः। विनापि तेन समुच्चयप्रतिपत्तेस्तदुपादानवैयर्थ्याच्च। स इति पदम्। हेति निपातः। सहेति वा तदर्थे निपात। यच्छब्दस्य प्रतिसम्बन्धितच्छब्दापेक्षत्वात्। अव्ययानामनेकार्थत्वाच्च। अविद्यया यावज्जीवादिविधिना विविदिषोद्देशेन वानुष्ठितकर्मणा मृत्यु तीर्त्वा विविदिषाद्वारोत्पन्नविद्ययामृतमश्नुत इति। अनेनान्यदेवाहुरित्यादिपूर्ववाक्योदितफलभेदः स्पष्टीकृतः। न चैवम्

"अन्ध तमः प्रविशन्ति येऽविद्यामुपासते।
ततो भूय इव ते तमो य उ विद्याया रताः॥"

इति केवलकर्मनिष्ठानिन्दावचन समुच्चयपरमुपरुध्येतेति वाच्य, तत्परत्वासिद्धेः।

"असुर्या नाम ते लोका अन्धेन तमसा वृताः।
तास्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥"

इति भेददर्शनापेक्षकर्मानुष्ठायिनो निन्दित्वा

"यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥"

इति केवलविद्यया मोक्षेऽभिहिते केवलकर्मरतनिदर्शनेनापक्वकषायस्यैव

"मोहात् तस्य परित्यागस्तामसः परिकीर्तित॥
दुःखमित्येव यत् कर्म कायक्लेशभयात् त्यजेत्।
स कृत्वा राजस त्याग नैव त्यागफल लभेत्॥"

इति स्मृतिदर्शनाद् ब्रह्मविद्यापदेशेनालस्यात् कर्मत्यागनिन्दया कषायपाकावधि-

कर्मावश्यकतापरत्वात् । अनन्तरमेवाविद्यया मृत्यु तीर्त्वेति तदाशयोद्घाटनात् । तथा च स्मृति —

"तपो विद्या च विप्रस्य नैश्रेयसकर परम् ।
तपसा कल्मष हन्ति विद्यया च विमुच्यते ॥"

इत्याद्या। न च विद्यानन्तरमुपेयप्राप्तिविरोधि किञ्चित् कर्मान्यद्वा कर्म कर्तव्यमस्ति। विद्यासामर्थ्यादेव कर्माविद्याविदाहादित्युक्तम् । अन्यथा 'अन्यदेवाहुरि'त्यादिफलभेदोक्तिविरोधात् । योग्यत्वात् सहेत्येव पद साम्प्रदायिकमाश्रित्य सगुणविद्यासमुच्चयोऽनेन विधीयत इत्यपि भगवत्पादा । केवलब्रह्मविद्याया तु दुरितनिवृत्त्यादिद्वारैव कर्माण्युपकुर्वन्ति । स्मृतावपि —

"कषायपक्ति' कर्माणि ज्ञान तु परमा गतिः ।
कषाये कर्मभि. पक्के ततो ज्ञान प्रवर्तते ॥"

इत्यत्र कषाये विरोधिदुरितमूलरागादौ क्षपित इत्येव पर्याप्तौ तत इति ग्रहणं विविदिषाव्यवधि दर्शयति ।

"तदर्थमुक्त तप एतदिज्या ताभ्यामसौ पुण्यमुपैति विद्वान् ।
पुण्येन पापं विनिहत्य पश्चात् स जायते ज्ञानविदीपितात्मा ॥
ज्ञानेन चात्मानमुपैति विद्वान्"

इत्यादौ च पश्चाद्ग्रहणमुक्ताभिप्रायम् । अन्यथा तत इति पश्चादिति च वैयर्थ्यात् । 'एष ह्येव साधु कर्म कारयति त यमेभ्यो लोकेभ्य उन्निनीषती'त्यत्र यद्यप्युन्निनीषा भगवतोऽपवर्गप्रापिपयिषैव, तथापि न तदुपायतयैव कर्मणामनुष्ठापनमीशस्य ।

"तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"

इत्यादि कर्मापवर्गोपायत्वनिषेधात् । न च ज्ञानप्रतिपदोऽर्चिरादिकादन्योऽध्वा ब्रह्मगमाय निषिध्यते, न कर्म साधनान्तरमिति वाच्य, 'तमेव विदित्वे'त्यवधारणोपादानात् । तत्र ज्ञानोपक्रमादर्चिरादेरन्य इत्यधिकावापस्यामूलत्वाच्च,

मुक्तौ कर्मानुपयोगस्योक्तत्वाच्च । नापि दारुयन्त्रमिव चेतनमाविष्टभूत इवेश कारयति, अबुद्धिपूर्वकत्वे कर्मनिमित्तमसारभोगानुपपत्ते । किन्तु समीहितसाधनतया कार्यताबुद्धिजननेन ।

"य हि रक्षितुमिच्छन्ति बुद्ध्या सयोजयन्ति तम्"

इति स्मृतिलिङ्गात् । तदयमर्थ —यकञ्चिदुन्निनीषन् भगवान् मुक्त्युपायविद्याभिरुचीच्छामुत्पाद्य तादर्थ्येन साधु कर्म कारयति । तस्माद् विरोधिदुरितनिवर्तनेन नि.श्रेयसोपायविद्यार्थप्रवृत्त्युपयोगिविविदिषोदयमात्रावसानानि कर्माणि विद्यात' सुदूरमपव्यस्यन्ते ।

अथाप्यदृष्टद्वारा विद्यावसानान्येव कर्माणि । तथापि न ब्रह्मविचाराव्यवहितपूर्वसमयविचारणीयानि, चित्रादिवदनियतफलतयातिक्रान्तजन्मान्तरशताचरितैरपि तैरदृष्टद्वारे सति धर्मक्षपितदुरिततया न्यग्भूतरजस्तमोमलचित्तसत्त्वस्य प्रत्यक्षोपपत्त्यादिमूलविवेकवैराग्यादिशालिनो दृढतमविविदिषायामुज्झितसकलकर्मलिङ्गस्य विचारादिभिरेव विद्योत्पत्त्युपपत्ते. । अथ विद्यापरिपाकपर्यन्तोपायानुष्ठानौपयिकविविदिषानुच्छेदायैव निवर्तनीयदुरितानन्त्ये तदा तदाङ्कुरत्तत्दुरितनिवृत्तये तव सन्न्यासश्रवणादिनियमवत् कर्मणामपि सहाचरण स्यादिति चेत् । तत्र यदि प्रकृतिसम्बन्धापगमे नित्यविज्ञानेन ब्रह्मस्वरूपगुणविभवानुभवावधिर्विद्याविपाक इत्युच्येत, न तावत् कर्माचरणसम्भव', देहादुत्क्रान्तस्य लिङ्गमात्रानुगतस्य तदयोगात् । न चोत्क्रामत एव ब्रह्मप्राप्तिः, विदुषः सम्परायकाल एव सर्वकर्महानावपि विद्यया ब्रह्मप्राप्तौ देवयानपथिकस्य लिङ्गशरीरस्थित्यभ्युपगमात् । नापि प्रायणावधिर्विद्याविपाकः, तदुत्तराघासम्भवेन तदश्लेषवचनविरोधात् । नापि दर्शनरूपापत्त्यवधि , अधिमात्रतीव्रसवेगानामासन्नतमाया दर्शनरूपापत्तौ विद्याकर्मणोराप्रायणानुष्ठेयत्वोपगमविरोधात् । अपि च विद्यात्मक एव परमधर्मे सकलदुरितघस्मरे किं कर्मणेत्युक्तम् । तथाच स्मृति.—

"इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अय तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥"

(याज्ञ० १ ८)

इति । 'आत्मलाभान्न पर विद्यते' (आप० ध० १ ८ २२. २) इति च । अपि च प्राप्ते समुच्चये तादात्विकदुरितनिवृत्तिः प्रयोजनमि-

त्युपपत्तिमात्रम् । प्राप्तिरेव तु वक्तव्या । यज्ञादिश्रुतिस्तावत् फलपर्यन्तप्रवृत्तिहेतुतीव्रतमविविदिषासम्पन्नं नाधिकर्तुमलम् । तदेकफलत्वे कर्मणो लब्धफलाधिकारिकत्वायोगात् । न च विद्योपायमनुतिष्ठत एव नवनवा विविदिषा कल्प्या, वैयर्थ्यात , तस्याः प्रवृत्तिहेतोरेवाफलानुवृत्त्युपपत्तेः । न च विषयरागान्तराये विद्यानुष्ठानसन्धानाय विविदिषान्तर कल्प्यम् । निरवशेषविमृष्टविषयरागकषायस्यैव ब्रह्मविद्याधिकारात् । साक्षात्कारपर्यन्तविद्यास्वरूपोपकारित्वेऽपि कर्मणां विरोधिनिवृत्तिद्वारस्य व्यवधानेऽपि सम्भवेन समसमयानुष्ठानानियमात् ॥

---

### आत्मक्रीडः ।

"आत्मक्रीड आत्मरति क्रियावानेष ब्रह्मविदा वरिष्ठ."

इति न या काचिदेव क्रिया विहिताक्रिया वोच्यते, येन रतिशब्दोदितज्ञानसहभावो गम्यते । किन्तु श्रवणनिर्वृत्तविज्ञानो मनन कुर्वन्नात्मक्रीड उच्यते । स्वपक्षविपक्षपरिष्कारतिरस्कारानुगुणनानायुक्तिप्रतिसन्धान हि तर्करसिकचित्तस्य क्रीडनमिव भवति । निदिध्यासनमेव स्वादुतापन्न रतिरुच्यते । तान्येतानि श्रवणादीनि क्रियान्तरसमुच्चयव्यावर्तनेन फलविवक्षयानूद्यन्ते—'क्रियावानेष' इति । तस्येद फलमाह—'ब्रह्मविदा वरिष्ठ' इति । श्रवणनिर्वृत्तौ ब्रह्मवित् । मननप्रतिष्ठाया ब्रह्मविद्वर, विषयासम्भावनादिनिवृत्त्या स्थिरीकृतज्ञानत्वात् । निध्यानपरिपाके च तद्वरीयान् तस्यैव साक्षात्कारकल्पत्वात् । एतदन्ता च दुर्लक्षव्यवधिसाक्षात्कारफलावधिश्रवणादिक्रियैका पर्यवसन्नेति तावतैव प्राप्तफलतया क्रियावानिति प्रशसापरमतुप्प्रत्ययेन कर्तव्यसमाप्ति सूचयित्वा तेषामेष वरिष्ठोऽभिधीयते, आत्मरते. क्रियान्तराभावात् ।

"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानव ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥"

इति स्मरणात् ॥

---

### यतेः कर्माभावः ।

'स खल्वेव वर्तयन्यावदायुषमि'ति न निर्गुणविद्याविषय, लोकविशेषसम्पत्त्यनुबन्धात् प्रकृतदहरविद्याविषयत्वोपपत्तेः । अन्यथा 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती'ति विद्यार्थसन्न्यासविधिविरोधात् । न च तदाश्रमकर्मसमुच्चयो विद्यायाः स्यादिति शङ्क्य, विद्याङ्गसन्न्यासे शमदमादिव्यतिरेके-

णानुष्ठेयकर्माभावात् 'ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ती'ति श्रवणात् ।

"मुक्तेश्च बिभ्यतो देवा मोहेनापि दधुर्नरान् ।
अतस्ते कर्मसूद्युक्ता प्रावर्तन्ताविचक्षणा ॥
अत. सन्न्यस्य सर्वाणि कर्माण्यात्मावबोधतः ।
हत्वाविद्या धियैवेयात् तद्विष्णोः परम पदम् ॥"

इति भाल्लविश्रुते ।

"सर्वकर्माणि मनसा सन्न्यस्यास्ते सुख वशी "
"मोक्षस्य सर्वोपरम. क्रियाभ्य."
"स्नान त्रिषवण प्रोक्त यतीना तु त्रिदण्डिनाम् ।
न तत्परमहंसाना युक्तानामात्मदर्शिनाम् ॥"
"नैव धर्मी न चाधर्मी न चैव हि शुभाशुभी ।"
"त्यज धर्ममधर्म च उभे सत्यानृते त्यज ॥"

'सत्यानृते सुखदु खे वेदानिमं च लोकममु च परित्यज्यात्मानमन्विच्छेद्' (आप० धर्म० २ ९ २१. १३) इत्यादिस्मृतेश्च । दृष्टार्थभिक्षाचरणादिषु च नियमानिष्टेः । 'तच्छास्त्रैर्विप्रतिषिद्धम्' (आप० धर्म० २ ९ २१. १६) इति सत्यादिवर्जन प्रतिषिद्धमिति चेद्, न, तस्य स्वयमेव विहितत्वात् । 'सर्वत परिमोक्षमेके' (आप० धर्म० २ ९ २१. १२) इति प्रक्रम्य सत्यादिवर्जनमुक्तमेकीयमतमिति चेद्, न, 'तस्य मुक्तमाच्छादन विहितम्' (आप० धर्म० २ ९.२१ ११) इत्युक्त्वा सर्वत परिमोक्षवचनस्य वासोमात्रविषयत्वात्, प्राक् सत्यादे स्वयमविहिततया तद्वर्जनस्यैकीयमतत्वानुपपत्तेश्च । अपि च यदि सत्यादिवर्जन तत्पदेन परामृश्य विप्रतिषिद्धमुच्यते । 'सत्य पर पर सत्यमि'त्यादिना सत्यादीनि ज्ञानसाधनपर्वाण्यनुक्रम्य 'तानि वा एतान्यवराणि तपासि न्यास एवात्यरेचयदि'ति नैष्कर्म्यलक्षणस्य सन्न्यासस्योत्कर्षाभिधानं सत्याद्यवरसाधनहानेन परसाधनभूतसन्न्यासोपादानफल न स्यात्, तदुपादानमात्रस्य साधनत्वाभिधानादेवोपपत्तेरुत्कर्षोक्त्यनपेक्षत्वात् । न चैव सत्यानृतादिविधिनिषेधातिक्रमे स्वैरचारी निरयमापद्येत, दूरे तस्य निःश्रेय-

साधिगम इति वाच्यम् । विषयरसवशवद्धहृदयो हि ताद‍र्थ्येन सत्येव विधित निषेधसम्बन्धे स्वच्छन्देन तमतिक्रामन् प्रत्यवेयान्निरय चर्च्छेत् । विधित एव तु विधिनिषेधसम्बन्धमतिक्रान्तस्य दृष्टानुश्रविकनिखिलविषयवितृष्णस्य ससारमहाविषभेषजब्रह्मविद्यैकप्रयोजननिखिलवाङ्मन.कायप्रवृत्तेः परमहसपरिव्राजकस्योक्तदोषाप्रसङ्गात् । तस्य प्राणयात्रादिदृष्टार्थप्रवृत्तावबर्जनीयतया सम्भवतोऽपि प्रामादिकवृजिनस्य ब्रह्माधिगमकालानलशल्मलीतूललवमात्रस्याकिञ्चित्करत्वात् । न चैवमपि सत्यादिपर्वाम्नातस्य शमादेरप्यनपेक्षाप्रसङ्ग, सर्वविषयावितृष्णस्य स्वत एव भवतस्तस्यावर्जनीयत्वात् । विक्षेपनिवृत्त्या ज्ञानस्वरूपसन्निपातितया तदङ्गत्वनियमाय प्रतिप्रसवाच्च । नापि सुखदु खवर्जन शास्त्रविप्रतिषिद्धमुच्यते । सुखदु खयोरारब्धनिमित्तजन्मनो स्वरूपेण हातुमशक्यतया तदभिनन्दद्वेषत्यागस्य सर्वशास्त्रसम्प्रतिपन्नस्य निषेधायोगात् । अथोच्येत — 'स्वाध्याय एवोत्सृजमानो वाचम् —'(आप० धर्म० २ ९, २१ १०)

"यथोक्तान्यपि कर्माणि परिहाप्य द्विजोत्तम ।
आत्मज्ञाने शमे च स्याद् वेदाभ्यासे च यत्नवान् ॥
सर्व तु सन्न्यसेद् विद्वान् वेदमेक न सन्न्यसेत् ।"

इत्यादिशास्त्रे विप्रतिषिद्ध वेदहानमुच्यत इति । न ।

"कुटुम्ब पुत्रदाराश्च वेदाङ्गानि च सर्वश ।
यज्ञ यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनि. ॥"

इति बाष्कलश्रुतौ

"यज्ञोपवीत वेदाश्च सर्व तद् वर्जयेद् यति"

इति कठश्रुतौ

"नाध्येतव्य न वक्तव्य न श्रोतव्य कदाचन"

इति दक्षस्मृतौ च वेदत्यागस्य विहितत्वात् । 'स्वाध्याय एवोत्सृजमानो वाचमि'त्यादेश्च प्रणवोपनिषदादिविषये कुटीचकादिविषये वा सावकाशत्वात् । 'कुटीचको नाम पुत्रादिभि कुटि कारयित्वे'त्यादि प्रस्तुत्य 'जपस्वाध्या-

१. 'पानुपा' ख पाठ

यध्यानतत्पर.' इत्यादिस्मरणात् । नापि लोकहान विप्रतिषिद्धमुच्यते, साध्यसाधनभूतपुत्रवित्तलोकैषणाव्युत्थानस्य श्रुतिचोदितत्वाद्, 'अनिहोऽनमुत्रश्चरेदि'ति स्ववचनविरोधाच्च । आत्मान्वेषणस्य च मुक्तिहेतुतया सकलश्रुत्यादिसिद्धस्य शास्त्रविप्रतिषेधोक्त्यसम्भवात्, 'बुद्धे क्षेमप्रापण शास्त्रविप्रतिषिद्धमुच्यत' इत्यत्र वक्ष्याम । तस्माज्ज्ञानसन्न्यासे परमहसाख्ये कर्माभावान्न तत्समुच्चयो विद्याया' । न चैव सति 'बुद्ध्वा कर्माणि यत् कामयेत, तदारभेत' (आप० धर्म० २ ९ २१. ५) इति मौनस्य कर्मावबोधानन्तर्यनियमानन्वयः, अनुष्ठेयकर्माभावादिति वाच्यम् । लक्षणाय 'चत्वार आश्रमा' मौनं गार्हस्थ्यम्' (आप० धर्म० २ ९ २१ १) इत्यादिविभागोद्देशेन समभिव्याहृतस्यापि मौनस्य सर्वकरणव्यापारोपरमात्मकस्य नैष्कर्म्यसन्न्यासस्य कर्मावबोधानन्तर्यानन्वयेऽपि विरोधाभावात् ॥

**विविदिषाशब्दार्थः ।**

अपि च न वेदानुवचनादीनि विद्याया विकल्प्यन्ते, अष्टदोषापातात् । समुच्चीयन्ते तु, पृथक्पदोपात्तसकलसाधनोपरक्तैकभावनाविधानात् । अत एव कथं नाम सर्वावच्छिन्नैकभावना विधीयेतेति फलपदे विधिप्रत्ययोपादानमर्थवत्, विविदिषाया विधेयसाधनसमभिव्याहारादेवापेक्षितफलभावप्रत्ययोपपत्ते. । अन्यथा वाक्यभेदप्रसङ्गात् । न चारुणादिवदिह विशिष्टविधि., विविदिषाया. फलत्वेनाविधेयत्वात् । प्राप्तफलभावनाया च भिन्नकरणविभक्तिनिर्दिष्टानेकविधाने वाक्यभेदापरिहारात् । नहि फलकर्तव्यताप्युपदेशगम्या, किन्तूपायकर्तव्यतैव । यथाहु —'वेदैवासौ मयैतत्कर्तव्यमिति । उपाय तु न वेद । तस्योपायः कथनीय' इति । आह च वार्तिककारः —

"सर्वत्रावस्थितो न्यायो भावनांशद्वये विधि."

इति.

"फलांशे भावनायाश्च प्रत्ययो न विधायक"

इति च । फलविधिरिति तु तत्सम्बन्धितारूपेण तदुपायविधिरेवोच्यते, विधेर्भावार्थविषयत्वात् । नहि दर्शादिवत् समुच्चित्य साधनता वेदानुवचनादीना, येन पृथक्साधनविभक्तिनिर्देशो विरुध्येत । दण्डचक्रादेरिव साधनानां तेषां

समुच्चयविधानात् । अत एव फलान्तरापनयमात्रेणानपेतसाधनरूपाणामेव यज्ञादीना विविदिषासयोगविधौ कृप्तमेव द्वारमुपजीव्यते, नापूर्वमारब्धदु.रेतनिवृत्त्यादि द्वार कल्प्यते । न च तानि सर्वाणि ज्ञानमनुतिष्ठतानुष्ठातु शक्यन्ते । न चाचार्यकुल।दिषु भिन्नकालप्रयोगस्थानामेव तेपा विद्यासमुच्चय इति वाच्यम् । तथापि चातुराश्रम्यनियमानुपपत्तेः । 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वे'ति प्रव्रज्यानियमश्रुते. । 'वनी भूत्व। प्रव्रजेत्',

"वनेषु तु विहृत्यैव तृतीय भागमायुषः ।
चतुर्थमायुषो भाग त्यक्त्वा सङ्गान् परिव्रजेत् ॥"

इत्याद्याश्रमक्रमनियमस्य कषायपाकसम्भवाभिप्रायत्वात् । तथा च लिङ्ग—

"यदहरेव विरजेत् तदहरेव प्रव्रजेत",
"भा।वितैः करणैरेभिर्बहुससारयोनिषु ।
आसादयति शुद्धात्मा मोक्ष वै प्रथमाश्रमे ॥
ससारमेव निस्सार दृष्ट्वा सारदिदृक्षया ।
प्रव्रजन्त्यकृतोद्वाहा. पर वैराग्यमा।श्रिताः ॥"

इत्यादि । न च वेदानुवचनश्रुतिश्चातुराश्रम्यविषया, विशेषनियमायोगात् ।

अपि च सूत्रकार. स्तुतयेऽनुमतिर्वा' (ब्र० ३. ४ १४) इति विदुषो न कर्म नियम्यते ।

"कुर्वन्नेवेह कर्म।णि जिर्ज।विषेच्छत समा"

इति विद्यास्तुतये कर्मानुमतिरेव । तथापि 'न कर्म लिप्यते नरे' इति वाक्यशेषेण विद्यास्तुता भवतीत्याह । 'कामकारेण चैके' (ब्र० ३. ४ १५) इति च 'कि प्रजया करिष्यामो येषा नो।ऽयम।त्माय लोक' इति विदुष. कर्मत्यागमेव दर्शयति । 'उपमर्द च' (ब्र० ३ ४ १६) इ।त च 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन क पश्येदि'ति विद्यया भेदाश्रयकर्मोपमर्दमधीयत इति वदन् विरोधादसमुच्चय मन्यते ।

यत्तु ब्रह्म।विद्या कर्माङ्ग मा भूदिति समस्तसासारिकदु'खमूलपुण्यापुण्यकर्मणो विद्ययोपमर्दोऽनेन सूच्यत इति। तन्न। कर्म।ङ्गावबद्धब्रह्मविद्याया कर्मसमृद्ध्यर्थ-

त्वाङ्गीकारात् । स्वरूपेणाविरोधे तस्यास्तदङ्गताया एवोपपत्तेरत्यन्तस्वातन्त्र्यायोगात् ।

"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"

इत्याम्नायत इति चेत्, प्रशंसैषा विद्याया भविष्यति । अपि च तव समुच्चित्यानुष्ठेयानामग्निहोत्रादीनामङ्ग विद्या भविष्यति, अविरोधात् । मुक्तावदृष्टद्वारत्वस्योभयत्रापि तुल्यतया नियमहेत्वभावात् । एव च 'यदेव विद्यया करोती'ति नासार्वत्रिकी कल्पिता भवति । अथ विद्याया श्रुतामृतत्वसाधनभावमवभज्यारादुपकारेण कर्माङ्गत्वकल्पनाद् वर कर्मणामेव विद्याङ्गत्वमङ्गीकृतं, विद्यासाधनताश्रवणात् । प्रतिबन्धनिवृत्त्या ज्ञानस्वरूपोपकारसम्भवाच्चेति चेत् । तथापि सौत्रोपमर्दन्यायानुपपत्ति । अपि च 'शान्तो दान्त' इत्यादिसर्वकरणव्यापारोपरमरूपशमाद्यङ्गकत्वाम्नानाद् विद्यायामतद्विरोधिव्यापारात्मककर्मैककाल्यानुपपत्ति । न च निषिद्धकाम्यविषयत्वे शमादीनामविरोध नित्यादिविषयप्रवृत्त्या भिन्नविषयत्वादिति शङ्क्यम् । नियमहेत्वभावाद्, विद्यार्थं सर्वकर्मत्यागस्य चोदितत्वाच्च ।

अपि च विद्याकर्मणी नाप्रायणमनुष्ठेये । नह्युत्पन्नैव विद्या पुनरुत्पाद्यते । न च फलाय विद्यान्तरमुत्पादनीयम् । तत्त्वविज्ञानपरिशुद्धौ सकृदुदिततत्त्वसाक्षात्कारादेवाविद्यावरणनिवृत्तौ निरङ्कुशनिरतिशयब्रह्मानन्दानुभवसम्भवात् । सा चैषा मुक्तिरिति तदवसान श्रवणादिमय विज्ञानमनुष्ठेयमित्युच्यते । 'क्षेत्रज्ञः करणी ज्ञान करणमि'त्यादौ निवर्तयेदिति चानपेक्ष्यत्वमुच्यते, न त्वाप्रायणमावृत्तिर्विधीयते, विपरीतलक्षणाहेत्वभावात् । न चैवमावृत्तिन्यायविरोध, परविद्याविषये साक्षात्कारावधि साधनावृत्तेरिष्टत्वात् । उपासनात्मक च विज्ञानमाप्रायणादनुष्ठेयं चोद्यते 'स खल्वेव वर्तयन्' इत्यादौ । यत्रेद 'प्रायणान्तमोङ्कारमभिध्यायीते'ति निगद्यते अदृष्टफलस्यान्त्यप्रत्ययसापेक्षत्वात् कर्मफलवत्, तद्धि प्रायणकाले प्रतिपत्तव्यभावनाविज्ञानमपेक्षते । 'यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसायुक्त सहात्मना यथासङ्कल्पितं लोकं नयति',

"तदेव सक्त सह कर्मणैति लिङ्ग मनो यत्र निषक्तमस्य"

इत्यादिश्रुते., 'तदोकोग्रज्वलन तत्प्रकाशितद्वार.—' (ब्र० ४. २ १७)

इत्यादिसूत्राच्च । विद्यायामन्त्यप्रत्ययश्च प्रत्ययात्मकोपासनान्नातिरिच्यते । यत्रे-दमुच्यते — 'स यावत्क्रतुरस्माल्लोकात् प्रैति',

"अन्तकाले च मामेव स्मरन् मुक्त्वा कलेबरम् ।
य. प्रयाति स मद्भाव याति नास्त्यत्र सशयः ॥"

इत्यादि । तत्र च विद्याफलेऽपि कर्मसमुच्चयो न निवार्यते ।

न च

"यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि"
"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥"

इत्याद्याचारदर्शनात् परविद्याकर्मसमुच्चय इति वाच्यम् । 'विद्वांस आहुर्ऋषयः कावषेया. किमर्था वयमध्येष्यामहे'

"न पपाठ गुरुप्रोक्ता कृतोपनयन श्रुतिम् ।
न ददर्श च कर्माणि शास्त्राणि जगृहे न च ॥"

इत्यादिविपरीतदर्शनात् । तथा च सूत्र — 'तुल्यं तु दर्शनम्' (ब्र० ३. ४. ९) इति । न च त्यागवचनानि साभिसन्धिकर्मविषयाणि, काम्यकर्मणो मोक्षैकफलब्रह्मविद्याविरोधित्वादिति वाच्यम् । विद्याप्रक्रम एव तत्त्यागेन विदुष-स्तदप्रसक्तेः । अनुष्ठानवचनाना यावज्जीवादिचोदितनित्ययज्ञाध्ययनादिविषयत्वौ-चित्यात् । अत एव विदुषो भरतस्य नित्यानाचरणमेव दर्शयति — 'न पपाठे' त्यादि ।

"त तादृशमसस्कारविप्राकृतिविचेष्टितम् ।
क्षत्ता सौवीरराजस्य विष्टियोग्यममन्यत ॥"

इत्यादिलिङ्गाच्च ।

अपि च केकयस्य तावदपरब्रह्मविदो युक्त कर्माचरणम् । परविदोऽपि वा तस्य लोकसङ्ग्रहप्रयोजनत्वात् ।

"लोकसङ्ग्रहमेवापि सम्पश्यन् कर्तुमर्हसि"

इत्यादिस्मरणात् । इयाज केशिध्वज इत्यादौ च नायमर्थो ज्ञानव्यपाश्रयोऽधिग-तब्रह्मानुभव इति, किन्त्वपेक्षित फलमुपायप्रवृत्तेराश्रयो भवतीति ज्ञानव्यपाश्र-यो विविदिषुरुच्यते । तस्येदं प्रयोजन —

"ब्रह्मविद्यामधिष्ठाय सन्त तत्प्रतिबन्धकम् ।

मृत्यु दुरितं तरितुम्"

इति। खाण्डिक्याय ज्ञानोपदेशस्तु तस्य शास्त्रन्यायनैपुण्येनाप्युपपद्यते। अथवा ज्ञानमेव व्यपाश्रयोऽस्य न कर्मादि, ततो लब्धव्याभावात्। स तथाभूतोऽपि ब्रह्म-विद्या समूलकर्मनिर्माथिनीमप्यधिष्ठाय नियम्याभिभूय प्रवृत्तफल मृत्यु पाप्मा-नमविद्यया लोकसङ्ग्रहार्थमप्यनुष्ठितेन कर्मणा तदनुष्ठानायासजनितदु.खफलेन तरितुमियाज यज्ञानित्यर्थ ॥

"अह ह्यविद्यया मृत्यु तर्तुकाम. करोमि वै।
राज्य यागाश्च विविधान् भोगै पुण्यक्षयं तथा॥"

इति तस्यैव भोगनिमित्तपुण्यक्षयवचनसमभिव्याहारात्।

"जातिस्मरोऽप्यसौ पापक्षयकाम उवाह ताम्"

इति भरताख्याने दर्शनाच्च।

"कर्मणैव हि संसिद्धिमास्थिता जनकादय."

इति यदि ते ज्ञानिन, कर्मणैव हि सह ससिद्धिं गता लोकसग्रह कुर्वन्तो न कर्मात्याक्षु.। अथ न, कर्मणा निरभिसन्धिकृतेन ससिद्धिं सत्त्वशुद्धिलक्षणा गता इत्यर्थः,

"योगिनः कर्म कुर्वन्ति सङ्ग त्यक्त्वात्मशुद्धये"

इत्यादिदर्शनात्। तस्मात् तवाविधेयश्रवणमननाङ्गत्वायोगेन विधेयनिदिध्यास-नाङ्गतया समुच्चित्योपादानस्यापि कर्मणां शमादिवदनन्तरविचारेऽप्युपपत्तेर्न तद्वि-चारप्राथम्यनियमः।

अथोच्येत — 'तमेतामि'त्यादिवाक्यार्थस्य विद्याकर्मसाध्यसाधनभा-व'य तार्तीयीकविचारगोचरस्य यज्ञादिपदार्थाज्ञाने दुर्ज्ञानतया तज्ज्ञानाय कर्मविचारप्राथम्यमिति। तथापि तृतीयलक्षणस्यैव कर्मविचारानन्तर्यं स्यात्, तत्रैव विद्याकर्मसाध्यसाधनभावचिन्तनात्। यद्युच्येत — विषयफलयोरपि विद्याश-तया सकलस्यापि ब्रह्मविचारस्य साध्यविचारत्वेन तत्साधनयज्ञादिपदार्थज्ञानाय कर्मविचारप्राथम्य प्राप्यत इति। एव सति सर्वापेक्षादिविचारोऽपि फलविचारा-नन्तरमेव स्यात्, साध्यपदार्थज्ञानस्य तावद(व)सानत्वात्। अपि च न सविषय-फलाया विद्याया. कर्मसाध्यत्वमेव ब्रह्मविचारशास्त्रस्य तात्पर्यविषयोऽर्थ. प्रतिपत्तव्य', येन कर्मविचारपश्चाद्भावो नियम्येत। मुक्तिविद्यासाध्यसाधनभावो हि तदर्थ.। तच्चोभयमत्रैव व्युत्पाद्यत इति न कर्मविचारापेक्षा। न च प्रधानार्थसस्पृष्टसस्प-

र्शिनोऽपि पदार्थैकदेशस्य कर्मणो विज्ञा(ना)य तद्विचारप्राथम्यनियम , प्रधानादिव्यावृत्तविषयतया विद्याज्ञानाय साख्यादेरपि तत्प्रसङ्गात् । अपि च यज्ञादि पदानां लोकविदितार्थत्वे न तद्विचारापेक्षा । अविदितार्थत्वे च नतराम् । विद्याप्रकरणे विधेयस्य प्रकरणान्तरन्यायेनान्यत्वे सति भिन्नविषयविचारानिरूप्यत्वात् । अन्यथा 'एष एव प्रथमो यज्ञो यज्ञानामि'त्यादिवाक्यार्थज्ञानोपयोगिपदार्थज्ञानाय तद्विचारप्राथम्य नियम्येत । अथ यज्ञादिपदार्थाना व्युत्पन्नत्वेऽपि विना विशेषविज्ञान विनियोगप्रतिपत्त्यपर्यवसानमिति चेत् । किन्नात. । सञ्जाततीव्रविविदिषस्य सर्वकर्मसन्न्यासेन ब्रह्मज्ञानप्रवृत्तस्य तदनपेक्षत्वात् । विविदिषोद्देशेनानुष्ठेयस्वरूपविज्ञानतत्साधनत्वविज्ञान चोभयविचारसाध्यमिति चेत् । तथापि न, पौर्वापर्यनियमविशेषहेत्वभावात् । व्याख्येयवेदाक्षरपाठक्रमस्य वैधाध्ययनधर्मत्वेनान्यप्रयुक्तविचारे सक्रमयितुमशक्यत्वात् । न चाधीतक्रमेण धर्म जिज्ञासते, प्रथमातिक्रमे कारणाभावादिति वाच्यम् । वेदान्तेषु नित्यनिरतिशयफलसम्भावनौत्कट्येन तदुपायजिज्ञासाप्राथम्योपपत्ते । एतेन चेतनाना त्रिवर्गे प्रथमप्राव ण्यसम्भवादर्थस्वभावादेव धर्मविचारप्राथम्यमिति निरस्त, सम्भवमात्रेण प्राथम्यनियमानुपपत्तेः । त्रिवर्गे प्रवणचित्तस्य विचारितकर्मणोऽपि ब्रह्मविचारस्यानारभ्यत्वात् । कुतूहलाद्वा बहुश्रुतत्वबुद्ध्या वा तदारम्भेऽपि कर्मवि(चारस्य) सतोऽप्यहेतुत्वेनानपेक्ष्यत्वात् । त्रिवर्गकामस्यापि त्रैवर्गिकमिदमन्यदन्यथेति विचारात् प्रागनिर्णयेन कदाचिद् ब्रह्मविचारप्राथम्यसम्भवाच्च । यत्तु विचारद्वयविषयकर्मब्रह्मविद्ययो. हेतुहेतुमत्तया पौर्वापर्यनियमे सति तच्छेषविचारयोरपि तथा स्याद्, मुख्यक्रमेण चाङ्गाना तदर्थत्वादिति । तन्न । जन्मान्तरविचारितानुष्ठितकर्मणामपि प्रतिबन्धकदुरितनिवृत्तिद्वारा विद्याहेतुत्वोपपत्ते. । न चातीतभवकर्मविचारोऽपीदानीन्तनब्रह्मविचारप्रवृत्तिहेतु', येन तदनन्तरा ब्रह्मजिज्ञासा चोद्येत, तस्य चिरान्तरितत्वेन तदानन्तर्याभिधानवैयर्थ्यात् ।

यत् पुनरुद्गीथादिविषये कर्मसमृद्ध्यर्थोपासनानि कर्माश्रितानीति तद्विचारेणेह क्रियमाणा पूर्ववृत्ता धर्मजिज्ञासामपेक्षत इति । तच् शास्त्रार्थानवबोधनिमित्त मत्तप्रलपितमरमणीयम् । न ह्युद्गीथाद्युपासना ब्रह्मविचारशास्त्रार्थ. । कि तर्हि कर्मार्था सा प्रथमतन्त्र एव विचार्या सती ब्रह्मज्ञानेन मानसत्वादिसामान्यात् तन्निरूपणेनेह शक्यत्वाच्चेह प्रासङ्गिकी विचार्यते । न च तदपेक्षितापि धर्मजि

ज्ञासा प्रधानब्रह्मजिज्ञासाप्रवृत्तिहेतु', तत्रानपेक्ष्यत्वात्। न चोद्गीथाद्युपासनाना ब्रह्मदृष्टिरूपाणा ब्रह्मज्ञानाधीनत्वादिहैव सङ्गतिर्युक्ता, न प्रथमतन्त्र इति शङ्क्यम्। तथापि कर्माश्रयत्वेन तदपेक्षाणां कर्मसमृद्ध्यर्थतया तदपेक्षितानां च पूर्वतन्त्रसङ्गतेरेव युक्ततरत्वात्। न च सोपासनानि निरभिसन्धीन्यपि कर्माणि सत्त्वशुद्धिव्यवधानानि सन्ति शमाद्यङ्गकप्रवृत्तब्रह्मविद्यायामङ्गतया करणतया वा तदैव समुच्चीयन्ते, येनेतरेतरापेक्षयेहाप्युपासनाविचारः सङ्गच्छेत। अपि चैवमपि शास्त्रप्रवृत्तेरतत्प्रधानतया तदपेक्षितधर्मविचारहेतुकत्वमयुक्तमतिप्रसङ्गादित्युक्तम्।

न चैवमुपासनानां विधेयक्रियात्वसामान्यादाश्रयकर्मनिरूपणेन शक्यत्वाच्च कर्मकाण्ड एव विधिस्तद्विचार एव विचारश्च स्यात्, कर्मोपयोगित्वस्य विशेषकत्वादिति शङ्क्यम्। आम्नायस्य नियोगपर्यनुयोगायोगात्। वदन्ति हि—'आम्नातस्यार्थं वक्तु प्रभवामो नाम्नात पर्यनुयोक्तुमि'ति। विचारस्य च तदधीनत्वान्नातिक्रम.। न तु ब्रह्मकाण्डे विधानात् तद्विचारे विचाराच्च तासां ब्रह्मविद्योपयोगः शक्यते कल्पयितु, 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'ति कर्मसमृद्ध्यर्थत्वस्य प्रत्यक्षत्वात्। न चैवमुद्गीथाद्युपासनाविधिविचारावनर्थकौ स्याता, विद्यार्थिना कर्मणामननुष्ठेयतया तदाश्रयोपासनानुपयोगात्, कर्मणश्च तत्तत्फलमाशासानस्य ब्रह्मविचारप्रवृत्त्यसम्भवेन तदधिगमस्यैवा(गा? भावा)दिति वाच्यम्। विचारितवेदान्तेभ्य उपश्रुत्य कर्मिणस्तदनुष्ठानोपपत्तेः। वस्तुतस्तु संयोगपृथक्त्वेन कृच्छ्रफलसयोगविहितब्रह्मविचारे तादर्थ्येन कर्मिणोऽपि प्रवृत्तिसम्भवादन्यार्थप्रवृत्तस्यापि तस्य निर्णीतकर्माश्रयोपासनानुष्ठानयोगात् तद्विधिविचारावर्थवन्ताविति॥

---

### कर्मकाण्डोक्तन्यायानां ब्रह्मविचारानुपजीव्यत्वम्।

यत्तु 'धर्ममीमासान्यायोपजीवित्वाद् ब्रह्ममीमासायास्तदानन्तर्यनियम' इति। तत्र यद्यपि वेदप्रामाण्योपयोगिन्यायमात्रमुपजीव्यते। तथापि न धर्मविचारस्य प्राथम्यानियमः। न च वेदप्रामाण्यविचारप्राथम्याङ्गीकारे तत्रतत्रोक्तसङ्गतिविशेषेण तत्प्रमेयधर्मभेदादिविचारा एव प्रथमं प्रवर्तन्त इत्यर्थप्राप्तं तदानन्तर्यं ब्रह्मविचारस्येति वाच्यम्। यदृच्छासन्निपातिनस्तदानन्तर्यनियमस्य हेत्वानन्तर्यपरसौत्राथशब्दार्थत्वायोगाद्, वेदप्रामाण्यस्य धर्मब्रह्मोभयप्रमेयविचारोपयोगसाधारण्ये सति सङ्गतिविशेषानिरूपणेन धर्मविचारप्राथम्यनियमस्यैवासिद्धेश्च।

वस्तुतस्तु न वेदप्रामाण्येऽपि जैमिनीयन्याया उपजीव्यन्ते । इहापि शास्त्रयोनित्वाधिकरणे ब्रह्म शास्त्रकर्तृ न वेति विचारे सकर्तृकत्वे पुंबुद्ध्यनुप्रवेशान-नुप्रवेशाभ्या प्रामाण्याप्रामाण्यविचारस्याप्यनुगतत्वात् । देवताधिकरणे च वि-ग्र(ह)वद्देवताभ्युपगमे डित्थादिवदिन्द्रादिपदानामेकव्यक्तिवृत्तितायामाधुनिकसङ्के-तितत्वेनाप्रामाण्यं मा शङ्कीति 'शब्द इति चेन्नात प्रभवात्—' (ब्र० १. ३. २८) इति पूर्वसिद्धाभिधानानुस्मरणपूर्विकैवेन्द्रादिसृष्टिरित्यभिधाय वाक्येऽपि पुबुद्धिमूलत्वनिरासाभिप्रायेण च 'अत एव च नित्यत्वम्' (ब्र० १. ३. २९) सम्प्रदायाविच्छेदे सति कर्तुरस्मरणादिति स्थिरीकृत्य, 'समानना-मरूपत्वाच्चावृत्तावप्यविरोध —' (ब्र० ३ ३ ३०) इति सृज्यमानवस्त्व-नित्यत्वनिमित्तनित्यानित्यसंयोगविरोधमूलाप्रामाण्यपरिहाराच्च । यत्तु भाष्ये गता-र्थत्वमाशङ्क्य तत्र पर्यहारि 'कर्तुरस्मरणादिति* स्थिते वेदनित्यत्वे तदेव नित्यत्व स्थितं द्रढयती'ति । तत्तस्यैतदसाधारणविषयत्वाभावाभिप्राय, न तु न्या-योपजीवनाभिप्रायम् । अन्यथा अक्रियार्थत्वादर्थवादवद् वेदान्तानामपि विध्येक-वाक्यतया प्रामाण्यापत्तौ ब्रह्मतात्पर्यभङ्गप्रसङ्गात् । पदपदार्थसम्बन्धौत्पत्तिकत्वादि-न्याया उपजीव्यन्ते नांशान्तरमित्यर्धजरती(या)योगात् । न च विधिना त्वेकवा-क्यत्वाद्—' (जै० १. २ ७) इति विधिसमभिव्याहाररूपैकवाक्य-तोपजीवनेन विध्याकाङ्क्षितस्तुत्यादिना विधिशेषतया प्रामाण्योपपादनमर्थवादा-दिविषयमेव, वेदान्तानां विधिसमभिव्याहाराभावादिति वाच्यम् । अर्थवादेषु स्तुत्याद्यभिधानाक्षमतया तल्लक्षणोन्मेषाय विधिसमभिव्याहारोपजीवनात् । वेदा-न्तेषु पुनरभिधानवृत्त्यैव विध्यपेक्षितदेहादिव्यतिरिक्तात्मनो भोक्तृरूपस्य कर्तुः पारलौकिककर्माव्यभिचारिण इज्यदेवतादेश्च प्रतिपादनादनारभ्याधीतत्वेऽपि पर्ण-मयीवाक्यवदर्थद्वारकविध्येकवाक्यताया जैमिन्यभिमताक्रियार्थप्रामाण्यमूलयुक्तेः सम्भवात् । अक्रियार्थत्वेनाप्रामाण्यचोद्यसाम्ये सत्याक्षिप्तैकदेश एव समाहितो जैमिनिना वेदान्तभागश्चावशेषित इति हेत्वभावात् । भगवतो महर्षेस्तस्य प्रमा-दाज्ञानकल्पनायोगाच्च । तस्मान्न प्रामाण्यांशेनोपजीव्या धर्मजिज्ञासा ।

न च विद्याभेदाभेदनिरूपणाय द्वैतीयीकन्यायापेक्षा 'सर्ववेदान्तप्रत्यय चोदनाद्यविशेषात्' (ब्र० ३. ३. १) 'नाना शब्दादिभेदात्' (ब्र० ३. ३. ५८) इति सयोगरूपचोदनाख्याविशेषस्य भेदन्यायस्य चात्रैव

* 'कर्तुरस्मरणादिभि स्थिते' इति मुद्रितशाङ्करभाष्यपाठः ।

सूत्रितत्वात्।

यदपि शमदमादीना ब्रह्मविद्याङ्गत्वावगमस्तार्तीयीकश्रुतिलिङ्गादिलभ्य इति धर्ममीमांसापेक्षेति, तदेतत् कुशकाशावलम्बन प्रौढमतयो नाद्रियन्ते। विवेकादिमन्त मुमुक्षुमुद्दिश्य विद्योपायविधानात्। तादर्थ्येनोपादेयतया तदङ्गतापि भवन्ती तेषा न निवार्यते, रूपभेदोपपत्तेः। तत्र च श्रुतिलिङ्गादिन्यायाना लौकिकानामेवोभयैरप्युपजीवनात्। अन्यथा ईक्षत्यादिभिर्लिङ्गैरात्मब्रह्मादिश्रुत्या च ब्रह्मणि वेदान्तसमन्वयो नेह प्रतिपाद्येत, मन्त्रादिसमन्वयन्यायसिद्धत्वात्। इयांस्तु विशेषः। तत्र विनियोज्यमन्त्रबहिर्भूता श्रुति.। यथा 'ऐन्द्या गार्हपत्यमुपतिष्ठत' इति। इह तु तदन्तर्गतैव 'अनेन जीवेनात्मने'त्यात्मश्रुतिः 'सदेव सोम्ये'त्यादिवाक्य ब्रह्मणि विनियुङ्क्ते। बोध्यार्थबोधने निरपेक्षशब्दः श्रुतिः। तथा चात्मशब्दः। श्रुत्यादिभिश्च तादर्थ्यमवबोध्यते। तच्च द्विविधम्—एकं शब्दविधया तात्पर्यलक्षणम्, अपरमर्थविधया तदीयतालक्षणम्। तत्र मन्त्राणाम् 'उरु प्रथस्वे'त्यादीना ब्राह्मणविहितपुरोडाशप्रथनादौ शब्दविधया तात्पर्याभावाद् 'उरु प्रथस्वेति पुरोडाश प्रथयती'त्यादिभिर्ब्राह्मणादिवत् पदार्थविधयैव तदीयतां नीयमानानामकिञ्चित्कारे तदनुपपत्तेरुपकारकल्पनया तदीयत्वे बोधनीये प्रथनप्रकाशसामर्थ्यं लिङ्गतामापद्यते। न सा श्रुतिः, बोध्यस्यार्थविधया तदीयत्वस्य बोधने निरपेक्षत्वाभावात्। आत्मपदादात्मनि बोध्यमाने 'सदेवे'त्यादीनां शब्दविधया तत्प्रमितिपरत्वस्य तदेकवित्तिवेद्यतया तद्बोधने निरपेक्षत्वेन श्रुतिरेव सा। ईदृशतादर्थ्यबोधोपयोगि च सामर्थ्यं लिङ्गम्। यथा 'तदैक्षते'ति चेतनाव्यभिचरितेक्षणप्रकाशसामर्थ्यं ब्रह्मपरत्वे लिङ्गम्। एव वाक्यमपि 'यतो वा इमानि भूतानि जायन्ते' इति 'तद् ब्रह्मे'त्यस्य विभागे सति साकाङ्क्षतया 'सत्य ज्ञानमनन्त ब्रह्मे'त्युक्तावमर्शि यद्वृत्तसामनाधिकरण्यरूप सत्यादिरूपे ब्रह्मणि कारणवाक्य विनियुङ्क्ते। एव प्रकरणमपि। यथा 'अन्योऽन्तर आत्मानन्दमय' इत्युपक्रमाद् 'एतमानन्दमयमात्मान'मित्युपसहारात् तावत एकवाक्यत्वे 'सैषानन्दस्य', 'आकाश आनन्द' इत्यादिशब्दभेदेऽप्यानन्दमयपरत्वमवगम्यते। एव यथायोगमन्यदप्युन्नेयम्। न चैतावताविशेषेणागतार्थतेति।

यदपि प्रथमतन्त्रसिद्धदृष्टान्तन्यायोपादान तत्र तत्र 'कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्' (ब्र० ३. ३ २६) 'औपसदवत्तदुक्तम्' (ब्र० ३. ३. ३३) 'प्रदानवदेव तदुक्तम्' (ब्र० ३ ३ ४३) 'लिङ्गभूयस्त्वात्

तद्धि बलीयस्तदपि' (ब्र० ३. ३ ४४) इत्यादिषु, तदपि न धर्मजिज्ञासाप्राथम्य नियच्छति, प्रसाध्याङ्गकदृष्टान्तोपादानोपपत्तेः । तद्विषयस्तु न्याय' स्वयमेव वक्तव्य सन् यत्लाघवादन्योक्तोऽनुस्मार्यतेऽनन्तरप्रणयनादस्य शास्त्रस्य । अत एव 'विधिर्वा धारणवद्' (ब्र० ३ ४ २०) इति दृष्टान्तमात्रमुपन्यस्य तेन जैमिनिन्यायोऽनुस्मार्यते । तत् कस्य हेतोः, स्वयमेव न्यायस्य विवक्षितत्वात । अत एव च 'सर्ववेदान्तप्रत्यय चोदनाद्यविशेषात्' (ब्र० ३. ३. १) इत्यादिना न्याया एवोच्यन्ते । अन्यथा सर्ववेदान्तप्रत्यय कर्मवत् तदुक्त, नाना यजत्यादिवत् तदुक्तमित्याद्येव सूत्र्येत । तथा सर्वापेक्षेत्येव सिद्धे 'सहकारित्वेन च' (ब्र० ३ ४ ३३) 'विहितत्वाद्—' (ब्र० ३ ४ ३२) इति संयोगपृथक्त्वन्यायो न सूत्र्येत, पौनरुक्त्यात् । न च कामाधिकारस्यास्फुटत्वादिह तत्स्फुटीकाराय तदिति वाच्य, यज्ञादिना विविदिषन्तीति रात्रिसत्रन्यायेन तस्यापि सिद्धत्वात् । तस्मान्न धर्मजिज्ञासानन्तर ब्रह्मजिज्ञासा चोद्यते, तदहेतुत्वात् । किन्तु नित्यानित्यवस्तुविवेकाद्यनन्तरमेव ॥

---

## साधनचतुष्टयस्य पूर्ववृत्तत्वाक्षेपः ।

अत्राह — किमधीतमात्रवेदादस्य नित्यानित्यवस्तुविवेकादिः, उत शास्त्रान्तरपर्यालोचनया, अथवा स्वरसत इति । नाद्यः, 'अक्षय्य ह वै चातुर्मास्ययाजिनः सुकृतं भवती'त्यादिषु कर्मफलानामपि नित्यत्वावगमात् । 'अन्नवानन्नादो भवति, महान् भवति प्रजये'त्यादिषु ब्रह्मज्ञानस्याप्यनित्यफलत्वप्रतीतेः । 'असद्वा इदमग्र आसीत्', 'अथात आदेशो नेति नेती'त्यादिश्रुते, आत्मस्वरूपासत्त्वादेरपि प्रतीतेश्च । यद्यपि 'पुण्यचितो लोकः क्षीयते', 'ब्रह्म वेद ब्रह्मैव भवति' 'सत्य ज्ञानमनन्त ब्रह्म', 'असन्नेव स भवति, असद् ब्रह्मेति वेद चेदि'ति कर्म-(ब्रह्म)विज्ञानफलनित्यत्वानित्यत्वादि श्रूयते, तथापि विवेको न व्यवतिष्ठेत । न चानवस्थितापातनित्यानित्यविवेकः कर्मफलवैराग्यादिहेतुः । न चापातप्रतीतिरुभयविचारसाधारणी सत्यधीतक्रमात् प्राथमिक धर्मविचारमतिक्रम्य ब्रह्मविचार एव प्रवृत्तिहेतुरिति नियन्तु शक्य, तन्निर्णयस्य च विचारद्वयसाध्यतया पाश्चात्त्यग्यातद्धेतु-

त्वात्, शमादेश्च 'शमदमाद्युपेत स्याद्—' (ब्र० ३ ४ २७) इति ब्रह्ममीमासातार्तीयन्यायनिरूप्यरूपत्वात् । 'तस्मादेववित् शान्तो दान्त उपरतस्तितिक्षुः समाहित श्रद्धावित्तो भूत्वात्मन्येनात्मान पश्येदि'ति च विचारितशास्त्रजन्यज्ञानवत एव ध्यानाङ्गतया शमादिविधानाद्, एवविदिति ज्ञानवत' परामर्शनात् । न द्वितीय, 'अष्टवर्षो ब्राह्मण उपगच्छेत्, सोऽधीयीते'ति प्रथममेवाध्ययनविधिवश्यतयाधीतवेदस्य विचारप्रवृत्तावन्तराले शास्त्रान्तरानवकाशात् । वेदान्तविचारप्रवृत्तौ शास्त्रान्तरीयप्रधानपरमाणुतटस्थेश्वराकाशादिनित्यताप्रतीतेरप्रयोजकत्वात् । व्यक्ताव्यक्तज्ञविज्ञानप्रमाणादिषोडशपदार्थतत्त्वज्ञानादेर्निःश्रेयसहेतोरपि तत एवाधिगमे वेदान्तविचाराद्यनपेक्षाप्रसङ्गाच्च । अत एवेतिहासपुराणादिश्रवणान्नित्यानित्यविवेकादिरिति प्रत्युक्तम् । न तृतीयः, वेदान्तविचारानारम्भप्रसङ्गात् ।

यत्तु इद नित्य वस्तु, इदमनित्यमिति न नित्यानित्यवस्तुविवेक, उक्तदोषादेव । किन्तु नित्यानित्ययोः वसन्तीति नित्यानित्यवस्तूनि, तद्धर्मा सत्यत्वासत्यत्वादय, तेषां चात्मानात्मवर्गे यन्नित्य तत् सत्य बहुसुखमुपादेय च, अनित्य तु विपरीतमित्येष दृष्टानुमानमूलो विवेकः स्वरसत एव पुरुषधौरेयस्य जायते । ततोऽनृताल्पदु.खमयादनित्यादारोपितरजतादेरिवानवगतविवेकनित्यपुरुषार्थानालम्बनेऽपि तज्जिहासारूपमनाभोगात्मक वैराग्यमुपावर्तते । ततो रागादिप्रवर्तनाशून्यस्य सर्वेन्द्रियप्रवृत्त्यभावरूपशमादिसम्पदुपनमति । तत प्रत्यक्षाद्यधिगतजननमरणाद्यनर्थात्यन्तनिवृत्त्या नित्यसुखप्रेप्सोस्तदुपायब्रह्मविचारादिप्रवृत्तिरनन्तरभाविनीति । अत्र ब्रूमः । अनित्यस्य तावदनृतत्वमसम्प्रतिपन्नम् । न च विगीतं सर्वमनृतम् । अनित्यत्वादारोपितरजतादिवदित्यनुमातु शक्य, दृष्टान्तासम्प्रतिपत्तेः । शुक्त्यादावपि रजतादिसत्त्वोपगमात् । अनृतस्यापि सुखादिहेतुत्वे तद्विवेकस्य जिहासानुपयोगित्वात् । अनृतस्यापीष्टस्वप्नादे. सर्वाभिलषितत्वेनानृतत्वहेतुना दु खरूपत्वानुमानायोगाच्च । न चानित्यस्य सुखाद्युपयोगिनोऽपि दृष्टानुमितावर्जनीयदु.खसम्भेदतया हेयत्वम्, अतिशयितसुखान्तरालाभात् । न खलु मृष्टान्नालाभे कणोऽपि क्षुधितेन हीयते । न च तत. क्लेशाधिक्य, येनान्धान्धुपतितवराटिकेवोपेक्ष्येत । न च यन्नित्य तद् दु'खासम्भिन्नसुखरूपतयोपादेयं, यतो नित्यस्य तद्रूपत्व न व्याप्त्याधिगम्यते, कालादौ व्यभिचाराद्, आत्मनोऽप्यह दु खीति दुःखसम्भेदानुभवाच्च । शास्त्रात् तु

तदापातविवेको विचारद्वयसाधारणः । निश्चयरूपस्तूभयविचारनिर्वर्त्य इति न प्रथम ब्रह्मविचारप्रवृत्तिहेतु' । अपिच यदि नाम किमपि नित्य दुःखासम्भिन्न-सुखरूप स्यादिति सम्भावनाया इद तदित्यनिश्चितविशे(ष्या ? षा)यास्तदुपादि-त्सामूलस्य साधारण्यान्नित्यानित्यवस्तुविवेकानन्तर शास्त्रान्तराणामप्यारम्भः स्यात् । न च कर्मकाण्डे शास्त्रान्तरे वा नित्यफलासत्त्वनिश्चयात् तदनारम्भ , अक्षय्यादिवाक्यान्यपरत्वस्य कर्ममीमांसावसेयत्वात् । शास्त्रान्तराप्रामाण्यस्य चो(भय-? त्तर)मीमासातर्कपादावसेयत्वात् प्रथम तन्निश्चयासम्भवात् । न च 'अथातो ब्रह्मजिज्ञासे'त्येवान्यत्र नित्यसुखफलाभावाधिगम., तस्य स्वशास्त्रारम्भौपयिकवि-षयप्रयोजनपरत्वात् । ब्रह्मविचारप्रवृत्तस्याद्यसूत्रात् तदधिगमस्तदधिगमे च तत्प्र-वृत्तिरित्यन्योन्याश्रयाच्च । तस्मान्न कथमपि नित्यानित्यवस्तुविवेकादि ब्रह्ममीमां-साप्रवृत्तिहेतुरिति ॥

---

## साधनचतुष्टयस्य पूर्ववृत्तत्वसमर्थनम् ।

अत्रोच्यते — अधीतवेदान्तस्य 'पुण्यचितो लोक क्षीयत' इत्यादिकर्म-फलानित्यत्व 'तमेवं विद्वानमृत इह भवती'त्यादिविद्याफलनित्यत्व चाविप्लुतम-धीयानस्य वेदान्तेष्वेवोत्कटतमनित्यफलसम्भावनायामुपचितप्राचीनसुकृतसन्दृब्धा-याम् 'असद्वा इदमग्र आसीदि'त्याम्नानेऽपि विद्याफलभूतज्ञानानन्दात्मकब्रह्मसत्ता-यामेवोत्कटतमसम्भावनासम्भवाद् यदि किञ्चिदपास्ताशेषाशिवममृताख्य फलम-श्नुवीय, यावत् किञ्चिदवर्जनीयभूरिदुरितमन्तवत्फलम्, अलमनेनास्माकमित्येव-मनिर्धारितविशेषस्यापि वैराग्यस्य कृतकर्मफलरूपविषयविशेष एवोत्कटतया विवे-कादेर्विचारद्वयसाधारण्यायोगात् । *साधनलक्षणे च शमादेरङ्गतया निरूप्य-त्वेऽपि वैराग्येण स्वरससिद्धस्येहाधिकारिविशेषणतयोपादानाविरोधात् । किन्तु तदङ्गमप्युपगम्यते ब्रह्मविचारे सामर्थ्यात् । यत्तु शास्त्रजज्ञानवत एव शमाद्यङ्ग-कमुपासन विधीयत इति । तन्न । एवविच्छब्दस्य 'त विदित्वा न कर्मणा लिप्यते पापकेने'त्यन्तरोक्तमहाफला ब्रह्मविद्या विजानतस्तत्साधनविचारप्रवृत्त्यु-पयोगिशमादिविधि. सुशक इति तदनुवादपरत्वात् । 'सम्यक् प्रशान्तचित्ताय शमान्विताय प्रोवाच तां तत्त्वतो ब्रह्मविद्यामि'ति शमादिश्रवणार्थत्वश्रुत्यन्तरै-कार्थ्यसम्भवेऽर्थभेदकल्पनायोगाच्च । न चाङ्गत्वमधिकारिविशेषणत्व च विरुद्ध,

---

* शारीरकतृतीयाध्याये ।

विधिप्रतिपत्त्युपाधेरविकारिविशेषणत्वात् प्रतिपन्नविधेश्च कथम्भावान्वयादिति वाच्यम् । कर्मणि विद्याशौचादिवदविरोधात् । शमाद्यभावे स्वप्रवृत्त्युपयोगिश्रवणविधिप्रतिपत्त्यनुपपत्ते । अधिकारिविशेषणमपि सत् तादर्थ्येनाफलोदयानुष्ठेयतया तदङ्गतामपि प्रतिपद्यते ।

एवमनधीतवेदस्यापि सुकृतसम्भारादेव प्रत्यक्षोपपत्तिद्वारापावरणे यद् दृश्य तत् कार्यमनित्यमनृत सर्वशो दुःखानुगत । कार्यमनृत च नामूलमिति तन्मूलस्यापि तादृक्त्वेऽनवस्थानात् तददृश्याकार्यादिरूपमित्येतावति विवेके परत्र वैराग्येण तल्लिप्साकुलस्य ध्रुवादेरिव हितैषिवचनादपि प्रव्रज्यापूर्वक तदुपायवेदान्ताध्ययनविचारप्रवृत्तिरुपपन्ना । न च कार्यत्वादिकमनुमातुमशक्य, दासेरकविनेयासम्प्रतिपत्तावपि विशुद्धसत्त्वस्य स्वदृष्ट्या दृष्टान्तोपादानसम्भवात् । न चानृतमपि सुखरूपत्वे न जिहासितमिति वाच्यम्, अनृतस्यानृतत्वदर्शने विप्रलम्भनतया जिहासोपपत्ते । अन्यदानृतत्वबुद्धावपीष्टस्वप्नस्य तत्काले सत्यरूपगृहीतस्य सुखहेतुतया काम्यत्वोपपत्तेश्च । न च विनाशवियोगादिदुःखभूयिष्ठमनित्यमनृतमिति जानन्नपि न जिहासति तदधिकालाभादिति युक्तं, पिपासोरलब्धजलस्यापि मरीचिकोदकहानाद् दृश्यकार्यविपरीतस्वभावस्य कस्यचित् तन्मूलस्य सम्भावनाच्च । अत एव यन्नित्य वस्तु तत् सुखमित्यादि व्याप्त्या वा शास्त्रेण वा नाधिगम्यत इति निरस्तम् । कालात्मादिविशेषमनपेक्ष्य कस्यापि तादृशस्य सम्भावनाद् । न चैव शास्त्रान्तराणामपि प्रसङ्ग, सुकृतविशेषोपनतहितैषिवचनस्यातद्विषयत्वात् । एवं सम्भावनया प्रवृत्तस्याद्यसूत्रसूचितन्यायालोचनया तद्दार्ढ्योपपत्ते । न चैव सुकृतवशादेव ब्रह्मज्ञानेऽपि विचारणादिवैयर्थ्यमिति निरस्तमधस्तात् । तस्मादतीतानेकभवानभिसन्धिवाङ्मन कायकृतसुकृतप्रबन्धावर्जितपरमेश्वरानुग्रहासादितसत्त्वप्रसादस्य पुरुषधौरेयस्य हिताहितप्रेप्साजिहासापर्याकुलतयावस्थिते सकलजगति सर्वशो दृष्टानुमानाभ्यामसारत्वदुःखमयत्वप्रसख्याने सति सर्वतो निर्विण्णस्य शमादिसम्पत्तौ, नित्यनिर्गलितामङ्गलपरामृतफलप्रेप्सोरौपनिषदविचार आरभ्यते 'अथातो ब्रह्मजिज्ञासे'ति ॥

---

**दुःखत्रयातुरत्वज्ञानस्य पूर्ववृत्तत्वनिरासः ।**

**अपर आह** — दुःखत्रयाभिघातज्ञानानन्तरं तन्निविवृत्सोः ब्रह्मजिज्ञासारभ्यत इति ।

अत्र कश्चिद्—ऐहिकदुःखनिवृत्तेरायुर्वेदादिभिरुपायावगमाद् निरयदुःखनिवृत्त्युपायनियमादिविधायकशास्त्रबाहुल्यात् स्वर्गादेरल्पास्थिरतया तापत्रयान्तर्गतत्वज्ञानस्य कर्मविचारापेक्षत्वात् तदानन्तर्यमेवास्तु ब्रह्मजिज्ञासाया, आवश्यकत्वात्, किं तु खत्रयाभिघातज्ञानानन्तर्यवचनेन । कर्मविचारमनपेक्ष्य साङ्ख्यादिभिरेव तदवगमे च मुक्त्युपायस्यापि तत एवावगमाद् वेदान्तविचारानारम्भप्रसङ्गादित्याह ।

तदसत् । ऐहिकादिदुःखत्रातस्योपायान्तरेणैकान्तिकात्यन्तिकनिवृत्त्यसम्भवात् । तथा च उपायान्तरे दृष्टे जिज्ञासानर्थक्यमाशङ्क्योक्तमीश्वरकृष्णेन—

"दृष्टे सापार्था चेन्नैकान्तात्यन्ततोऽभावाद्"

इति । स्वर्गादितापत्रयान्तर्गतत्वज्ञानं चान्तरेणापि कर्मविचारं प्राचीनसुकृतविशेषैरेव प्रक्षीणचित्तमलस्य 'तद् यथेहे'त्यादिकर्मफलानित्यत्वमधीयानस्यैव भवतीत्युक्तम् । न खलु सुकृतैरेव तत्त्वज्ञानमपि, प्रमाणफलत्वेन विचारितवेदान्तादिसाधनापेक्षत्वादिति ।

इदं त्विह वक्तव्यम् । न दुःखत्रयाभिघातज्ञानमात्रं ब्रह्मविचारप्रवृत्तिहेतुः, दृष्टानुश्रविकसुखेषु दुःखसम्भेदवेदनेऽपि रागौत्कट्येन तदुपमर्दिब्रह्मविचारप्रवृत्त्यसम्भवाद्, निखिलविषयवैराग्यस्यापि हेतुत्वे शमादिसम्पत्त्यनिवारणाद् विवेकाद्यानन्तर्यमेव फलितमिति न सिद्धान्तादतिरिच्यते । तस्माद् यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासारब्धव्येति भगवत्पादीयं मतमनवद्यमिति ॥

---

## औपनिषदविचारप्रयोजकचोद्यम् ।

कः पुनरौपनिषदविचारस्य प्रयोजकः । न तावत् स्वाध्यायविधिरित्युक्तम् । नापि मुक्तिफलापाताधिगतब्रह्मतत्त्वनिर्णयरागः, प्रव्रज्याद्यनपेक्षाप्रसङ्गात् । विधीयते च ज्ञानार्थतया प्रव्रज्यादि 'एवमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती'ति, 'शान्तो दान्त उपरत' इति च । नापि श्रवणविधिः, तदसम्भवात् । न तावच्छ्रोतव्य इति श्रवणमर्थकर्म विधीयते, कर्मणि कृत्यसम्प्रत्ययात् । 'स्वाध्यायोऽध्येतव्य' इत्यादावपि गुणकर्मविध्युपपत्तेः । न चेहापि श्रवणं गुणकर्म विधीयते, यावता यैस्तु द्रव्यं चिकीर्ष्येत गुण-

स्तत्र प्रतीयेत, यथा पिण्डपयोव्रीह्यादिषु संयवनदोहनप्रोक्षणादयः। न चोत्पाद्याप्यादीनामन्यतम ब्रह्म, नित्यत्वादात्मत्वादविकारित्वाच्च, ब्रह्मणो भूतभाव्युपयोगाभावाच्च। अपि चैव न श्रवणादि स्वविधिप्रयुक्त्यानुष्ठीयेत, नान्यप्रयुक्त्या च, आधाने कर्मविधिवत् प्रयोजकान्तरस्याभावात्। अथोच्येत — अत एव 'हिरण्यं भार्यमि'त्यादाविव विनियोगभङ्गेन ब्रह्मणा श्रोतव्यमित्यर्थकर्मैव विधीयते, शृणोतेस्तु सकर्मकतया कर्मापेक्षायामात्मनः श्रवणादिनिर्वर्तनविधावपेक्षायां च यत् सामर्थ्यसिद्ध कर्मत्वं तदनूद्यते कर्मणि कृत्येनेति। तन्न। एवमप्यात्मनः उत्पाद्याद्यन्यतमत्वप्रसङ्गात। अपिच श्रवणादिविध्युपगमे शास्त्रस्य ब्रह्मणि तात्पर्याभावप्रसङ्ग, भूतभव्यन्यायेन शेषस्य तदुपपादनार्थत्वात्। तद्विधेरपि ब्रह्मसाक्षात्कारोद्देश्यतया तादर्थ्येऽपि ग्रहैकत्वादिवदुद्देश्यविशेषणस्य ब्रह्मणोऽविवक्षणीयत्वात्। तस्याप्युद्देश्यत्वे वाक्यभेदप्रसङ्गाद्, अनुत्पाद्यादितया तस्य विधेयक्रियानुद्देश्यत्वाच्च॥

---

### श्रवणविध्याक्षेप ।

अपिच, कार्यं वा भावना वा विध्यर्थ. प्रधान, फल तु उत्पत्त्यनुबन्धितया प्रधानमपि विधिप्रतिपत्त्यनुबन्धितया गुण एव, भूतभव्यन्यायात्। उभयप्राधान्ये परस्परान्वयायोगात् तत्र स्वर्गादिक प्रतिपत्तार भावना वा विशिषद् विधावुपसर्जनभावेन प्रतिपद्यमानमपि मानान्तरविरोधाद्यविवक्षाकारणाभावेन विध्यपेक्षितफलभावेन सम्बन्ध्यमान तथाभूतमुपेयते। निर्विशेषब्रह्मसाक्षात्कारस्तु न तथा, मानान्तरविरोधात्। यद्यपि च फलभूतमुद्देश्यमनुज्झितभाव्यस्वभावमेव विधिप्रतिपत्तिमनुबध्नातीति प्राधान्य न जहाति। उक्तं च *प्रतिपदाधिकरणपूर्वपक्षे—

' ऐकरूप्येण सम्बन्धः प्रधानेन प्रसिध्यति।
तस्मात् फलपदेनैव सर्वं सम्बध्यते पदम्॥"

इति, तथापि न तस्य विधिं प्रत्येव प्राधान्य तन्निरूपकतया गुणत्वेन सह प्रतिपत्तु शक्य, वैरूप्येण विरोधात्। किन्तु करणभूतधात्वर्थक्रियां प्रत्येव बुध्यमानमपि प्राधान्य बुध्यते। न खलु तदेवैक कर्म विधेयभावना प्रत्यपि। 'व्रीहीन् प्रोक्ष-

* (जै० अ०या० २ पा० १ सू० १—४)

ती'त्यत्र सेचनक्रियाकर्म व्रीहिरूपेण लौकिकम् अदृष्टातिशयेन तु वैधमिति भेदात् । अत एव शेत इत्यादौ करोतिसमानाधिकरणाख्यातार्थभावनाया भाव्यापेक्षितया सुखादिभाव्यसम्प्रत्ययेऽपि न धातो सकर्मकता । अन्यथा धात्वर्थभावनयोरविलक्षणकर्मत्वे शीङादेरपि सकर्मकत्वप्रसङ्गः । उक्त च भट्टै —

"अन्यदेव हि धात्वर्थव्याप्यं कर्म सकर्मके ।
अन्यदेव च सर्वत्र प्रत्ययार्थनिबन्धनम् ॥

इति,

यजेरपि तु यत् कर्म पूज्यत्वाद् देवतेष्यते ।
तदुज्झित्वैव पुत्रादेः कर्मत्वं भावनाश्रितम् ॥"

इति च ।

तस्माद् विधिफल ब्रह्मविज्ञान यदि ते मतम् ।
भावनागुणभावेन शब्दतः सम्प्रतीयताम् ॥

तत्र चोक्तो दोष. । अपि च यद्यपि श्रवण नाम ब्रह्मणि वेदान्ततात्पर्यनिर्णयानुकूलोपक्रमोपसहारादिलिङ्गोपपादनात्मा मीमांसाशब्दिता विचारापरपर्याया मानसी क्रियैव न ज्ञानमिति विधेय पुस्तन्त्रत्वात्, तथापि तन्नाज्ञात शक्यविधान । ज्ञायमान च यदि ब्रह्मणा तात्पर्येण वा न विशेष्येत, विषयविशेषासम्बुद्धौ विधिरेव न सम्बुध्येत । अथ विशेष्येत । प्रागेव ब्रह्म तात्पर्यं च ज्ञातमेवेति कृत विधिना, कृतकृत्यत्वात् ।

अत एव हि सिद्धान्ते न ज्ञानविधिरिष्यते ।
विधेयवित्त्यवित्तिभ्यां विधेरनुपपत्तितः ॥

एतेन मननादि श्रवणाङ्गं विधीयत इति प्रत्युक्तमिति ॥

---

## श्रवणविधिसमर्थनम् ।

अत्राभिधीयते—श्रोतव्य इति तावद्विधि', कृत्याश्चेति विधौ स्मरणात् । ननु 'अर्हे कृत्यतृचश्च' (३. ३. १६९) इत्यपि स्मर्यते । कि चातः, भवति श्रोतुमर्ह आत्मेति । एव सति वादमात्रमनर्थकं स्यात् । द्रष्टव्य इति चार्हार्थः फलार्थवाद., ज्ञानस्याविधितन्त्रत्वात् । तच्च श्रवणमर्थकर्म विधीयते । 'हिरण्यं

भार्यामि'त्यादाविव श्रुतिविनियोगभङ्गोपपत्तेः । न च स्वाध्यायाध्यायोऽपि गुणकर्मैव तान्त्रिकाणाम्। तद्विधिर्वि(श्व)जिन्न्यायेन स्वर्गार्थ. दृष्टसम्भवन्यायेनार्थावबोधार्थो वेति निरूपणाविरोधात्। स चायं पुरुषार्थ एव सन् स्वाध्यायसंस्कारार्थोऽपीति कर्मणि कृत्योपादानम्, अन्यथार्थावबोधस्याध्ययनविधिफलत्वानुपपत्ते. । वेधाध्ययनसंस्कारापेक्षयैव तस्य फलपर्यवसानात् । लिखितपाठोपपादितज्ञानस्य तदनिष्टे· । अस्मिन् मते चाध्ययनस्य नित्यत्वान्न फलापेक्षा । तथा च पार्थसारथिमिश्राः—'अप्राप्तविधिरेवायमि'ति। न चै(व?व)मितिकर्मत्वादात्मनः उत्पाद्याद्यन्यतमत्वापत्ति । असिद्धेः । विचारस्य वेदान्तविषयत्वात्। तथा च भाष्य—**'वेदान्तमीमांसशास्त्रस्य'** इति, **'वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते'** इति च। विहितविचारावधारिततात्पर्यो वेदान्तो ब्रह्मापरोक्षं जनयतीति फलोपाधिना तद्विषयत्वमुच्यते । 'आत्मा द्रष्टव्य. श्रोतव्य' इति साक्षात्कारे च कर्मत्वमात्मनः स्वतोऽपरोक्षस्वभावस्यापि नैसर्गिकाविद्यामलापनयादुपपन्न । 'तद् विजिज्ञासस्वे'त्यादावप्यवयवार्थेष्यमाणज्ञानोद्देश्यतयैव ब्रह्मणस्तदुपलक्षितविचारविधिसम्बन्धावगमात् । तदिदमुक्त भाष्ये—**'जिज्ञास्यापेक्षित्वाज्जिज्ञासायाः'** इति। तत्रावयवार्थाविवक्षाया तल्लक्षितविचारस्य वेदान्तविषयतया ब्रह्मविषयत्वनियमनायोगात्, जिज्ञासापदोपादानार्थवत्त्वानुपपत्तेश्च। अथाप्याहत्य ब्रह्मविषय एव विचारः स्यात्, तथापि स्वसाध्यतत्त्वनिर्णयेनैव सयोगेनेव गतिर्ग्रामविषया। न चेह श्रवणविधावात्मा कारकतयोपादीयते भरणे हिरण्यवद्, येन मानान्तरविरोधे वेदान्तानामैदम्पर्यं हीयेत। न च 'सोमेन यजेते'त्यादिवद् विशिष्टविधित्वात् तस्यैवात्मनि तात्पर्यम् । विशिष्टविधेर्यथासि(द्धा? द्ध)कारकव्यपाश्रयत्वात्। अन्यथा तस्य द्विर्व्यापारप्रसङ्गात्। न च वाक्यान्तरं श्रवणविधिमपेक्ष्यात्मान प्रतिपादयति, तस्यैव वैयर्थ्यप्रसङ्गात्, किन्तु विचारितवेदान्तजननीयसाक्षात्कारगोचरतया । उद्देश्यस्याप्युपायानुष्ठानहेतुत्वादात्मना श्रोतव्यमित्यनुबध्यते। न च विधेयक्रियोद्देश्यतैवात्मनः, असाध्यत्वात्। यत्तु—एवमुद्देश्यविशेषणत्वादात्मनोऽविवक्षेति । तन्न । अविशेषितसाक्षात्कारमात्रस्योद्देश्यत्वासम्भवेन वाक्यार्थप्रत्ययस्यैवापर्यवसानात् । तादर्थ्येन च 'यस्योभय हविरार्तिमार्च्छेति ऐन्द्र पञ्चशरावमोदन निर्वपेद्' इत्यत्रोद्देश्यरूपार्तिनिमित्तस्येव हविषा ब्रह्मणा साक्षात्कारस्यापि विशेषणीयत्वात् । उक्त च—'मृष्यामहे

हविषा विशेषणमि'ति । न चावस्तुसता विषयेण साक्षात्कार' प्रमाणवस्तुपरतन्त्रो विशेष्यते, अविकल्पमयज्ञानत्वविरोधात् । एव सत्येव 'ब्रह्म वेद ब्रह्मैव भवती'-त्यादिश्रुतनित्यफलापरोक्षोद्देश्यकविधिप्रतीतिपर्यवसानोपपत्तेः । न चैवं प्रधान-तमस्याविवक्षा युक्ता । नन्वत एव समुदीरितदोषो मा प्रसाङ्क्षीदिति श्रवणवि-धिमेव जह्याम । मा भूदुक्तकल्पनाक्लेश । तत् किं वेदानुवचनादिविधिमपि परि-हरेम, तस्यापि ब्रह्मविषयेष्यमाणज्ञानफलत्वात् । तथा च 'सहकारित्वेन च' (ब्र० ३. ४ २३) इति सूत्रविरोध. । तत्र यद्युद्देश्यफलाविघाताय ब्रह्मविवक्षा तर्क्येत । तर्क्यतां तथैव श्रवणविधावपि, न कश्चिद्विरोध. । यत्तु विधिप्रतिपत्ता-वुद्देश्यस्याप्युपसर्जनभाव इति, तत् तथैव । किन्तु तत्प्राधान्यमपि तदेकवित्ति-वेद्यत्वादशक्यं त्यक्तुम् । अन्यथा फलकरणेतिकर्तव्यतानामपरित्यक्तरूपाणामेव भावनान्वयानुपगमे तुल्यकल्पत्वापत्ते । यद्यपि च धात्वर्थभावनारूपप्रतिपत्त्यनु-बन्धितया कर्मणी भिद्येते, न तु भाव्यरूपम् 'अग्नीनादधीते'त्यत्राग्नीनामाधान-भावनाप्रतिपत्त्यनुबन्धिकर्मरूपभेदेऽपि तद्भाव्यरूपाभेदावगमात् । व्यापारव्यापारि-तया भावनाधात्वर्थयोरेकसाध्यनिष्ठत्वात् । न चावश्यममुयोः कर्मभेदनियम । धात्वर्थानुबन्धिकर्मणो भावनाननुबन्धित्वेऽपि भावनानुबन्धिनस्तस्याधात्वर्थस्य धा-त्वर्थानुबन्धित्वाविरोधात् । अन्यदेवेत्यादिभट्टवचनस्य (चेत्ता'चोक्ता)भिप्रायत्वोप-पत्ते. । यदि च शेत इत्यादौ धात्वर्थातिरेकिप्रत्ययार्थानुबन्धिभाव्यरूप कर्म, धात्व-र्थानुबन्ध्यपि तत् स्वव्याप्यापेक्षया तु धात्वर्थस्य सकर्मकत्वव्यपदेश. नोद्देश्यापे-क्षयेत्यनतिप्रसङ्गात् । तदिदमुक्तम्—

"अन्यदेव हि धात्वर्थव्याप्य कर्म सकर्मके"

इति । तथा च भाव्यात्मनोद्देश्याप्रतीतौ धातुविधिप्रत्ययार्थयो करणभावनारूप-भेदप्रतीत्ययोगादवर्जनीयतयोद्देश्यप्राधान्यमपि विधिप्रतीतौ भासत एव । अत एव न गुणप्रधानभावविरोध' । आर्थमुद्देश्यप्राधान्यमन्तर्भाव्यैव शाब्दभावनाप्राधान्याव-गमात् । अन्यथा भावनाकिमंशाकाङ्क्षानिवृत्तौ तत्प्रत्ययापर्यवसानात् । 'वाजपेयेन यजेते'त्यादौ हि वाजपेयेन यागं यागेन स्वाराज्यमिति शब्दसमभिव्याहारभेद-मनपेक्ष्य निरूपकभेदेऽपि साध्यत्व नाधिगम्यते । वाजपेयवतेति मत्वर्थलक्षणाया तु योग्यतया तस्य साध्यसाधनभावपर्यवसानात् पदमात्रोपस्थितसाध्यरूपयागकरण-कभावना वाक्यार्थो बोध्येत । अन्यथा 'सामेन यजेते'त्यादावगते' । किन्तु सत्या

गतौ लक्षणैव दोष इति वाजपेयपद नामधेयमिति स्थितम् । ब्रह्मविज्ञानस्य त्वमृतफलार्थवादेन स्वरसत एवेष्यमाणतया 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इति सन्नन्तसमभिव्याहृतैकार्थतया च साध्यत्वोपस्थितौ त(द)न्वितविधिप्रतिपत्तावपि प्राधान्यावगमाद् विवक्षैवात्मनोऽपि । यद्यप्येवमार्थे फलप्राधान्येऽपि न फलपदेन पदान्तरसम्बन्धः, किन्तु शाब्द प्राधान्यमन्वयहेतुरिति विधिनैव फलपदान्यपि सम्ब(न्ध्य?ध्य)न्ते, न तु ब्रह्मपदानि, येन ब्रह्मणि तात्पर्याभाव आपद्येत । स्वर्गार्थवादपदान्यपि हि स्वर्ग प्रत्याय्य विधिना सम्बध्येरन्निति युक्त, स्वर्गस्य विहितक्रियासाध्यत्वात् । साक्षात्कारस्तु विधिफलगृहीतोऽपि मानाधीन इति ब्रह्मणि प्रत्यायिते कि विधिना साध्येत । तेन साक्षात्कारफलेन श्रवणादिविधिनैव विध्यसंस्पर्शेन ब्रह्मतात्पर्यगृहीतानि सत्यज्ञानादिपदानि ब्रह्म प्रत्याययन्तीति श्लिष्यत इति ।

अथवा,

नात्मसाक्षात्क्रियाकामः श्रवणादिविधेरिह ।
प्रतिपत्तेष्यते येन शङ्क्येतात्माविवक्षणम् ॥

नित्यानित्यविवेकादिसाधनाढ्याधिकारिके ।
श्रवणादिविधावन्यो नाधिकारी विमृश्यते ॥

मुक्तेरुपायो विज्ञान तस्य च श्रवणादिकम् ।
श्रवणादिविधौ तेन विज्ञानमुपबध्यते ॥

विहितश्रवणादीनामनुष्ठानेऽन्यहेतुके ।
करणस्य विनिष्पत्त्या धर्मो ज्ञान च जायते ॥

श्रवणादिमधर्मस्य यज्ञदानादिधर्मवत् ।
सत्त्वशुद्धिसमर्थत्वात् कल्प्यते ज्ञानहेतुता ॥

यद्यप्युद्दिश्यते मुक्तिः श्रवणादिविधाविह
तद्धर्मानुपयोगेन सा ज्ञानेनैव साध्यते ॥

दृष्टवृष्ट्यादिसाध्येऽपि शुष्यदोषधिजीवने ।
तत्कामिकार्यकारीरीधर्मो वृष्टौ हि साधनम् ॥

तदुद्देश्यविधेर्धर्मस्तद्व्यापारे समाप्यते ।
इति दृष्टफले मुक्तौ नापूर्वपरिकल्पना ॥

श्रवणादिविधौ तस्माद् न किञ्चिदविवक्षितम् ॥

इति । यदपि विषयज्ञानाज्ञानाभ्या श्रवणविधेरसम्भव इति । तदपि न, आपाताधिगतविषयनिरूपितस्य श्रवणस्य विधिसम्भवात् । अवगतिपर्यन्तस्य विषयापरोक्षस्य श्रवणविधिफलस्यानपेक्ष्यत्वात् । ज्ञानविधिस्तु न सम्भवति, ब्रह्मणि विज्ञाते तस्य कृतकरत्वात् । आपातज्ञाते निर्णयापरोक्षस्याप्यपुरुषतन्त्रतया अविधेयत्वात् । मनननिदिध्यासनयो· श्रवण प्रति फलोपकार्यङ्गतयाविधेयत्वादिति ।

अथापि स्यात् । नायमपूर्वविधि , विचार्यतत्त्वनिर्णयार्थतया विचारस्य प्राप्तत्वात्, तदपरोक्षे चानुग्राह्यप्रमाणाधीने विषयस्वभावाधीने वा तस्य पृथगविधेयत्वात् । वैधफलत्वे च मुक्तेरनित्यत्वापत्ते· । नापि नियमः । दृष्टफले ज्ञानस्वरूपे साधनान्तरभावाभावाभ्या तदसम्भवात् । अथापि कथञ्चिन्नियम्येत यदि ज्ञान मुक्तिर्वा तददृष्टेन साध्येत । न त्वेवम् । दृष्टफलत्वोपगमात् । अन्यथात्यन्तपरिपक्वकषायस्य साङ्गवेदान्ताध्ययनमात्रेण ब्रह्मविज्ञान मुक्तिर्वा न स्यात् । यत्रेदमुदितमाचार्यै· —

"कृत्स्नानात्मनिवृत्तौ तु कश्चिदाप्नोति निर्वृतिम् ।
श्रुतवाक्यस्मृतेश्चान्य· स्मार्यते च वचोऽपर· ॥
वाक्यश्रवणमात्राच्च पिशाचकवदाप्नुयात् ॥"

इति । अन्यत्रापि । 'योऽपि वाक्यश्रवणादेव प्रतिपद्यते तस्याप्यतीन्द्रियशक्तिमत्त्वाद् न किञ्चिदपेक्षितव्यमस्ति' इति । न चान्यद्विचारनियमादृष्टसाध्य, यत्र सफलस्तन्नियम स्यात् । नापि परिसंख्या, 'इमामगृभ्णन् रशनामि'त्यस्य लिङ्गादश्वरशनादानादन्यत्र गर्दभरशनादान इव विचारस्य विचार्यतत्त्वज्ञानादन्यत्राप्राप्ते । गृहमेधीयेष्टावाज्यभागादन्यस्याङ्गस्येव ज्ञाने श्रवणादन्यस्य नित्यवदप्राप्तेश्च । तुल्यविधानस्य मननादेरपरिसंख्येयत्वाच्च । न च पुरुषार्थतया केवलमुभयप्राप्तावात्मश्रवणादिविधिरनात्मदर्शनादिपरिसंख्येति युक्तम् । सर्वविषयविरक्ते मुमुक्षावधिकारिणि पुमर्थतयानात्मदर्शनाद्यप्राप्ते· । नित्यवदुभयप्राप्तावेवान्यतरपरिसंख्यानात् । जीवनमात्रोपयोगिनोऽपि तस्य परिसंख्यानेऽर्थविघाताद्, मुमुक्षौ च विचारस्यैवाप्राप्तेरिति । तस्मान्न श्रवणविधिरिति ।

अत्रोच्यते — विधिरेव तावदय स्याद्, विचारस्य विचार्यसाक्षात्कारहेतुभावाप्राप्तेः । अपरोक्षयोग्येऽपि षड्जादौ साक्षात्कारस्य तद्विवेचकधर्मश्रवण-

सस्कारसचिवश्रुतिप्रणिधानलभ्यतया गान्धर्वादिविचारस्य तत्र हेतुत्वानाकलनात् । आत्मा द्रष्टव्य इति साक्षात्कारफलमुद्दिश्य श्रोतव्य इति श्रवणविध्यभावे शब्दस्य साक्षात्कारकरणत्वानवगमेन तदनुग्राहकविचारस्यापि तत्साधनत्वाप्रामेश्च । शाब्दापरोक्षोपपादनस्यैतद्विधिमूलत्वात् । स च साक्षात्कारः प्रमाणप्रवृत्त्यादिदृष्टोपायोऽपि नैयोगिकः, प्रतिग्रहादिदृष्टोपायस्यापि पश्वादेः चित्रादिनियोगफलत्वोपगमात् ।

अथवा नियम. स्याद्, अधीतवाक्यापातावगते प्रत्यगात्मन्यप्यहङ्कारसम्पिण्डितात्मदर्शनसाधनत्वेन क्लृप्तस्य मनस. केवल प्रणिधानापेक्षया साधनान्तरस्य प्राप्तिसम्भवात् । सङ्कीर्णाधिगतरत्नतत्त्वसाक्षात्काराय चक्षुष एव प्रणिधानदर्शनात् । तथा च पाक्षिक्यामप्राप्तौ विचारस्य नियम. । तददृष्टवैगुण्ये च कियतोऽपि दुरितस्यानिवृत्तेर्ज्ञानोदयप्रतिबन्धादित्येके । आवर्त्यमानाद् वाक्यादन्यत्रार्थतत्त्वनिर्णयदर्शनादात्मापाताधिगमहेतोर्वाक्यस्यैवात्मतत्त्वनिर्णयाय केवलाभ्यासप्राप्तौ तन्नियम इत्यपरे । प्रसक्तविधेयविरोधिमात्रनिवृत्तिफलत्वाद् नियमविधेरनात्मदर्शनप्राप्तौ तन्नियम इत्यन्ये । न चैव जीवनविलोपप्रसङ्ग., विरोधित्वेन विशेषणात् । अविरोधिनो जीवनमात्रोपयोगिव्यवहारस्यानिवर्तनीयत्वात् । एतेन परिसख्यापि व्याख्याता । न च मुमुक्षावमुमुक्षौ वा नित्यवदुभयाप्राप्तिः, मोक्षमाणस्य जिज्ञासोरर्थतत्त्वनिर्णयहेतुतया विचारस्य नित्यवत् प्राप्त्युपपत्ते । विरक्तस्यापि स्वभावादेवानपेक्षितानात्मदर्शनस्य नित्यवत् प्रसजतो विचारविधिना परिसङ्ख्यानोपपत्तेश्च । यथाहुराचार्याः—

“नियम· परिसख्या वा विध्यर्थस्य भवेद् यत ।
अनात्मादर्शनेनैव परात्मानमुपास्महे ॥”

इति । आह च भगवान् भाष्यकारः —

**“किमर्थानि तर्हि ‘आत्मा वा अरे द्रष्टव्यः श्रोतव्यो[1] मन्तव्यो निदिध्यासितव्य’ इत्यादीनि विधिच्छायापन्नानि वाक्यानि । स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः”** ॥

---

१ ‘व्य इत्यादीनि विधिच्छायानि वचनानि स्वा’. इति मुद्रितशारीरकशाङ्करभाष्यपाठ ।

इति । तदिदं भाष्यं नियमार्थं परिसंख्यार्थं वा, स्वाभाविकप्रवृत्तिनिवृत्तिफलस्य तुल्यत्वात् । नियमस्याप्यप्राप्तांशपरिपूरणेनेतरनिवृत्तिफलत्वात् । परिसंख्याया तु इतरनिवृत्तिराहत्यफलमिति विशेषः ।

केचित्तु — द्वैतात्मविचार एव नियम्यते । व्रीहिसामान्योपाधाववहननखनिर्भेदनादिवद् ब्रह्मविवित्सोरात्मसामान्योपाधौ द्वैतात्मविचारस्यापि पक्षे प्राप्तिसम्भवात् । श्रोतव्य इति विधौ च प्रकरणगतैः 'इदं सर्वं यदयमात्मे'त्यादिभिरद्वैतात्मविचारनियमोपपत्तेरित्याहुः ।

अन्ये तु — श्रोतव्य इति स्वतन्त्रविचारव्यावृत्त्या गुर्वधीनो विचारो नियम्यते । न च 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिरि'त्यादिविहितगुरूपगमनस्य दृष्टसम्भवन्यायेन 'तस्मै स विद्वानुपसन्नाय . प्रोवाच तां तत्त्वतो ब्रह्मविद्यामि'ति वाक्यशेषेण चोपनिषदध्ययनविचारद्वारा ज्ञानार्थत्वावगमात् तत एव स्वतन्त्रविचाराप्राप्तिरिति वाच्यम् । एवं सति 'अष्टवर्षं ब्राह्मणमुपगच्छे'दिति गुरूपगमनविधेरेवोक्तन्यायेनाध्ययनद्वारा स्वाध्यायावाप्त्यर्थत्वावगमात् तत एव लिखितपाठादिव्यावृत्तेरध्ययननियमवैयर्थ्यप्रसङ्गात् । यत्तु, अध्ययनविध्यभावे गुरूपगमनविधिरेव नास्ति तस्य तादर्थ्यादिति । तन्न । अध्ययनानधिकारेऽपि मूकादीनामुपनेयत्वस्योक्तत्वात् । वेदान्तेऽपि गुरूपगमनविधेर्विचारार्थतया तद्विध्यभावे तदभावस्य सुवचत्वाच्च । अपि च, बोध्यभेदेन प्रतिशाखं पृथगेकार्थविधानसम्भवाद् नान्येनान्यवैयर्थ्यम्, अन्यथा विनिगमकाभावादित्याहुः ।

अपरे तु — ब्रह्मसाक्षात्कारे मानान्तरव्यावृत्त्या वेदान्तनियम इत्याहुः । तथा च वार्त्तिकं —

"सर्वमानप्रसक्तौ च सर्वमानफलाश्रयात् ।
श्रोतव्य इत्यतः प्राह वेदान्तावरुरुत्सया ॥"

इति । नियमादृष्टं च दृष्टफल एव ज्ञानस्वरूपे हेतुः । तस्य हि सर्वापेक्षा च, यज्ञादिश्रुतेः ।

यत्तु, युक्तं 'व्रीहीनवहन्ती'त्यत्रावहन्तेस्तण्डुलस्वरूपे नियन्तुमशक्यत्वादाहत्य प्रकृतापूर्वांशसाधनत्वायोगाच्च तद्द्वारभूतनियमादृष्टं कल्प्यत इति । न चैवमिह श्रवणनियमादृष्टस्य कल्पकमस्ति, यत् सर्वापेक्षान्यायेन ज्ञाने विनियु-

१. 'णादिनि' ख पाठः.

ज्येत। न च धनार्जने प्रतिग्रहादिनियमवदेष नियम इति युक्त, तन्नियमस्य प्राङ्मुखभोजननियमवत् पृथक्पुरुषार्थत्वात्। नहि धनार्थ एव प्रतिग्रहादिनियमः। तस्माद् दृष्टफलज्ञानार्थ एव श्रवणादिनियमानुपपत्तिरिति।

अत्रोच्यते—'व्रीहीनवहन्ती'त्यत्रापि दृष्टफलांशे नियमबाधादपूर्वांशस्य तदसाध्यत्वाद् विधिरेव हीयताम्। मा भूद् वाक्यानर्थक्यमिति विधित्वमुपेत्य तदुपपत्तये नियमादृष्टं कल्प्यत इति चेत्। हन्तैवं प्रकृतेऽपि श्रोतव्य इति विधिस्वरसत्वे सति तदुपपत्तये नियमादृष्टं कल्प्यताम्। किन्तु तदन्यत्र क्रत्वपूर्वसिद्ध्यर्थं, प्रकृते तदभावात् पुरुषार्थमेवावतिष्ठते प्रतिग्रहादिनियमादृष्टवदेव। तत्र च धनमन्यायेनापि सम्भवीति पुरुषार्थोऽपर कल्प्यते। ब्रह्मविज्ञान तु[1] परमपुरुषार्थो यज्ञादिश्रुत्या,

"सर्वं कर्माखिल पार्थ! ज्ञाने परिसमाप्यते"

इत्यादिस्मृत्या च सर्वादृष्टसाध्य गम्यत इति नातिरिक्तकल्पनापेक्ष्यते। साध्यविशेषानपेक्षमेव वाक्यावैयर्थ्याय क्लृप्तस्य श्रवणनियमादृष्टस्य कियतोऽपि दुरितस्य निवृत्त्या विज्ञाने सामर्थ्योपपत्ते। अथवा, अत एव विधेर्ज्ञानस्य तददृष्टसाध्यत्वमधिगम्यता, वाक्यार्थवत्त्वाय विधित्वे कल्प्यमानादृष्टस्यावहन्त्यादाविव साध्यान्तराभावात्। न ह्यन्यथा धनमर्जयन्निवाधीतमात्रवेदान्तादात्मज्ञानमर्जयन् प्रत्यवैति, येन तेन तत्परिहार साध्येत। न च स्वर्गः कल्प्यो गौरवात्, ज्ञानेन सर्वभेदोपमर्दाच्च। न चातिविशुद्धसत्त्वस्य वाक्यश्रवणमात्राधेयज्ञाने तददृष्टव्यभिचारो दोषाय, अन्यलभ्ये पश्वादौ चित्रादेरपि व्यभिचारात्। तन्निवर्तनीयदुरितनिवृत्तिद्वारविशेषोपपत्तेश्चेति।

अथापि स्यात्। न तावदय काम्यविधि। कामिपदाद्युपबन्धेन साध्यभावापन्नस्य विध्युद्देशे फलस्याश्रवणात्। न च रात्रिसत्रन्यायेनार्थवादिकममृतत्व फलतया विपरिणम्यते, तस्य वैधफलत्वानभ्युपगमात्। इष्यमाणज्ञानस्य वैधफलत्वे तदुपायावृत्तिन्याय†विरोधात्। नापि नैमित्तिकः। उपरागगृहदाहादेरिव निमित्तस्य कस्यचिदनुपादानात्। नापि नित्यविधिः। 'यावज्जीव', 'वसन्ते वसन्त' इत्यादिवद् नियतनिमित्तवीप्सादेरश्रवणाद्, अकरणे प्रत्यवायाभावाच्च।

---

1 'तु पु' ख पाठ.

---

† 'आवृत्तिरसकृदुपदेशात्' (ब्र० ४ १ १)

ननु 'अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्'

"नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना ।
वर्तमानस्तु संन्यासी पतत्येव न संशयः ॥"

इत्यादौ तदकरणे दोषो दृश्यत इति चेद् ।

अत्राहुः—'त्रिशीर्षाणं त्वाष्ट्रमहनमि'त्यादीनि साहसान्यनुक्रम्य, 'तस्य मे तत्र न लोम च मीयते स यो मा विजानीयाद् नास्य केन च न कर्मणा लोको मीयत' इत्यादिज्ञानप्रशंसार्थवादसमभिव्याहारेण तदेकार्थस्य 'अरुन्मुखानि'त्यादेः श्रवणाकरणप्रत्यवायपरत्वमयुक्तम् । अन्यथातुरसंन्यासविधेरननुष्ठानप्रसङ्गात्, तस्य श्रवणासम्भवात् । अपि च

"मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् ।
बाहुजातोरुजातानां नायं धर्मो विधीयते ॥"

इति स्मरणात् 'ब्राह्मणा व्युत्थाय भिक्षाचर्यं चरन्ति,' 'ब्राह्मणः प्रव्रजेद् गृहादि'त्यादौ ब्राह्मणग्रहणं विवक्षितार्थं मन्वानानां मते क्षत्रियादेरसंन्यासात्, तस्य मुमुक्षोः श्रवणविधिरनित्यः स्यात् । संन्यासिन एव तदकरणे दोषाम्नानात् । न च स एव विधिः काम्यो नित्यश्च, संयोगपृथक्त्वकल्पनायां च गौरवात् । न च संन्यासिन एव श्रवणाधिकारः 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती'ति संन्यासस्य ज्ञानार्थत्वावगमात्, तस्यातुरसंन्यासविधिसामर्थ्येन विरोधिदुरितनिवृत्त्यदृष्टद्वारा जन्मान्तरेऽपि सम्भवतो विचारेण सहाननुष्ठेयत्वात् । 'शान्तो दान्त उपरतस्तितिक्षुः[1] समाहितः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येदि'त्यत्रोपरतपदेन संन्यासाभिधानेऽपि न तावच्छान्त्याद्यधिकारकविचारविधानं युक्तम् । अर्थवादकल्पनीयाधिकारस्य श्रोतव्यादिविधेरेतदधिकारविधित्वायोगेन मुमुक्ष्वधिकारकविचारान्तरविधिकल्पनापातात् । न च स एव विचारः संयोगभेदेन विधीयते, न विचारान्तरमिति वाच्यम् । निबद्धाधिकारकतया स्वतन्त्रोत्पत्तिशून्यत्वात् । अपि चैवं नित्ये विचारविधौ यतेर्ज्ञानानन्तरमपि यावज्जीवानुष्ठेयो विचारः स्यादजिज्ञासोरपि च, अन्यथा तस्य नित्यत्वायोगात् । न चैवं युक्तं, 'तद् विजिज्ञासस्व' 'अथातो ब्रह्मजिज्ञासा' (ब्र० १. १. १) इति विचारे विधेये जिज्ञासापदोपादाना-

---

१. 'क्षु मुस' ख पाठः.

नर्थक्यप्रसङ्गात् । तस्माद् 'अरुन्मुखानि'ति विद्याप्रशंसार्थवाद एव, इत्थं महीयसी विद्या यस्या यतिद्रोहोऽप्यकिञ्चित्कर इति ।

अस्तु वेद सन्यासिनो वेदान्ताध्ययनाकरणप्रत्यवायपरम् । रौतेः शब्दकर्मणः क्विपि, रौति यथार्थं ब्रह्मेति रुद् वेदान्तो येषा मुखे नास्तीति तदर्थोपपत्तेः । यतेश्च 'सर्वेषु वेदेष्वारणमावर्तयेदुपनिषदमावर्त्तयेदि'त्यादिवेदान्ताध्ययनविधानात् । अथवा, अरुन्मुखान् यतीन् सालावृकेभ्य प्रायच्छम् । अतो वेदान्तानधिकारिणा न प्रव्रजितव्यमित्येवम्परमस्तु । यद्वा, 'प्रक्रमात्तु नियम्येत —' (जै० ६.२.१३) इति न्यायात् काम्यस्यापि वैधस्य संन्यासदिन एवारब्धश्रवणस्य नित्यवद्भावात् तदकरणे प्रत्यवायपरमस्तु । एतेन 'नित्य कर्म परित्यज्ये'त्यपि व्याख्यातम् । तस्मान्न श्रवणविधिरिति ।

अत्राभिधीयते — काम्यविधिरेवाय स्यात् । 'एतावदरे खल्वमृतत्वमि'त्याद्यार्थवादिकफलकल्पनात् 'फलमात्रेयो निर्देशाद्—'(जै० ४.३.१८) इति न्यायात् । तत्र च ज्ञानद्वारा अदृष्टोपयोगो व्याख्यातः, अथवा न तावद् द्रष्टव्य इति दर्शन विधीयते, अपुस्तन्त्रत्वात् । ननु 'पत्न्यवेक्षते',

"अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्रा. पुनन्त्येते तस्मात् पश्येत नित्यशः ॥"

'न नग्ना स्त्रियमीक्षेते'त्यादिज्ञानविधिनिषेधा दृश्यन्ते । सत्य दृश्यन्ते । किन्तु मा भूदशक्यार्थविधानादप्रामाण्यमिति तदुपायविषया व्यवस्थाप्यन्ते । न च ज्ञानमेवोपायमुपनिबध्य कार्यतया बोध्येत केवलमिष्टसाधनतया वेति वाच्य, तदुपायप्रवृत्ते श्रोतव्य इत्यादिनैव सिद्धौ तत्प्रयोजनाभावात् । तस्मादपेक्षितफलपरत्वेऽर्थवत्त्वाद् द्रष्टव्य इति स्ववाक्यनिर्दिष्ट विज्ञानमेव फल कल्प्यते, कमिपदाद्यश्रवणात् । द्रष्टव्य इति साध्यरूपासमर्पणेऽपि विधितः साधनावगमे योग्यसमभिव्याहारेणैवाकाङ्क्षितफलपरत्वोपपत्तेः । ग्रामो गन्तव्योऽश्वमानयेत्यादौ साध्यसाधनभावावगमस्य सर्वजनीनत्वात् । न चैव ‡विधिवन्निगदनयविरोध । तत्र विधिविभक्त्यभावेनोदुम्बरताया हितसाधनतानवगमे पशूदुम्बरतासमभिव्याहारमात्रेण फलसाधनभावासिद्ध्या 'पशूनाप्नोती'त्यफलपरत्वव्यवस्थापनात् ।

---

१. 'दप्रसङ्ग ए' ख. पाठ  २. 'त्का' ख. पाठ

---

‡ जै० अध्या० १. पा २ अधि० ? सू० १९—२५.

यत्तु न द्रष्टव्य इति फलदशाभिप्रायम् । 'येनाह नामृता स्याम्', 'एतावदरे खल्वमृतत्वमि'त्यर्थवादोपहृतफलत्वात् । किन्तु निदिध्यासितव्य इति विधित्सितोपायदशाभिप्रायम् । अपरोक्षदशापन्नस्योपासनस्य कर्माविद्याकृतप्रकृतिबन्धनिवृत्तौ निरतिशयविकासिनित्यविज्ञानेन ब्रह्मानन्दानुभवलक्षणमोक्षफलत्वोपगमात् । †'स्मृतिप्रतिलम्भे सर्वग्रन्थीना विप्रमोक्ष' 'भिद्यते हृदयग्रन्थिः, तस्मिन् दृष्टे परावर' इत्यैकार्थ्येन रूपविशेषोपसहारात् । अन्यथा साधनभेदे सत्यन्याय्यविकल्पापत्ते, समुच्चये सापेक्षत्वकल्पनापत्ते., तदनुपपत्तेश्च, ध्यानवद् दर्शने दर्शनस्यासाधनत्वात् । मोक्षे च ध्यानस्याव्यवहितकिञ्चित्कारायोगाद्, दर्शनेनैव व्यवधाने तेन सह समुच्चयायोगात् । तस्माद् द्रष्टव्य इत्यस्य सन्निहितनिदिध्यासनविध्यपेक्षितदर्शनसमानाकारत्वरूपविशेषणसमर्पकतया, विशिष्टे निदिध्यासने विधेये श्रवण मनन च स्वरूपोपकार्यङ्गमर्थप्राप्तमनूद्यत इति ॥

---

## द्रष्टव्य इत्यस्य फलपरत्वम् ।

तत्र वदाम । द्रष्टव्य इति दृशिपरकृत्यप्रत्ययो न विधिरिति परस्यापि सम्प्रतिपन्नम् । तदर्पितविशेषणविशिष्टनिदिध्यासनविध्युपगमात् । पृथग्विशेषणविधौ च वाक्यभेदप्रसङ्गात् । ततश्च किं द्रष्टव्य इति सन्निहितविहितसाधनस्य फलसमर्पणपरोऽस्तु, किं वा दर्शनसमानाकारत्वलक्षणया विधेयविशेषणसमर्पणपर इति । वयं तु पश्याम.—युक्त विध्यपेक्षितफलसमर्पणमिति । सन्निहितानुपातिनी हि फलाकाङ्क्षा विधेः समानपदोपात्तं भावार्थमेवादित्समाना कुतोऽपि हेतोस्ततो विच्छिन्ना सती यदि स्ववाक्येऽपि फल न लभेत, तत काल्पनिकमार्थवादिक वा मृगयते । प्रकृते च स्ववाक्यगतदर्शनशब्दाभिधेयसाक्षात्कारस्यार्थवादिकामृतत्वपर्यवसायिन फलत्वसम्भवाद् न सा दूरमनुधावति । न चैवमावश्यकत्वादार्थवादिकामृतत्वमेव फलाकाङ्क्षा आदत्तामिति वाच्यम् । प्रथममेव सन्निधिबलग्राहितफलभावे साक्षात्कारे तदुपपादनायार्थवादापेक्षायामपि प्राथमिकदर्शनफलभावाधिगतिबाधेनार्थवादिकामृतत्वस्य दविष्ठस्य फलत्वकल्पनानौचि-

---

† 'स्मृतिलम्भे' इति भाष्यसम्मत पाठ ।

त्वात् । विधेश्च न स्वरसतो विधेयविशेषणापेक्षा यथा फलापेक्षा, अन्तरङ्गत्वात् । अतो यावत् प्रकरणान्तरपर्यालोचनामूलापेक्षावशेन विधेयविशेषणपरत्वं द्रष्टव्यशब्दस्य, तावत प्रथमतरवृत्तस्वारसिकापेक्षावशेन फलपरत्वमवसीयते । स च साक्षात्कारोऽविद्यामुच्छिन्दन्नात्मस्वरूपनित्यानुभवपर्यन्तोऽमृतत्वफलो मनननिदिध्यासनयोगपरिशुद्धमनस्सनाथेन विचारितवेदान्तेन जन्यत इति श्रवणमेव साक्षात्कारहेतुतया चोद्यते । अर्थविशेषतात्पर्यावधारणस्य प्रमाणाशतया तद्धेतुविचारस्यापि तथाभावात् । अत एव च नावृत्तिन्यायविरोध', शब्दस्य परोक्षप्रमाणत्वस्वाभाव्यानुगमेन प्रथममप्राप्तसाक्षात्कारसाधनभावेन तदशविचारविधौ सङ्घटिते, तत एव प्रमाणफलस्य विषयस्वभावानुपातिस्वाभाव्यानुगमन्यायोन्मेषेण वैधस्यापि साक्षात्कारस्य प्रमाणवस्तुतन्त्रतया विचारानुगृहीतवेदान्तजननीयत्वावमर्शे, दृष्टफलसिद्ध्यर्थविचाराद्यावृत्त्यनपवादात् । अदृष्टस्यापि तादर्थ्ये दृष्टसामग्रीघटकतयाविरोधात् । चित्रादेस्तु पश्वादि न दृष्टफलमिति विशेष. । विधिबलादेव तु श्रवणमप्यदृष्टद्वारा प्रस्तुतप्रतिबन्धक्षये जन्मान्तरेऽपि फलजनकमित्यनियतफलमिष्यते । मनननिदिध्यासने च तदङ्गतया विधीयेते, विषयासम्भावनादिनिवृत्त्या फलोपकारित्वात् ।

तत्र तत्त्वविदाचार्याधीनन्यायोपायग्रहणावधारितवेदान्ततात्पर्यविषयार्थस्यैवमेव युक्तमिति युक्तितः प्रतिष्ठापन मननम् । श्रुते मते ब्रह्मैकात्म्ये विजातीयप्रत्ययवासनोदसनेन तदेकप्रत्ययसन्ततिकरण निदिध्यासनम् ॥

---

### निदिध्यासनमात्रस्याविधेयत्वम् ।

न चेदमेव विधीयते, श्रोतव्यो मन्तव्य इति चानुवादस्तादर्थ्येन प्राप्तत्वाद्, विधिलाघवाच्चेति वाच्यम्, अफलविधानानुपपत्तेः । न च निदिध्यासन ब्रह्मतत्त्वसाक्षात्कारफल, तस्याप्रमाणत्वात् । ध्यानपरिपाकमयसाक्षात्कारस्य च वस्तुयाथात्म्यानवभासितया अमृतत्वफलापर्यवसायित्वात् । न हि परोक्षावगत वस्तु परमार्थसदपि स्वरूपेण भावनामयसाक्षात्कारे प्रकाशीभवति, कामिपरिभावितकामिनीसाक्षात्कारादावदर्शनात् । ननु श्रद्धाभक्तिप्रणिधानैर्यतमानस्य तदावर्जित' परमात्मा स्वात्मानं प्रकाशयति ।

"यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ।"
"तेषां सततयुक्ताना भजता प्रीतिपूर्वकम् ।
ददामि बुद्धियोग त येन मामुपयान्ति ते ॥"

इत्यादिदर्शनादिति चेत् । सत्यम् । तथापि नाप्रमाणमूले परोक्षस्मृतिसन्ततिपरिपाकात्मकसाक्षात्काराभासे स प्रकाशेतेति लोकदर्शनादुपेयते, दृष्टानुसारित्वात् कल्पनायाः । तदवधेरेव तव ध्यानस्य विधेयतया तत्फलत्वानुपपत्तेश्च । एतेन

"तत्त्वमस्यादिवाक्यार्थभावनाजापरोक्षधीः ।
मूलप्रमाणदार्ढ्येन न भ्रमत्व प्रपद्यते ॥"

इति प्रत्युक्तम् । वस्तुतत्त्वावभासिसाक्षात्कारस्य प्रमाणफलत्वात् । न चव

"ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु त पश्यते निष्कल ध्यायमान "
"योगिनस्त प्रपश्यन्ति भगवन्तं सनातनम्"

इत्यादिविरोध. । ध्यानस्य साक्षात्कारोपयोगाप्रत्याख्यानात्, प्रमाणसहकारित्वेऽपि तदुपपत्तेः । अन्यथा तस्य ज्ञानकरणत्वमपरोक्षप्रमाणत्व च कल्पनीयमिति गौरवात् । ध्यानयोगपरिशुद्धेन मनसा ब्रह्मसाक्षात्कार स्यादिति चेत्, स्यान्नाम । ध्यान तु पराङ्गमेवेति समभिव्याहृतश्रवणाङ्गमेवास्तु, सन्निहितत्वात् ॥

---

## मनसोऽप्रमाणत्वम् ।

अपि च न मनोऽपि प्रमाण, प्रमाणसहकारित्वादालोकादिवत् । न च व्याप्यदर्शने व्यभिचार, सशयोत्तरप्रत्यक्षे मानसहकारित्वेऽपि तस्यानुमितौ प्रमाणत्वादिति वाच्यम् । विशेषदर्शने सति सशयसामग्र्यभावेन स्वसामग्र्यादेव प्रत्यक्षसम्भवात्, तस्यापि तद्धेतुत्वे कल्पनागौरवात् । अपि च यदि मन प्रमाण स्याद् रूपादिप्रत्यक्ष मानसमापद्येत । न च करणान्तरासहकृतमनोजन्यत्वाभावादमानसत्वमिति वाच्यम् । मन प्रामाण्ये तदेकप्रमाणत्वागत्त्या करणान्तराभावात् । इन्द्रियादीनामालोकादिवत् तत्सहकारित्वापत्ते । अथेच्छादिगाधारणकारणत्वाद् मनसो न तदेकप्रमाणत्व, प्रमासाधारणकारणस्यैव प्रमाणत्वादि-

१. 'णपरत्व' क. पाठ

त्युच्येत, तर्हि तत एव न प्रमाणमेव मन इति ब्रूमः । न च सुखादिप्रत्यक्षे मन इन्द्रियत्वेन करणत्वात् प्रमाण.जन्यप्रत्यक्षत्वावच्छेदेनेन्द्रियत्वेन करणत्वस्य चक्षुरादौ कप्तत्वाद्, वैधर्म्यावच्छिन्नानेककार्यतायामेकधर्मानवच्छेद्यकारणताकत्वस्य चासाधारणकारणार्थत्वादिति वाच्यम् । चक्षुरादिकरणत्वकल्पनामनपेक्ष्यैव मनसः सुखादिप्रत्यक्षरूपकार्यविशेष इच्छादिसाधारणकारणरूपव्यावृत्तेन्द्रियत्वेन करणत्वे कल्प्यमाने लाघवेन जन्यप्रत्यक्षत्वावच्छेदेन तदेककरणत्वकल्पनापत्तेरपरिहार्यत्वात् । अनुमित्यादावपि तस्यैव तथैव रूपभेदकल्पनया करणत्वोपपत्ते. ॥

---

## सुखाद्यनुभवान्यथासिद्धि ।

लाघवेन निसर्गसिद्धनित्यसाक्षिण एव सुखाद्युपधानेन सुखादिसाक्षात्कारतया तत्र करणवैफल्याच्च । न च घटमणिकाकाशवदौपाधिकसुखादिज्ञानभेदावभाससम्भवेऽपि घटाकाशादेराकाशमात्रादिव सुखादिज्ञानस्य साक्षिमात्राद् भेदाभावे मयि सुखानुभव., सुखमनुभवामीति प्रतिपत्त्यनुपपत्तिरिति वाच्यम् । स्वाश्रितसुखाद्यवभागितया तथा प्रतिभासोपपत्ते । अवभासकस्य रक्तवृत्ताद्यवभासकालोकवदवभास्यसरूपावभासित्वात् । एतेन सुखादिप्रत्यक्षोत्पादविनाशानुभवोऽपि व्याख्यात । न च सुख जानामि घट जानामीति वा ज्ञानविषयतया ज्ञानमवभासते, अप्रकाशमानस्य विषयानवभासतया स्वयमवभासोपपत्ते. । चाक्षुषादिवृत्तयोऽपि प्रकाशविषया एव तदैकात्म्येनावभासन्ते, न पृथग् ज्ञानविषया' । न चैव मनःकरणकसुखादिवृत्त्यनुपगमे सुखादिप्रकाशस्य ज्ञानपदवाच्यत्वानुपपत्ति., वृत्तिविशिष्टस्यैव तथात्वोपगमादिति वाच्यम् । विषयप्रकाशत्वेन सर्वत्र ज्ञानपदवाच्यत्वात् । तच्च क्वचित् साक्षात्, क्वचिद् वृत्त्युपाधिकमित्यन्यदेतत् । न च स्वप्रकाशस्वभावस्य नित्यचैतन्यस्य परप्रकाशत्वानुपपत्तिरिति वाच्यम् । नहि चैतन्यमेव परप्रकाशकतारूपान्तरमापद्यते, अविकारित्वात् । सुखादिक तु तत्र सम्बध्यमानमालोक इव घटादि सोपाधिकमेव परप्रकाशत्वमापादयति ॥

अथ यदि प्रकाशसम्बन्ध एव प्रकाशमानता, रूपवदालोकसम्बन्धे गन्धरसादेरपि तत्प्रसङ्ग । को दोष । तद्गोचरज्ञानाभावादेवात्मनस्तदप्रतिभासोपपत्ते । धर्मादिस्तु चैतन्यप्रकाशसम्बन्धेऽपि न प्रतिभासते, अयोग्यत्वात् । तदा-

कारवृत्त्युपजने च तस्यां प्रकाशमानाया तदेकावभासो धर्मादिरिति फलबलादेव कल्प्यते । सुखादि चोत्पत्त्यैव प्रकाशत इति, न तद्गोचरमानसवृत्त्यपेक्षेत्यास्ता तावत् । तस्मादसाधारणविषयाभावाच्च मनो न प्रमाणं, प्रमाद्युपादानत्वाच्च । 'कामः सकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एवे'-त्यादिश्रुते' । एतच्चाग्रे निपुणतर वक्ष्यामः । अपि च, सर्वं करण विषयव्याप्त्या फलमाधत्ते । न चात्मगोचरवृत्त्यतिरेकेण मनसस्तद्व्याप्तिरधिका शक्या कल्पयितु-मिति तत्करणगवेषणाया विचारितवेदान्त उपतिष्ठते । '**शास्त्राचार्योपदेशसंस्कृतं मन आत्मसाक्षात्कारकरणमि'ति** गीताभाष्य 'मनसैवानुद्रष्टव्यमि'ति श्रुतिश्च मनसस्तदुपादानत्वादन्तरङ्गसाधनत्वाभिप्रायम् । अन्यथा ब्रह्मण औपनिषदत्वविरो-धाद्, 'आत्मा द्रष्टव्य. श्रोतव्य' इति तद्दर्शनाय श्रवणविधिविरोधाच्च ॥

---

## मोक्षस्य ध्यानासाध्यत्वम् ।

नापि मुक्तिफलं ध्यान विधेयम् । 'तमेव विदित्वातिमृत्युमेति', 'तमेवं विद्वानमृत इह भवती'त्यादौ मुक्तेर्ज्ञानसाध्यत्वावगमात् । उपासन च कर्मेति परस्यापि सम्प्रतिपन्नम् । यथाह तान्त्रिकः 'प्रकाशश्च कर्मण्यभ्यासाद्' (ब्र० ३. २. २९) इति सूत्रवृत्तौ — 'उपासनात्मके कर्मणि' इति । अन्यत्रापि 'यागात्म-कमुपासनात्मक च कर्मे'ति । श्रुतप्रकाशिकाकारश्च, 'उपासनस्य कर्मत्वं सन्ततिरू-पतया प्रयत्नसाध्यत्वादि'ति ॥

---

## विद्युपास्योर्भेदः ।

ननु च 'मनो ब्रह्मेत्युपासीते'त्यत्र 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद', 'यस्तद्वेद यत् स वेद स मयैतदुक्त' इत्युपक्रम्य 'अनुम एतां भगवो देवता शाधि यां देवतामुपास्से' इत्यादौ विद्युपास्योर्व्यतिकरेणोपक्र-मोपसंहारादैकार्थ्यमवगम्यत इति चेद् । न, विदेर्ज्ञानरूढस्योपासिक्रियार्थत्वानुप-पत्तेः । 'मनो ब्रह्मे'त्युपासनाप्रकरणे चोपक्रमोपसहारैकरूप्यसिद्धिरेव लक्षणाहेतु-रिति युक्त वेदनशब्देन तत्सन्ततिरूपक्रिया लक्ष्यत इति । न च 'तमेवं विद्वा-नि'त्यादौ तथा, 'निचाय्य तं मृत्युमुखात् प्रमुच्यते', 'भिद्यते हृदयग्रन्थि',

'तस्मिन् दृष्टे परावर' इत्यादिनैकार्थ्यात् ।

'आत्मेत्येवोपासीते'ति च नोपासनाविधिपर, एवकारोपबन्धेन विशेषणपरत्वात् । तदयमर्थः — यः प्राणनादिकर्तारमात्मान जानाति, न स वेद । अकृत्स्नो ह्येष, विशिष्टभेदात् । तत प्राणनादिसर्वव्यापारानाप्नुवन्त साधारणमात्मानमेव पश्येदिति । तत्र चोपासीतेति साक्षात्कारादिफलमुपासनादिकमन्यासिद्धमनूद्यते । एवकारोपहतविधिशक्तित्वाद्वा 'षड् विंश तिरित्येव ब्रूयादि'त्यादिवद् इद स्यात् । एतेन 'आत्मानमेव लोकमुपासीते'ति व्याख्यातम् । भगवत्पादास्तु स्ववाक्यावगतात्मनोऽनुस्मृतिरर्थप्राप्ता बलवदारब्धभोगविक्षेपात् पाक्षिकी नियम्यत इत्यप्याहुः ।

नापि 'स य सर्वेषा भूतानामन्तरपुरुष. स म आत्मेति विद्यादि'त्युपासनाविधिपरम् । विदेर्ज्ञानार्थत्वात् । न च ज्ञानमेव विधीयमानमशक्यतयाभ्यासरूपोपासनात्मतामाक्षिप्य विधीयत इति वाच्यम् । विधित्वसिद्धे प्रागाक्षेपानुपपत्तेः । न च विदे क्वचिदुपासनार्थता बलादुपेतेति सर्वत्रैवोपगन्तव्या । ब्रह्मात्माभेदस्य तथाभावे सम्यग् ज्ञानपरत्वोपपत्तेः । न चैवमितिशब्दो विधिप्रत्ययश्च विरुध्येयातामिति वाच्य, स्वरूपमात्रसमाप्तिपरत्वेन साधनविषयत्वेन चोपपत्तेः । छन्दसि व्यत्ययबाहुल्येन विधित्वासिद्धेश्च ॥

---

## स्मृतिप्रतिलम्भस्याहेतुत्वम् ।

न च 'स्मृतिप्रतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष' इति ध्रुवानुस्मृतिध्यानक्रियाफलं मोक्ष उच्यते, साक्षात्कारफलत्वश्रुतिविरोधात् । न च ध्रुवानुस्मृतिरेव दर्शनरूपोपसहर्तव्या, 'भिद्यते हृदयग्रन्थि.' 'सर्वग्रन्थीना विप्रमोक्ष' इत्यर्थप्रत्यभिज्ञानादिति युक्तम् । स्मृतिप्रतिलम्भ इत्यादेः प्रत्यगात्मस्मृतिपरिशुद्धौ कामात्मकग्रन्थिविप्रमोक्षपरत्वेनार्थभेदात् ।

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिता."

इत्युक्तकामानामुत्तरवाक्ये

"यदा सर्वे प्रभिद्यन्ते हृदयस्य हि ग्रन्थयः"

इति ग्रन्थिरूपत्वाभिधानात् । यथाहुः —

"कामा ग्रन्थिस्वरूपेण व्याख्याता वाक्यशेषत."

इति । तदर्थ एव चेह प्रत्यभिज्ञायते, सर्वशब्दान्मुचिग्रहणाद् ग्रन्थिबहुत्वोक्तेश्च । एव सति निरन्तराय ब्रह्मतत्त्वसाक्षात्कार मुच्यते । तथा च श्रुति. — ततस्तु त पश्यते निष्कल ध्यायमान' इति । स्मृतिश्च —

"य विनिद्रा जितश्वासा' सन्तुष्टा सयतेन्द्रिया. ।
ज्योति पश्यन्ति युञ्जानास्तस्मै योगात्मने नम. ॥"

इति । विपरीतभावनादिचित्तमलापनयनेन 'दृश्यते त्वग्र्यया बुद्ध्ये'त्यादिश्रुतिसमर्पितसाक्षात्कारापेक्षितचित्तैकाग्र्योपकारव्यवधानेन च, ध्यानस्य मुक्तिहेतुत्वायोगात् । न च

"भक्त्या त्वनन्यया शक्य अहमेवविधोऽर्जुन ! ।
ज्ञातु द्रष्टु च तत्त्वेन प्रवेष्टुं च परतप ! ॥"

इति परमात्मप्रवेशेऽपि भक्तिर्हेतुरुच्यते । यद्विहीह विशिष्टनिदिध्यासनारूपा भक्तिरिष्येत, सा शास्त्रविज्ञानादिसाध्येति तत्साधनत्वाभिधानं द्विष्येत भक्त्या ज्ञातु शक्यो द्रष्टु चेति । तस्माच्छ्रुतमताधिगते ब्रह्मणि श्रद्धा चोत्कण्ठा च भक्तिरिह गृह्यते । न च सा परमात्मप्रवेशहेतुः । न चैव भक्त्या शक्योऽहं प्रवेष्टु चेति निर्देशानुपपत्तिः । अश्वेन शक्यो ग्रामो गन्तु भोक्तुं चेतिवत् पारम्पर्येऽपि तथा निर्देशोपपत्तेः ।

"भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वत ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥"

इति पारम्पर्यस्मरणाच्च । न च तदनन्तरशब्दापौनरुक्त्याय तत इति भक्ति. परामृश्यत इति वाच्यम् । तथापि 'सप्तदशारत्निर्वाजपेयस्य यूप' इतिवत् ततो मा ज्ञात्वेत्यव्यवहितान्वयेनोक्तार्थस्यैव उत्तरार्थमनुवादोपपत्ते । यतो मदभिज्ञानं मुक्तिसाधन वृत्त, तत इत्यर्थेऽप्यपौनरुक्त्ये व्यवहितभक्तिपरामर्शायोगाच्च ।

"पुरुषः स परः पार्थ! भक्त्या लभ्यस्त्वनन्यया"

इत्यत्राप्यात्मन्तस्य साक्षात्कारातिरिक्तरूपध्यानयोगाच्च ।

अपि च, प्रकृतिसम्ब(न्ध ? न्धा)वरणापगमे निरवधिविकासिनित्यविज्ञानेन ब्रह्मस्वरूपगुणविभवानुभवो मोक्ष इति ते मतम् । तत्रोपासिक्रिया स्वगु(ण ? णा)वरणभङ्ग एव हेतुरेषितव्या । मलप्रक्षालने मणिज्योत्स्नाप्रसरस्येव नित्यसिद्धात्मगुणविकासे पुव्यापारानपेक्षणात् । न तु प्रकृतिसम्बन्धरूपो बन्धो न स्वाभाविकः, स्वभावस्यापरिहरणीयत्वेनोपासनावैयर्थ्यप्रसङ्गात् । स कर्मनिबन्धन इति चेद्, अथ कर्मसम्बन्ध एव किंनिबन्धन । स देहसम्बन्धनिबन्धन, 'अनुज्ञापरिहारौ देहसम्बन्धाद्—'(ब्र० २ ३. ४८) इति सूत्रणादिति चेत्, स पुनः कर्मसम्बन्धनिबन्धन इतीतरेतराश्रयता । अन्धपरम्परा चानादित्वकल्पना । अथवा नान्धपरम्परा । 'तद् य इह रमणीयचरणा अभ्याशो ह यत् ते रमणीयां योनिमापद्येरन्', 'तद् य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्',

"शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं गतिम् ।
उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः ॥"

इत्यादौ प्रत्यक्षमूलदेहसम्बन्धाश्रयपुण्यापुण्यकर्मनिमित्तसदसद्देहसम्बन्धप्रतिपादनात् । तथापि देहसम्बन्धो नाविद्यारूपतामतिवर्तते । तथैव क्लेशमूलः कर्मसम्बन्धोऽपि भवितुमर्हति, असङ्गाविक्रियात्मनोऽन्यादृशसम्बन्धानिरूपणात् । न च स्वस्वामिभावः, देहेन्द्रियादावात्मत्वविभ्रमस्य सर्वजनीनत्वात् । तन्निमित्तसम्बन्धस्यापि निमित्तान्त(र)सम्बन्धाधीनत्वेऽन्धपरम्पराप्रसङ्गाच्च । न चाविद्यासम्बन्धोऽप्यात्मनः स्वभावः । विद्यया तद्बाधे स्वभावहानप्रसङ्गात् । यथाहुः —

"स्वभावाद् विनिवृत्तोऽर्थो निःस्वभावः खपुष्पवत्"

इति । न खल्वौष्ण्यप्रकाशविनाशेऽप्यग्निरवतिष्ठत इति युक्तिमत् । किन्तु सोऽप्यविद्यैव । न चैवमात्माश्रयादिदोषः । असङ्गस्यात्मन सम्बन्धापादनस्वभावाया एव तस्या अनादिसिद्धत्वात् । स चायं चिदात्मनोऽविद्यासम्बन्धः तच्छायाप-

स्याभेदेन तत्प्रकाशात्मतैव, यथांशुमालिनश्चिरटलस्य जलच्छायापस्याभेदेन तत्प्रकाशात्मता तद्वत् । स चानर्सविद्यानुबघ्नन् जीवो नामानादिमिद्वाविद्या-कामकर्माशयानुशयी ह्ययं तदनुपासनादुपाय चानेकदेहसम्बन्धप्रबन्धारूढो दुरन्तानन्तदु.खोपसृष्ट मसारी विविधकर्मज्ञानाधिकारी स्वर्गापवर्गयोग्यो भवति । सोऽयमात्मन प्रकृतिसम्बन्धरूपो बन्धोऽविद्यात्मको न मनोवाक्कायनिर्वर्तनीयेन कर्मणा निवर्तितुमर्हति,

"न रज्ज्वारोपित सर्पो घण्टाघोषान्निवर्तते"

इति न्यायात् । किन्तु रज्जुसर्पादिरिव वस्तुतत्त्वसाक्षात्कारेणैवेति साम्प्रतम् ॥

---

मुक्तेरुपासनासाध्यत्वे दोषाः ।

अपि च, एवमुपासिक्रियासाध्यत्वे मुक्तेरनित्यत्वप्रसङ्ग[1] । देवभूयादिवद् यत् क्रियासाध्य तदनित्यमिति व्याप्ते, 'पुण्यचितो लोक क्षीयत' इति श्रुतेश्च ।

अथ प्रकृतिसम्बन्धकर्माविद्यावरणानिवृत्तिरुपासनाजन्या नानित्या । अन्यथा प्रायश्चित्तक्रियासाध्यपापानिवृत्तेरनित्यत्वे पापोन्मज्जनप्रसङ्गेन प्रायश्चित्तसातत्यप्रसङ्गात् । अत एव न्यायश्चाभास. । या क्रिया सा न स्वर्गसाधनमिति न्यायस्य 'स्वर्गकामो यजेते'त्यादिश्रुत्येव 'तमेव विद्वानमृत इह भवति', 'तयोर्ध्वमायन्नमृतत्वमेती'त्यादिश्रुत्या तस्य बाधितत्वाच्च । अत एव श्रुतिरपि ब्रह्मोपासनातिरिक्तपुण्यचितलोकविषया । 'यदि ह वा अप्यनेवंविद् महत् पुण्य करोति तद्धास्यान्तत क्षीयते', 'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयत' इत्युपासनाकर्मणोऽक्षयश्रुतेरनन्तगात् । उपासनयावरणनिवृत्तौ चात्मन. स्वाभाविकसत्यसङ्कल्पादिगुणाविर्भावे छन्दतो नानादेहभोगोपकरणसर्गसहारेऽप्यविरोधात् । न चैवमपि प्रायणकालपरिमाणानियमेन तदुपाधिविधेयोपासनापरिमाणानियमान्मुक्तौ तरतमभावप्रसङ्ग, यथाहि ज्योतिष्टोमादिसाधनतारतम्यस्य स्वर्गतारतम्यप्रयोजकत्वदर्शनादिति वाच्यम् । ध्येयब्रह्मसाक्षात्कारपरिपाकावधिनियमात् पुनरप्रसाधेना त्वप्रसत्य[2] तु प्रायणान्तानुवृत्तिरादियते ।

---

१ 'यत्वश्रु ।', २. 'स्व' ज पाठः

"अन्तकाले च मामेव स्मरन्मुक्त्वा कलेबरम् ।
य प्रयाति स मद्भाव याति नास्त्यत्र सशय ॥"

इति स्मरणात् । न चैवमदृष्टफलोपासनाविधिनिष्ठे वेदान्ते विधिवृत्तमीमांसयैव विद्याविधेरपि निरूपितचातूरूप्यतया तद्विचारानारम्भप्रसङ्गः । सिद्धप्रामाण्यब्रह्मस्वरूपविद्याभेदाभेदविकल्पसमुच्चयादिप्रतिपादनस्य न्यायान्तरापेक्षतया तद्व्युत्पादनाय तदारम्भोपपत्तेरिति ।

उच्यते । न तावत् तन्निवृत्तिस्तदुपादानावस्थान्तरमित्युक्त्वा प्रकृतिसम्बन्धनिवृत्तिनित्यत्वमुच्येत, क्रियाजन्याया घटादिनिवृत्तेः कपालाद्यवस्थाया अनित्यत्वात् । कर्माविद्या च तवात्मोपादानेति तन्निवृत्तिरात्मावस्थान्तर क्रियया साध्येत । तथा च विक्रियापत्तेरात्मनोऽविकारित्वशास्त्रमुपरुध्येत 'अविकार्योऽयमुच्यते' इत्यादि । अनित्यत्व च प्रसज्येत विकारित्वाद् मृदादिवत् । अथार्थान्तरमेव निवृत्तिरिष्येत, तदपि कार्यत्वादनात्मत्वाच्च घटादिवदनित्य स्यात् । आत्मातिरिक्तकालादेरपि नित्यत्वासम्प्रतिपत्तेरव्यभिचारात् । न च साधनावच्छिन्नसाध्यव्यापक भावत्वमुपाधिः । तद्व्यतिरेकस्य साध्यव्यतिरेकाप्रयोजकत्वात्, प्रागभावे व्यभिचारात् । न चावच्छिन्नसाध्यव्यतिरेकः साध्य. प्रागभावे कार्यत्वाभावप्रयुक्त. स्यात् पक्षे च कार्येऽनित्यत्वाभावप्रयुक्त इति वाच्यम् । नित्यत्वानित्यत्वविवादे विशिष्टव्यतिरेकसाधनस्याप्राप्तकालत्वात् । विशिष्टाभावस्यातिरेके सविशेषणे हीति न्यायस्य ध्वसादिविषयत्वेनानित्यत्वाभावविषयतयैवानुमितिपर्यवमानकल्पनायोगात् । तदनतिरेके च प्रागभावे व्याप्तिभङ्गात् । अनित्यत्वे सत्यपि तत्र भावत्वाभावात् । अत एव नानित्यत्वव्यापकव्यभिचारित्वेन कार्यत्वस्य तद्व्यभिचारित्वमनुमेयम् । तथाच सूत्रकार 'नात्माश्रुतेः नित्यत्वाच्च ताभ्य' (ब्र० २. ३. १७) इति जीवस्य जन्माभावे नित्यत्व हेतुमाचक्षाणो ध्वसस्यान्यस्य वा जनिमतोऽनित्यत्वं मन्यते । अन्यथा तस्य ध्वसे व्यभिचारात् । न च नियतसत्त्वमेव विनाशानवच्छिन्नसत्ताकत्व नित्यत्वम्, 'त्यम्नेर्ध्रुवे' (वा० ४ २ १०४) इति भवत्यर्थे त्यब्विधानात् । तथा च ध्वसस्य जनिमत्त्वेऽपि निरुक्तनित्यत्वाभावादेवाव्यभिचार इति वाच्यम् । तव ध्वसे नित्यपदप्रयोगविरोधाद्, लाघवेनोत्तरावधिविधुरत्वस्याविनाशित्वस्य नियतत्वस्यैव वा नित्यशब्दार्थत्वाच्च । ध्वसेऽपि स्वतोऽन्यतो वानुपाख्यत्वव्यावृत्तिरूपभवत्यर्थसम्भवाच्च । अथवा तत एव ध्वंसस्यानित्यत्वं, नित्यपदप्रवृत्तिनिमित्तानियतसत्ताभावात्,

नि स्वरूपस्य तस्याविनाशित्वविकल्पायोगाच्च। न चैव पापध्वसनिवृत्तौ पापोन्मज्जनप्रसङ्ग, उपादानावस्थान्तररूपध्वंसवादेऽवस्थान्तरसामग्रीसन्निपाते तदप्रसङ्गात्। पापसामग्रीसन्निपाते च पापसजातीयमवस्थान्तरमेव। न तु ध्वस्तमेवोन्मज्जति, अवस्थान्तरप्रतिबन्धात्। अत एवातिरिक्तध्वसवादेऽपि प्रतियोग्युन्मज्जन प्रत्युक्तम्। विनष्टघटाया मृदि घटसामग्रीसमवधानेऽपि सजातीयोत्पत्तिप्रतिबन्धात्। न च ध्वसप्रागभावकालातिरिक्तकालस्य प्रतियोगिकालत्वनियम, अप्रयोजकत्वात्। लाघवेन स्वविरोधिकालातिरिक्तकालस्यैव प्रतियोगिकालत्वाच्च। ध्वसध्वसस्यापि विरोधित्वस्य फलबलकल्प्यत्वात्। न चैव विद्यया अविद्यादिध्वसस्याप्यनित्यत्वापत्ति, तस्य क्रियाव्याप्यत्वाभावेनाकार्यत्वात्। पुनर्ब्रह्मणोऽवस्थान्तरापादकसामग्रयन्तराभावाच्च। वस्तुतस्तु विद्यया नाविद्यादेर्ध्वंसः, किन्तु बाध एवेत्यग्रे वक्ष्यामः। न चैवमात्मोपासनासाध्यब्रह्मलोकफलस्याप्यनित्यत्वे 'न च पुनरावर्तत' इत्यादिविरोध इति वाच्यम्। 'स एतस्माज्जीवघनात् परात् पर पुरिशय पुरुषमीक्षते' इति श्रुतेर्ब्रह्मलोक एव सक्षात्कृतात्मतत्त्वस्य परान्तकाले कार्यात्यये तदध्यक्षेण सह मोक्षाभिप्रायत्वादनावृत्तिशब्दस्य। अत एवोपासनासाध्यस्यानित्यत्वे 'तमेव विद्वानमृत' इत्यादिश्रुतिबाध इति निरस्तम्। विदेर्ज्ञानार्थत्वेन ततोऽविद्यादिबाधे इह परामृतत्वोपपत्ते। 'तयोर्ध्वमायन्नमृतत्वमेति' इति चाप्लुष्टाविद्याकामकर्माशयस्यैवाभूतसम्प्लवस्थानाभिप्रायत्वात्। तथा च सूत्रम्—'अमृतत्वं चानुपोष्य' (ब्र० ४ २ ७) इति। उक्तविधया क्रममुक्त्यभिप्रायत्वाद् वा। आत्मोपासनाकर्मणोऽक्षयत्ववचन चेतरकर्मवैलक्षण्यादाभूतसम्प्लवस्थानफलत्वात् परामृतहेतुसाक्षात्कारफलत्वाद् वा।

अपिचैवमुपासिक्रियाया साक्षात्कारावधेरेव मुक्तिसाधनरूपत्वेऽपि कालदैर्घ्यादिकृत तारतम्यं न निह्नोतुं शक्यमिति मुक्तितारतम्यप्रसङ्ग। न च साधनरूपे तारतम्याभाव., आद्यप्रत्ययप्रभृतिसाक्षात्काररूपतापरिपाकावधेरेव साधनत्वात्। नहि साक्षात्काररूपान्तिमप्रत्ययोऽन्त्यप्रत्यय एव वा मुक्तिहेतु, तावन्मात्रस्योपासनाशब्दार्थत्वानुपपत्ते.। क्रियाबाहुल्ये च फलभूम्नोऽन्यत्र क्लृप्तत्वात्।

अपिचोपासनाविधिरपि धर्ममीमासयैव मीमासित इति ब्रह्ममीमासानारम्भप्रसङ्गः। श्रुत्यादिभिरेव *मन्त्रन्यायेन ब्रह्मणि विनियुज्यमाने वेदान्ते तद्वि-

* जै० अ०या० १. पा० २ अधि० ४ सू० ३१—५३

षयस्य ब्रह्मणोऽलौकिकस्यापि यूपाहवनीयन्यायेन सिद्ध्युपपत्तेः। लाघवानुगृहीत-कार्यत्वाद्यनुमानस्य सार्वज्ञ्याद्युपहारसमर्थस्यानुग्राहकत्वात् । यदि हि ब्रह्मात्म-तादात्म्यमुपेयेत, तर्ह्येव प्रत्यक्षादिविरोधशङ्कापरिहारेण विचारशास्त्रमर्थवत् स्यात्। न च परेण तदुपेयते । न च सिद्धे ब्रह्मणि समन्वयप्रतिपादनाय विचारारम्भः। वेदान्तस्य ज्ञानविधितात्पर्योपगमेन ब्रह्मणि पृथक् समन्वयायोगात् । लोके सिद्धेऽपि शब्दव्युत्पत्तेरुपगमाच्च । नहि वेदे सिद्धशक्तिरन्येन निरस्यते, जैमिने-रर्थवादनयेऽपि वेदान्तकार्यपरत्वविवक्षाया भवतानभ्युपगमात् । अन्यथार्थविरोधे तव शास्त्रैक्यानुपपत्तेः । नहि प्रभाकरस्येव लोकव्युत्पत्तिविरुद्धकार्यार्थत्वशङ्कोन्मेषः सूत्रकारस्य शक्यशङ्कः, न वार्वाचीनप्राभाकरपक्षस्यैव प्रतिक्षेपः प्राचीनस्य महर्षेः सूत्रकारस्य युक्तः कल्पयितुम् ।

अथोपनिषदा प्रधानाद्यर्थान्तरपरत्वव्युदासेन ब्रह्मसमन्वयाद्युपपादनाय शास्त्रारम्भः, न स्वप्रयोजनाय, सूत्रप्रणयनवैयर्थ्यात् । परस्य तवाधीतवेदमात्रस्य विचारप्रवृत्तौ शास्त्रान्तरावसराभावेन प्रधानाद्यर्थान्तरशङ्कानवकाशात् । न चौप-निषदैरेव सदादिपदैः प्रधानाद्यर्थान्तरोपस्थितिसम्भवः, तस्यालौकिकत्वेन व्युत्पत्त्य-सम्भवात्। अनुपस्थितमसम्भावितं चोपस्थाप्य तन्निरासः सूत्रकारस्य श्रममात्र-फलः स्याद्, अधीतमात्रवेदान्तावगतब्रह्मोपासनोपपत्तेः । यथाश्रुतगुणविशिष्ट-वस्तूपासनासाध्ये फले वस्तुनः प्रधानादिविवेकवैफल्यात्। यद्यप्याकाशादिपदस्या-र्थान्तरशङ्कासम्भवः, तथापि तावन्मात्रविचार उपयुज्यताम्। एतेनोपासनाविकल्प-समुच्चयादिकमपूर्वमिह व्युत्पादनीयमिति निरस्तम्। तथापि शेषविचारवैयर्थ्या-परिहारात् ॥

---

### सहकार्यन्तरविधिः ।

अपिचैव निदिध्यासनविधेः स्वप्राधान्ये 'सहकार्यन्तरविधिः पक्षेण तृतीयम् —' (ब्र० ३. ४. ४७) इति सूत्रं पाण्डित्यबाल्यशब्दितश्रवणमननापेक्षया तृतीयं यतो न पाण्डित्यमेव, अतो ब्रह्मसाक्षात्कारे वेदान्तवाक्यविचारस्य सहकार्यन्तर मुनिशब्दाभिधेयं निदिध्यासनं विधीयते, पक्षेण प्राप्तमपि भेददर्शनप्राबल्याद-प्राप्तमपि कथं न स्यादिति नियम्यत इत्येवमर्थकं विरुध्येत । यथा च साधना-न्तराप्राप्तावपि नियमः, तथा श्रवणनियमे दर्शितमस्माभिः ।

कश्चित् पुनराह — श्रवणमननाभ्यामन्यदेव पाण्डित्यादित्रयमुपासनारूपाया विद्यायाः सहकार्यन्तरं विधीयते । तत्र च मौनं श्रवणमननावगतेश्वरभक्तिविवृद्धसत्त्वोपनतात् ततोऽतिशयितपरिशुद्धपरिपूर्णब्रह्मवेदनरूपात् पाण्डित्यादन्यदालम्बनसंशीलनरूपं बाल्यपाण्डित्यापेक्षया तृतीयं सहकार्यन्तरं विधीयते । मुनिशब्दस्याश्रमविशेष इव पक्षेण ज्ञानविशेषवति व्यासादौ 'मुनीनामप्यहं व्यास' इत्यादिप्रयोगदर्शनादित्येवमर्थके सूत्रे न श्रवणादेः प्रसङ्ग इति ।

तन्न । 'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः' इत्यत्र पाण्डित्यादिशब्दैः श्रवणादेरेवाभिधेयत्वात् । 'आत्मा वा अरे द्रष्टव्यः' इत्यादिवाक्यच्छायानुकारेण त्रिसाधनफलप्रत्यभिज्ञानात् । तथाहि, ब्रह्म जानातीति ब्राह्मणः,

"य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया"

इत्यादिस्मरणात् । तस्माद् ब्राह्मण इति द्रष्टव्यपदार्थः प्रतिसन्धीयते । पण्डा शास्त्रविज्ञानमस्य सञ्जातमिति पण्डितः । तस्येदं कर्म पाण्डित्यमित्यनेन वाक्यार्थज्ञानावसायि श्रवणं, बाल्यशब्देन च दम्भदर्पादिवैधुर्यपरेण मननं लक्ष्यते, विना मननमप्रतिष्ठितश्रौतविज्ञानो हि दम्भदर्पादिना पूर्यते, 'अनूचानमानी स्तब्ध एयाये'त्यादिलिङ्गदर्शनात् । 'अथ मुनिरि'ति परिशेषाद् मननाद् मुनिरिति व्युत्पत्त्या ज्ञानातिशयवति व्यासादौ प्रयोगदर्शनाच्च निदिध्यासनमेव । तत्र हि सर्वेन्द्रियव्यापारोपरमरूपं मौनमुपपद्यते । 'अथ ब्राह्मण' इति तदेव फलमनुकीर्त्यते स्तवनाय । अन्यथा श्रवणमननपरिशुद्धावगते वस्तुनि भक्तिपर्यन्तध्रुवानुस्मृतिरूपनिदिध्यासनातिरिक्तस्य पाण्डित्यस्य भक्तिनिष्पाद्यस्यालम्बनसंशीलनस्य वा दुर्निर्वचनत्वात् सूत्रस्य निर्विषयत्वप्रसङ्गः । 'भक्त्या त्वनन्यया शक्योऽहं' 'प्रवेष्टुं चे'ति श्रवणादिसाध्यनिदिध्यासनपरिपाकात्मा भक्तिः ब्रह्मप्राप्तिसाधनमुच्यत इत्युदाहृत्य तत्साधनपाण्डित्यादिसाधनमिहोच्यते भक्तिरिति व्याहृतवचनस्य दासविनेयैरप्युपहास्यत्वात् । एवं सति मौनस्य विधेयत्वे तृतीयशब्दस्य पाण्डित्यादिव्यवच्छेदेनापेक्षितहेतुपरत्वसम्भवे च सहकार्यन्तरस्य विधिरिति समासादिसामञ्जस्यसम्भवे च पक्षेण सहकार्यन्तरविधिरित्येवान्वयसामञ्जस्ये च तृतीयं मौनं

सहकार्यन्तर च तद् विधीयत इति विधिश्च सहकार्यन्तरविधिरिति तृतीयशब्दानर्थक्येन विशेषणसमासकल्पनाक्लेशेन विधिरिति शब्दासामञ्जस्येन च पक्षेण प्रकृष्टमननशीले मुनिशब्दप्रयोगादित्यध्याहारेण च सूत्रयोजना चासङ्गतेति स्वावसरे वक्ष्याम । न चैव श्रोतव्यादिसिद्धानुवादित्वे सहकार्यन्तरविधिरिति विरुध्येतेति वाच्यम् । शाखाभेद इवैकशाख्येऽप्युपदेश्यभेदेनाप्राप्तत्वात् । न चैवमपि श्रोतव्यादिवाक्यभेदप्रसङ्ग महावाक्यस्यैकत्वादङ्गविशिष्टा(ङ्गी ? ङ्गि)तात्पर्यकत्वात्, पृथगुपहृतार्थसमावेशने विधिव्यापारागौरवाच्च । तस्माद् निदिध्यासनमुपासनमेव स्वतन्त्र मोक्षसाधनं विधीयत इति बालिशभाषितमुपेक्षणीय विद्वद्भि । तस्माद्

द्रष्टव्यपदनिर्दिष्टफलश्रवणगोचर ।
मननादीतिकर्तव्य श्रोतव्य इति नो विधि ॥

---

**वेदान्ते विध्यसम्भवशङ्का ।**

नन्वैकात्म्येदपरे वेदान्ते विधिरेव न सम्भवति । दर्शपूर्णमासेदपरेऽपि प्रकरणे प्रयाजादिविधाववान्तरतात्पर्यमुपपद्यते, अर्थाविरोधात् । न तु वेदानुवचनादिविधौ विचारादिविधौ वा, निर्विशेषब्रह्मात्मतत्त्वविषयत्वेनार्थविरोधात् । विधिर्हि नियोज्यमाकाङ्क्षन् न नियोज्यब्रह्मात्मदर्शनेन विरुध्यते । यथाह भगवान् भाष्यकार: —

**" वेदान्ते लिङादयः श्रूयमाणा ‡अप्यनियोज्यब्रह्मात्मतत्त्वविषयत्वात् कुण्ठीभवन्ति उपलादिप्रयुक्तक्षुर§तैक्ष्ण्यवत्"**

इति । अन्यत्रापि

"त्व कुरु त्वं तदेवेति प्रत्ययावेककालिकौ ।
एकनीडौ कथ स्यातां विरुद्धौ न्यायतो वद ॥"

इति । अत एव प्रकरणादुत्कृष्य विधीयते 'तिस्रो रात्रीर्व्रत चरे'दित्यादिवदिति निरस्तम् । विषयविरोधेन वैषम्यात् । निर्विशेषब्रह्मात्मालम्बनो हि विचारोऽन्यो वा विधित्स्यते । न चैव सम्भवति, नियुक्तस्यास्मिन्नधिकृतोऽह कर्ता ममेदं कर्त-

---

१. 'न प', २ 'त्मवि' ख पाठ

---

‡ 'अनियोज्यविषयत्वात्' । § तैक्ष्ण्यादिवत्' इति मुद्रितसूत्रभाष्यपाठ ।

व्यमिति ब्रह्मप्रत्ययविपरीतप्रत्ययोत्पत्तेः । न च निर्विशेषस्वभावाविरुद्धौपाधिककर्तृत्वमालम्ब्य विधिं प्रत्येष्यत इति युक्तम् । स्वभावनिर्विशेष औपाधिकविशेषस्याप्ययोगात् । तथा च सूत्र — 'न स्थानतोऽपि परस्योभयलिङ्गम् —' (ब्र० ३. २. ११) इति । नहि स्वच्छः सन् स्फटिकोऽलक्तादियोगादस्वच्छो भवति । आरोपस्तु स्यात् । न तु निर्विशेषात्मावबोधे तदारोपालम्बना विधिप्रतिपत्तिः, ब्रह्मविद्यानर्थक्यप्रसङ्गात् । 'उपमर्दं च' (ब्र० ३. ४. १६) इति सूत्रविरोधाच्च । '**अश्लेष इति चागामिषु कर्मसु कर्तृत्वमेव न प्रतिपद्यते ब्रह्मविदि**'ति भाष्यविरोधाच्च । विषयानवबोधे विचारादिविधिप्रत्ययानुपपत्तिरेवेति चेत् ।

उच्यते । यज्ञादयो विचारादयो वा विवक्षितब्रह्मात्मावबोधोपयोगादवान्तरतात्पर्येण विधीयन्ते । न चार्थविरोधः, निसर्गसिद्धकर्तृत्वारोपालम्बनेनैव विचारादिविधिप्रतिपत्तेः । निर्विशेषात्मविषयत्वेऽपि तद्विधेरधिकारिणो निर्विचिकित्सात्मापरोक्षाभावेन कर्तृत्वाद्यारोपानुपमर्दे ममेदमिष्टसाधनमहमत्राधिकृतः कुर्वीयेतिप्रतिपत्त्यविघातात् । न च तदत्यन्ताप्रतिपत्तिः, येन तद्विषयो विचारादिविधिर्न प्रतिपद्येत, अधीतमात्रेण तदापाताधिगमात् ।

अथवा, अज्ञाताकलितविषय एव ज्ञानोपायविधिः प्रतिपत्स्यते जिज्ञासाधिकारानुरोधात् । अज्ञातरूपेणैव तद्विधिविषयावच्छेदकतयात्मनो विधिप्रतिपत्तिविषयत्वेन कर्तृत्वाद्यनुपमर्दे विध्यननुष्ठानाप्रसङ्गात् । विधिप्रत्ययकुण्ठतादिभाष्यं तु निर्विशेषब्रह्मात्मावबोधोपजीवनप्रवृत्तिविधिविषयम् । यथा 'तत्त्वमसि' 'उपास्स्वे'ति[1] नहीदं शक्यमुभयं प्रतिपत्तुम् । प्रतिबुध्य तु नतरामनियोज्यत्वात् तस्य कर्तृत्वाद्युपमर्दादिति । अन्यथा '**किमर्थानि तर्हि विधिच्छायापन्नानि आत्मा वा अरे द्रष्टव्यः श्रोतव्य इत्यादीनि, स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः**' इति श्रवणादिनियमविध्युपगमभाष्यविरोधात् । तस्मादुपपन्नः श्रवणादिविधिरिति ।

---

### अधिकारिविशेषणम् ।

अत्र च मुमुक्षैवाधिकारिविशेषणं, कामाधिकारत्वात् । विवेकादेरपि सामर्थ्येन मुमुक्षाहेतुतया तादर्थ्याद्, विचारविधिस्थलेषु तत्तत्संकीर्तनस्य मुमुक्षालक्षणार्थत्वात्, कारणोपन्यासे कार्ये सम्प्रत्ययसम्भवादिति केचित् ।

---

१ 'त्मबो' ख पाठ.

अत्रेद वक्तव्यम् । न मुमुक्षैवाधिकारिविशेषण, जिज्ञासोरधिकारात् । अपिच कामाधिकारेऽपि न कामनैव पुष्कलाधिकारनिमित्तम् । अर्थित्वसामर्थ्यादेरिवान्यस्यापि यथाविधानमधिकारनिमित्तत्वसम्भवात् । अन्यथा तत्र तत्र विचारविधिषु विवेकादिकीर्तनवैयर्थ्यात् । न च मुमुक्षानुमानेनार्थवत्त्वम् । विवेकादिविरहिणामपि मुमुक्षाया नित्यसिद्धत्वेन व्यभिचारात् । मात्रयापि दुःखानुषङ्गविकलस्य निरतिशयसुखस्य सर्वदा सर्वप्राणिसमीहितत्वात् । नहि निर्गलितनिखिलव्यलीकनिरतिशयसुखाभिलाषादन्या मुमुक्षा नाम । न तेषां समस्तसासारिकदु खातीतस्वरूपसुखाभिलाषलक्षणा मुमुक्षा, किन्तु दु.खासम्भेदेन निरतिशयत्वेन च विषयसुखाभिलाष एवेति चेत् । न, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रते । स्वरूपसुखस्यैव विषयवृत्त्यवच्छेदे वैषयिकत्वात् । 'आनन्दो ब्रह्मे'त्यादिश्रुतेरात्मन. परमप्रेमास्पदत्वाच्च । सुखरूपत्वे सति विषयसुखस्य तदतिरेककल्पने गौरवाद् मानाभावाच्च । दुःख तु स्वहेतुकमन्यदुपेयते । नित्यसुखात्मन इव नित्यदु'खात्मनो विषयाभिव्यङ्ग्यस्य कस्यचिदमानसिद्धत्वात् । न चैवं सुखे कामनानुपपत्तिः, सुखरूपात्मावभासेऽपि यावदज्ञान दु खसम्भेदावभासानुवृत्तेः, तदुपशमे विषयवृत्त्यभिव्यक्तसुखकामनायास्तद्भेदविभ्रममूलत्वात् । सुखोत्पादादिप्रतीतेरपि व्यञ्जकवृत्त्युपाधिकत्वात्, तत्र च निरुक्ताभिलाषस्य मुमुक्षारूपपर्यवसानात् । ननूज्झितसाधनफलैषण मुक्तिसाधनप्रवृत्त्यौपयिकी मुमुक्षा न विवेकादिहीनानामिति चेत् । न, अधिगते तत्साधने शक्ये च तदभिलाषिणो विषयेष्विव विवेकादिशून्यस्यापि प्रवृत्त्यविरोधात् । तथापि विषयसुखाभिमुखचेता निरातिशयसुखाभिलाषेऽपि विषयभोगविच्छेदात्मके ब्रह्मविज्ञाने मुक्त्युपाये न प्रवर्त्येत[1] इति चेत्, तर्हि न कश्चिद् मुमुक्षाया विवेकादेरुपयोग । किन्तु नित्यानित्यविवेकाभावे नित्यपुमर्थोपायप्रवृत्तेरेवानुपपत्तेः, विषयवैराग्याभावे तत्रैव प्रवृत्त्यनुपपत्ते., शमाद्यभावे तत्र प्रवृत्तिसातत्यानुपपत्तेश्च फलावधिमुक्त्युपायप्रवृत्तावेव । अथापि स्याद् विवेकेनानित्यत्वादिदोषदर्शिनो विषयवैराग्यादिन्द्रियप्रवर्तनाभावे शमादिरित्यन्वयव्यतिरेकासिद्धहेतुहेतुमत्तया न सर्वेषा विचारप्रवृत्तौ स्वतन्त्रनिमित्तत्वमिति ।

---

१. 'त' ख. पाठ .

नैव स्यात् । विवेकाभावेऽपि रोषादिनिमित्तस्य वैराग्यस्य, तदभावेऽपीन्द्रियदौर्बल्यनिमित्तशमादेश्च दर्शनेन व्यभिचारात् । तस्य च विचारप्रवृत्तावनुपयोगात् । तद्व्यावृत्त्या विवेकादेरपि पृथग्विचारविधिनिमित्तभावस्याभ्युपेयत्वात् । चतुर्णामपि विचाराधिकारनिमित्तत्वे ह्यन्योन्यसाध्यसाधनभूता एव विवेकादयस्तथा नियम्यन्ते । मुमुक्षुत्वे सत्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येति टीकाया च न मुमुक्षुत्वमेवाधिकारिविशेषणमिति तद्ग्रहणम् । किं तर्हि, क्वचित् क्रमनियतपठितानामन्तिमग्रहणे पूर्वमर्थसिद्धं भवतीति । तथा च भाष्य—

"तेषु हि सत्सु शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च"

इति । अन्यथा साधनचतुष्टयसम्पत्त्यानन्तर्यं विचारस्य न सूच्येत । तस्याधिकारिविशेषणेयत्तावधारणया तत्प्रवृत्तिफलत्वात् । एवं च तत्र तत्र विचारविधिषु नियाम्यविवेकादयोऽङ्गतयोपादीयन्ते, सामर्थ्योपपत्तेः । अङ्गत्वेऽपि विधिप्रतिपत्त्युपाधितयाधिकारनिमित्तत्वं चाविरुद्धमित्यचकथाम ॥

तत्र यथा तैत्तिरीये तावदानन्दमीमांसायामुत्तरोत्तरमानन्दोत्कर्षप्रतिपादनस्य पूर्वपूर्वापकर्षनान्तरीयकतयार्थिको विवेकः । 'श्रोत्रियस्य चाकामहतस्ये'त्यकामहतत्वं वैराग्यं च निरतिशयानन्दावाप्तिसाधनमवगम्यमानं विचारपूर्वकज्ञानद्वारेत्यवगम्यते । विवेकादेर्विचारप्रवृत्तौ सामर्थ्याद् विद्याया एव तादृशानन्दाप्तिरूपमोक्षसाधनत्वाच्च ।

तथा कठवल्ल्यामपि मृत्यूपच्छन्दितविषयविरक्तस्य नचिकेतसो विद्योपदेशदर्शनाद् वैराग्यं विद्यासाधनमवगम्यते । तथा मुण्डकेऽपि 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन, तद्विज्ञानार्थं स गुरुमेवाभिगच्छेद्' इत्याहत्य विवेकवैराग्ये विचाराङ्गतया विधीयेते, गुर्वभिगमनस्य विचाराद्यर्थत्वात् । 'प्रशान्तचित्ताय शमान्विताये'ति शमादि च गृह्यते । वाजसनेयके च 'शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येदि'ति शमादिगुणो विचारो विधीयते । धात्वर्थदर्शनस्यापुरुषतन्त्रस्याविधेयतया पश्येदिति तत्साधनविचारस्य लक्षणीयत्वात् । 'पत्न्यवेक्षत' इत्यादौ विधेयार्थलक्षणाया उपगम्येत्वन 'न विधौ परः शब्दार्थ' इति न्यायस्य तात्पर्यविषयेतरपरत्वात् ।

---

१. 'धु स' ख. पाठ.

तत्रैवान्यत्र 'आत्मनस्तु कामाय सर्वं प्रियं भवति', 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्य' इति स्वव्यतिरिक्तस्य स्वतः प्रियत्वाभावविवेचने तन्मूलवैराग्यस्यापि विवक्षितत्वाद् विवेकवैराग्यविशिष्टविचारविधिरवगम्यते ।

न चैवमामिक्षावाजिनयागाविव विचारा भिद्येरन् गुणभेदादिति शङ्क्यम् । संयोगरूपचोदनाख्यानामविशेषेण शाखान्तरे कर्मणामिवैकत्वे गुणोपसंहारोपपत्ते । तथा च जैमिनीयं सूत्रम् — 'एकं वा संयोगरूपचोदनाख्याविशेषाद्' (जै० २. ४. ९) इति । वैयासिकं च — 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषाद्' (ब्र०३. ३. १) इति, 'उपसंहारोऽर्थाभेदाद् —' (ब्र० ३. ३. ५) इति च । ऐकशाख्ये च 'आत्मा श्रोतव्यः' 'आत्मानं पश्येदि'त्यादौ ब्राह्मणभेदेनापौनरुक्त्यात् । अथवा $'भूयस्त्वेनोभयश्रुती' (जै० ३ ३ १०) इति न्यायेनैकत्र सगुणविधानमन्यत्र तदनुवादेन गुणमात्रविधानमिति व्यवस्थोपपत्तेः । प्रकृतसंयोगाभावे हि गुणः कर्म भिन्दीत यथा वाजिनम् । तथा च जैमिनिः —'गुणश्चापूर्वसंयोगे वाक्ययोः समत्वाद्' (जै० २. २ २३) इति ।

ननु च श्रोतव्यवाक्यसिद्धविचारानुवादेन शमाद्यनेकगुणविधाने वाक्यभेदः । शान्तिवाक्यविहितविचारानुवादे न श्रोतव्यवाक्ये किञ्चिद् विधेयमस्ति, अधिकारस्यापि तत्रैव लाभात् । विचारानुवादेन तत्र मननाद्यनेकगुणविधौ च वाक्यभेदादिति चेत् । न । श्रोतव्यवाक्ये विवेकादिगुणविधानोपपत्तेः 'आत्मनस्तु कामाय सर्वं प्रियं भवति,' 'मन्तव्यो निदिध्यासितव्य' इति गुणविधिवाक्यानि भिन्नान्येवेति वाक्यभेदस्याप्रसञ्जनीयत्वात् ।

यद्वा श्रोतव्यादिवाक्य एव विशिष्टविचारविधिः, विस्पष्टत्वाद्, 'ब्रह्म तं परादादि'त्यादिविषयप्रपञ्चनेन रूपलाभात् स्वरूपफलोपकारिबहुगुणसमन्वयात्, 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्' 'एतावदरे खल्वमृतत्वमि'त्यर्थवादाच्च । तदनुवादेन च शमाद्यनेकगुणविधाने वाक्यभेद इष्यत एव । भूत्वेत्यस्य तन्त्रतया यत् पश्येत् तच्छान्तो भूत्वा दान्तो भूत्वेति प्रत्येकमभिसम्बन्धात् । यथाहुः ।

"भूत्वेत्यस्याभिसम्बन्धः सर्वैः शान्तादिभिः पदैः"

---

$ 'भूयस्त्वेनोभयश्रुति.' इति मुद्रितजैमिनिसूत्रपाठः ।

इति । यद्वा न वाक्यभेद । तत्र नाम वाक्यभेदो यत्र प्रधानकरणावच्छिन्ना भावना प्राप्तामनूद्य तदवच्छेदकतया गुणा विधीयन्ते । यथा 'चित्रया यजेत पशुकाम' इत्यादौ प्राप्तयागभावनानुवादेन तत्र चित्रत्वस्त्रीत्वाद्यनेकगुणविधाने वाक्यभेदः । न चेह पश्येदिति विचारभावनानुवादेन तदवच्छेदकतया शमादयो विधीयन्ते । किं तर्हि, भूत्वेति भवनाक्षिप्ता भावना युगपदनेकगुणावच्छिन्नैव विधीयत इति । तस्माद् विविदिषावाक्य इव शान्तिवाक्येऽपि विधेरनेकावच्छिन्नैकभावनाविषयतया शमादयश्च समुच्चीयन्ते । न चैवमुपरतिपदाभिधेयसन्न्यासस्याप्राप्तेर्विधि. शमादेर्नियम इति विधिवैरूप्यापत्तिरिति वाच्यम् । विवेकवैराग्यादौ सति कर्मणामनुपयोग पश्यतस्तत्प्राप्ते । अथवा 'पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ती'ति स्वरूपस्य 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती'ति विनियोगस्य च प्राप्तत्वेन तस्यापि नियाम्यत्वात् । स्वाभावस्य वान्यस्य वा विरोधिनो व्यावृत्त्या प्राप्तस्य सतोऽप्राप्तांशपरिपूरणात्मकनियमस्य सर्वत्रैवाविशेषात् । अथवा प्राप्तसन्न्यासमात्रानुवादेन शेषनियमविधिरस्तु । न विधिवैरूप्यदोष । उपरतिपदेन सन्न्यासो वा माभिधायि । मनसो बहिरिन्द्रियप्रवृत्त्यनुरोधनिरोध शम. । बहिरिन्द्रियस्य विचारविरोधिविषयप्रवृत्तिनिरोधो दम । इष्टविषयमनोराज्यनिवृत्तिरुपरति. । तितिक्षा द्वन्द्वसहनम् । निष्फलानिष्टविषयमनोराज्यनिवृत्तिः समाधानम् । श्रद्धा पुनरास्तिक्यरूपा भक्तिरूपा चेत्यर्थभेदात् सर्वस्य चास्य नियमोपपत्तेरवैरूप्यमिति ॥

---

## सन्न्यासस्य श्रवणाङ्गत्वम् ।

सन्न्यासश्च श्रवणाङ्ग, शमादिभि सह नियमेन समुच्चयात् । न च 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती'ति श्रवणवदेव ज्ञानफलत्वश्रवणात् फलवत्सन्निधावफलत्वाभावादुभयोरप्येकफलत्वेन प्रकरणित्वादनङ्ग सन्न्यास इति वाच्यम् । श्रवणाङ्गशमादिसमुच्चयविरोधात् । न च शमाद्यपि मुमुक्षाजिज्ञासाद्विद्वारा ज्ञानाङ्ग, 'प्रशान्तचित्ताय शमान्विताय' 'प्रोवाच ता तत्त्वतो ब्रह्मविद्या'मि'ति श्रवणार्थत्वावगमात् । 'एतमेवे'त्यादौ च नाहत्य ज्ञानफलत्वमुच्यते । न खलु वेदितुमिच्छन्त इति श्रूयते । तस्याहत्य मुक्तिफलत्वानुपपत्त्या व्यवधानकल्पनाया च श्रवणाङ्गत्वमेव परस्पराकाङ्क्षालक्षणात प्रकरणादवकल्प्यताम् । निरन्तरश्रवणादिविरोधिवैध-

कर्मविक्षेपपरिहारेण ब्रह्मतत्त्वसाक्षात्कारफलश्रवणाद्युपकारित्वोपपत्ते । जन्मान्तरीय-मावारण्येन सन्न्यासस्य ज्ञानसाधनत्वे चादृष्टद्वारकल्पनापत्ते । एतेन शान्तिवाक्ये विचारमुपलक्ष्य तेन सह ज्ञाने सन्न्यासस्य समुच्चयो विधीयत इति निरस्तम् । शमाद्युपादानवैफल्यात् । एकेनैव तद्वत्कर्तृकविचारोपलक्षणसम्भवाददृष्टकल्पना-गौरवाच्च । 'त्यजतैव हि तद् ज्ञेयम्' इत्यङ्गिफलेनाङ्गस्य स्तुतिमात्र पशुफलसोमा-पौष्णस्याङ्गस्योदुम्बरताया इव पशुफलेन । अन्यथा 'अथ परिव्राडि'त्यादि 'ब्रह्म भूयाय भवति', 'त्यागेनैके अमृतत्वमानशुरि'ति श्रुतेराहत्य मुक्तिफलत्वापत्ते । अपि चैव मुमुक्षोरपि विहितकर्मलोपभयेन श्रवणादिविधेरननुष्ठानमेवापद्येत । उक्त चाचार्यैः —

"मूत्राशङ्को यथोदङ्को नाग्रहीदमृत मुनि. ।
कर्मनाशभयाज्जन्तोरात्मज्ञानाग्रहस्तथा ॥"

इति श्रवणाङ्गतया सन्न्यासविधौ च न स दोषः । अत एव मुमुक्षाजिज्ञासोदयावधिरेव कर्माधिकार इति न्यायोन्मेषात्, 'सन्न्यस्य श्रवण कुर्यात्', 'वेदानिम च लोकममु च परित्यज्यात्मानमन्विच्छेद्' (आप० ध० सू० प्र० २ ख० २१. १३) इति तदङ्गत्वस्मरणाच्च । न च क्त्वाश्रुतिः क्रममात्रपरा, 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'त्यादिवदिति वाच्यम् । क्त्वाश्रुत्यवगमितैककर्तृकत्वाक्षिप्तप्रयोगैक्योपपादकतया सामर्थ्यानुमिताङ्गाङ्गिभावोपगमे बाधकाभावात् । अन्यथा भिन्नकर्तृकत्वे 'समानकर्तृकयो. पूर्वकाले' (३ ४. २१)इत्यनुशासनविरोधात् । दर्शादौ च पृथगविकारत्वादविधिप्रत्यासत्त्या च प्रकरणान्तरेऽपि प्रयोजनान्यत्वानवगमादिष्ट्वेति पूर्वकालत्वमात्र लक्ष्यते । सोमेनेति द्रव्योपादानस्य साधिकारप्रकृतप्रत्यभिज्ञानार्थतया 'सन्निधौ त्वविभागाद्—' (जै० २ ३ २६) इति न्यायेन सोमयागस्य दर्शाद्यङ्गतया विधेयत्वायोगाच्च ॥

---

### आतुरसन्न्यासस्य श्रवणानङ्गत्वम् ।

नन्वेव 'यद्यातुरः स्यान्मनसा वाचा वा सन्यसेदि'त्यातुरसंन्यासविधिविरोध, आतुरस्य श्रवणानधिकारितया तदङ्गविधिवैयर्थ्यात् । न च ज्ञानार्थात् पारमहंस्यादन्यद् ब्रह्मलोकफल सन्यासान्तरमत्र विधीयत इति युक्तम् । 'अथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रो[1]हो भैक्षाणो[2] ब्रह्मभूयाय भवति' इति पूर्ववाक्यस्य 'एष पन्था ब्रह्मणा हानुवित्तस्तेनैति सन्यासी ब्रह्मविद्' इत्युत्तरवाक्यस्य च तत्परत्वे तत्सन्दष्टस्यापि तत्परत्वौचित्यात् । 'एष पन्था' इत्यविशेषेण ब्रह्म-

१ 'ति' ख पाठ

२ ह्री भैक्षण इति मुद्रितजाबालोपनिषदि दृश्यते ।

साक्षात्कारोपायत्वनिर्देशात् । अन्यथास्य वाक्यस्य ब्रह्मलोकफलपरत्वे चैष इत्यविशेषादनातुरसन्यासस्यापि ब्रह्मलोकफलत्वापत्ते. । तस्मादातुरसन्यासानुरोधेनादृष्टद्वारा ज्ञानाङ्ग सन्यासो न श्रवणाङ्गमिति वेद् ।

उच्यते— 'यदहरेव विरजेत् तदहरेव प्रव्रजेत्', 'उत्थाय भिक्षाचर्यं चरन्ती'त्याद्युत्पन्नसन्यासस्य 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती'त्यादौ श्रवणाङ्गत्वेनेव 'सन्यासयोगाद् यतय' शुद्धसत्वाः ते ब्रह्मलोके तु', 'ब्राह्म सन्यासिनां स्मृतम्', 'सन्यासाद् ब्रह्मण' स्थानम्' इत्यादौ ब्रह्मलोकसंयोगेनापि विधिरुन्नीयते, अपूर्वत्वात् । न चैतमेवेत्यवधारणाद् नान्यफलः सन्यास इति साम्प्रतम्, उन्नेयविधिरूपस्यास्य तत्सम्बन्धविधावन्यसम्बन्धनिषेधे चावृत्तिकल्पनागौरवात् । यत्तु सन्यासान्तरविषयेय स्मृतिरिति । तन्न । व्यवच्छेदकाभावात् । यद्यपि ब्रह्मलोकादपि विरक्तस्य मुमुक्षोर्जिज्ञासोरेव पारमहंस्येऽधिकार[1], तथाप्यतिमात्रतीव्रजिज्ञासायां मतिमान्द्यादिना श्रवणानधिकारिणो ब्रह्मलोकेऽपि तत्त्व विज्ञाय मुच्येयेति कामयमानस्य तादर्थ्येन सन्यासाविरोध. । तद्विषया चेयमनावृत्ति श्रुति 'न च पुनरावर्तते' इत्याद्या । 'ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे' इत्यादिदर्शनात् । अत एव 'इममानवमावर्त नावर्तन्त' इति ब्रह्मलोकादविरक्ताना मानवान्तरे पुनरावृत्तिपरमुपपन्नमनावृत्तिवचनस्य तद्विरक्तविषयत्वात् ।

यदपि ज्ञानार्थसन्यासे कुतोऽपि श्रवणादिप्रतिबन्धे तत्परिपूर्त्यभावे वा स्वनुष्ठिततदाश्रमधर्मस्य तन्नान्तरीयकब्रह्मलोकपरेयमिति । तदपि न । तन्नान्तरीयकत्वे मानाभावात् । योगसंसिद्धिमप्राप्तस्य योगभ्रष्टस्य

"प्राप्य पुण्यकृता लोकानुषित्वा शाश्वती· समा ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते" ॥

इति पुनरावृत्त्यभिधानेन नान्तरीयकब्रह्मलोकपरत्वाभावात् । अन्यथा ततोऽपि विर-

१ धि' क. पाठ

क्तम्यापुनरावृत्तिश्रुतिविरोधात्। अपि च ब्रह्मलोकमन्तरा किं न भवति येन तस्य ना तरीयकता। न तावत् सन्यास। ज्ञानार्थतया तत्प्रवृत्ते। न च तदनन्तर कुतोऽपि श्रवणादिप्रतिबन्धे तमन्तरा तद्धर्मानुष्ठान न भवति। सन्यासस्य श्रवणानङ्गत्वमते जन्मान्तरीयज्ञानार्थतयापि पुष्कलतदनुष्ठानोपपत्ते। आरब्धकाम्यस्यापि नित्यवद्भावेनोद्देश्यफलासम्भवेऽपि सधर्मकस्यावश्यानुष्ठेयत्वाच्च। अन्यथा पातित्यापातात्। नाप्युद्देश्यज्ञानमेव तमन्तरा न भवति। कृतश्रवणादेरिहापि तद्भावात्। तस्माच्छ्रवणादियोगे ज्ञानार्थस्यैव सन्यासस्य तदसम्भवनिमित्ते ज्ञानफलादपनीय ब्रह्मलोकफलसम्बन्धो विधीयत इति वा[2] वाच्यम्। *अभ्युदितेष्टौ प्रकृतदेवताभ्यो हविरपनीय देवतान्तरसम्बन्धवत्। एव चातुरस्यापि श्रवणानधिकारितया स एव सन्यासो ब्रह्मलोकफलसम्बन्धेन विधीयमान स्तत्कर्तृकत्वनिमित्ते मनसा वाचा वा प्रैषोच्चारणमात्रेण सम्पूर्णोपकार उपदिश्यते, आज्यभागाभ्यामेव गृहमेधीयवत्। अथवा प्रकृतपारमहंस्यविकृतिरूपो यावत् तदुक्तपरिपूर्णोपकारो ब्रह्मलोकद्वारा ब्रह्मज्ञानफलायातुरसन्यासो विधीयते। 'एष पन्था' इति चैष एव परामृश्यते सन्निहितत्वात्। पथित्वमनुकीर्त्य 'तेनैती'त्यभिधानाच्च ब्रह्मलोकमिति पूर्यते। तस्यापि विरक्ताधिकारिकत्वात्। 'ब्रह्मविद् भवती'त्यपेक्षितफलमुपसंह्रियते। 'ब्रह्मभूयाय भवती'ति प्रकृतैरभिहितफलत्वेन निराकाङ्क्षत्वात्, श्रवणाद्युपकारकतया तत्साध्यज्ञानस्यापि ब्रह्मभूयान्ततयैव फलत्वोपगमात्। यत्तु विज्ञानेश्वरवचन 'न केवलमैहिकमेव पारिव्राज्य ज्ञानसाधनम्। अपितु जन्मान्तरीयमपि' इति, तन्न सन्यासस्य श्रौत श्रवणाङ्गत्वमुपरुन्धे।

"जन्मान्तरेषु यदि साधनजातमासीत् संन्यासपूर्वकमिदं श्रवणादिरूपम्"

इति सक्षेपशारीरकोक्ते.। संन्यस्यैव कृतश्रवणादेर्जन्मान्तरारम्भककर्मशक्त्यादिप्रतिबन्धेनानुदितविद्यस्य प्रतिबन्धक्षयेऽनन्तरजन्मनि भरतवामदेवादेरिव तत्संस्कारदार्ढ्येन पिशाचकन्यायेन वाक्यश्रवणमात्रादेव ज्ञानोदयसम्भवादाश्रमान्तरेऽपि

---

१ 'या पु', २ 'ति वाच्य' ख. पाठ

---

* जै० अध्या० ९. पा० ४. अधि० ११. सू० ४१ ४२

विमुक्तिरुपपद्यत इत्येवपरत्वोपपत्तानदृष्टकद्वारा ज्ञानार्थ एव सन्यास इत्येतद्भिप्रायकल्पनायोगाद् । तस्मात् सन्यासः श्रवणाङ्गम् । गृहस्थादीना त्वर्थवादाद्युन्नेयाधिकारतया स्मृत्यनुमेयाधिकारतत्तत्प्रयोगाविरोधेन

"दिने दिने च वेदान्तश्रवणाद् भक्तिसंयुतात् ।
गुरुशुश्रूषया लब्धात् कृच्छ्राशीतिफल लभेत्" ॥

इति फलान्तरसयोगविहिते श्रवण यज्ञादावेव क्रत्वर्थाहृतस्य प्रतिबन्धाभावेन तादर्थ्येन प्रवृत्तानां दृष्टसामर्थ्यात् प्रमाणाद्यसम्भावनानिवृत्तिर्भवन्ती न निवार्यते । जन्मान्तरे च तादर्थ्येन संन्यस्य ज्ञानाय श्रवणाद्यनुष्ठाने प्राचीनतदसभावनादिनिवृत्तिसस्कारसहकारेण झटिति श्रवणादि परिपच्यते । एतदभिप्रेत्य

"वानप्रस्थगृहस्थनैष्ठिकजनैरन्यैश्च वर्णाश्रमे
कर्तव्यत्वनिसेवित भवति वै जन्मान्तरे पावकम् ।
विद्याया श्रवणादि लक्षणमिदम्" ॥

इत्याद्युदित संक्षेपशारीरकेऽपि । एव सति 'अरुन्मुखान् यतीन्', 'नित्य कर्म परित्यज्य' इत्यादिकमक्लेशेनोपपादित स्यात् । सन्यासादिनारब्धश्रवणस्य काम्यस्यापि नित्यवद्भावात् तत्त्यागे प्रत्यवायोपपत्तेः । अनङ्गत्वे तु न तथा, श्रवणस्यानारम्भादिति । तस्माद् विवेकवैराग्यशमदमसन्यासाद्या विचारप्रवृत्तावपेक्षितव्याः । अत एव साधनचतुष्टयसपन्नोऽधिकारीति सिद्धान्तप्रवादोऽपीति । तथाचाचार्याः —

"त्यक्ताशेषक्रियस्यैव ससार प्रजिहासत: ।
जिज्ञासोरेव चैकात्म्य त्रय्यन्तेष्वधिकारिता" ॥

इति ।

एव साधनसम्पन्नस्य विचारितवेदान्तवाक्योपादानो ब्रह्मात्मतत्त्वसाक्षात्कार उपावर्तते । यतः स्वभावादेवाविद्याद्यनर्थबाधेनात्मन. स्वरूपप्रतिष्ठा कैवल्यम् ॥

---

शाब्दापरोक्षाक्षेपः ।

अत्राह— न परोक्षप्रमाणादपरोक्षज्ञानं युक्तम् । नहि कुटजबीजाद् वटाङ्कुर उपजायते । अन्यथापरोक्षप्रमाणत्वेन शास्त्रस्य प्रत्यक्षान्तर्भावापत्तेः । तथाच

"प्रत्यक्षमनुमान च शास्त्र च विविधागमम्" ।

इति स्मार्तविभागविरोध., लक्षणसाङ्कर्यात् ।

अपि चैवमधिगतशब्दप्रमाणपरिकरस्य वाक्यादेवात्मापरोक्षापत्तौ विचारारम्भवैयर्थ्यम् । न चार्थबोधजनने विचारसहकारिसापेक्षो वेद , निरपेक्षत्वलक्षण स्वत.प्रामाण्यभङ्गप्रसङ्गात् । न च विचारोऽपि शब्दप्रमाणसामग्र्येव, अविचारयतोऽपि गवानयनादिवाक्यार्थबोधेन व्यभिचारात् । भेदवासनाप्रतिबन्धादविकल्पब्रह्माभेदमसम्भावयतोऽविद्यानिवर्तकमागमादपरोक्ष न जायत इति चेद्, एव तर्हि स लेशतोऽपि न ज्ञायेत * जरद्गवादिवाक्यार्थवत् । ततश्च विचारारम्भानुपपत्ति , सर्वथाविज्ञाते जिज्ञासायोगात् । अपि च न तावदविकल्पब्रह्मात्मपरिभावनया भेदवासनानिवृत्ति', अज्ञातार्थपरिभावनाया एवायोगात । भेदवासनानिवृत्त्या तज्ज्ञानमिच्छत इतरेतराश्रयत्वाच्च । अनादिकालोपचितभेदवासनाया आनन्त्यादिदंप्रथम तद्विपरीतभावनयाल्पीयस्या निवृत्त्यसम्भवाच्च । अथोच्येत— शब्दशक्त्यैव जायमानमपि ब्रह्मात्मज्ञान भेदवासनादिप्रतिबन्धादविद्यानिवृत्त्यक्षममापातरूप जायते, तदवधारणत्वाय विचारादिप्रवृत्तिरिति । तन्न । आ ब्रह्मात्मतत्त्वापरोक्षावधारणादविद्यामूलभेदवासनानुवृत्तौ तदवधारणस्यैवासम्भवाद्, भेदवासनानिवृत्त्या च तत्त्वावधारणमिच्छत इतरेतराश्रयत्वप्रसङ्गात् । अपि च तत्त्वावधारणनिवर्त्याविद्याभेदवासना न तत् प्रतिबन्धुमर्हति, सत्यामपि चिरोपचिताहिभ्रमवासनायामासवाक्यादिना रज्जुतत्त्वावधारणदर्शनात् । अन्यथा निवर्त्यस्यैव प्रतिबन्धकत्वे कदापि तन्निवृत्त्यनापत्तेः । अपि च शब्दशक्त्यापि जायमानमपरोक्षे ब्रह्मणि न परोक्ष तव सम्भवति, ज्ञानपारोक्ष्यापरोक्ष्ययोरर्थतन्त्रत्वोपगमात् ।

अथ करणस्वभावादादौ परोक्षमित्युच्यते, अग्रेऽपि तदेव स्यात्, सहकारिसहस्रेणापि करणस्वभावानपायात् । तत्तेदंतयोरपि संस्कारेन्द्रियसामर्थ्यव्यवस्थोपगमात् । प्रत्यभिज्ञान तु स्मृत्यनुभवात्मकमेकं जायते सामग्रीद्वयसमाजात् । न च प्रमाकरणस्वभावस्य दोषसाचिव्यादप्रमाकरणत्वं, ज्ञानकरणत्वातिरिक्तप्रमाकरणत्वाभावात् । न चानित्यप्रमात्वं कार्यतावच्छेदक बाधक विना कार्यमात्रधर्मत्वादिति युक्तम्, अवच्छेदकान्तरोपपन्नकार्यत्वेन विशेषणासिद्धेः । लाघवेनानित्य-

* "जरद्गव कम्बलपादुकाभ्यां द्वारि स्थितो गायति मङ्गलानि ।
त ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमाया लशुनस्य कोऽर्घ ॥"

ज्ञानत्वस्यैव तदवच्छेदकत्वात् । न हि दण्डे नीलमृत्साचिव्याद् नीलघटजनक, नीलघटत्वस्य कार्यतावच्छेदकत्वे गौरवात् । तत्र घटत्वावच्छिन्नकार्ये मृदो नीलिम्ना नीलघटत्वयोरिव ज्ञानत्वावच्छिन्नकार्ये दोषेण बाधितविषयत्वज्ञानत्वयोरार्थसमाजोपपत्ते । न च विचारेण वेदान्तवाक्यस्यापरोक्षज्ञानजननशक्तिराधीयते, विचारस्यार्थकर्मतया प्रमाणाद्यसम्भावनादिनिवृत्त्या दृष्टद्वारेण साक्षात्कारहेतुत्वात् । न च विषयस्वभावो भिद्यते येनादौ परोक्षमवगम्यते विचारानन्तरमपरोक्षमित्युच्यत, ब्रह्मात्मनोऽपरोक्षैकस्वभावत्वात् । अनलादिर्ह्यपरोक्षस्वभाव एव सन् सौक्ष्म्यव्यवधानादिभिरनध्यक्षित परोक्षमवगम्यते । समिन्धनमुपसर्पणनिर्मथनादिना सौक्ष्म्यादिनिह्नवे त्वपरोक्षमीक्ष्यते । न चेह तथा सम्भवति, आत्मावरणदोषस्य विचारादिभिरनिवर्तनीयत्वात् ॥

---

### आपातत्वविकल्प ।

अथाधीतमात्रज ज्ञानमात्मन्यपरोक्षमप्यनवधारणात्मकमिति चेत् । किमिदमनवधारणत्वम् । आपातत्वमिति चेत् । ननु पर्याय एषः । अनभ्यस्तवस्तुविषयज्ञानत्वमिति चेद्, न । आत्मनो नित्याभ्यस्तत्वेनासम्भवाद्, मातृमानमेयदोषवैधुर्ये तद्विधज्ञानस्याप्यवधारणत्वात् । नापि विशेषाविषयत्वम्, अनुमित्यादेरप्यवधारणत्वाद्, निर्विशेषब्रह्मज्ञानस्याग्रेऽप्यनवधारणत्वप्रसङ्गाच्च । नापि सामान्यविषयत्व, तादृशोऽपि प्रत्यक्षस्यावधारणत्वात् । न च तदेकविषयत्वं, तादृशोऽप्यनुमित्यादेरवधारणत्वात्, निस्सामान्यब्रह्मज्ञानस्याग्रेऽप्यनवधारणत्वप्रसङ्गाच्च, प्रत्यगेकरसस्य ब्रह्मणो देहादिसाधारणाहन्त्वादिसामान्यसम्भवेऽपि विविक्तात्मबोधिना शास्त्रेण तद्विषयज्ञानायोगात् । नापि संशयत्व, वाक्यात् संशयायोगाद्, विरोधिपदसमभिव्याहारे पदार्थशक्तिविरहनिश्चये ज्ञानस्यैवानुदयात्, तदनिश्चये च भ्रमस्यैवोत्पत्ते., विरोधिपदासमभिव्याहारे च कोट्यन्तरानुपस्थितौ निश्चयस्यैव सम्भवात् ।

---

किं चेदं संशयत्वं न तावदेकस्मिन् धर्मिणि विरुद्धानेकप्रकारकज्ञानत्वम्, समुच्चयापत्तिज्ञानस्यापि तथात्वात्, निर्विशेषसविशेषसंशयाव्याप्तेश्च । न च सोऽपि सविशेषत्वनिर्विशेषत्वप्रकारक एव, स्वरूपविरोधात् निर्विशेषत्वविशेषा-लम्बने कोटिद्वयानवगाहनात् चन्द्रोऽयमसौ वेति संशयाव्याप्तेश्च । तस्यानेकधर्मिण ए-कप्रकारकत्वात् । न चायं न द्वौ तदुभयवृत्तित्वोल्लेखी, अनुभवविरोधात् । अन्यथा स्थाण्वादिसंशय एव स्थाणुत्वमेतद्वृत्ति पुरुषत्वं वेति नानाधर्मिकैकप्रकारक किमिति न कल्प्येत । एतेन 'एकाधारे विरुद्धानेककोटि(युग)युगपत्ख्यातिरन्यो(न्या ? न्य)बाध्या संशय' इति तत्त्वमुक्ताकलापकृदुक्तमपि दुरुक्तम् । उक्ताव्याप्तेः । संशयज्ञान स्यैकत्वेन भेदगर्भान्योन्याभावगर्भस्य असम्भवाच्च । नापि विरुद्धानेकवैशिष्ट्यावगा-हिज्ञानत्वम्, विरुद्धत्वं चानेकधर्मैकसम्बन्धाभावरूपं धर्मयोर्धर्मिणोश्च समानमिति वाच्यम् । यदि हि वस्तुविरोधो विवक्ष्येत पनसोऽयं पलाशश्चेति भ्रमेऽतिव्याप्तिः, पनसत्वपलाशत्वयोरेकधर्मिसम्बन्धाभावेन विरोधात् । विरोधभ्रमगर्भे वृक्षोऽयं कु[illegible] नेति संशयेऽव्याप्तिः, तत्र वस्तुविरोधाभावात् । अथ भासमानविरोधाने-कसम्बन्धावगाहित्वं विवक्ष्येत, तथापि कुलीनोऽप्यसौ दुश्शील इति ज्ञानेऽति-व्याप्तिः । तत्रापिशब्देन कुलीनत्वदुश्शीलत्वयोर्विरोधोल्लेखनात् । यद्युच्येत— स्वैकैकानेकसम्बन्धावगाहित्वं तत्र तद्विरोधभानं विवक्षितम् । कुलीनत्वादेश्च परत्र विरोधेनविरोधमन्तर्भाव्य तत्रोभयसम्बन्धोऽवगम्यते । तथा च ग्राह्यसम्बन्धप्रति-सम्बन्धिनिरूपितविरोधभानगर्भानेकैकसम्बन्धावगाहिज्ञानत्वं संशयत्वमिति । तन्न । यद्यसौ निर्वह्निः स्यात्, निर्धूमः स्यादिति तर्कज्ञाने तथाप्यतिव्याप्तेः । आपाद-कस्य तत्रैव वह्न्यभावधूमाभावविरोधभानगर्भत्वात् । अपि च 'अपि शूलभरो निराकृत' इत्यादिकाव्यमूलज्ञानेऽतिव्याप्तिः, तस्याप्याहार्यविरोधभानगर्भत्वात् । तत्रानाहार्येति विशेषणे चासमीक्ष्यकारिणि महिषो मनुष्यो वायमिति संशये, 'निर्मिन्दुः किं पश्यामि'त्यादिकाव्यमूलसंशये चाव्याप्तिः । तस्याहार्यविषयत्वात् । स्थाणुत्वाने पुरुषोऽयमिति विरोधाभासगर्भभ्रमेऽतिव्याप्तिश्च । अथैकतरसम्बन्धाभा-वावभासनान्तरीयकान्यतरसम्बन्धावभासानियतानेकसम्बन्धप्रतिसम्बन्ध्येकविषयज्ञा-नत्वं संशयत्वम् । विरोधाभासज्ञानं तु न मनागप्येकतरसम्बन्धाभावमवभास-यति, आहारितविरोधयोरुभयोरप्येकसम्बन्धावभासात् । संशयस्तु तथाभूतविष-योऽप्यन्यतरसम्बन्धाभावावभासानियत इति नोक्तदोष इति चेत् । तथापि

"खलानां कण्टकानां च द्वयमेवात्र हि क्षमम् ।
उपानन्मुखभङ्गो वा दूरतो वापसर्पणम् ॥"

इत्यादिकाव्यमूलज्ञाने, 'व्रीहिभिर्यवैर्वा यजेते'त्यादिवाक्यजज्ञाने चातिव्याप्तिः । उभयत्र विकल्पज्ञानस्यान्यतरकोटिसम्बन्धप्रतिक्षेपेणापरकोटिसम्बन्धावभासित्वात् । न चायं संशय एव, शास्त्राप्रामाण्यप्रसङ्गात् । एतेनानियतानेकैकसम्बन्धावगाहि-ज्ञानं संशय इति प्रत्युक्तम् । अथात्यन्तिकपरस्परप्रतिक्षेपावभासगर्भान्यतरसम्ब-न्धावगाहिनानैकवैशिष्ट्यगोचरज्ञानत्वं संशयत्वम् । वैकल्पिकज्ञाने तु नात्यन्तिक-परस्परप्रतिक्षेपावभासः, पाक्षिकत्वात् । अत एव व्रीहिभिर्यवैर्वा यष्टव्यमिति संश-यस्य व्रीहिभिर्यवैर्वा यष्टव्यमिति निश्चयो निवर्तकोऽनुष्ठापकश्च । अन्यथा तत्रात्य-न्तिकपरस्परप्रतिक्षेपावभासे संशयसमानविषयत्वेनोक्तरूपत्वायोगादित्युच्येत । तन्न । अस्ति गेहे तमः प्रकाशो वा, नोभयमित्यादिज्ञाने तथाप्यतिव्याप्तेः । न चायं विकल्पज्ञानभेदः । वस्तुस्वभावेन तत्रात्यन्तिकपरस्परप्रतिक्षेपावभासात् । नापि संशय एव, समुच्चयनिषेधेनान्यतरसत्तानिश्चयरूपत्वात् । अथोभयसत्ताकोटिविरोधिनि-श्चयरूपत्वेऽपि तदंशे परस्परप्रतिक्षेपावभासित्वात् संशय एवायं स्यात् । न स्यात्, तदंशेऽप्यन्यतरान्ववसर्गेण समुच्चयमात्रविरोधितया विकल्पज्ञानतुल्ययोगक्षेमत्वात् । न च संशयेऽन्यतरान्ववसर्गो भासते, एकतरमात्रनियमैदम्पर्यानुभवात् । इयानत्र विशेषः । यद् विकल्पज्ञाने स्वस्वभावाद् विषयस्वभावाच्च नात्यन्तिकान्यतरप्रतिक्षे-पावभासः । संशये तूभयतोऽपि तदवभासः । गेहतमःप्रकाशादिज्ञाने पुनर्विषय-वस्तुस्वभावादेव, न स्वस्वभावादित्यमत्सरैः सूक्ष्मदृष्ट्यावधातव्यम् । वस्तुतस्तु व्रीहिभिर्वा यवैर्वेत्यादिविकल्पज्ञाने प्रयोगभेदेनोभयसम्भवादन्यतरान्ववसर्गाव-भासेऽपि प्रयोगविशेषे तन्निश्चयेऽतिव्याप्तिः । तत्रैकतरसम्बन्धग्रहणं इतरस्यानव-काशेन वस्तुस्वभावादप्यात्यन्तिकान्यतरप्रतिक्षेपावभासादिति । अत एव न संश-याद्यविरोधित्वं ज्ञानस्यापातत्वम् । संशयत्वानिरूपणात्, संशयान्तरे भिन्नविषय-ज्ञाने चातिव्याप्तेः, आत्मन्यपरोक्षस्य तद्विरोधित्वावश्यम्भावाच्च । 'छिद्यन्ते सर्व-संशयाः' इत्यादिश्रुतेः ।

---

१. 'भासिज्ञा' ख. पाठ

अपि चेदमनवधारणत्वं न प्रमाणस्वभावकृतं, नापि विषयस्वभावकृतम्, अग्रेऽप्यवधारणाभावप्रसङ्गात्। स्वभावस्यापरिहरणीयत्वात्। न च मानविषयस्वभावावनपेक्ष्य ज्ञानवैजात्यमुपलब्धचरम्। जायमानं ज्ञानं दोषवशादनवधारणं जायत इति चेत्। न तावद् वेदवाक्ये दोषसम्भवोऽपौरुषेयत्वात्। अन्यथा नित्यमेवाप्रामाण्यप्रसङ्गात्। नापि विषयदोषः, शास्त्रस्य तदेकविषयत्वात्। प्रत्यक्षे हि विषयदोषस्तत्त्वावधारणविरोधी, तस्य साधारणत्वात्। असम्भावनादि प्रमातृदोष इति चेत्। तर्हि ब्रह्मात्माभेदो न ज्ञायेतैव जरद्गवादिवाक्यार्थवदित्युक्तम्। पदार्थशक्तिविरहेण ततो ज्ञानानुदयेऽपि शास्त्रादर्थशक्त्या ज्ञानमुदीयत इति चेत्। न खलु पदार्थशक्तिः स्वरूपसती वाक्यार्थधीहेतुः। किन्तु ज्ञाता। योग्यताभ्रमेऽपि तज्जननात्। न चासम्भावनादिदोषे सति सा बोद्धुं शक्या। तस्माद् अधीतमात्रादेव तत्त्वमादिवाक्याज्जायते चेज्ज्ञानमपरोक्षमवधारणमेव शकुन्ताकाशगमनादाविवासम्भावनादेरपि तत एव निवृत्त्युपपत्तेः। प्रबलतरासम्भावनादिप्रतिबन्धे वा नैव किञ्चिज्ज्ञायेतेति विचारशास्त्रप्रवृत्त्यनुपपत्तिः। नन्वस्मिन् देशे काले वा नेदं सम्भवतीत्यसम्भावयत एवार्द्रमरीचादिज्ञानं प्रत्यक्षेणानवधारणात्मकमुदेति। न। तत्रावधारण एवाप्रामाण्यसंशयादनवधारणत्वापत्त्युपपत्तेः। असम्भाविते़ऽर्थे वाक्यजज्ञानानिदर्शनाच्च। न च यजमानप्रस्तरादिवाक्येऽर्थस्यासम्भावना। असम्भावितार्थस्याबोधनात् पूर्वोत्तरपक्षहेतुदर्शनस्य तदर्थसम्भावनामूलत्वात्। न च प्राग् विचारप्रवृत्तेरहेतुदर्शिनो निर्विशेषचिन्मात्रपरिशेषत्वमात्मनः सम्भावयितुं शक्यम्। तस्मादसम्भावितोऽर्थः, अथ च ज्ञायते, तच्चापातरूपमिति विप्रतिषिद्धमिति।

---

## अपरोक्षत्वनिर्वचनम्।

अत्राभिधीयते—ज्ञानस्यापरोक्षत्वं न तावज्जातिः, प्रत्यभिज्ञादौ परोक्षत्वेन साङ्कर्यात्। अव्याप्यवृत्तेर्जातित्वायोगात्। तन्त्रिणो वस्तुसंस्थानातिरिक्तजात्यभावेन परोक्षापरोक्षयोः स्वरूपतो विशेषायोगाच्च। नापीन्द्रियजन्यज्ञानत्वं, प्रत्यभिज्ञातत्तांशेऽप्यपरोक्षावभासप्रसङ्गात्, तत्तेदन्तयोरपरोक्षज्ञानविषयत्वाविशेषात्, परोक्षे विषये ज्ञानापरोक्षत्वस्यानुभवविरुद्धत्वाद्, घटं पश्यामि साक्षात्करोमीत्याद्यपरोक्षाभावप्रसङ्गाच्च। नचेन्द्रियनिमित्तः संस्थानभेदो व्यवतिष्ठते, सर्वस्यापि ज्ञानस्य प-

---

१ 'अधिकृतमा', २ 'त्वा' इति पाठः

नइन्द्रियजन्यत्वात्, सस्कारेन्द्रियनिमित्तज्ञानस्यैकस्य सस्थानद्वयायोगाच्च । न चेन्द्रियजन्यं प्रत्यभिज्ञान प्रत्यक्षमेव, सस्कारस्तु तत्र सहकारीति वाच्यम् । प्रत्यक्षत्वावच्छिन्नकार्ये सस्कारस्य व्यभिचारेणासहकारित्वात् । प्रत्यभिज्ञात्वावच्छिन्नकार्ये चेन्द्रियस्य व्यावृत्तकरणतावच्छेदकरूपभेदाभावात् तत्र तत्सहकारित्वानवकल्पनात् । सामग्रीद्वयसमाजादेव तत्तेदन्तावच्छिन्नविषयैकज्ञानोपपत्तौ तस्य पृथक्करणाप्रयोज्यत्वाद्, विषयावच्छेदभेदेन तत्रैव परोक्षत्वापरोक्षत्वसहभावसम्भवेन वैजात्यकल्पनायोगाच्च । न चेन्द्रियजन्यप्रत्यक्ष एव सस्कारेण तत्तोल्लेखित्वस्यार्थसमाज इति वाच्यम् । संस्कारजन्यस्मरण एवेन्द्रियेणेदन्तोल्लेखित्वस्यार्थसमाज इति वैपरीत्यसम्भवात् । न च तमिम पश्यामि साक्षात्करोमीत्यनुभवो नियामक । इम त स्मरामि मन्य इति विपरीतानुभवस्यापि सम्भवात् । नापि ज्ञानाकरणकज्ञानत्व प्रत्यक्षत्व, सस्कारकरणकस्मृतावतिव्याप्तेः । न च पूर्वानुभव एव तत्र करणम्, अनुभूत स्मर्यते नाननुभूतमित्यन्वयव्यतिरेकावगतकारणभावानिर्वाहाय तद्व्यापारतया सस्कारकल्पनात् सस्कारस्य च निर्व्यापारत्वादिति वाच्यम्, अवश्यापेक्षितसदृशदर्शनाद्युपकार्यस्य स्मृतिहेतोरनुभवमनपेक्ष्यैव कल्पनात् । न हि सदृशदर्शनादिकमेव स्मृतिहेतुरननुगमात् । क्रियान्या कुर्वद्रूपस्य । स्वव्यापारादन्यत्र कारणत्वस्यैवानुपपत्त्या संस्कारस्यापि स्मृतिजनने कस्यापि व्यापारस्य कल्पनीयत्वाच्च । नापि निरुक्तानुभवत्व तत्, सर्वस्यैव विशिष्टज्ञानस्य विशेषणज्ञानकरणकत्वात् तस्यापि विशिष्टज्ञानजनने व्यापारवत्त्वाविशेषेणेन्द्रियादिकमेव करण न विशेषणज्ञानमिति नियन्तुमशक्यत्वात् । विशेषणज्ञानाहेतुत्वमतेऽपि महत्त्वाद्यपेक्षाधीजन्याणुत्वादिप्रत्यक्षाव्याप्तेरपरिहार्यत्वात् । एतेनात्ममात्रसमवेताकरणकज्ञानत्व प्रत्युक्तम् । तन्त्रिमतेऽपि सविकल्पकप्रत्यक्षस्य जात्यनुवृत्ताकारावगाहिनोऽतदाकारावगाहिनिर्विकल्पकज्ञानजन्यत्वोपगमात्, तस्य च तज्जनने सव्यापारत्वावश्यम्भावेन करणत्वात्[१] ।

तस्मात् प्रमातृसविद्व्यवहितसत्ताकस्य विषयस्य व्याप्त्या तदव्यवधानोपाधित्वं प्रमाणज्ञानस्यापरोक्षत्वम् । इन्द्रियप्रणाडिकया बुद्धिवृत्तिमयज्ञानस्य तत्संयुक्तविषयोपरागेणोत्पत्तौ विषयसत्तात्मसविदः प्रमातृसंविदश्चान्त करणावच्छेदानवच्छेदकृतभेदापगमात्, तदध्यस्तविषयस्य प्रमातृसविदव्यवधानादपरोक्षत्वमिष्यते । ब्रह्मात्मनि तु शाब्दमपि ज्ञानमुत्पद्यमान[२] विषयोपरक्तमेवोत्पद्यत इति

१ 'णकत्वा' ख पाठः २ 'त्पा' क. पाठ

प्रमातृसंविद्व्यवधानोपाधितया भवत्यपरोक्षमपरोक्षार्थावभासित्वात्। तान्त्रिकस्यापि विषयव्यापिज्ञानस्यैवापरोक्षत्वोपगमात्। अर्थस्य चापरोक्षत्व प्रमातृसविद्व्यवहितत्वम्। तथाच शाब्दमन्यद्वानीदृश परोक्षमवतिष्ठते। तत्र च करणविशेषोऽतन्त्रम्।

एतेन पीतत्वापरोक्षभ्रमविषये शङ्खे श्वैत्यानुमितिर्वा, अन्धस्य स्पृश्यमाने घटे शुक्लोऽयमिति शाब्दी वा धीरपरोक्षा स्यादपरोक्षार्थविषयत्वादिति निरस्तम्। प्रमाणज्ञानस्य विषयव्याप्त्या तस्य प्रमातृसविद्व्यवधानोपाधितयैवापरोक्षत्वात्। अनुमित्यादिज्ञान च न तथा। इन्द्रियद्वारकतयान्तरवस्थस्य बहिर्विषयासश्लेषात्। दशमस्त्वमसीत्यादिवाक्यजज्ञान चान्तरवस्थमेव विषयस्य प्रमातृसविद्व्यवधानोपाधितया भवत्येवापरोक्षम्। आत्मनि च श्रवणमननादीनामपरोक्षैकरूप्येऽपि श्रोतव्यो मन्तव्य इत्यादिभेदनिर्देशस्य करणभेदोपाधिकत्वात्, श्रवणादिपरिपाके सत्यसम्भावनादिशैथिल्येनात्मावगतिपर्यन्तस्यैव प्रमाणज्ञानस्याविद्यानिवर्तकत्वात्। न चैवमपि देहे सिरास्तीति वाक्यजज्ञानादपि सिरादेरपरोक्षतापत्ति, प्रागेवाहङ्काराविष्टतया तदाकारवृत्तेस्तदुपरागोपपत्तेरिति[1] वाच्यम्। सङ्घातात्मना प्रमातृसविद्व्यवधानेनापरोक्षत्वेऽपि सिरादे स्वात्मना धर्मादिवदयोग्यत्वस्य फलबलकल्प्यत्वात्। अत एव घटादेरपरोक्षतादशायां गन्धाद्यपरोक्षत्वापादनमपास्तम्। प्रामातृसविदसम्भिन्नभावस्य सतः तदाकारवृत्त्यापादिततदव्यवधानस्यापरोक्ष्यप्रयोजकत्वात्। न चैव शब्दापरोक्षोपगमे शास्त्रस्य प्रत्यक्षान्तर्भावापत्ति., धर्मादिशास्त्रस्यापरोक्षप्रमाकरणत्वाभावाद्, उपनिषदश्च निरुक्तलक्षणत प्रत्यक्षत्वेऽप्यविरोधात्। न च 'प्रत्यक्षमनुमानं चे'ति विभागविरोव। न हि प्रत्यक्षमित्यपरोक्षप्रमाकरणं गृह्यते, विभागविरोधादेव। किन्तु इन्द्रियम्। ततश्च बोधकस्वरूपसामग्रीवैजात्येनैव तथा विभागोपपत्ति। यद्वा. 'शास्त्र च विविधागममि'ति धर्मादिविषये नियम्यताम्। न कश्चिद् दोष॥

---

### शाब्दापरोक्ष्ये दोषोद्धारः।

यत्तु — एवमधीतमात्रादेवात्मापरोक्ष जायेत, असम्भावनादिप्रतिबन्धे वा नैवकिञ्चिज्ज्ञायेतेति जिज्ञासाद्यनुपपत्तिरित्यादि।

---

१. 'त्ति' ख, पाठ

तत्र वदामः । अधिगतशब्दप्रमाणपरिकरस्य नाधीतमात्रादात्मापरोक्ष नोत्पद्यते । तत्तु तदवस्थमेव नाविद्यानिबर्हणम् । भेदवासनामूलासम्भावना-विपरीतभावनाग्रस्तत्वेनानवधारणत्वात् । न चासम्भावितार्थो नैव ज्ञायेत जरद्गवा-दिवाक्यार्थवदिति युक्तम् । तस्य पौरुषेयस्य भ्रमप्रमादविप्रलिप्सादिमूलत्वेना-धिगताप्रमाणभावस्य ज्ञानाजनकत्वेऽपि वेदवाक्यस्य तद्वैलक्षण्येन कथमप्युपपाद्या-र्थतयानुसहितस्य ज्ञानजनकत्वोपपत्तेः । जरद्गवादिवाक्यस्य प्रामाण्यभ्रमे चार्थ-ज्ञानमनवस्थित जायत एव । "सृण्येव जर्भरी तुर्फरीतू नैतोशेवतुर्फरी पर्फरीका" (ऋ० अष्ट० ८ अ० ६ व० २) इत्यादौ चाव्युत्पन्नबहुलतया न किञ्चिदपि ज्ञायते, न त्वर्थासम्भावनया । अन्यथा 'यजमानः प्रस्तर' इत्यादौ च श्रुतमात्रेऽसम्भावनया-प्रतीतसामानाधिकरण्यस्य तत्सिद्ध्यादिभिरुपपादनायोगात् । न च तत्रासम्भाव-ना नास्त्येव, प्रत्यक्षादिविरोधदर्शने तस्या अवर्जनीयत्वात् । अस्ति हि आर्द्रमरी-चादिप्रत्यक्षमसम्भावनादोषादनवधारणात्मकम् । जलादिज्ञान चानभ्यासादिदो-षात् । ततो निष्कम्पमप्रवृत्तेरग्रे सशयदर्शनाच्च । तत्र प्रामाण्यसशयात् तदुभय-मिति चेद्, न । अर्थसत्तानिश्चयस्य स्वत एव प्रामाण्यनिश्चयत्वेन तदयोगात् । एवमिह वाक्यादपि निर्विशेषज्ञान विषयस्वभावादपरोक्षमेवासम्भावनादिदोषादन-वधारणात्मकमेव यावन्मानतो विषयतश्चोपपत्तिपर्यालोचनया परिभावनया च न सम्भावना प्रतिपद्यते । सम्भाविते तु विषये तदेवावधारणात्मक प्रतितिष्ठति । यथा हेमविषयं प्रत्यक्ष निकर्षणतापनच्छेदनादिप्रत्ययैः प्रतिष्ठा लभते, यथा वा दशमस्त्वमसीति वाक्यज ज्ञानमात्मन्यपरोक्षमपि परिगणनाभ्यासेन प्रतिष्ठितं भवति, तद्वत् । एतेन वाक्यजमेव ज्ञानमसम्भावितेऽर्थे न भवतीति निरस्त, द-शमनाशनिश्चयादसम्भावितेऽपि वाक्यादनवधारणज्ञानदर्शनात् । अन्यथा परिग-णनाप्रवृत्त्ययोगाद्, अपरोक्षविषये दोषादनवधारणतौल्ये करणवैलक्षण्यस्याकि-ञ्चित्करत्वाच्च ।

एव च यदिदमुच्यते— नाविद्यामूलभेदवासना तत्त्वावधारणमन्तरा निव-र्तते । तन्निवृत्त्या च तत्त्वावधारणमिच्छत इतरेतराश्रयत्वम् । न च निवर्त्येया तया तत्त्वदर्शन प्रतिबध्यते । अतो विचारवैयर्थ्यमित्यादि । तत् तन्त्रैकशरणस्य बुद्धिमोहविलसितम्[1] । अविद्यामूलासम्भावनाविपरीतभावनयोः श्रवणमनननिदि-

1 'बु' ख पाठ

ध्यासनाभ्यासप्रकर्षेण नितान्तशैथिल्ये सति मूले तदनिवृत्तावपि मानतस्तत्त्वावधारणोपगमात् । भीरुकस्य स्तम्भे स्तम्भत्वासम्भावनाया वेतालत्वविपरीतभावनाया श्चाप्तोपदेशोपसर्पणपरामर्शै शैथिल्ये सति मूले तदनिवृत्तावपि प्रत्यक्षत स्तम्भतत्त्वावधारणात् । न च निवर्तकतयोदितस्य ज्ञानस्यानवधारणत्वमापाद्य भेदवासनासम्भावनादिना शक्ति प्रतिहन्यते, येन कदापि न निवर्त्तेत । किं तर्हि, उद्यदेव दोषादनवधारणात्मकमुदेतीति तदवधारणत्वाय विचाराद्यारम्भ । अनवधारणत्व च ज्ञानस्यापातत्वम् ॥

---

## आपातत्वनिष्कर्ष ।

तच्च निश्चयानधिकविषयत्वे सति स्वविषयकोटिकसशयाद्यविरोधित्वम् । सशयव्यावृत्तये सत्यन्तम् । विषयान्तरनिश्चयस्य धर्म्यंशज्ञानस्य च वारणाय स्व विषयकोटिकेति । तच्चेद न संशय., नियतविषयत्वात् । नापि निश्चय', सशयाद्य विरोधित्वात् । असद्विशेषससर्गावभासविरोधिस्वरूपावगाहिज्ञान निश्चय इत्यग्रे वक्ष्यते । किन्तु तृतीयमिद ज्ञानमिति नासम्भव । न चास्य सशयाद्यविरोधित्वेऽपरोक्षत्वस्वभावस्य श्रुतेर्वा विरोध इति वाच्यम् । उदाहृतानवधारणस्वभावानुरोधेनावधारणात्मन एव तस्य सशयादिविरोधित्वव्यवस्थानात् ॥

---

## संशयलक्षणम् ।

संशयत्व तु आत्यन्तिकपरस्परप्रतिक्षेपावभासगर्भानेकैकसम्बन्धावगाहि ज्ञानत्वमेव । तथा हि—कोटिद्वयावलम्बनानि ज्ञानानि तावदनेकरूपाणि दृश्यन्ते । तत्र कानिचिदन्यतरालम्बननान्तरीयकान्यतरात्यन्तिकप्रतिक्षेपावभासपर्यवसायीनि सशयरूपाणि । यथायं स्थाणु' पुरुषो वा, चन्द्रोऽयमसौ वेत्यादीनि । अन्यानि तु पाक्षिकान्यतरप्रतिक्षेपावभासगर्भाण्यविशेषितान्यतरान्ववसर्गान्तानि विकल्परूपाणि 'व्रीहिभिर्वा यवैर्वा यजेत', 'रथन्तरसामा बृहत्सामा वा सोम' इत्येवमादीनि । पराणि तु समुच्चयादिनिषेधेनान्यतरपरिशेषरूपाणि गेहे तम. प्रकाशो वा नोभयमित्यादीनि । अपराणि शूरोऽयमस्तु भीरुर्वेत्येवमादीन्युपेक्षारूपाणि । इतराणि पुनरय कवि[1]रसौ वा नाह वेदेत्यज्ञानान्तरितालम्बनानि संमुग्ध-

---

१. 'पि' ख. पाठ'.

रूपाणीति । तत्र न तावद् व्यक्तिशेषेऽपि विकल्पज्ञानेऽतिव्याप्ति., तत्राप्यात्यन्तिकपरस्परप्रतिक्षेपानवभासात् । अन्यथा पाक्षिकनिश्चयरूपविकल्पज्ञानमेव स्यात् । अनन्तरमैच्छिकान्यतरपक्षपरिग्रहव्यवस्थायामेव परमितरस्यानवकाश॰ । न च तत्र कोटिद्वयालम्बनमस्ति । गेहतम प्रकाशादिज्ञान च सशय एव । अत एव तत्रैकतरनिर्धारणानुयोगे तदशे मम सशय एवेति लोके प्रतिवक्तारो भवन्ति । न च मध्ये संशयान्तरकल्पने मानमस्ति । अन्यथा निश्चयाधिकपरस्परप्रतिक्षेपविपर्यत्वान्नापातरूपम् । नापि निश्चय , तदशसशयाविरोधित्वात् । सशयोऽपि न चेत्, तुरीयमिद ज्ञान स्यात् । न च ज्ञानस्वभावमपेक्ष्य विकल्पज्ञानतुल्यत्वेऽपि वस्तुस्वभावानुसारिसशयरूपता सर्वजनीना निवारणमर्हति । यत्पुनरुपेक्षारूपज्ञान शूरो भीरुर्वा किं नस्तेनेत्यादि, यच्च समुग्धरूपमय कविरसौ वेत्यादि, तत्र नातिप्रसङ्ग॰ । तयोरात्यन्तिकपरस्परप्रतिक्षेपेणान्यतरनियमपरत्वाभावाद्, लक्षणे तस्यापि विवक्षितत्वात् । अथवा अनेकैकसम्बन्धावगाहीति ताच्छील्यस्य विवक्षितत्वादुपेक्षारूपज्ञानस्य विषयसत्त्वानपेक्षत्वाद् अन्यस्याज्ञानान्तरितविषयतया विषयसत्तायामसामर्थ्याच्च ताच्छील्याभावादेव नातिप्रसङ्ग॰ । अस्तु वा तयोरपि तदशे सशयत्वमेव, परिशेषज्ञानवद्, न कश्चिद् विरोधः । न चैवमपि सविशेषनिर्विशेषसशयेऽव्याप्ति , निर्विशेषकोटे॰ स्वरूपमात्रावसायितयानेकैकसम्बन्धानवगाहित्वाद्, इतरथा स्वव्याघातेन निर्विशेषकोट्यनुत्थानादिति वाच्यम् । अज्ञानविकासात्मनि सशये भेदारोपेण निरुक्तरूपोपपत्तेः । यद्वा अनेकविशेष्यानुपरक्तात्यन्तिकपरस्परप्रतिक्षेपावभासगर्भानेककोटिज्ञानत्वमित्येवास्तु, निर्विशेषसशयश्च तथेति न कश्चिद् दोष ।

केचित्तु — अनवधारणज्ञान सशय. । तत्त्व च ज्ञानस्य विषयविषयिभावसम्बन्धावान्तरविशेष एव । निश्चयाद् वैलक्षण्य दण्डी पुरुष इत्यादिविशिष्टज्ञानस्येव दण्डपुरुषसम्बन्धा इत्यादिसमूहालम्बनात् पुरुषे दण्ड इत्यादिविशिष्टज्ञानान्तराच्चेत्याहु ।

अन्ये तु—स्वाकारविरुद्धाकारसमबलज्ञानाविरोधिज्ञान, स्वविषये स्वाकारविरुद्धद्वयवैशिष्ट्यावगाहिज्ञानाविरोधिज्ञान, स्वविशेष्ये स्वप्रकारीभवद्धर्मविरुद्ध-

---

१ 'यत्व ना', २ यत्वान' ख पाठ

प्रकारज्ञानाभिन्नज्ञान वा सशय इति लक्षयित्वा आपातज्ञानमपि संशय एवे-त्याहुः ॥

---

## परोक्षापातत्वभङ्गः ।

यत्तु तान्त्रिकेणोक्तम्—अज्ञाननिवृत्तिमात्रेण सशयविपर्ययसह ज्ञानमापा-तज्ञानमिति । तन्न, अज्ञाननिवृत्तौ सशयाद्ययोगात्, स्वप्रागवस्थारूपाज्ञाननिवृत्तौ सशयादिसहत्वस्य च सशयादौ सत्त्वात् । सशयस्य न विपर्ययसहत्व, विपर्ययस्य च न सशयसहत्वमिति चेद्, न । धर्म्यंशज्ञाने परोक्षज्ञाने च तत्सत्त्वात् । तस्मादसम्भावनादिपुरुषदोषात् प्राथमिकमागामिकज्ञानमपरोक्षमपि सशयविरोधि-निश्चयानधिकविषयत्वे सति सशयाविरोध्यापातरूपमेवेति न विचाराद्यारम्भवैय-र्थ्य, श्रवणादिपरिपाके च तदेवावधारणपर्यन्तमविद्यां निवर्तयति ।

एतेन एतन्निरस्त—'न, सत्यामपि शाब्दसामग्र्या विपरीतवासनाप्रति-बन्धात् तत्त्वज्ञान न जायते । न च जातेऽपि ज्ञाने तवाविद्याभेदवासनादिकमनु-वर्तते, सर्वदैवानुवृत्तिप्रसङ्गाद्, निवर्तकान्तराभावात् । न चाकस्मिकी तन्निवृत्ति., स्वभाववादप्रसङ्गात् । नापि स्वत एव, क्षणवादापातात् । ज्ञानानिवर्त्यत्वे चावि-द्याभेदवासनादे सत्यत्वप्रसङ्गात् । न च तत्त्वज्ञानादज्ञाननिवृत्तौ छिन्नमूलमपि भेददर्शनमनुवर्तते, अकारणककार्यायोगात्, जगद्भ्रमस्यैवाविद्यामूलत्वकल्पनावै-यर्थ्याद्, मुक्तेरपि ज्ञानानपेक्षत्वप्रसङ्गाच्च । चन्द्रैकत्वज्ञानेऽपि द्विचन्द्रादिभ्रमोऽनु-वर्तते, परोक्षस्यापरोक्षविभ्रमाविरोधित्वात्, तदबाध्यतिमिरादिदोषस्य तन्निमि-त्तस्यानुवृत्तेश्च । चन्द्रैकत्वाद्युपदेशस्य च दुष्टाक्षत्वज्ञानेन तद्दोषप्रतीकारप्रवृत्ति-फलत्वादि'ति । अनभ्यासदशापन्नजलादिज्ञानवत् प्राथमिकागामिकज्ञानस्य पुरु-षदोषादापातत्वसम्भवात् ॥

---

## वाक्यजज्ञानस्यापवर्गहेतुत्वम् ।

यत्तु न वाक्यजमेव विज्ञानमपवर्गहेतुः, 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत,' 'अनुविद्य विजानाति' इत्यादितदधिकज्ञानविधानात्, तावन्मात्रेणाविद्या-निवृत्त्यनुपलब्धेश्च । 'तस्य तावदेव चिर यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति देहा-वधिश्रुतिविरोधाच्च । तथा चापस्तम्बः— 'बुद्धे क्षेमप्रापणम्' (आपस्त० धर्म० २.

---

१ 'रकज्ञा' ख पाठ

२१. १४) इति वाक्यजज्ञानाद् मोक्षमुक्त्वा शास्त्रप्रत्यक्षविरोधावाह—'तच्छास्त्रैर्विप्रतिषिद्धं, बुद्धे चेत् क्षेमप्रापणमिहैव न दु खमुपलभेत, एतेन पर व्याख्यातम्' (आपस्त० धर्म० २ २१. १५—१७) इतीति ।

तत्र वदाम —यद्यपि 'विज्ञाये'ति नापातज्ञानमुच्यते, तस्य संशयाद् विशेषाभावात् । तथाप्यसम्भावनामात्रतिरस्कारेण श्रवणमननोपकृत विज्ञानमुच्यते, तस्यासम्भावनाविरोधित्वेन विशेषोपपत्ते । तथापि चिरानुगतविक्षेपवासनाप्राबल्यादनवस्थितमिव तज्ज्ञान न्यग्भूतविषयं न स्फुटमभिव्यनक्ति वायुविक्षिप्तदीपालोक इव रत्नतत्त्वम् । तद्विक्षेपप्रशमाय सहकारिभूत निदिध्यासन प्रज्ञान विधीयते 'प्रज्ञा कुर्वीते'ति । निदिध्यासन च प्रमाणसहकारीत्युक्तम् । न तु तत्त्वापरोक्षावगत्यनन्तर ज्ञानावृत्तिर्विधीयते, कृतकृत्यत्वेनानियोज्यत्वात् । न चानुपलब्धिविरोधः । वस्तुतत्त्वापरोक्षावधारणे तदज्ञाननिवृत्तेरवश्यंभावात् । देहावधिकरणं तु प्रारब्धक्षयापेक्षया, देहान्तरारम्भप्रयोजकशून्यतया मुक्तस्यैवारब्धबलोपपादितभोगाय देहधारणाद्युपपत्ते । तथा च सूत्र—'भोगेन त्वितरे क्षपयित्वा सम्पद्यते' (ब्र० ४. १. १९) इति ।

यत्तु शास्त्रप्रत्यक्षविरोध उक्त आपस्तम्बेनेति, तत्र न तावद् 'विज्ञाय प्रज्ञां कुर्वीते'त्यादिशास्त्रविरोध इत्युक्तम् । नापि 'तयोर्ध्वमायन्नमृतत्वमेति', 'तेऽर्चिषमभिसम्भवन्ती'त्यादिनाडीनिष्क्रमणादिशास्त्रविरोध । तस्याप्लुष्टाविद्याकर्माशयस्यैव सत उपासनया आभूतसम्प्लवस्थानाभिप्रायत्वात् । अन्यथा 'न तस्य प्राणा उत्क्रामन्ति', 'अत्र ब्रह्म समश्नुते' इत्यादिविरोधात् । अपि च 'बुद्धे क्षेमप्रापणमि'त्येतावद्ध्युक्त, न तु वाक्यजन्यात्मसाक्षात्कारसमकालमिति । तच्च यथाशास्त्रमुपपन्नमिति कुत. शास्त्रविप्रतिषेध उच्यते । अथापि कथञ्चिदात्मबोधक्षेमप्रापणयोरव्यवधानमुपाक्षिप्येत, तथापि न तत्र शास्त्रविरोधः । 'ब्रह्म वेद ब्रह्मैव भवति', 'तरति शोकमात्मवित्', 'ब्रह्मविदाप्नोति परम्', 'अथ सोऽभय गतो भवति', 'विद्वान्न बिभेति कुतश्चन', 'तद्धैतत् पश्यन् ऋषिर्वामदेव. प्रतिपेदे अह मनुरभव सूर्यश्चेति', 'अभय वै जनक! प्राप्तोऽसी'त्यादिशास्त्रशतसम्प्रतिपन्नत्वात् । न च 'प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ती'तिवद् 'ब्रह्म वेद ब्रह्मैव भवती'ति विद्याफलसमसमयत्वव्यपदेशो गौण इति वाच्यम् । युक्तं हि तत्र प्रतितिष्ठन्तीत्यस्य

प्रथम क्रियाविधिशक्त्युपजनोपक्षीणतयानन्तरं विध्यपेक्षितफलरूपविपरिणामे वर्तमानव्यपदेशोत्तीर्णत्वादसमानकालत्व क्रियाफलयो. । न चैवमिह फलाय ज्ञान विधीयत इत्युक्तम् । 'त्व हि न पिता योऽस्माकमविद्याया पर पार तारयसी' त्यादिश्रुतेर्ब्रह्मभावरूपक्षेमप्राप्तेरविद्यामात्रान्तरायतया तत्साक्षात्कारेण तन्निवृत्तौ क्षेमप्राप्तिक्षेपकारणाभावाच्च । न चैव दु खाद्युपलम्भविरोध । यावदारब्धमाविद्यकभोगदर्शनस्यावर्जनीयत्वात् । अविद्यायाश्च साक्षात्कारदग्धबीजभावाया एवोपस्थितजात्यायुर्भोगविपाकेन बलवदारब्धकर्मणा भोगोपदर्शनशक्तिमात्रसस्थानायास्तावदनुवर्तनात् । तथा च लिङ्ग—'भूयश्चान्ते विश्वमायानिवृत्तिरि'ति, 'तस्य ताव देव चिर यावन्न विमोक्ष्ये अथ सम्पत्स्य' इति च। सैषा निरुक्तावस्थैवाविद्यालेशोऽविद्यावासनेति च सिद्धान्तिभिरभिधीयते । सा च निरुद्धाङ्कुरशक्ति भर्जितबीजमिव साक्षात्कारनिरुद्धप्रसवशक्तिरपि भोगमात्रायोपयुज्यते । नन्वङ्कुरौदनाद्यनेकशक्तिशालिन शालिबीजस्य कालपरिवासेनान्यथा वाङ्कुरशक्तिविलयेऽप्योदनशक्त्यशावस्थानमन्योन्यानुपजीवित्वादुपपद्यताम् । इह पुनरात्मतत्त्वसाक्षात्कारादावरणशक्त्यशविनाशे तदुपजीविभोगोपयोगिभेदविक्षेपशक्त्यशावस्थानमनुपपन्नमिति चेद्, न । रज्जुतत्त्वसाक्षात्कारेण तदावरणनिवृत्तावपि, यथा सर्पबुद्धिबद्धभावस्य तथैव सर्पभ्रमानुवृत्तेरानुभविकत्वात् । चन्द्रैकत्वसाक्षात्कारेऽपि कुतोऽपि हेतोस्तद्वित्वभ्रमानुवृत्तेश्च । यत्तु चन्द्रैकत्वसाक्षात्कारानिवर्तनीयनिमित्तवशेन तद्भ्रमानुवृत्तावपि सर्वमिथ्यात्वमते ब्रह्मतत्त्वसाक्षात्कारानिवर्तनीयस्य कस्याप्यसम्भवाद् न भेदविक्षेपाशानुवृत्तिर्युक्तेति । तत्र वदामः— सत्य न युक्तैवानुवृत्ति. । दृश्यते तु सा । नहि दृष्टेऽनुपपन्न नाम । तथा चारब्धफलकर्मणामाफलावधेरनपवर्जितवेगानामात्मतत्त्वापरोक्षमभिभूय भेदविक्षेपाशानुवृत्तिप्रयोजकतया सुखदुःखाद्यनुभवो न विरुध्यते पुनर्भवबीजशक्तिदाहश्च तत्त्वसाक्षात्कारप्रयोजन हर्षशोकाद्यभाव प्राप्तप्राप्तव्यता कृतकृत्यता चेति । न च निरुपादानाना कर्मणामेव कथमवस्थितिरिति शङ्क्यम् । तान्त्रिकस्यापि स्वारम्भकसकलकर्मप्रक्षयेऽपि विदुषो देवयानपथिकत्वाय कर्मोपादानसूक्ष्मदेहस्थित्युपगमात् । अस्माक तु विक्षेपशक्त्यशेनाप्यविद्योपादानस्थित्युपगमाच्च । ज्ञानाग्निनिर्दग्धस्यैव तस्यारब्धबलेन कियन्त चित् कालं व्यवहारतावन्मात्रनिर्वर्तकस्यापि न निवर्तकान्त

रापेक्षया पुनर्निवर्तनीयत्व, निवृत्तत्वादेव । नहि निर्दग्धपटस्य प्राचीनसस्थान-विशेषेण पटव्यवहारतावन्मात्रकारिणोऽपि निवर्तकान्तरापेक्षया निवृत्ति', तद्वत् ।

एवञ्च ज्ञानोत्पत्तावप्यविद्यानुवृत्तौ न सा निवर्तेतैव, स्वतोऽन्यथा वा तन्निवृत्तौ मिथ्यात्वं न स्यात् । बाधितायामप्यविद्यायां छिन्नमूलमपि भेददर्शनमनुवर्तते द्विचन्द्रादिवदिति बालिशभाषितमित्यादि गौतमशापसम्पन्न-कलिदासभावस्य महदवमतिसमुपजातमहापातकोपचिततमःपटलपिहितचित्तसत्त्व-स्य श्रुतिस्मृतिन्यायबाह्यस्य तन्त्रमात्रपरतन्त्रप्रज्ञस्य दुर्जातिवाचाटचटकस्य रटि-तमनादरणीयम् । तदेवं स्मृतेरयमर्थ । तद् बुद्धिसन्निहित शास्त्रैर्विप्रतिषिद्धम् । किं तदित्युच्यते— 'बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत' (आप-स्त० धर्म० २. २१. १६) इति । अत्रेतिरध्याहार्यः । इति यत् चोद्य, तच्छा-स्त्रैर्विप्रतिषिद्धमिति योजना । उदाहृतानि च शास्त्राणि ब्रह्मवेदननान्तरीयकक्षे-मप्राप्तिपराणि 'ब्रह्म वेद ब्रह्मैव भवती'त्यादीनि । अत्र चोद्ये दुःखोपलम्भाद् न बुद्धे क्षेमप्राप्तिरित्यस्मिन्नंशे शास्त्रविरोधेन प्रत्युक्ते, प्राप्ते क्षेमे दु.खोपलम्भो मा भूदित्यंशान्तरं परिहरति—'एतेन पर व्याख्यातम्' (आपस्त० धर्म० २. २१. १७) इति । तस्य तावदेव चिरमि'त्यादिजीवन्मुक्तिशास्त्रेण विद्वदनुभवेनोप-पत्त्या च विप्रतिषिद्धत्वेन पर दु.ख नोपलभेतेति चोद्य व्याख्यातम्, अदूषणत्वेन परिहृतमित्यर्थ इति ।

स्यादेतत् । यथा देहगोचरेन्द्रियवृत्तिर्न तन्नियन्तारं जीवं साक्षात्कर्तुमीष्टे, एव जीवगोचरमनोवृत्तिरपि न तन्नियन्तारमन्तर्यामिणमात्मान साक्षात्कर्तुमीशीत । निवृत्तकर्माविद्यावरणनित्यविज्ञानरूपस्तु ब्रह्मस्वरूपसाक्षात्कारः फलमेव, न साध-नमिति । नैवं, गन्धादिगोचरेन्द्रियवृत्तेस्तत्प्रकारिपर्यन्तत्वाभावनिदर्शनेन शुक्ला-दिगोचरेन्द्रियवृत्तेरपि तदभावप्रसङ्गात् । तद्योग्यत्वमत्र विशेष इति चेत्, तुल्य-मात्मन्यपि । 'यत्साक्षादपरोक्षादि'ति श्रुते., 'मनसैवानुद्रष्टव्यमि'ति श्रवणाच्च । यदि हि परमात्मा परोक्षस्वभावः स्यात् कथमाविर्भूतनित्यविज्ञानेऽप्यपरोक्षीभवतु, स्वभावहानानुपपत्तेः । न खल्वीश्वरोऽपि वस्तुशक्तिमन्यथयति, शीतोष्णादिवि-पर्ययप्रसङ्गात् । अपरोक्षस्वभावोऽप्यात्मभूतोऽपि सर्वस्य न प्रत्यक्षः, अज्ञानमा-यादिशब्दितेन तिरोधानादिति चेत् । अत्रेद वक्तव्यम् । कि काचादिवद् द्रष्टु-रिदं तिरोधान, कि वा तिमिरादिवद् द्रष्टव्यस्य, अथवा न द्रष्टुर्नापि द्रष्ट-

व्यस्य, किन्तु कुड्यादिवदान्तरालिकं साधारणमिति । आद्ये 'मायिनं तु महेश्वरं', 'मायी सृजते', 'मम माया दुरत्यया',

"नाहं प्रकाशः सर्वस्य योगमायासमावृतः"

इत्यादावीश्वरसम्बन्धेनावारकत्वावगमविरोधः । अस्तु तर्हि परमात्मन एव द्रष्टव्यस्य तिरोधानम् । न । 'तस्मिंश्चान्यो मायया सन्निरुद्धः', 'अनादिमायया सुप्तः', इत्यादिजीवसम्बन्धावारकत्व[1]श्रवणात् । यद्युच्येत — योगमायातिरोहिते परमात्मनि जीवस्य ज्ञानाभावपरं तद् भविष्यति, 'माययापहृतज्ञाना', "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः"

"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः"

इत्यादिदर्शनादिति । तत्र यदि स्वभावावृतः परमात्मा, कदापि न प्रत्यक्षः स्यात् । अथावरणं तस्य न स्वभावः, ईश्वरो हि स्वसङ्कल्पेनैवात्मानमावृणुते इच्छयापावृणोतीति चेत्, तर्हि ध्रुवं दूयमानेष्वशेषेषु जन्तुषु परमात्मनः प्रद्वेषः, यद् निरतिशयानन्दात्मकमखिलानुभाव्यमात्मानमात्मेच्छयावृणुते । कृतप्रयत्नापेक्षः परमात्मा तत्तत्कर्मज्ञानानुरोधेनावरणमात्मनोऽपावरणं वा करोतीति चेत्, तथापि किमिदमपावरणं नाम मायायाः । न तावदात्मन उत्कृष्यापवर्जनं, सर्वानुप्रवेशेन सर्वशरीरस्य परमात्मनस्तदयोगात् । अथावरणशक्तिप्रतिबन्धः, स तर्हि सर्वं प्रत्यनावृतः स्यात् । न ह्यग्नेर्मण्यादिना दाहशक्तिप्रतिबन्धे कञ्चिदेव प्रत्यदाहकत्वम् । तच्छक्त्यनेकत्वे सर्वं प्रत्येवावृतः स्यात् । न ह्येषा शक्तिरेनं प्रत्यावारिका, अन्या त्वन्यं प्रतीति नियमहेतुरस्ति, पदार्थशक्तीनां साधारणत्वात् । ईश्वरसङ्कल्पादेव व्यवतिष्ठत इति चेद्, एवं पदार्थस्वभावमनपेक्ष्य सङ्कल्पयन् मोघसङ्कल्पो वा स्यात्, जगद् वा विपरिवर्तयेत् । अपि च, 'भूयश्चान्ते विश्वमायानिवृत्तिः',

"ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः"

इत्यादौ ज्ञाननिवर्त्यत्वावगमादज्ञानमायावरणशक्तिप्रतिबद्धवाचोयुक्तिरमूलिका । अथात्मनो जगदात्मना विस्तार एव परमात्मनो मायावरणं, तदुपसंहारश्चापावरणमिति । एवं सुषुप्तिप्रलयसुलभमोक्षाः सर्व एव प्राणिनः स्युरिति किं क्लेशेन । अत एवान्तरालिकं तिरोधानमित्यपि निरस्तम् । परमात्मनः सर्वं प्रत्यावृतत्वस्यानावृतत्वस्य वा प्रसङ्गात् ।

---

१ 'कत्व श्र' । ख पाठः ।

स्यादेतत् । पुण्यपापात्मकं कर्मैव ज्ञानावरण क्षेत्रज्ञा नाम् । तेन तेन कर्मणा सङ्कुचितज्ञाना हि क्षेत्रज्ञा ज्ञानात्मकमात्मान परमात्मानं च निरतिशयानन्दादि-कल्याणगुणमन्तर्यामिणमात्मभूतमप्रतिपद्यमाना बाह्याचिद्रूपार्थाकारमेव केवलं पश्यन्ति । दृश्यते हि स्थावरादारभ्योत्तरोत्तर कर्मतारतम्यकृत ज्ञानतारतम्यम् । कृष्णबहुले कर्मणि स्थावरादौ तमोमये ज्ञानमत्यन्तसङ्कुचितं भवति ।

"तमसा बहुरूपेण वेष्टिताः कर्मयोनिना ।
अन्तस्सञ्ज्ञा भवन्त्येते सुखदु.खसमन्विताः ॥"

इति स्मृतेः । शुक्लबहुले कर्माणि देवादौ सत्त्वमये प्रायेणासङ्कुचितवृत्ति विज्ञानं भवति । असङ्कुचितविज्ञानसम्पन्ना हि देवा इति प्रसिद्धि । मिश्रे तु मनुष्यादौ सत्त्वतमोवृत्तिके तत्साधारणमवतिष्ठते । तथा च स्मर्यते—

"अविद्याकर्मसञ्ज्ञान्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्ति. सा वेष्टिता नृप ! सर्वगा ॥
ससारतापानखिलानवाप्नोत्यतिसन्ततान् ।
तया तिरोहितत्वाच्च शक्ति. क्षेत्रज्ञसंज्ञिता ॥
सर्वभूतेषु भूपाल ! तारतम्येन वर्तते ।"

इति । श्रूयते च—'अविद्यायामन्तरे वर्तमाना' इत्यादि । अविद्याशब्दं च कर्म । 'विद्यां चाविद्या चे'त्यादौ कर्मणि दर्शनात् । 'त इमे सत्या· कामा अनृतापिधानाः, 'अनृतेन हि प्रत्यूढा.', 'अनादिमायया सुप्त.' इत्यादावनृतमायाज्ञान-शब्दं च कर्मैव, अविद्या कर्मसञ्ज्ञान्या, 'तया तिरोहितत्वाच्चे'ति स्मृत्यनुरोधात् । किमेवं 'मायां तु प्रकृति विद्यादि'त्यादावपि कर्मैव मायाशब्दा जगत्प्रकृति-रस्तु । अस्तु नाम । कर्मभिर्हि जगत् प्रक्रियते । कर्मसचिवश्चेश्वरो मायी जगत् सृजतीति श्रुत्यादिसिद्धम् । अथवा मायाशब्दोऽनेकार्थोऽस्तु । 'माययापहृत· ज्ञाना' इत्यादौ कर्मपर·, 'माया तु प्रकृति'मित्यादावन्यपर इति । अस्तु वा कर्मणि मायाशब्दो भाक्त·, मायावद्विचित्रकार्यहेतुत्वात् । सर्वथापि कर्मावृतज्ञा-नतया क्षेत्रज्ञाना पराग्दर्शिना परमात्मा न प्रत्यक्षीभवति । ध्यानाद्यावर्जितस्वा-नुग्रहलब्धकर्माविद्यापावरणस्य प्रत्यक्षीभवतीति ।

मैवम् ।

"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"

इति कर्मणामपि ब्रह्मसाक्षात्कारनिवर्तनीयत्वावगमात् । तत्र निवृत्तकर्मावरणस्य तत्साक्षात्कारमिच्छत इतरेतराश्रयत्वम् । न च ध्यानमेव दर्शनरूपपरिपाक दृष्ट इत्युच्यते, न फलभूतसाक्षात्कार इति वाच्यमित्युक्तम् । अपिच, वसिष्ठापान्तरतमःप्रभृतीना साक्षात्कृतपरतत्त्वानामेव देहान्तरसङ्क्रमपुत्रजन्मविपत्त्यादिनिमित्तसुखदुःखानुभवदर्शनेन विनैव सुकृतदुष्कृतविनाशन यावदधिकारमवस्थित्युपगमाद् न कर्म परमात्मसाक्षात्कारविरोध्यावरणमिति युक्तम् । अथ तदधिगम उत्तरपूर्वकर्मसम्बन्धाभावादारब्धस्य चानावरणत्वादविरोध इति चेद्, न। अनादिकर्मपरम्पराकृतापराधस्य हि क्षेत्रज्ञस्य स्वाभाविकापरिच्छिन्नविज्ञानादिकल्याणगुणतिरोधान पराभिध्यानाधीनमपि देहावस्थेन सूक्ष्मावस्थेन वा अचिद्वस्तुयोगेन भवतीति 'देहयोगाद्वा सोऽपि' (ब्र० ३. २. ६) इति सूत्र व्याकुर्वता प्रारब्धानावरणत्वस्य वक्तुमशक्यत्वात् । जात्यायुर्भोगोपक्रमो देहादिपरिणाम एव हि कर्मणामारम्भो नाम । अपि च कर्मावरणपक्षेऽप्यावारकस्येश्वरसम्बन्धितावगमविरोधो दुष्परिहरः । एतेन भोगाप्रच्यवो जीवस्यावरणम् । स च

"स्वसस्कारोचिताद् भोगादप्रच्यावः शरीरिणाम् ।
प्रोक्त सरक्षण नाम न्यायेन परिपालनम् ॥"

इति श्लोकोक्त इति व्युदस्तम् । मायाज्ञानादिशब्दितस्यैवावारकत्वाधिगमात्, तस्येश्वरसम्बन्धानुपपत्तेश्च । कथ तर्हि कर्माविद्यातिरोधानस्मरणम् । उच्यते । नेय स्मृतिराहत्य कर्मणामेव तिरोधायकतामाह । कि तर्हि तत्तद्देहयोगद्वारा कर्माविद्यातिरोधानाधीनज्ञानतारतम्यप्रपञ्चनपरा, अनन्तरसन्दर्भे

"अप्राणिमत्सु स्वल्पा सा स्थावरेषु ततोऽधिका"

इत्यादौ

"हिरण्यगर्भोऽपि ततः पुसः शक्त्युपलक्षितः"

इत्यन्ते तत्तद्देहयोगेनैव ज्ञानशक्तितारतम्याभिधानदर्शनात् । देहयोगः पुनरनाद्य-

---

१ 'संबन्धे अ' ख. पाठ .

विद्यात्मक एव, स्वभावशुद्धात्मनि तस्यान्यादृशस्यासम्भवात् । 'असङ्गो ह्यय पुरुषः', 'असङ्गो नहि सज्जते' इत्यादिश्रुतेः । तथा च स्मृतिः—

"निर्वाणमय एवायमात्मा ज्ञानमयोऽमल ।
दुःखाज्ञानमला धर्माः प्रकृतेस्ते तु नात्मन. ॥
जलस्य नाग्निसंसर्ग. स्थालीसङ्गात् तथापि तु ।
शब्दोद्रेकादिकान् धर्मांस्तत् करोति यथा नृप! ॥
तथात्मा प्रकृतौ सङ्गादहमानादिदूषित. ।
भजते प्राकृतान् धर्मानन्यस्तेभ्यो हि सोऽव्ययः ॥"

इति । स चायमविद्यामयो देहयोग. कर्ममूल', तन्मूल वा कर्मेत्यविद्याकर्मसञ्ज्ञेत्युच्यते । न चानयोरितरेतराधीनत्व दोष', बीजाङ्कुरवदनादित्वात् । तथा चोद्भूततमोमध्यनाद्यविद्यैव ज्ञानशक्तेरावरणम् । नन्वेवमपि 'अविद्याजीवसम्बन्धात्',

"नाह प्रकाशः सर्वस्य योगमायासमावृतः"

इत्यादेर्दुरुपपादता । न । न खलु क्षेत्रज्ञो नाम परमात्मनोऽत्यन्तविरूप तत्त्वान्तरम् । किर्ताहि, प्रत्यस्तमितसमस्तचिदचिद्भेदावाङ्मनसगोचरस्वयंप्रकाशापरोक्षचैतन्यसत्तामात्रस्य परमात्मन एवाविद्यामयेन खिल्यभावेनावस्थाभेदः । 'अनेनजीवेनात्मनानुप्रविश्य', 'क्षेत्रज्ञ चापि मा विद्धी'त्यादिदर्शनात्, 'अशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके' (ब्र० २. ३. ४३) इति न्यायाच्च । अतस्तद्रूपापत्त्या नानाभावाभिनिवेशितालक्षण मायाविद्यातिरोधानं क्वचिद् 'नाह प्रकाश' इत्यादौ परमात्मसम्बन्धेन, क्वचिद् 'अनादिमायया सुप्तः' इत्यादौ क्षेत्रज्ञसम्बन्धितया च व्यपदिश्यते विशेषाभावादिति । न च मायाविद्याभेदः, गुणमयी जगत्प्रकृतिरात्मशक्तिभूता माया, अविद्या पुनरावरणात्मिकैवेति लक्षणभेदादिति वाच्यम् । 'माययापहृतज्ञानाः' इत्यावरणलक्षणनिर्देशसामान्यात् ।

"तरत्यविद्यां विततां हृदि यस्मिन् निवेशिते ।
योगी मायाममेयाय तस्मै विद्यात्मने नमः॥"

इति मायाविद्यासामानाधिकरण्याच्च, एकस्या एवावरणविक्षेपशक्तिभेदोपपत्तेश्च। न च शक्तिरूपाया नापरा शक्तिः, अतिप्रसङ्गादिति वाच्यम्। नह्यग्नेरिव दाहशक्तिरेषात्मशक्तिरुच्यते, आत्मनो निर्विशेषस्वभावत्वाद् मायाया गुणमयत्वाच्च। किन्तु शक्तिरिव शक्तिः। आत्मनोऽव्यतिरेकेण विविधरूपापत्तिहेतुत्वादिति। सैषाविद्या ब्रह्मसाक्षात्कारजन्मनैव निवर्तते सूर्योदयेनेव तम इति न प्रथममविद्यानिवृत्त्यपेक्षयान्योन्याश्रयता। तथाच स्मृतिः[1] —

"अन्ध तम इवाज्ञान दीपवच्चेन्द्रियोद्भवम्।
यथा सूर्यस्तथा ज्ञान यद् विप्रर्षे[1] विवेकजम्॥"

इति। तस्मादधिकारिणो विचारादिविनिवर्तितासम्भावनादिदोषप्रतिबन्धवेदान्तमहावाक्यहेतुकब्रह्मसाक्षात्कारजन्मनैव[2] सविलासाविद्याबाधे निरतिशयानन्दानुभवस्वरूपप्रतिष्ठा कैवल्यमात्मनो नोपासनाक्रियेति तदर्थं श्रवणविधिरिति सिद्धम्॥

---

(इति प्रथमो भाग ।)

शुभ भूयात्।

---

१ 'श्रु', २. 'आत्मसा' ख. पाठः.

# Ready for sale.

| | RS | AS | P |
|---|---|---|---|
| भक्तमञ्जरी (Stutı) by H H. Svâtı Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | | | |
|---|---|---|---|
| No 1 — दैवम् (Vyâkarana) by Deva with Puru-shakâra of Krıshnalîlâsukamunı. | 1 | 0 | 0 |
| No 2 — अभिनवकौस्तुभमाला – दक्षिणामूर्तिस्तवौ by Krıshna-lîlâsukamunı | 0 | 2 | 0 |
| No 3 — नलाभ्युदय (Kâvya) by Vâmana Bhatta Bâna | 0 | 4 | 0 |
| No 4 — शिवलीलार्णव. (Kâvya) by Nîlakantha Dîkshıta | 2 | 0 | 0 |
| No 5 — व्यक्तिविवेक· (Alankâra) by Mahıma Bhatta with commentary | 2 | 12 | 0 |
| No 6 — दुर्घटवृत्ति (Vyâkaıana) by Saranadeva. | 2 | 0 | 0 |
| No 7 — ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsıvendra Sarasvatî. | 2 | 4 | 0 |
| No. 8 — प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravı Varma Bhûpa | 1 | 0 | 0 |
| No 9 — विरूपाक्षपञ्चाशिका (Vedânta) by Vırûpâkshanâtha with the commentary of Vıdyâchakra-vaıtın | 0 | 8 | 0 |
| No 10 — मातङ्गलीला (Gajalakshana) by Nîlakantha | 0 | 8 | 0 |
| No. 11 — तपतीसवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sıvarâma | 2 | 4 | 0 |
| No 12 — परमार्थसारम् (Vedânta) by Bhagavad Âdısesha with the commentary of Râghavânanda | 0 | 8 | 0 |
| No. 13 — सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Vaıma with the commentaıy of Sıva-râma | 2 | 0 | 0 |
| No. 14 — नीतिसार (Nîtı) by Kâmandaka, with the commentary of Sankarârya | 3 | 0 | 0 |
| No. 15 — स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second edition) | 1 | 8 | 0 |

G P T 1374 300 29 11 91

No 16—प्रतिज्ञायोगन्धरायणम् (Nâtaka) by Bhâsa 1 8 0

No. 17—पञ्चरात्रम् (Do ) Do 1 0 0

No 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya 4 0 0

No 19—मानमेयोदय (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita 1 4 0

No 20—अविमारकम् (Nâtaka) by Bhâsa 1 8 0

No 21—बालचरितम् (Do.) Do 1 0 0

No 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa 1 8 0

No. 23—नानार्थार्णवसंक्षेप (Kosa) by Kesavaswâmin (1 & 2 Kândas) 1 12 0

No. 24—जानकीपरिणय (Kâvya) by Chakrakavi. 1 0 0

No 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri 0 12 0

No 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa 0 12 0

No 27—कुमारसम्भव (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (1 & 2 Sargas) 1 12 0

No. 28—वैखानसधर्मप्रश्न (Dharmasûtra) by Vikhanas 0 8 0

No 29—नानार्थार्णवसंक्षेप. (Kosa) by Kesavaswâmin (3rd Kânda) 2 4 0

No. 30—वास्तुविद्या (Silpa) 0 12 0

No 31—नानार्थार्णवसंक्षेप (Kosa) by Kesavaswâmin (4th, 5th & 6th Kândas) 1 0 0

No 32—कुमारसम्भव (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (3rd, 4th & 5th Sargas) 2 8 0

No 33—वाररुचसंग्रह (Vyâkarana) with the commentary Dipaprabhâ of Nârâyana 0 8 0

No 34—मणिदर्पण (शब्दपरिच्छेद) (Nyâya) by Râjachûdâmanimakhin 1 4 0

No. 35—मणिसार (अनुमानखण्ड) (Nyâya) by Gopînâtha 1 8 0

| | | | |
|---|---|---|---|
| No 36—कुमारसम्भव (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (6th, 7th & 8th sargas) | 3 | 0 | 0 |
| No 37—आशौचाष्टकम् (Smriti) by Vararuchi with the commentary | 0 | 4 | 0 |
| No 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatîya Sarvânanda (Part I 1st Kânda) | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa | 0 | 12 | 0 |
| No 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Srì Ruyyaka with the Alankârasarvaswa of Srî Mankhuka and its commentary by Samudrabandha | 2 | 8 | 0 |
| No 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Srî Sankara Bhagavat Pada | 0 | 4 | 0 |
| No 42—प्रतिमानाटकम् (Nataka) by Bhâsa | 1 | 8 | 0 |
| No 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshiraswamin and Tikasarvaswa of Vandyaghatiya-Sarvananda (Part II 2nd Kanda 1—6 Vargas) | 2 | 8 | 0 |
| No 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Srî Vedottama | 0 | 4 | 0 |
| No 45—प्रपञ्चहृदयम् (Prapanchahridaya) | 1 | 0 | 0 |
| No. 46—परिभाषावृत्ति (Vyâkarana) by Nîlakantha Dîkshita | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Sri Krishnânanda Sarasvatî. (Part I) | 1 | 12 | 0 |

***Apply to —***

*The Agent for the sale of*

*Government Sanskrit Publications,*

*Trivandrum.*

TRIVANDRUM SANSKRIT SERIES

No. XLVIII

# THE SIDDHÂNTASIDDHÂNJANA

BY

SRÎ KRISHṆÂNANDA SARASVATÎ

EDITED BY

T GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit Manuscripts, Trivandrum*

**Part II.**

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE



TRIVANDRUM

PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS

1916

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ४८.

# सिद्धान्तसिद्धाञ्जनं

श्रीकृष्णानन्दसरस्वतीप्रणीतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण
त. गणपतिशास्त्रिणा
संशोधितम् ।

द्वितीयो भागः ।

तच्च
अनन्तशयने
महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशितम् ।

# विषयानुक्रमणी ।

---

॥ श्रीः ॥

# सिद्धान्तसिद्धाञ्जनं

## श्रीकृष्णानन्दसरस्वतीप्रणीतम् ।

---

### द्वितीयो भागः ।

---

#### निर्विशेषवस्तुभावशङ्का ।

अत्राह — स्यादेतदेव, यदि निर्विशेष ब्रह्म साक्षादपरोक्ष जीवस्यैव स्वरूप स्यात्, सर्वस्यैव ससारस्याविद्यामात्रत्वादात्मतत्त्वसाक्षात्कारेणैव तद्बाधादिहैव स्वरूपप्रतिष्ठा कैवल्यमिति । न त्वेवमस्ति । सर्वे हि भावाः सत्तातिरेकिभिः स्वासाधारणविशेषैरितरेतर व्यावर्तमानस्वभावा नैकात्म्यमनुभवितुमर्हन्ति । ब्रह्म च निरस्तनिखिलदोष समस्तकल्याणगुणसागरमामनन्ति वेदान्ता 'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपास सत्यकामः सत्यसङ्कल्प', 'निष्कल निष्क्रिय शान्तमि'त्याद्या., तदनुसारिण्यः स्मृतयश्च

"तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशि ।
परः पराणां सकला न यत्र क्लेशादय सन्ति परावरेशे ॥"

इत्याद्या । जीवः पुनरनादिप्रवृत्तविविधानन्तकर्माविद्यापटलपिहितविज्ञानादिगुणस्वभावो देवमनुष्यतिर्यगादिदेहोपादानपरित्यागप्रबन्धारूढः संसारापवर्गयोग्यो नानाभूतो न ब्रह्मभावमर्हति, येन ससारस्तत्र कल्पितः स्यात् । तन्निवृत्त्युपायश्च स्वरूपसाक्षात्कारः, उपेयं च ब्रह्मभूयमेव स्यात् । न खलु

G P T 30 500 5—3—1091 B

निर्विशेष किञ्चित् केनापि प्रमाणेन सिध्यति, सर्वप्रमाणानां सविशेषवस्तुविषयत्वात् । ननु सन्ति विशेषा एव निर्विशेषा, तेषामपि सविशेषत्वेऽनवस्थानात् ते च प्रमीयन्त इति । न । सर्वस्यैव धर्मधर्मिभावेन सविशेषत्वात् । धर्मिणोऽपि धर्म्यन्तरादात्मधर्मव्यवच्छेदकतया तद्विशेषत्वोपपत्ते । न च धर्मधर्मिभावापेत निर्विशेष किञ्चिदनुभूयते, अन्ततो विषयानुभवयो[1]रेवेतरेतर[2]वैशिष्ट्यानुभवात् । न च निर्विशेषो विशेष इत्ति व्यवहारोऽपि सम्भवति, स्वरूपमात्रपरत्वे पर्यायतया सहप्रयोगायोगात् । बोध्यभेदादपर्यायत्वे सविशेषत्वापरिहारात् । यस्तु स्वानुभवसिद्ध निर्विशेषमिति[3] स्वगोष्ठीनिष्ठ समयः, सोऽपीदमहमदर्शमिति स्वसाक्षिकसविशेषानुभवनिरस्त । ननु च विशेषेषु विषयादिषु वा व्यभिचरत्स्वव्यभिचारिभावविशेषोऽनुभवो वा निष्कृष्यमाणो निर्विशेष. सिध्यतीति चेद्, न, निष्कर्षो हि पृथग्रूपावगम । स च न क्वचिदपि स्वतः सम्भवति, जातिविशेषादेरपि धर्मिणैव विशेषेण निष्कर्षोपपत्ते. । अथापि जात्यादेः स्वत एव व्यावृत्तत्वं, स्वस्वाश्रययोरन्यतादात्म्यविभ्रमविरोधिप्रतिपत्तिकत्वात् । अनुभवरूप तु ब्रह्म न स्वतो निष्कृष्ट निर्विशेष च भवितुमर्हति । अतो निष्कर्षहेतुभूतैः सत्तातिरेकिभिः स्वासाधारणविशेषैः सविशेषा एवावतिष्ठन्ते भावा, इत्यात्मनोऽपि सविशेषत्वमापतद् दुष्परिहरम् । अथाविशेषेण सकलविशेषव्यावृत्त्या निर्विशेषनिष्कर्षहेतव स्वात्मानमपि व्यावर्तयेयु. सामान्यप्रवृत्तिसामर्थ्यादित्युच्येत, निर्विशेषनिष्कर्षहेतुनिवृत्तौ तदसिद्धिप्रसङ्गः । तदनिवृत्तौ च तैरेव सविशेषत्वम् । अपिचात्मादयो विशेषान्ताः सर्वे भावास्तेन तेन विशेषेण विप्रतिपद्यमाना स्वाभिमतविशेषैर्व्यवस्थाप्यन्ते । न च ते सम्प्रतिपन्नस्वरूपान्नातिरिच्यन्ते, विप्रतिपत्तिविरोधात् । ब्रह्म नित्य न क्षणिकमित्यादिनिर्देशेषु सिद्धसाध्यत्वपर्यायत्वपरिहारार्थभेदस्यावश्योपगन्तव्यतयानिच्छतोऽपि सविशेषत्वापत्तेश्च । न चामी सर्वे विशेषा अपरमार्था इति साम्प्रतम् । स्वरूपव्यावर्तकधर्मापारमार्थ्ये सविशेषसङ्करप्रसङ्गः । विशेषनिरासकधर्मापारमार्थ्ये सविशेषसत्यत्वप्रसङ्गः । नित्यत्वादिसाध्यसाधनविशेषापारमार्थ्ये च क्षणिकत्वा[4]दिविशेषप्रसङ्गः । तस्माद्

---

१ 'योरित', २ 'ति रू', ३ 'ति गो', ४ 'दिति वि' ख. पाठ.

न कथञ्चिदपि निर्विशेषवस्तुसिद्धि । अथ निर्विशेष ब्रह्मेति शब्दाद् निर्विशेषप्रतीत्यप्रतीतिभ्या निषेधानुपपत्ति., सविशेषप्रतिपत्तौ च तन्निषेधानुपपत्तिरेवेति । न । सविशेषत्वसाधनैस्तच्छब्दजनितभ्रान्तिनिवर्तनोपपत्ते., तद्वाक्यस्य प्रमाणत्वे च तत्पुरुषबहुव्रीहिभ्यामापादितावर्जनीयविशेषातिरिक्तविशेषाभावपरत्वोपपत्तेश्च । 'अविशेषास्ततो हि त' इति गन्धादिगुणकानामेव पृथिव्यादीना शान्तत्वादिविशेषनिषेधपरत्वदर्शनात् । नगरे को विशेष', न कश्चिदपीत्यादौ च निषेधसङ्कोचदर्शनात् ॥

---

## निर्विकल्पकनिरासः ।

नन्वस्त्यविशिष्टार्थविषयं प्रत्यक्ष निर्विकल्पकम् । यथाहु:—'इन्द्रियार्थसन्निकर्षोत्पन्न ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मक प्रत्यक्षम्' (न्यायदर्श० अध्या० १. आह्नि० १. सू० ४) इति । व्यपदिश्यते व्यवच्छिद्यतेऽनेनेति व्यपदेशो विशेषेण, तदर्हतीति व्यपदेश्यम् । विशिष्टमस्य विषयतया न विद्यत इत्यव्यपदेश्य, निर्विकल्पकमित्यर्थः । तथा

"अस्ति ह्यालोचनज्ञान प्रथम निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥"

इति ।

उच्यते । न सकलविशेषशून्यवस्तुमात्रग्राहक निर्विकल्पकं नाम, तथाविधग्रहणस्याननुभवहतत्वात् । इदमित्थमिति विशेषालम्बनी हि प्रतीतिरुपजायते । तेन विनानुपपद्यमानार्थाभावेन कल्पनायोगाच्च । प्रयोगश्च — जागराद्यप्रत्यक्ष सविशेषविषय सविषयज्ञानत्वात् सम्मतवदिति । न चैव सविकल्पकनिर्विकल्पकविभागव्यवहारोत्सादः इति शङ्क्यम् । विशेषानुवृत्तिविषयत्वाविषयत्वाभ्यां सस्कारजत्वतदभावाभ्या वा तद्विभागोपपत्तेः । तथाहि — एकजातीयेषु तावत् प्रथमपिण्डग्रहणेऽपि संस्थानरूपजातिव्यक्तियोग्यतया, संस्थानं विना संस्थानिग्रहणायोगेन च ससंस्थानमेव वस्तु इत्थमिति गृह्यते । न च वैशिष्ट्यायोग्यतया विशिष्टाग्रहण, सविकल्पकेऽपि तत्प्रसङ्गात् । तत्र गोत्वादेरनेकव्यक्त्यन्वयरूपानुवृत्ताकारता पर न गृह्यते, पूर्वव्यक्त्यन्वयानुसन्धानसापेक्षत्वात् तद्ग्रहणस्य । द्वितीयादिपिण्डेषु तु निर्विकल्पकजनितस-

स्कारात् तदनुसन्धाने तदनुवृत्तिर्गृह्यते । न चानुवृत्त्यग्रहणे प्रथम गोत्वमेवागृहीतमिति शक्य वदितुम् । सस्थानरूपजातेर्योग्यत्वात् सन्निकृष्टत्वाच्च । अन्यथा प्रथम गोत्वतत्सम्बन्धयोरग्रहणे तदनुसन्धानाभावेन द्वितीयादिष्वपि तदनुवृत्त्यग्रहणे सर्वदा गोत्वमगृहीतमेव स्यात् । तस्मात् प्रकारप्रकारिभावेनैव जातिव्यक्ती निर्विकल्पकेऽपि गृह्येते । सविशेषविषयत्वे समानेऽपि सविकल्पकस्य तत्तत्सस्थानेऽनुवृत्ताकारताग्रहण विशेषः । न च निर्विकल्पके जातिव्यक्ती पृथगेव गृह्येते, सविकल्पके तु तद्वैशिष्ट्यमपीति वाच्य, सम्बन्धस्यापि योग्यत्वाद् दण्डपुरुषयोरपि सम्बन्धकाले प्रथम पृथग् ग्रहणानिष्टे ॥

---

## विशेषणज्ञानहेतुत्वभङ्ग ।

ननु विशिष्टज्ञाने विशेषणज्ञान कारण, पृथग् दण्डमजानानस्य दण्डी पुरुष इति ज्ञानादर्शनात् । अन्यथा विशेषणविशेष्यभावनियमश्च न स्यात् । जनकज्ञानविषयस्यैव विशेषणत्वादिति चेद्, न, अपरोक्षविशिष्टज्ञाने तावदिन्द्रियसंनिकर्षयोग्यते विशेषणविशेष्ययोरुपेये । अन्यथा जठरान्तरितविशेषणविशिष्टज्ञानापत्तेः । गिरेरग्निमत्त्वापरोक्षापत्तेश्च । सति विशेषदर्शने सशयोत्तरप्रत्यक्षानुरोधेनानुमितिसामग्रीतः प्रत्यक्षसामग्रीबलवत्त्वात् ततस्तावतैव विशिष्टज्ञानोपपत्तौ किं विशेषणज्ञानकारणत्वकल्पनया । विशेषणविशेष्यभावस्य सप्रतियोगिकत्वेऽपि युगपदेव प्रतियोगिगर्भनिर्भासत्वोपपत्तौ प्रथमं प्रतियोगिस्वरूपमात्रज्ञानकल्पनागौरवात् । यत्तु इन्द्रियसन्निकर्षाविशेषेऽपि गोत्वस्मृतिमतो गवि द्रव्यत्वविशेषानवगाहिगोत्वविशिष्टज्ञानमेव जायमान विशेषणज्ञानस्य जनकता नियच्छति । अन्यथा नियामकाभावेन द्रव्यत्वसविकल्पकमपि स्यादिति । तन्न, द्रव्यत्वसंशयादिबीजदोषाभाव इष्टत्वात् । तद्भावे च तत एव प्रतिबन्धात् । अन्यथा परपक्षेऽपि तन्निर्विकल्पमूलद्रव्यत्वसविकल्पापत्तेरपरिहार्यत्वात् । न चैवं विशेषणविशेष्यभावानियमः, जातिव्यक्त्योरुभयोरपि योग्यतया पूर्वज्ञानविषयत्वाविशेषे जनकत्वव्यवस्थाहेत्वभावेन विशेषणज्ञानकारणत्वपक्षेऽपि तन्नियमानुपपत्तेः । न च जनकज्ञानविषयतया विशेषणत्वम्, अनुमितौ पक्षज्ञानस्य हेतुत्वेऽपि पक्षस्य विशेष्यत्वात् । विशेषणज्ञानत्वेन जनकता जनकज्ञानविषयत्वेन च विशेषणतेतीतरेतराश्रयप्रसङ्गाच्च ।

एवं परोक्षविशिष्टज्ञानेऽपि विशेषणज्ञानं न हेतुः, अनुमितिहेतुव्याप्तिज्ञानस्य साध्यसाधनसामान्योपाधौ साधनाश्रयसाध्यसम्बन्धगोचरतया तादर्थ्येनैवोपयुक्तस्य साध्यज्ञानस्यानुमितौ विशेषणज्ञानतया पृथगनपेक्ष्यत्वात् । अप्रसिद्धसाध्यकव्यतिरेकिणि प्रथमं साध्यज्ञानानुपपत्तेश्च । स्मारितपदार्थससर्गविषये शाब्दज्ञाने च विशेषणविशेष्यभावकामचाराद् न विशेषणज्ञानस्य जनकता शक्याश्रयितुं, तत्रैव ज्ञाने पुरुषभेदेन हेतुभेदकल्पनागौरवात् । पदार्थज्ञानापेक्षा तु सम्बन्धज्ञानस्य सम्बन्धिनिर्भासगर्भत्वात् पदानां क्रमवृत्तितया च सम्बन्धसम्बन्ध्युपस्थितियौगपद्यासम्भवनिमित्ता, न विशेषणज्ञानकारणत्वनिमित्ता । तस्माद् भासमानवैशिष्ट्यप्रतियोगित्वानुयोगित्वरूपविशेषणविशेष्यभावो विषयताविशेषो वा विशिष्टज्ञानप्रवृत्त्येकनिबन्धनो नान्यनिमित्त इति । एतेन जागराद्यसविकल्पकं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वाद् दण्डी पुरुष इति ज्ञानवदिति प्रत्युक्तं, अप्रयोजकत्वाद्, दृष्टान्तासम्प्रतिपत्तेश्च, दण्डपुरुषसम्बन्धदशायामुभयेन्द्रियसन्निकर्षे सति विशिष्टज्ञानस्यैवाहत्योत्पत्त्युपगमात् ।

अपिच, निर्विकल्पकत्वाभिमतेन जातिव्यक्ती मिथो विविक्ते गृह्येते न वा । न चेद् भेदाप्रतीतौ विशेषणविशेष्यवैशिष्ट्यज्ञानं न स्यात्, स्वरूपसतो भेदस्य ज्वालादाविव तज्ज्ञानानुपयोगित्वात् । घटस्य स्वरूपं ज्ञानस्य प्रकाश इत्यादौ वास्तवविवेकाभावेऽपि तद्भ्रमगर्भविशिष्टज्ञानाच्च । आद्ये च जात्यादेस्तद्व्यावृत्तिप्रयोजकपारतन्त्र्यादिविशेषाणां च प्रथमं वैशिष्ट्याप्रतीतावुक्तविकल्पानवस्थापत्तेः । वस्तुसामर्थ्यादेव तत्र प्रथमं तद्वैशिष्ट्यज्ञाने, वरं जातिव्यक्त्योरेव प्रथममेव वैशिष्ट्यज्ञानमस्तु, विशेषणविशेष्यस्वभावत्वादिरूपवस्तुसामर्थ्याविशेषात् । तस्मात् प्रथममेव गोत्ववैशिष्ट्यग्रहेऽपि तदनुवृत्तत्वाग्रहाद् निर्विकल्पकमुच्यते । द्वितीयादिग्रहणं तु तदनुसन्धानापेक्षया तदनुवृत्तिग्रहात् सविकल्पकमुच्यते । अत एव धारावाहिकमन्यद्वा जात्याद्यनुवृत्तिभानविकलत्वान्निर्विकल्पकमेव । एवं गुणक्रियादिवैशिष्ट्यज्ञानेऽपि सविकल्पकनिर्विकल्पकभेद ऊहनीयः । अथ सन्निकृष्टजातिगुणक्रियादियोग्यतया असङ्कीर्णोपस्थिततद्वैशिष्ट्यावगाहिनि प्रथमज्ञाने पिण्डस्यैव तत्रानुवृत्तिग्रहणात् तदपि सविकल्पकमेव स्यादिति चेद्, न, खलकपोतन्यायेन युगपदनेकवैशिष्ट्यावगाहिनि ज्ञानेऽन्यवैशिष्ट्यानुसन्धानापेक्षानुवृत्तिग्रहणायोगात् । कालभेदेन तदनुसन्धा-

नापेक्षानुवृत्तिग्रहणे तु भवेदेव सविकल्पकमिति । तस्मान्न प्रत्यक्षतो निर्विशेषसिद्धिः । अनुमान च विशिष्टविषयमेवेत्यविप्रतिपन्न, पक्षधर्मतया साध्यज्ञानस्यानुमानफलत्वात् । शब्दस्तु विशेषेण सविशेष एव, वस्तुन्यभिधानसामर्थ्यात् पदवाक्यरूपेण तत्प्रवृत्तेः । प्रकृतिप्रत्यययोगेन हि पदत्वम् । अतस्तस्यैव तदर्थभेदेन विशिष्टार्थप्रतिपादनमवर्जनीयम् । अपर्यायपदसङ्घातरूपस्य तु वाक्यस्यानेकपदार्थससर्गविशेषाभिधायित्वेन दूरे निर्विशेषवस्तुप्रतिपादनसामर्थ्यम् । तस्मान्न केनापि प्रमाणेन निर्विशेषसिद्धिः, प्रमाणान्तराभ्युपगमेऽपि तेषामप्युक्तगत्या सविशेषविषयत्वात् ॥

---

### आगमस्य प्रत्यक्षविरुद्धबोधकत्वनिरासः ।

एव प्रत्यक्षादिसिद्धानेकविशेषेषु भावेषु नागमेन निर्विशेषात्मतत्त्वं शक्य प्रतिपादयितुं, प्रत्यक्षादिप्रमाणविरुद्धार्थवृत्ते. शास्त्रस्याप्रामाण्यात् । न खलु 'आदित्यो यूपः' इत्यादे स्वार्थे प्रामाण्यम् । किं कारण, प्रत्यक्षादिविरोधादेव । अत एव हि मन्त्रार्थवादादेरन्यशेषस्यापि मानान्तराविरोधे प्रामाण्यमुपगम्यते । अन्यथा

> प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिन' ।
> वेदान्ता यदि मानानि बौद्धैः किमपराध्यते ॥

न च दोषमूलतया सम्भावितान्यथासिद्धि पूर्वं च प्रत्यक्षादि परेणापौरुषेयतया मुषिताशेषदोषाशङ्केनानन्यथासिद्धेन शास्त्रेण बाध्यतामिति वाच्यं, ज्वालैक्यप्रत्यक्षादाविव तद्भेदानुमानादिबाध्ये दोषमूलत्वस्य भेदप्रत्यक्षादौ मानान्तरासिद्धत्वात् । अस्ति हि सादृश्यादि ज्वालैक्यभ्रमे मूलम्, आचिरनिर्वापितदीपादौ क्लृप्तत्वात् । तच्च सूक्ष्मप्रेक्षिकया भिन्नभिन्नस्नेहदशावयवादिसामग्र्युपादेयज्वालाभेदस्य प्रत्यक्षतोऽपि सुज्ञानतया तत एव ज्वालैक्यभ्रममूलदोषतया कल्प्यत इति तद्बाधकज्वालाभेदानुमानलम्भनीयत्वाभावान्नान्योन्याश्रयमावहति[1] । अन्त्यमध्यमदशावयवाग्निसंयोगोपादाना दीपज्वाला आदिदशावयवाग्निसयोगोपादानज्वालाप्रतियोगिकभेदवती, भिन्नसामग्री-

---

[1] 'ति । तथा अ' ख. पाठ..

कत्वात्, सम्मतवदिति ज्वालैक्यप्रत्यक्षबाधकानुमान न दोषमूल, न वा तथावगतम् । प्रकृते च न भेदप्रत्यक्षादेरनादिभेदवासनादोषमूलत्व प्रागस्य शास्त्रस्य निर्विशेषतात्पर्यावसायादधिगन्तुं शक्यम् । तत्तात्पर्यावसायश्च प्रत्यक्षादिविरोधे सत्यसम्भवस्तस्य दोषमूलत्वनिश्चयायत्त इति प्राप्तमितरेतराश्रयत्वम् । काचादिदोषमूलभ्रमदृष्टान्तेन प्रत्यक्षत्वादिना तत्र तदनुमाने च शब्दत्वादिना शास्त्रेऽपि तदनुमानप्रसङ्ग. । अभ्युपगम्यते च भवता शास्त्रस्याप्यविद्यादिदोषमूलत्वम् । एव च तुल्ये दोषमूलत्वे भेदाध्यक्षादिना किमिति न शास्त्रमेव बाध्येत । पौर्वापर्ये पूर्वदौर्बल्यन्यायेन* शास्त्र प्रत्यक्षादि बाधते परत्वादिति चेद्, न, दुष्टत्वनिश्चये सति परत्वस्याकिञ्चित्करत्वात् । परस्यापि रज्जुज्ञानस्य दोषमूलत्वनिश्चये प्राथमिकसर्पबाधकत्वादृष्टेः । अपिच प्रकृतिप्रत्ययविभागपदतदर्थव्युत्पत्तितात्पर्यग्रहणादिपरिकरोपस्कृतशास्त्रग्रहणस्य दोषमूलत्वे श्रवणवेलायामेवाधिगते प्रागेव निर्विशेषात्माधिगमादतथाभूत मिथ्याशास्त्रमप्रमाणमापन्नम् । तत्र कुतस्तस्य बाधकत्वम् । कुतस्तरा च प्रत्यक्षादेर्बाध्यत्वम् । अपिच स्वाभिमतविपरीतार्थप्रमाणजातस्य दोषमूलत्वेऽपारमार्थ्ये वा प्रमाणं सद् दोषमूलम्(१) । परमार्थश्चेत् तत एव द्वैतविजय । अतादृश चेदपि तथाभेदग्राहिणामेव प्रमाणत्वात् । अपिच स्वपक्षे परपक्षभेदापारमार्थ्ये तव परपक्षाङ्गीकार एव स्यात् । तत्पारमार्थ्ये च न भेदमिथ्यात्वम् । ननु व्यावहारिक प्रमाणप्रमेयादिव्यवहारोऽस्माकमपीति चेत् । कोऽय व्यावहारिको नाम । आपातप्रतीतिसिद्धो युक्तिभिर्दुर्निरूपोऽतथाभूत इति चेद्, एव यौक्तिकबाधादेव प्रमाणकार्यानुपपत्ति । अथ स्वरूपपरिकराद्यशे दोषमूलत्वाविशेषेऽपि शास्त्रस्य पराचीननिर्विशेषसंविदात्मरूपविषयबाधाभावेन व्यवस्थितविषयस्य विरुद्धविषयप्रत्यक्षादिबाधकत्व परत्वादिति चेद् । न तावद् बाधकप्रत्ययानवतारमात्रेण यथार्थविषयत्व प्रत्ययस्य, उलूकादेरालोकादौ तिमिरादिप्रत्ययस्य बाधानवतारेऽपि तथात्वाभावाद् दुष्टकरणत्वेनापि तस्यायथार्थत्वात् । यस्य च दुष्ट करण, यस्य मिथ्येति प्रत्यय, स एवासमीचीन इति हि नीतिविद. । उक्त च—

"तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥"

इति ॥

---

१ 'णकत्वे' ख. पाठ

---

* (जैमि० सू० ६ ५ ५४)

## असत्यात् सत्यप्रतीतिनिरासः।

शास्त्रजन्यज्ञानं च तवाविद्यादोषमूलमेवेति तद्विषयो ब्रह्मापि मिथ्या स्याद्, मृषाहेतुजन्यज्ञानविषयत्वाच्च प्रपञ्चवत्। न च स्वप्नादसत्यादपि सत्यशुभाशुभादिप्रतिपत्तिर्दृश्यते, वक्ष्यति च सूत्रकारः—'सूचकश्च हि श्रुतेराचक्षते च तद्विद' (ब्र० ३. २. ४) इतीति वाच्यम्। तज्ज्ञानस्यैव तत्र हेतुत्वात्, तस्य च विषयबाधेऽप्यबाधेन सत्यत्वात्। एवमन्यत्रापि यत्रासत्यात् प्रीतिभीत्यादेः सत्यस्योत्पत्तिः प्रतिपत्तिर्वा शङ्क्यते, तत्र सर्वत्रापि ज्ञानमेव हेतुः। तच्च सत्यमेवेति। अथ कथं स्वप्नहस्तिशुक्तिरजतादिविषयासत्यत्वे ज्ञानसत्यत्वं, तस्य विषयसत्यताव्याप्तिदर्शनादिति चेद्, न, सालम्बनत्वमात्रेण धियां सत्यत्वोपपत्तेः। प्रतिभासमानतारूपं चालम्बनत्वं न विषयसत्यत्वासत्यत्वयोरतिरिच्यते, असत्यस्यापि दोषादेव प्रतिभासोपपत्तेः। स तु बाधितोऽसत्य इत्यवमीयते। ज्ञानं तु न बाध्यत इति। अथापि न ज्ञानमात्रेण शुभादिप्रतिपत्तिः, अतिप्रसङ्गात्। स्वप्नगजादिविषयावच्छिन्नात् तु ज्ञानात् तत्प्रतिपत्तौ, असत्यात् सत्यप्रतीतिरायातेति चेद्, न, तत्तदालम्बनव्यावृत्तेनैव ज्ञानेन शुभादिप्रतिपत्तेः। आलम्बनत्वं च प्रतिभासमानत्वमतीतादेरिव प्रतिपन्नोपाधावविद्यमानस्यापि हस्त्यादेरविरुद्धम्। न च तावतास्यापि हेतुत्वम्, अविद्यमानस्य पूर्ववर्तित्वाभावात्, स्वप्नार्थशुक्तिरजतादेः सत्यत्वोपगमाच्च। 'अथ रथान् रथयोगान् पथः सृजते स हि कर्ते'त्यादिश्रुतेः। पञ्चीकरणेन शुक्त्यादौ रजताद्यवयवसम्भेदोपपत्तेश्च। दर्पणाद्यभिहतपरावृत्तनायनरश्मिभिस्तदेव मुखमवभास्यत इति न प्रतिबिम्बाद् बिम्बानुमानमप्यसत्यात् सत्यप्रतिपत्तावुदाहरणम्। यद्यपि रेखाभेदमात्रेण न वर्णबुद्धिः, किन्तु वर्णात्मना गृहीतेन, तथापि नासत्यात् सत्यबुद्धिः। सत्याया एव तदालम्बनबुद्धेस्तद्बुद्धिहेतुत्वात्। न च रेखाया वर्णबुद्धिर्वर्णबुद्धिहेतुः, उपायोपेयैक्यायोगात्। किन्तु पिण्डविशेषे डित्थादिसङ्केतवद् रेखाविशेषेषु वर्णविशेषसङ्केते ततो वर्णबुद्धिरिति न काचिदसत्यात् सत्यबुद्धिः। रेखागवयादिप्रतिपत्तावपि तद्गतसादृश्यबुद्धेरेव हेतुत्वात्। अपिच ब्रह्मातिरिक्तसर्वमृषात्वमते नासत्यात् सत्यप्रतिपत्त्युदाहरणसम्भवः, अभ्युपगमविरोधात्। दुष्टमृषाहेतुजन्यज्ञानविषयत्वेऽपि परतो बाधाभावेन यदृच्छासंवादीव ब्रह्म न मिथ्ये-

ति चेद्, न, तत्र मानान्तरसवादस्याधिकत्वात्, पाश्चात्यबाधाभावासिद्धेश्च । ब्रह्मणोऽपि शून्यमेव तत्त्वमिति माध्यमिकवाक्येन परेण बाधात् । दोषमूलत्वं च तव शास्त्रस्य शून्यत्वशासनेन समानम् । पाश्चात्यबाधाभावस्तु तस्यैवाधिक इत्यलमप्रतिष्ठितकुतर्कपरिहसनेन ॥

---

## छान्दोग्यस्य निर्विशेषपरत्वनिरासः ।

अपिच निरूपणायामपि वेदान्ताना न निर्विशेषवस्तुप्रतिपादन क्वचिदुपलभ्यते । तथाहि — कारणवाक्यानि तावत् 'सदेव सोम्येदमग्र आसीदि'त्येवमादीनि 'सदि'ति कारणत्वौपयिकगुणविशिष्टं प्रकृतिपुरुषकालशरीरक परमात्मानं, 'तदैक्षते'ति सर्वज्ञ, 'प्रविश्य नामरूपे व्याकरवाणी'ति सत्यसङ्कल्प, 'सदायतनाः' इति सर्वाधारं, तत एव सर्वनियन्तारम्, 'एतस्य वाक्षरस्य प्रशासने गार्गि[1] सूर्याचन्द्रमसौ विधृतौ तिष्ठत.' इति प्रशासनेन धारकत्वश्रवणात्, अत एव सर्वान्तरं 'अन्तरो यमयती'ति श्रुत्यन्तरात्, 'ऐतदात्म्यमिद सर्वमि'ति सर्वात्मानम् इत्येवमादिकल्याणगुणविशिष्टमेव प्रतिपादयन्ति ।

सद्वाक्य ह्युपक्रमादिभि· सविशेषविषयमवगम्यते । उपक्रमे तावत्, 'उत तमादेशमप्राक्ष्य.' इति प्रशासिताभिधीयते, आङ्पूर्वस्य दिशते· शासनवाचकत्वात् । 'आङ्पूर्वो दिशिर्नियोक्तृप्रयोजनवचन, उपपूर्वस्तु नियोज्यप्रयोजनवचन' इति हि न्यासकार । ननु इगुपधात् कविधौ सति पचाद्यजयोगाद् किति चोपधागुणानुपपत्तेरादेशशब्दो घञन्तो न कर्तरि स्यात्, 'अकर्तरि च कारके—' (३. ३. १९) इत्यनुशिष्टे· । न च प्रशासने कर्मत्व करणत्व वा ब्रह्मणः शासित्रन्तराभावादित्युपदेशकर्मत्वमेवेह विवक्षित, न प्रशासितृत्वमिति चेद्, मैवम्, अव्यावर्तकत्वादर्थसिद्धेश्चोपदेश्यत्वस्य विवक्षानुपपत्तेः । साधारण हि संसारनिवृत्तितदुपायब्रह्मणामुपदेश्यत्व, प्रष्टव्यत्वोक्त्यर्थसिद्ध च । अपिचैकविज्ञानेन सर्वविज्ञानप्रतिज्ञापेक्षित शासितृत्वं, नोपदेश्यत्व, सति निमित्तान्तरे तत्प्रतिज्ञानुपपत्ते । शासितृत्वेन च तस्यैव निमित्तत्वे 'येनाश्रुत श्रुतमि'त्यादितत्प्रतिज्ञोपपद्यते । तथाचापेक्षितानपेक्षितयोरपेक्षितविधान युक्तम् । न च घञनुपपत्तिः, 'विवक्षातः कारकाणि भवन्ती'ति शाब्दन्यायेन कर्तुरेव करणान्तरानपेक्षतया करणत्वोपचारात् तदुपपत्ते· । प्रधानप्रकृत्यर्थस्वारस्यार्थौचित्याभ्यामुपचारस्यापि युक्तत्वात् । तादिदमाहुः—

---

१ 'चित्ता' क पाठ.

"छान्दोग्ये केचिदाहुर्दिशतिरुततमादेशमप्राक्ष्य इत्य-
त्राङ्पूर्वस्तूपदेश प्रकटयति सतो न प्रशास्ति घञन्तः ।
नो कर्तर्यस्ति कर्मण्यगणि घञिह सत् कर्तृ शास्तौ न कर्म
स्यात् स्यात् कर्मोपदेशे तदिदमुततमादेशवाचोपदेश्यम् ॥
अत्र ब्रूमः प्रशास्ति वदति दिशिरसावाङ्मुखो नोपदेश
शास्तौ सोऽतिप्रसिद्धो न हि पर इह चापेक्षितार्थप्रसङ्गः ।
युक्तोऽसाधारणोक्त्या घञगणि करणेऽप्यत्र वैवक्षिकत्व
शाब्दोक्त कारकाणा ननु करणतया कर्तरि स्याद्विवक्षा ॥"

इति ।

उपसंहारे च 'ऐतदात्म्यमिद सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इति चिदचित्प्रपञ्चान्तर्यामित्वमुच्यते । तदेव च बहुकृत्वोऽभ्यस्यते । 'तदैक्षत बहु स्या प्रजायेये'ति सर्वज्ञत्वादिगुणकं परामृश्यते । न च तादृग्गुणविशिष्ट ब्रह्म मानान्तरगम्यमित्यपूर्वता । 'तस्य तावदेव चिर यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति फलम् । पितापुत्रसवादाख्यायिकारूपोऽर्थवादः । 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मय विज्ञात स्यादि'त्यादिदृष्टान्तोपादानादुपपत्तिश्चेति ।

न च कृत्स्नस्य विवर्ततया तदपेक्ष प्रशासितृत्वादिकमपि मृषेति न ब्रह्मणः सगुणत्वमिति वाच्यम् । न ह्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञया विकारविवर्तत्वसिद्धिः, तस्या कारणकार्याभेदनिबन्धनत्वात् । न च सत्यासत्ययोरभेदो घटते तज्ज्ञानेनासत्यज्ञानं वा, बाधात् । विकारपरिणामत्वानुगुणाश्च दृष्टान्ता दृश्यन्ते । ततो दार्ष्टान्तिकेनापि तथैव भवितु युक्तम् । अन्यथा तत्तेजोऽभ्राम्यदिति स्यात् । न तु 'तत्तेजोऽसृजत' इति । श्रूयते च 'तदात्मान स्वयमकुरुते'ति, न तु व्यवर्तत इति । सूत्रकृदपि — 'परिणामात्' (ब्र० १. ४. २६) इत्याह, न तु विवर्तादिति ।

---

### परमते वाचारम्भणश्रुत्यर्थः ।

न च 'वाचारम्भण विकारो नामधेयं मृत्तिकेत्येव सत्यमि'त्यतस्तात्सिद्धिः, तत्र विवर्तत्वबोधिशब्दाभावात् । मृत्तिकासत्यत्वावधारण चासिद्धम् ,

येन विकारविवर्तत्वमार्थिक स्यात् । तथाहि सति मृत्तिकैव सत्येत्येवावक्ष्यद् , न तु मृत्तिकेत्येव सत्यमिति । तदयमर्थ — कथ मृत्पिण्डविज्ञानेन सर्वं मृन्मय विज्ञायेतेति, कार्यकारणाभेदादित्युच्यते वाचेत्यादि । अत्र वाचेति वाक्पूर्वको व्यवहारो लक्षितः । प्रयोजनतया हेतुरुच्यते । आरम्भणमिति कर्मणि ल्युट् । 'सरिरस्य मध्ये अन्तरिक्षमनारम्भणमिवे'त्यादाविव रलाभेदेन स्पर्शार्थ , 'आलम्भ स्पर्शहिसयोरि'त्यभिधानाद् 'वत्समालभेते'त्यादिदर्शनाच्च । तथाच मृत्पिण्डेनेत्यनुषङ्गे वाक्पूर्वकहानादिव्यवहारार्थ मृत्पिण्डेन विकारो घटाद्यवस्था घट इत्यादिनाभधेय च स्पृश्यते । मृत्पिण्ड एव नामरूपभाग् भवति, न मृदो द्रव्यान्तर घटादिरिति प्रतिज्ञाते प्रमाणमुच्यते 'मृत्तिकेत्येव सत्यमि'ति । मृद्घट इति प्रत्यभिज्ञया घटादिकमपि मृद्द्रव्यत्वेनैव प्रामाणिकमित्यर्थः । शब्दबुद्ध्यादिभेदेऽप्यास्ते शेते सुख्यह दुःख्यहमित्यादाविव प्रत्यभिज्ञाया एव द्रव्यैक्यनियामकत्वात् । अन्यथा मृद इव घटादेरपि सत्यत्वेन तत्सत्यत्वावधारणानुपपत्तेश्च । व्यावहारिकसत्यत्वस्य तवोभयत्रापि तुल्यत्वात् ॥

---

### परमते सदेवेत्यादिश्रुत्यर्थः ।

न च 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि'ति सावधारणमखिलभेदनिषेधावगमाद् निर्विशेषपर प्रकरणमवगम्यत इति युक्तम् । न ह्ययमर्थ. सदेवासीद् नान्यदासीदिति । इद शब्दसमानाधिकृतं हि सदवधार्यते । तेनेदं सदेवासीदित्येवकारव्यवच्छेद्यापेक्षाया सत्प्रतियोगिकमसत्त्व प्रतीयते नामदासीदिति । अतोऽसत्कार्यवादनिरासाय सदेवेत्यवधारणमिति गम्यते । एव च परिहृतकार्यावस्थ कारणावस्थ सदेवासीदिति सविशेषमेवाभिधीयते । प्रलीननामरूपविभागचिदचित्प्रपञ्चशक्तिमयातिसूक्ष्मस्वैकीभूततमश्शरीर सर्वज्ञत्वादिगुण ब्रह्म हि कारण, 'तम आसीत् , तमसा गूढमग्रे प्रकेतम्', 'तमसस्तन्महि नाजायतैकम्',

"आसीदिद तमोभूतमप्रज्ञातमलक्षणम् ।"

इत्यादिदर्शनात् । तदेव चावस्थान्तरापन्न कार्यमुच्यते । मृदोऽपि हि पूर्वा पिण्डावस्था कारणम् , उत्तरा घटाद्यवस्था कार्यम् , इत्यतः कार्यकारणाभेदादिद जगत् सदे-

---

१. 'ण' ख पाठ .

वासीदिति युक्तमवधारयितुम् । अन्यथा निर्विशेषपरत्वे 'अग्र आसी'दिति कालविशेषसम्बन्धनिर्देशानुपपत्ते । न खलु ब्रह्म कालविशेषे निर्विशेषमुपेयते अन्यदा हेतूपरागनिमित्ते सविशेषत्वे ब्रह्मणो विक्रियापत्ते. ।

'एकमेवाद्वितीयमि'ति च न सजातीयविजातीयस्वगतभेदनिरासपर, कारणविषयत्वाद्, 'अग्र आसीदि'ति विजातीयकालभेदावगमात्, कृतहानादिपरिहाराय प्रलयेऽपि सजातीयजीवभेदावश्यम्भावात्, सर्गौपयिकज्ञानशक्त्यादिस्वगतभेदयोगाच्च । किन्त्वेकमित्यव्यक्तनामरूपत्व, 'तद्धेद तर्ह्यव्याकृतमासीदि'ति श्रुत्यन्तरैकार्थ्यात् । एवेति च वैशिषिकादिमतनित्यत्वापच्छेदेनाकाशादीनामप्युपसहार, 'अद्वितीयमि'ति निमित्तान्तराभावश्च प्रतिपाद्यते ।

तदेवमुपसहरणीयाशेषमङ्गलगुणविशेषकारणब्रह्मविषयेषु वेदान्तेषु 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षु.श्रोत्र तदपाणिपादमि'त्यादिप्राकृतहेयगुणप्रतिषेधेन 'नित्य विभु सर्वगत सुसूक्ष्म', 'य. सर्वज्ञ सर्वविदि'त्यादिकल्याणगुणा आम्नायन्ते । 'सत्यं ज्ञानमनन्त ब्रह्मे'त्यत्रापि सत्यत्वादिविशिष्टमेव ब्रह्म प्रतिपाद्यते, नीलमुत्पलमित्यादिषु समानाधिकरणवाक्यस्य विशिष्टैकार्थपरत्वव्युत्पत्ते. । 'भिन्नप्रवृत्तिनिमित्ताना शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमि'ति हि शाब्दाः । तत्र घटः कुम्भ इत्यादिपर्यायव्यावृत्तये भिन्नप्रवृत्तिनिमित्तानामिति । प्रवृत्तिरभिधान पदाना यद्यपि विशिष्टविषयमिति न तत्र निमित्तान्तरमस्ति, तथापि 'गुणानां प्रतिपत्तिर्गुणिप्रतिपत्त्यर्थे'ति न्यायेन तदत्र विशेष्यार्थविषय गृह्यते। तत्र भिन्नानि (प्रवृत्ति) निमत्तानि द्वाराणि जातिगुणादीनि येषा तेषामित्यर्थः । गौरश्वो नीलं पीतमित्यादिव्यावृत्तय एकस्मिन्नर्थ इति। एकविशेष्य इत्यर्थः । समानविभक्त्या बोधनं च वृत्तिः। तेनासौ राजा, अस्येद राज्यमिति न राजेदंशब्दसामानाधिकरण्यम् । कथ तर्हि गौर्गच्छतीति सामानाधिकरण्य, समानविभक्त्यभावात् । तत्र सामानाधिकरण्यव्यवहारो गौणस्तिङर्थाभेदात् । अथवा विरुद्धार्थविभक्त्यभावेन समानविभक्त्युपचारः । अथवा वृत्तिरिति तदर्थबोधपरत्व विवक्षितम् । राजेदम्पदयोश्च नैकार्थबोधपरत्वमित्यदोषः । कथमेवमपि 'वाजपेयेन यजेते'ति

---

१, 'था' ख, पाठ.

यागवाजपेयपदसामानाधिकरण्यम् । अथ सञ्ज्ञा वाजपेयपदं सञ्ज्ञिनं यागमभिदधीत यागपदं च, स तर्हि सञ्ज्ञावच्छिन्नो यागो न प्रतीयेत, सञ्ज्ञायास्ताटस्थ्यात् । अथ तर्हि सञ्ज्ञा लोकव्युत्पत्त्या स्वावच्छिन्ननिरूढा सञ्ज्ञिनमभिदधीत, विशेषणविशेष्यसामानाधिकरण्यादिदं सञ्ज्ञासञ्ज्ञिसामानाधिकरण्यं नातिरिच्येत। आहस्म च भगवान् पतञ्जलिः —

"द्वयोश्चैतद्भवति । कयोः । विशेषणविशेष्ययोः सञ्ज्ञासंज्ञिनोर्वा"

इति । अनतिरेके च किं विकल्प्येत, नायं दोषः । सत्येव विशेषणत्वे संज्ञाया बोधककोट्यनुप्रवेशेन ताटस्थ्यमिवालक्ष्य विकल्प्यते सञ्ज्ञासञ्ज्ञिनोर्वेति । यथाह कैयटः — 'सञ्ज्ञासञ्ज्ञिनोरप्यस्ति विशेषणविशेष्यत्वं, प्रसिद्ध्यप्रसिद्धिभ्यां तु भेदेनोपादानमि'ति । एवं समानाधिकरणवाक्यस्य विशिष्टाभिधानमसमानविभक्तिसमभिव्याहाराभ्यामनेकविशेषणविशिष्टैकार्थपरत्वावगमाद्, अन्यथा निरुक्तलक्षणसामानाधिकरण्यविरोधात् । न च विशेषणभेदोपाधिकविशिष्टभेदे सति सामानाधिकरण्यानुपपत्तेर्विशेष्यस्वरूपमात्रपरत्वमेव समानाधिकरणवाक्यस्येति युक्तम् । भिन्नभिन्नविशेषणद्वारा पदानामेकविभक्तिसमभिव्याहारेणाभिन्नविशेष्यवृत्तितयैकस्मिन्ननेकविशेषणवैशिष्ट्यावगमे विशिष्टभेदाभावात् । पदानां पर्यायत्वापत्त्या तावन्मात्रविषयेऽनेकपदवैयर्थ्यापत्त्या च सामानाधिकरण्यभङ्गप्रसङ्गाच्च ॥

---

## सत्यादिश्रुतिविचारः ।

अथ सत्यादिपदानामनृतादिव्यावृत्त्यवच्छिन्नस्वरूपविषयत्वमुच्येत, पदशक्यसत्यत्वादिप्रहाणेन लाक्षणिकविरोधिव्यावृत्तिविशिष्टवृत्तिकल्पनाक्लेशमात्रं प्रसज्येत । न च प्रतियोगिभेदे सति व्यावृत्तयो न भिद्येरन्, येन विशिष्टाभेदादत्रैव सामानाधिकरण्यमुपपद्येत । उपलक्षणत्वे च व्यावृत्तीनामुपलक्ष्यतावच्छेदकभेदाभावे सत्येकयैव व्यावृत्त्योपलक्ष्यावगमितं ब्रह्मेति पदान्तरेण तदुपलक्षणवैयर्थ्यात् । तदवच्छेदकभेदे च तदेव विशिष्टविषयत्वं पदानां पुनरापन्नम् । न चानृतादिव्यावृत्तिरपि वस्तुस्वरूपमेव, तदेकेन पदेनावगमितमिति पदान्तरवैयर्थ्यात् । अथाकृष्णमपीतमरक्तं शौक्ल्यमित्यादौ शौक्ल्यादिगतविशेषान्तरासंबोधात् स्वरूपमात्रविषयत्वं व्यावर्त्यभेदेनैवापर्यायत्वं सामानाधिकरण्यं च वाच्यम्, एवं सत्यादिवाक्येऽपि स्यादिति चेद्, न, शौक्ल्य-

स्योपलब्धमात्रस्य स्वस्वाश्रयविपरीतभ्रमविरोधितया स्वत एवेतरव्यावृत्तिरूपत्वेऽपि ब्रह्मण प्रतिभासमानस्यैव सर्वविभ्रमाधिष्ठानतया तथात्वाभावे विभ्रमविरोधिरूपान्तरस्यावश्याभ्युपगमनीयत्वात् । शुक्तौ शुक्तित्वादिवत् तत्रासत्यादिव्यावृत्तिलक्षणया विशिष्टवृत्तिकल्पनाद् वरमभिधानेनैव सत्यत्वादिविशिष्टवृत्तित्वाभ्युपगम इति । शौक्ल्ये च जातिभेदस्यैवाकृष्णमित्यादितत्तद्व्यावृत्तिरूपतया शब्दोपादानादलाक्षणिकविशिष्टाभेदवृत्त्यकृष्णमित्यादिसामानाधिकरण्यमिति विशेष । वस्तुस्वरूपमात्रपरत्वे पदाना लक्षणा च दोषः । विशेषणद्वारशक्तेः शब्दस्य द्वारानभिधाने द्वार्यभिधानासम्भवाद्, विशिष्टाभिधानस्वारस्याद् विशेष्यस्यालक्ष्यत्वेऽपि स्वारस्यहानेरवर्जनीयत्वात् । न च वाक्ये सर्वपदलक्षणा युक्ता, तात्पर्यानवगमेन तदनुपपत्तिज्ञानमूलाया लक्षणाया एवानुत्थानाद् । न वा दृष्टचरी । विष भुङ्क्ष्वेत्यादावपि विधिप्रत्ययस्यालाक्षणिकत्वात् ।

सत्यादिवाक्यमखण्डार्थ समानाधिकरणवाक्यत्वाद् नीलमुत्पलमित्यादिवदित्यनुमान चायुक्तम् । प्रतिज्ञावाक्यस्य ह्यखण्डार्थत्वे नाखण्डार्थत्व प्रतिज्ञात स्यात् । विशिष्टार्थत्वे च तत्रैव व्यभिचाराद्, दृष्टान्तासम्प्रतिपत्तेश्च । प्रकृतिप्रत्ययविभक्तपदसमुदायात्मकवाक्यस्य विशिष्टार्थत्वावश्यभावाच्च । तत्रैव सति समानाधिकरणवाक्येषु विशेषणान्वये विशेष्यैक्ये च प्रतिपाद्ये वाक्यभेदप्रसङ्ग इत्यचोदनीयम् । प्रातिपदिकावगमितविशेषणान्वयापरित्यागेन समानविभक्तिसमभिव्याहाराद् विशेष्यैक्यप्रतिपादने तत्प्रसङ्गानवकाशात् । न चानन्त्यविरोधः, स्वरूपतो गुणतश्चान्तशून्यतया तदविरोधात् ।

"नान्त गुणाना गच्छन्ति तेनानन्तो हि स[1] स्मृत"

इति स्मृतेः । अन्यथानन्त्यगुणस्याप्यभावे ब्रह्मणोऽन्तवत्त्वप्रसङ्गात् । अत एव 'साक्षी चेता केवलो निर्गुणश्च',

"निष्कल निष्क्रिय शान्तं निरवद्य निरञ्जनम्"

इत्यादयो गुणनिषेधा पशुविधिरिवच्छागे सामान्यविशेषन्यायेन 'अद्रेश्यमग्राह्यम्', 'अपहतपाप्मा विजरो विमृत्यु' इत्यादिनिषिद्धहेयगुणविषये व्यवस्थाप्यन्ते। लोके च गामानयेत्यादौ सामान्यशब्दस्य विशेषोपसहारव्युत्पत्तेः।

---

१. 'स' ख पाठ ,

अथवा 'नित्य विभु सर्वगत', 'सत्यकामः सत्यसङ्कल्प', 'सत्य ज्ञानमनन्त ब्रह्म', 'य सर्वज्ञ. सर्ववित्',

"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च",

"नित्यो नित्याना चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्",

"तमीश्वराणा परम महेश्वर त देवताना परम च दैवतम्",

"पति पतीना परम परस्ताद् विदाम देव भुवनेशमीड्यम्",

इत्यादिनिरतिशयकल्याणगुणविधाने सति गुणसामान्यनिषेधाः, पश्वालम्भनविधौ सति 'न हिंस्यादि'ति हिंसासामान्यनिषेधवदुत्सर्गापवादन्यायेन विहितेतरविषये सङ्कोच्यन्ते ॥

---

## गुणादिविधिनिषेधयोरबाध्यबाधकत्वम् ।

सर्वथापि गुणविधिनिषेधविषयभेदेन तयोरविरोधे नापच्छेदनयेन बाध्यबाधकता युक्ता । सत्यपि विरोधे नात्रापच्छेदनयः प्रवर्तते, तस्यानियतविरोधपौर्वापर्यविषयत्वात् । न ह्युद्गातृप्रतिहर्त्रपच्छेदयोर्वस्तुविरोध., प्रयोगभेदे तदभावात् । नापि पौर्वापर्यनियम., यौगपद्यव्यत्ययसम्भवात् । ब्रह्मणि च गुणविधिनिषेधयोर्वस्तुविरोधात्, प्राप्त्यपेक्षया निषेधस्य पौर्वापर्यनियमाच्च । किन्तु औदुम्बरीस्पर्शसर्ववेष्टनश्रुतिस्मृत्योरिव विरोधनयः । न हि त'त्रौदुम्बरी सर्वा वेष्टयितव्ये'ति विरुद्धा स्मृतिरित्येव 'औदुम्बरी स्पृष्ट्वोद्गायेदि'ति श्रुत्या बाध्यते, वैपरीत्यानियमात् । किन्तु विरोधे सत्यर्थविप्रकर्षात् । प्रथममेव निरपेक्षवृत्तप्रत्यक्षश्रुत्यर्थप्रमितौ मूलानुमानसापेक्षस्मरणस्य स्वार्थप्रमितौ कालात्ययापदिष्टत्वाद्, विरुद्धश्रुतिलिङ्गादिसमावेशे च तस्यैव बाध्यताहेतुत्वात् । तथाच पारमर्षं सूत्र — "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" (जै० ३. ३. १४) इति । स चायं बाध्यताहेतु समः सर्ववेष्टनस्मृत्या गुणनिषेधस्य । इयांस्तु विशेष — यदेकत्र मूलश्रुत्यनुमानापेक्षया विलम्ब., परत्र निषेध्यप्राप्त्यपेक्षयेति । निर्गुणवाक्यमप्याम्नातमिति चेद्, 'आदित्यो यूप' इति चाम्नातम् । प्रमितिस्तूभयत्र नोदेति, प्राथमिकगुणविधिप्रत्यक्षाभ्यामपहृतविषयत्वात् । न चैवमिद रजतं, नेद रजतमित्यत्रापि परबाधप्रसङ्ग । सत्तया ज्ञापकस्य ज्ञायमानतया ज्ञापकस्येव योग्यताविमर्शादिसापेक्षत्वाभावात् । न चेन्द्रिय रजतधीबाधाय शुक्ति-

---

१ 'म्भवि' क. पाठ.

त्वज्ञानजनने किञ्चिदपेक्षते । शुक्तित्वमेव च गृहीत प्रतियोगिव्यपेक्षया पर नेद रजतमिति नञुल्लिखितव्यवहारालम्बन भवति । वस्तुसंस्थानात्मा जातिरेव हि तस्येतरभेदो नाम । तच्च शुक्तित्वज्ञानमैन्द्रियक निरपेक्ष परमुदयमान

"पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति"

इति न्यायेन पूर्व रजतज्ञान बाधत इति युक्त, न तु शाब्दो गुणनिषेधो गुणविधिं, तदपेक्षया परस्य विरोधिनः प्रवृत्त्यनुपपत्तेः ।

'आनन्द ब्रह्मणो विद्वान् न बिभेति', 'वेदाहमेतं पुरुष महान्त', 'तमेवं विद्वानमृत इह भवती'त्यादिसगुणज्ञानमुक्तिहेतुत्ववादाश्च गुणाबाधमवष्टभ्नन्ति, अन्यथा मिथ्याज्ञानस्य मोक्षहेतुत्वायोगात् । आहत्यैव 'सत्यकाम' इत्यादिसत्यत्वाद्याम्नान च दर्शितम् । न चोपासनविधिविषयतया गुणानामभाविकत्व $ ब्रह्मणोऽणीयस्त्वप्रादेशिकत्वादिवदिति वाच्यम् । सत्यत्वाद्याम्नानबाधाद् , ब्रह्मणोऽपि तद्विषयत्वेनाप्रयोजकत्वाच्च ।

एतेन जीवेशादिभेदविधिनिषेधावपि व्याख्यातौ । जीवादिभेदो लोकावगतो न शास्त्रविषय इति चेत्, तत्तत्स्वरूपाभेदोऽपि लोकसिद्धो न शास्त्रविषयः स्यात्, जीवपरस्वरूपाभेदो लोकाविदित शास्त्रप्रतिपाद्य इति चेत्, तर्हि ममापि नियाम्यनियामकत्वधार्यधारकत्वशेषशेषित्वादिभेदो लोकाविदित शास्त्रप्रतिपाद्य इत्यस्तु । यथाहुः—

"न द्वैत प्रतिपादयन्त्युपनिषद्वाचः प्रसिद्ध हि तत्
किन्त्वद्वैतमनन्यगोचरतया तद्वाच्यमास्थीयताम् ।
अप्राप्ते खलु शास्त्रमर्थवदिति व्यर्थ प्रयासो यतः
प्रख्यातादपरस्तु शास्त्रविषयो भेदस्त्वदद्वैतवत् ॥"

इति ।

अपर आह — न हि भेदमागम प्रत्यक्षादिसिद्धमपेक्ष्य प्रतिपादयति, तस्य नित्यस्य पुवाक्यवद् मानान्तरानुपजीवित्वात् । त्वक्चक्षुषोरिव तु द्रव्ये भेदेऽपि प्रत्यक्षागमयोर्यादृच्छिक समावेश इति न सिद्धविषया भेदश्रुतिरिति भेदश्रुतिरुपासनार्था न तत्परेति चेत् । नन्वभेदश्रुतिरपि तदथैव । 'योऽन्यां देवतामुपास्तेऽन्योसावन्योहमस्मीति न स वेद', 'आत्मेत्येवोपासीते'ति श्रुतेः । अविधिविषयेष्वपि 'तत्त्वमसी'त्यादिष्वभेदः प्रतिपाद्यत इति चेत् । तर्हि 'क्षरात्मानावीशते देव एकः', 'प्रधानक्षेत्रज्ञपतिर्गुणेशः', 'य आत्मान-

---

$ अभाविकत्वम् अस्वाभाविकत्व कल्पितत्वम् ।

मन्तरो यमयति', 'ऋत पिबन्तौ', 'द्वा सुपर्णा' इत्यादिषु भेदोऽपि तथा प्रतीयत इति तुल्यम् । विधिविषयतोपसंहारश्च द्वयोरपि तुल्य. । न चापच्छेदनयाद् भेदबाध. । गुणविधिनिषेधयोरिव नियतविरोधपौर्वापर्यतया विरोधनयेनाभेदबाधस्यैवोचितत्वात्,

"पृथगात्मानं प्रेरितार च मत्वा जुष्टस्ततस्तेनामृतत्वमेति",

"जुष्ट यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक"

इत्यादिभेदज्ञानमोक्षहेतुत्वश्रवणाच्च भेदस्यैव शास्त्रप्रतिपाद्यत्वात् । अन्यथा बाध्यभेदज्ञानस्य मिथ्याज्ञानत्वेन मोक्षहेतुत्वायोगाद् , अपच्छेदनयस्यैव विपरीतफलत्वाच्च । अभेदो हि वस्तुस्वरूपम् । तदुपास्थितिश्च प्रथमा । चरमा तु भेदबुद्धिस्तदपबाधेनैवोदयेत,

"परस्या नान्यथोत्पादाद् न त्वबाधेनसम्भव."

इति । तस्माद् भेदविधिनिषेधविरोधे विरुद्धार्थप्रतिपत्त्ययोगादन्यतरबाधानौचित्याच्च विषयविशेषो वाच्य. ।

स उच्यते । 'सर्वं खल्विद ब्रह्म तज्जलानि'ति, 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा ऐतदात्म्यमिदं सर्वं', 'तत्त्वमसी'त्यादिषु जगद्वाचिपदस्य कार्यावस्थब्रह्मपर्यन्ततया जगच्छरीरप्रकारीभूतब्रह्मपर्यन्ततया वा, कार्यावस्थस्य कारणावस्थब्रह्माभेदो वा, जगच्छरीरविशिष्टब्रह्माभेदो वा प्रतिपाद्यते । एकस्यैव कार्यकारणावस्थत्वात् । शरीरविशिष्टस्य रूपान्तरविशिष्टविशेष्यस्वरूपैक्याच्च, घटो मृद् नीलमुत्पल मनुष्योऽहमित्याद्यभेददर्शनाद्, विशेषणभेदेऽपि विशिष्टाभेदोपपादनाच्च । न तु स्वरूपैक्य, चिदचित्स्वभावविरोधाद्, जीवस्यापि ब्रह्मविरुद्धस्वभावत्वात् । बाधेन ब्रह्मस्वरूपमात्रपरत्वे च लक्षणादिदोषप्रसङ्गात् । अथवा जगत एव ब्रह्मकार्यतया तदन्तर्यामिकतया च तत्प्रकारत्वादपृथक्सिद्ध्या तदन्तर्गतत्व नाम गोघटादिगतभेदविरोधिस्वरूपोऽभेद प्रतिपाद्यते 'सर्वं खल्विद ब्रह्मे'त्यादिषु । 'एकधैवानुद्रष्टव्यमि'त्येवमादिदृशाभेदविधिशेषतया तत्प्रत्यनीक एव भेदो 'नेह नानास्ती'त्यादिना निषिध्यते । अन्वयमुखोक्ताभेदस्य व्यतिरेकमुखोक्त्या भूयस्त्वोपपत्ते. । अन्यथा मृद्घटाभेदादौ बोध्ये घटद्वित्वादिनिषेधस्येव सर्वविधभेदनिषेधस्य निरुक्ताभेदविध्यनुपकारकत्वेन तच्छेषत्वानुपपत्ते । स च

कुतर्कसिद्ध कार्यकारणभेदो लौकिकप्रतीतिसिद्ध स्वनिष्ठभेदश्च प्राप्त इति शक्य प्रतिषेद्धुम्। कृत्स्नभेदनिषेधे च प्रवृत्तिनिमित्तभेदाभावेन पदसामानाधिकरण्यानुपपत्त्या तन्मूलकाभेदविरोधेन वृद्धिं गृह्णतो मूलनाशन्यायापातात्। 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन क पश्येदि'त्यादावपि स्वतन्त्रद्रष्ट्राद्यभावोऽभिधीयते। यत्र योगदशायां सर्वमात्मैवाभूत् प्रकारतयात्मसामानाधिकरण्येन साक्षात्कृतमित्यर्थः। द्रष्ट्रादिभेदमात्रनिषेधे च 'वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चे'ति ज्ञानदशाया द्रष्ट्रादिदर्शन वामदेवस्य भ्रमः स्यात्। तत्त्वदर्शन च न भ्रम इति ॥

---

### स्मृतीनां निर्विशेषपरत्वनिरासः।

एतेन —

"परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते",

"अहं हरिः सर्वमिद जनार्दनो नान्यत्तत. कारणकार्यजातम्",

'तदच्युतो नास्ति पर ततोऽन्यद्' इत्यादिस्मृतयोऽपि निरुक्तैक्यविधिशेषतयान्यनिषेधविषयाः स्वेनैव स्वात्मकतया जगतः स्वतन्त्रपृथक्सत्त्वनिषेधपरा व्याख्याताः। अथवा 'न चास्य कश्चिज्जनिता न चाधिप.', 'न तत्सम्श्चाभ्यधिकश्च दृश्यते', 'तेनार्हति ब्रह्मणा स्पर्धितु क.', 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य.' इत्यादिजनित्रादिविशेषनिषेधविषये 'नेह नानास्ती'त्यादिसामान्यनिषेध· छागपशुन्यायेन नियम्यते। नानात्वनिषेध उत्सृष्टो वा 'सोऽकामयत बहु स्या प्रजायेयेति', 'इद सर्वमसृजत, 'तदनुप्रविश्य सच्च त्यच्चाभवदि'त्यादौ विकारादिदोषातीतस्य साक्षादेव बहुनामरूपभाक्त्वासम्भवादनुप्रवेशेनैव बहुनामरूपभाक्त्वश्रवणाच्च, शरीरतया प्रकारभूतचिदचिन्नानात्वस्यार्थसिद्धे, 'एक सन् बहुधा विचचार', 'यस्य पृथिवी शरीरमि'त्यादिषु प्रकारनानात्वस्याहत्यश्रुतेश्च, प्रतिषेधायैव दुरधिगमार्थप्रतिपादनायोगाच्चापोद्यते, निषेधस्य यथोदितविषये सावकाशत्वात्। तस्माद् ब्रह्मणो गुणशरीरादिविधिनिषेधा भिन्नविषयतया विरोधाभावेन न बाध्यबाधकतामश्नुवते। यथाहुः —

"यद् ब्रह्मणो गुणशरीरविकारभेद-
कर्मादिगोचरविधिप्रतिषेधवाचः।

अन्योन्यभिन्नविषया न विरोधगन्ध
मर्हन्ति तन्न विधय॰ प्रतिषेधबाध्याः ॥"

इति ॥

तदेवं मानवृत्तविरोधात् प्रत्यक्षादिविरोधात् पूर्वापरविरोधाच्चाम्नायस्य निर्विशेषविपयत्वायोगात्, सविशेषविषयागमविरोधे च स्मृत्यादेरपि न निर्विशेषवस्तुविषयत्वसम्भव. । न च तत्र निर्विशेषवस्तु प्रतीषिषन्तोऽपि प्रतीम ।

"यो मामजमनादि च वेत्ति लोकमहेश्वरम् "

इत्यादिसर्वविधजडजीववैलक्षण्याभिधानात् ।

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तम."

इति च । तथा,

"अह कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मयि सर्वमिदं प्रोत सूत्रे मणिगणा इव ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।"
"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शाश्वते ।
मैत्रेय! भगवच्छब्दः सर्वकारणकारणे ॥
सभर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः ।
नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ! ॥
ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णा भग इतीरणा ॥
वसन्ति तत्र भूतानि भूतात्मन्यखिलानि च ।
स च सर्वेषु भूतेषु वकारार्थस्ततोऽव्यय ॥
एवमेष महाशब्दो मैत्रेय! भगवानिति ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यग॰ ॥
तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽय नोपचारेण त्वन्यत्र ह्युपचारतः ॥
ज्ञानशक्तिबलैश्वर्यवीर्यतेजास्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥
सर्वाणि तत्र भूतानि वसन्ति परमात्मनि ।

स च सर्वेषु भूतेषु वासुदेवस्ततः स्मृतः ॥"

इत्यादिषु विश्वसर्गस्थितिलयभरणनियमनादिलीलस्य तदनुगुणसार्वज्ञ्यादिगुणगणार्णवस्य भगवदादिशब्दवृत्तिनिमित्तषाड्गुण्यादियुक्तस्य,

"स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने! व्यतीतः ।
अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥
तेजोबलैश्वर्यमहावबोधसुवीर्यशौर्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥"

इत्यादिनिरवशेषनिरस्तसमस्तहेयगन्धस्य,

'समस्तकल्याणगुणात्मकोऽसौ',

"स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः ।
सर्वेश्वरःसर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥"

इत्येवमादिप्रकारस्य प्रत्यायनात् ।
तथाच

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥"

इति नापलपितप्रपञ्चं निर्विशेषं ब्रह्म प्रतिपाद्यते, श्रुत्यादिविरोधात् । तत्रैवोपक्रमोपसंहारयोः सविशेषत्वावगमात् । तदविरोधेन च तद्व्याख्यानं युक्तम् । तत्र प्रत्यस्तमितभेदमिति त्रिविधपरिच्छेदनिषेधः । अत्र कालतो देशतो वस्तुतश्चापरिच्छिन्नतया कृत्स्नं प्रति सर्वविधकारणत्वं विवक्षितं, त्रिविधपरिच्छेदवतो घटादेः सर्वविधकारणत्वानुपपत्तेः । प्रक्रमेऽपीदमुक्तं,

"परः पराणां परमः परमात्मात्मसंस्थितः"

इति । तत्र परः पराणामिति कालापरिच्छेदः । 'स पूर्वेषामपि गुरुः कालेनानवच्छेदाद्' (पात० पा० १. सू० २६) इति योगः । परमात्मेति चाप्नोतेर्देशापरिच्छेदः, आत्मतया सर्वस्य संस्थित इति सर्वसामानाधिकरण्यार्हत्वेन वस्त्वपरिच्छेदश्चोक्तो भवति । तथाच श्रुतिः 'अनन्तं ब्रह्मे'ति । तत्राद्योपपादनं—

"रूपवर्णादिनिर्देशविशेषणविवर्जितः ।
अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् ॥"

इति। द्वितीयोपपादन —

"सर्वत्रासौ समस्त च वसत्यत्रेति वै यत·।
ततः स वासुदेवेति विद्वद्भि· परिपठ्यते॥
तद् ब्रह्म परम नित्यमजमक्षयमव्ययम्।
एकस्वरूप च सदा हेयाभावाच्च निर्मलम्॥"

इति। तृतीयोपपादन —

"तदेव सर्वमेवैतद् व्यक्ताव्यक्तस्वरूपवत्।
तथा पुरुषरूपेण कालरूपेण च स्थितम्॥"

इति। सत्तामात्रमिति च सार्वत्रिक सत्त्वमुच्यते। जनिमतो हि जनित्वैव सत्ता, न च पुरस्तादित्यसत्तापि। ब्रह्म तु सत्तामात्रम्। तदिदमुक्तं— 'शक्यते वक्तुं य सदास्तीति केवलमि'ति। वचसामगोचर इति चाहत्य जातिगुणक्रियादिशब्दाविषयत्वमुच्यते। तदिदमुदित 'रूपवर्णादिनिर्देशविशेषणविवर्जित' इति। रूप देवमनुष्यादिजातिः। 'जातिगुणौ रूपिणा रूपे' इति हि नीतिविदः। वर्णशब्दो गुणोपलक्षणार्थ.। आदिशब्देन क्रियावयवद्रव्यादिपरिग्रह। अमी च तद्विषयनिर्देशश्च शब्दलक्षणो नास्य विशेषणमित्यर्थः। अन्यथा शब्दमात्रागोचरत्वे ब्रह्मणो भगवद्वासुदेवादिशब्दवाच्यत्वस्याप्यभावादुदाहृतवचन विरुध्येत।

"परमात्मा च सर्वेषामाधार· परमेश्वरः।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते॥"

इति च। अपिच मानान्तरस्येव शब्दस्याप्यगोचरत्वे ब्रह्म सकलमानातीतमसदेव प्रसज्येत। निरर्थकश्चाय वेदान्तोपदेशः। 'अप्रमेयोऽनियोज्यश्चे'त्यादौ चाप्रमेयत्वमियत्तापरिच्छेदाभाव एव, न तु मानागम्यत्वम्, उक्तदोषात्। न चात्मसवेद्यत्व स्वयप्रकाशत्व ब्रह्मण प्रमाणगम्यत्वेऽपि विरुध्यते। प्रत्युत प्रमाणागम्यत्वे गगनकुसुमादिवदसत्त्वप्रसङ्गात्।

अथवा अस्मिन् प्रकरणे,

"क्लेशाना च क्षयकर योगादन्यन्न विद्यते"

इति संसारैकभेषजतया योगमभिधाय,

"प्राणायामेन पवने प्रत्याहारेण चेन्द्रिये ।
वशीकृते तत कुर्यात् स्थित चेतः शुभाश्रये ॥"

इति धारणा प्रतिज्ञाय,

"आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वरूपत ।
भूप! मूर्तममूर्त च पर चापरमेव च ॥"

इत्यादिना शुभ धारणाश्रय वक्तु प्रक्रम्य,

"विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा"

इति दर्शितहिरण्यगर्भादिरूपाचिद्विशिष्टक्षेत्रज्ञरूपमूर्तविभाग,

"मूर्तमेतद्धरे रूपं भावनात्रितयात्मकम्"

इति

"कर्मभावात्मिका ह्येका ब्रह्मभावात्मिकापरा ।
उभयात्मिका तथैवान्या त्रिविधा भावभावना ॥"

इत्युक्तभावनात्रयान्वयादशुभाश्रयमुक्त्वा,

"अन्ये तु पुरुषव्याघ्र! चेतसो य उपाश्रया ।
अशुद्धास्ते समस्तास्तु देवाद्या कर्मयोनयः ॥"

इत्यविशेषाभिधानादचिद्वियुक्तस्य ज्ञानैकाकारस्यामूर्तविभागस्यापि न शुभाश्रयत्व, स्वतो हेयविरोधित्वाभावात्,

"चिन्त्यमात्मविशुद्ध्यर्थ सर्वकिल्बिषनाशनम्"

इति तस्यैव ध्येयत्वाभिधानाद् योगयुङ्मनोगोचरत्वाच्चेति वक्तुं 'प्रत्यस्तमितभेदमि'त्यादि देवमनुष्यादिभेदरहित तदुपाधिनिबन्धननिर्देशागोचरं ज्ञानैकाकारसत्तामात्रं जननादिविकारशून्य मुक्तात्मानमेवालम्बते, न परमात्मानमिति । एवञ्च,

"समस्ताःशक्तयश्चैता नृप! यत्र प्रतिष्ठिताः ।
समस्तशक्तिरूपाणि तत् करोति जनेश्वर! ।
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ॥"

---

१. 'भा' ख. पाठ.

इत्यादिसविशेषोपसहार समञ्जसो भवति । अन्यथा प्रत्यस्तमितेत्यादेर्निर्विशेषब्रह्मात्माभेदपरत्व उदितोपक्रमोपमहाग्विरोधप्रसङ्ग· । 'क्षेत्रज्ञ चापि मा विद्धी'त्यादिसामानाधिकरण्य च शरीरशरीरिभावनिबन्धन , नैकात्म्यनिबन्धनम् ।

"द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च ।
क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते ।
अक्षर तत् पर ब्रह्म क्षर सर्वमिदं जगत् ॥"

इति क्रमेण स्वधर्मज्ञानद्वारेण च सर्वभूतस्थित्यर्हयोरचित्संसर्गाधीनज्ञानसङ्कोचादिमत्तया मुक्तौ तदभावेन च क्षराक्षरशब्दितयोर्बद्धमुक्तात्मनोः 'ब्रह्मणो रूपे' इति परमात्मशरीरत्वाभिधानात् । न चात्र क्षराक्षरशब्दाभ्या कार्यकारणरूप ब्रह्म विवक्षित, सर्वभूतस्थितिविशेषणविरोधात् । नहि कारण स्वाभिन्ने कार्ये तिष्ठति, कार्य वा कार्ये. स्ववृत्तिविरोधात् । न च ब्रह्मण· कारण कार्य च भिद्यते । तत्र 'द्वे रूपे ब्रह्मण' इति व्यतिरेकवचन पीड्येत । न च 'क्षर प्रधानममृताक्षर हर ' इति श्रुते· क्षराक्षरशब्दौ जडजीवपरौ युक्तौ सर्वभूतस्थितिविरोधादेव । उत्तरत्र च,

"हिरण्यगर्भो भगवान् वसवोऽथ प्रजापति· "

इत्यारभ्य,

"मूर्तमेतद्धरे रूप भावनात्रितयात्मकम् "

इति मूर्तशब्दोदितस्य क्षरस्य भावनात्रयान्वयाभिधानेनाचेतनत्वासम्भवात् । नह्यचेतनस्य कर्मादिभावनान्वयसम्भव इति । न चामी सर्वे विशेषा भ्रमसभूता इति साम्प्रतम् , अपूर्वत्वेन प्रतिपाद्यत्वात् ।

"तदेतदक्षय नित्य जगन्मुनिवराखिलम् ।
आविर्भावतिरोभावजन्मन·शबिकल्पवत् ॥"

इत्यक्षयत्वादिस्मरणाद् , मृषाभूतस्य च तदसभवात् ।

"न तदस्ति विना यत् स्यान्मया भूत चराचरम् "

इति च न ब्रह्मपरिशेषणप्रपञ्चबाधपरम् , अविनाभावशब्दस्य नियतसम्बन्धपरत्वात् ।

"परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगद् "

इत्यादौ शक्त्यादिशब्देनापृथक्सिद्धकार्योपयोगिविशेषणत्वाभिधानेनान्तर्यामिणा परमात्मना सर्वावस्थस्य जगतो नियतसम्बन्धोपपत्ते । एवमेव चैतद् युक्त भगवद्विभूत्युपसहारत्वात् । अत एवाह —

"विष्टभ्याहमिद कृत्स्नमेकांशेन स्थितो जगत्"

इति ॥

---

## शारीरकशास्त्रस्य सविशेषपरत्वम् ।

वैयासिक च कृत्स्न शास्त्र सगुणपरमेवोपलक्ष्यते । 'जन्माद्यस्य यतः' (ब्र० १. १. २) 'ईक्षतेर्नाशब्दम्' (ब्र० १ १. ५) 'अन्तर्याम्यधिदेवादिषु तद्धर्मव्यपदेशात्' (ब्र० १. २. १८) 'विवक्षितगुणोपपत्तेश्च' (ब्र० १. २. २) 'दहर उत्तरेभ्य' (ब्र० १ ३. १४) 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (ब्र० १. ४. २३) 'सज्ञामूर्तिकॢप्तिस्तु त्रिवृत्कुर्वत उपदेशात्' (ब्र० २. ४ २०) 'फलमत उपपत्ते.' (ब्र० ३. २. ३८) इत्यादिभिः सर्गस्थितिनियमनादिलीलस्य सार्वज्ञ्यादिगुणाकरस्य भगवतः प्रतिपादनात् । निर्गुणविषयत्वाभिमतानामपि 'यत्तदद्रेश्यं', 'यत्र नान्यत् पश्यति', 'सत्य ज्ञानमनन्त ब्रह्म', 'आनन्दो ब्रह्मे'त्यादीनाम् 'अदृश्यत्वादिगुणको धर्मोक्तेः' (ब्र० १. २. २१) 'धर्मोपपत्तेश्च' (ब्र० १. ३. ९) 'आनन्दादय प्रधानस्य' (ब्र० ३. ३. ११) इति चादृश्यत्वादिगुणत्ववचनात्, सुखत्वामृतत्वादिधर्मत्ववचनादानन्दादिगुणोपसहारवचनाच्च सगुणपरत्वाभिप्रायदर्शनाच्च । जीवपरभेदश्च बहुश सूच्यते — 'भेदव्यपदेशाच्च' (ब्र. १. १. १७) 'उभयेऽपि हि भेदेनैनमधीयते' (ब्र० १. २. २०) 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' (ब्र० १ २ २२) 'जगद्व्यापारवर्जं प्रकरणात्—' (ब्र० ४. ४ १७) 'भोगमात्रसाम्यलिङ्गाच्च' (ब्र० ४. ४. २१) इत्यादिभि ।

तस्मान्न निर्विशेषत्वमैकात्म्य वा परात्मनो ।
मृषात्व वा विशेषाणा प्रतिपद्यामहे क्वचित् ॥

इति ॥

---

## सिद्धान्तारम्भः ।

तदेवमौपनिषदहृदयवेदितृमहापुरुषविद्वेषसमुन्मिषितदुरुत्तरदुरितशतमलीमसचित्तसत्त्वो निखिलवैदिकमहाजनबहिष्करणप्रच्छादनेच्छापरिगृहीततन्त्रदीक्षाच्छद्मा वेदबाह्यतया प्रत्यक्षैकपक्षपातेऽपि मुग्धवैदिकलोकाविप्रलिप्सयोपनिषदर्थनिरूपणकक्ष्यामिवाधिरूढो निगमाध्यक्षादिमानवृत्ततद्बलाबलतदनुकूलसमीचीनन्यायविवेकविकलः प्रत्यक्षाद्यनुरोधेनाम्नायार्थं तान्त्रिको व्यवातिष्ठिपत् ।

औपनिषदास्तु परमार्थतत्त्वनिरूपणायामाम्नायशरणतया तदुपक्रमादिन्यायनिगमनीयमर्थमवस्थाप्यैव तर्कतो विषयविवेचनया प्रत्यक्षादिकमेवाम्नायानुरोधेन व्यवस्थापनीयं मन्यन्ते ॥

---

## आम्नायप्रत्यक्षयोर्विरोधे विनिगमकविमर्शः ।

तथाहि—इदं तावद् निरूपणीयं, प्राप्ते परस्परविरोधे किं प्रत्यक्षाद्यनुरोधेनाम्नायो व्यवस्थापनीयः, उताम्नायानुरोधेन प्रत्यक्षादीति । तान्त्रिको मन्यते— प्रतीतार्थविरोधे सत्याम्नाय एव प्रत्यक्षाद्यनुरोधेन तदविरुद्धार्थे व्यवस्थापनीयः । 'आदित्यो यूप' इत्यादौ बोधनीयाभेदस्य भेदप्रत्यक्षविरोधेन तदनुसारेण गौणत्वव्यवस्थाश्रयणात् । 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादौ क्रियायां वचनस्वरसावगमनीयानन्तरितस्वर्गसाधनभावस्य क्षणिकत्वेन क्रियायाः कालान्तरभाविफलासाधनत्वानुमानविरोधे तदनुरोधेनापूर्वद्वारकत्वव्यवस्थाभ्युपगमात् । 'न सुरां पिबेदि'त्यादौ वेदनीयेष्टसाधनत्वनिषेधस्य तद्विधिबोधिमानान्तरविरोधे तदानुगुण्येनेष्टाधिकानिष्टसाधनतापरत्वव्यवस्थापनाच्चेति ।

वयं तु ब्रूमहे— सत्यमेव व्यवस्थाप्यते, न प्रामाण्यमपहीयते । आगमेन तु चन्द्रप्रादेशिकत्वादिप्रत्यक्षस्य नरशिरश्शौचाद्यनुमानस्यौदुम्बरीसर्ववेष्टनस्मरणस्य कपिलादिमहर्षिप्रणीतसांख्याद्यागमस्य च प्रामाण्यमेवापहीयते, नार्थविशेषव्यवस्थया प्रामाण्यमुपपाद्यते । परेणापि जगतो ब्रह्मप्रतिपत्तिसापेक्षं ब्रह्मणा सा-

त्मकत्वावेदकस्यागमस्य विरोधे निरपेक्षतत्स्वतन्त्रताप्रत्ययबाध उपगम्यते। यथोक्त श्रुतप्रकाशिकायाम्—'अपरोक्षरूपाया अपि स्वातन्त्र्यप्रतिपत्ते परोक्षरूपाप्यनन्यथासिद्धा पारतन्त्र्यप्रतिपत्तिर्बलीयसी'ति। सूत्रकृतापि 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' (ब्र० २ १. २६) इत्यत्र यत् परिणमते तत् कृत्स्न यथा मृत्, यदेकदेशेन परिणमते तत् सावयव यथा पृथिवी, ब्रह्म चाकृत्स्नपरिणाममनवयव च न जगत्कारणमित्यनुमानस्य 'श्रुतेस्तु शब्दमूलत्वात्' (ब्र० २ १. २७) इति श्रुतिविरोधे बाध एवाभिप्रेयते। तत् कस्य हेतोः।

"प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्।"

इति स्मरणात्,

"तलवद् दृश्यते व्योम खद्योतो हव्यवाडिव।
न तल विद्यते व्योम्नि न खद्योतो हुताशनः॥
तस्मात् प्रत्यक्षदृष्टेऽपि युक्तमर्थ परीक्षितुम्॥"

इति च स्मृतेः प्रत्यक्षादीनां दोषमूलतया सभावितान्यथासिद्धित्वाद्, आम्नायस्य त्वपौरुषेयतया वा परमाप्तेश्वरप्रणीततया वा असम्भावितदोषशङ्काकलङ्कत्वाच्च। यद्येवम् 'आदित्यो यूप' इत्यादिना किमिति न भेदप्रत्यक्षादि बाध्यत एव, बलवत. स्वार्थस्वारस्यहानस्याप्ययोगात्, श्रौताभेदस्यातीन्द्रियतया प्रातिभस्यापि यूपादित्यभेदस्य यावत्काल व्यवहारोपयोगसभवादिति चेद्, न, तात्पर्यस्यैव नियामकत्वात्। न हि पदशक्यससर्गमात्रे प्रामाण्यमाम्नायस्य, किन्त्वज्ञाते फलवत्यर्थे। न चेह यूपाञ्जनविधिशेषस्यार्थवादस्य यूपादित्यस्वरूपाभेदप्रतिपादनेन किञ्चिदस्ति फलम्। अतः स्तुतिमात्रपर्यवसानाय मानान्तराविरुद्धविषये व्यवस्थाप्यते 'सारूप्यात्' (जै० १. ४. २५) इति। क्षणिकत्वेन क्रियाया. स्वर्गाद्यसाधनत्वानुमान च नरशिरश्शौचाद्यनुमानतुल्यमागमेन बाध्यत एव। न हि स्वर्गयागयोरवगतः साध्यसाधनभावस्तन्निर्वाहायापूर्वद्वारकल्पनेऽपि हीयते, व्यापारस्य स्वाङ्गस्याव्यवधायकत्वात्।

नन्वेवमपि तात्पर्यवता सुरापाननिषेधेन तत्र हितसाधनताबोधि प्रत्यक्षादि बाध्यताम्, न तदनुरोधेन निषेधव्यवस्था युक्तेति। सत्यम्। विषसम्पृक्तमधुपानाप्रवृत्त्या बलवदनिष्टासाधनत्वविशिष्टेष्टसाधनता विशिष्टैव प्रत्यक्षाद्यवगता प्रवृत्तिहेतुरिति निवृत्त्युपयोगाय बलवदनिष्टसाधनताबोधिना निषेधेन

विशिष्टविषयप्रत्यक्षादिबाध उपगम्यते । यद्युच्येत — इष्टसाधनताज्ञानमेव प्रवर्तक, बलवदनिष्टसाधनत्वज्ञानाभावस्तु प्रतिबन्धकाभावतयापेक्ष्यत इति, तथापि तस्य प्रवर्तकतावच्छेदकता वाच्या । अन्यथापेक्षणीयत्वायोगात् । न ह्यहेतुरतदवच्छेदक चापेक्ष्यते च कार्यजनन इति युक्तम् । तथा च निषेधेनानिष्टसाधनताबोधिना प्रत्यक्षाद्यवगमितप्रवर्तकतारूप बाध्यत एव ।

वस्तुतस्तु इष्टसाधनताज्ञाने बलवदनिष्टासाधनत्वमेव विषयतयावच्छेदकं प्रामाण्यवत् प्रवृत्तिविषयवैशिष्ट्यवच्च । अन्यथा प्रामाण्यस्वतस्त्वस्य[1] विशिष्टज्ञानप्रवर्तकत्वस्य चानपेक्षाप्रसङ्गात् । अप्रामाण्यज्ञानाभावस्य प्रवृत्तिविषयासंसर्गाग्रहस्य चापेक्षयैवेष्टज्ञानस्य प्रवर्तकत्वोपपत्ते. । न च तत्र लाघव विशेषः, प्रकृते चानिष्टसाधनत्वस्य तज्ज्ञानस्य वाभावोऽवच्छेदक इत्यविशेषेऽनिष्टासाधनत्वस्य ज्ञानविषयत्वकल्पनाया गौरवमिति शङ्क्यम् । अनिष्टसाधनताज्ञानाभावमन्तर्भाव्य प्रवृत्तिहेतुताग्रहे गौरवात् । तस्माद् विशिष्टेष्टसाधनता प्रवर्तिकेति सा प्रत्यक्षाद्यवगता निषेधाम्नानेन बाध्यत एव । अथवा निषेधविधिषु व्यवहारमूला व्युत्पत्तिरेवावगतेष्टाविकानिष्टसाधनतालम्बनेत्यनन्यानुरोधादनुदाहरणम् ।

'कृष्णल श्रपयेदि'त्यत्रापि न प्रत्यक्षानुरोधेनोष्णीकरणे लक्षणा । श्रपणीयोष्णीभावफलावच्छेद्यभावस्यैवाभिधेयत्वात् । 'चरु श्रपयति' 'पुरोडाश श्रपयती'त्यादावपि रूपरसाद्यन्यथाभावस्य श्रपणनान्तरीयकस्याभिधेयत्वकल्पने गौरवात्, चरुपुरोडाशशब्दोपात्तौदनापूपरूपसिद्ध्यपेक्षया तु तयोरारूपरसाद्यन्यथाभावादश्रपितत्वव्यवहार' । तन्मूलश्च 'कृष्णलेष्वर्थलोपादपाक' स्यात्' (जै० १०. २. १) इति पूर्वपक्ष इति । 'सोमेन यजेते'त्यादौ चावाक्यभेदाय सामानाधिकरण्ये प्रत्यक्षानुरोधाद् न मत्वर्थलक्षणा, तत्प्रख्यादिना नामधेयतयापि निर्वाहात्, किन्तु स्वरूपस्य यागस्य प्रत्याय्यत्वादिति । ननु 'आदित्यो यूप' इत्यादौ स्तुत्यालम्बनमपि मानान्तराविरुद्धमेव कल्प्यते । कल्प्यता नाम, प्रामाण्य तूपपाद्यत एव न तु बाध्यत इत्यस्ति प्रत्यक्षादिजातीयादाम्नायप्रामाण्यबलवत्त्वे सकलवैदिकसम्प्रतिपात्तिः ।

---

१. 'ण्यवच्च स्व' ख पाठ

तत्र यदि वेदान्तेषु प्रत्यक्षादिविरुद्धविषयो न क्वचिदुपलभ्येत, न नः प्रयोजन प्रत्यक्षादिविषयविवेचनेन । अथ तद्विरुद्धविषयमुपलभेमहि, तदा प्रत्यक्षादिदोषमूलत्वसम्भावनाया तदुपपत्तौ चाम्नायबलेन चन्द्रप्रादेशिकत्वादिविषयमिव सकलमपि प्रत्यक्षादि बाधेमहि, अपरथा च तद्विरुद्धार्थे प्रामाण्यायोगाद् , आदित्ययूपादिवाक्यमिव वेदान्तमेव प्रत्यक्षाद्यविरुद्धविषय व्याचक्षीमहि । तत्र प्रत्यक्षादिदोषमूलत्व तदुपपत्तिं चाग्रे वक्ष्यामः ॥

---

### आम्नायेषु परस्परविरोधे व्यवस्थाप्रकारः ।

आम्नायस्यैव परस्परविरोधे षोडशिग्रहणाग्रहणोदितानुदितहोमाहवनीयपदहोमादाविव वस्तुस्वरूपविषये विकल्पोत्सर्गापवादासम्भवे च बलवदनुरोधेन दुर्बलमपेक्षितप्रामाण्याविघातेन व्यवस्थाप्यमान न दुष्यति । यथा 'उच्चैर्ऋचा क्रियते' इति ऋगादिमन्त्रविषयोऽप्युपसहारः अग्नेर्ऋग्वेद' इत्यादिप्रबलवेदोपक्रमानुरोधेन प्रनीतार्थादपच्छिद्यर्ग्वेदादिविषयो व्यवस्थाप्यते । यथा वोद्गातृप्रतिहर्त्रोरेकप्रयोगविषये क्रमापच्छेदे तस्यैवादाक्षिणत्वसर्वस्वदाक्षिणत्वासम्भवात् प्रबलेनोत्तरापच्छेदनिमित्तशास्त्रेण पूर्वापच्छेदनिमित्तशास्त्र बाध्यत एव, विषयान्तरेऽपि तस्य प्रामाण्यात् । एवं विरुद्ध तिलिङ्गादौ पूर्वपूर्वेणोत्तरोत्तरस्य विनियोगप्रवृत्तिनिरोधात् तदबोधकतैवापाद्यते । तदेवमिह वेदान्तेषु निर्विशेषाद्वितीयवस्तुप्रतिपत्तावुपपाद्यदोषमूलं भ्रान्तिमात्रतया सम्भावितान्यथासिद्धि प्रत्यक्षादि बाध्यमेव । सविशेषविषयागमाश्च निर्विशेषात्मप्रतिपत्त्यर्थलक्षणभूतकारणरूपमाश्रित्य कर्मोपासनाविधिशेषतयाप्युपपद्यमानाः सावकाशा न निर्विशेषाद्वितीयवस्तुप्रतिपादन विरुन्धन्ति । विधयश्च विषयसमसत्ताकसाध्यसाधनभावादावपेक्षितं प्रामाण्य प्रतिलभन्ते । प्रत्यक्षादीनि च तथैव व्यवहारविषये प्रामाण्यमनुभवन्ति । तदेषा विषयफलस्वरूपेषु सर्वशो दोषमूलत्वेऽपि व्यवहारानुपातितया व्यावहारिकं प्रामाण्यमिष्यते। न च पारमार्थ्यापारमार्थ्यव्यतिरेकेण व्यावहारिकमिति तृतीयप्रकारासम्भवः । सति प्रमातर्यबाध्यबाधार्हविषयत्वस्य प्रमाणे व्यावहारिकत्वस्य सम्भवात् । चन्द्रप्रादेशिकत्वादिप्रत्ययश्च न तथा, सत्येव तदुपलब्धरि बाधयोग्यविषयत्वात् । निर्विशेषवस्तुप्रतिपादकस्य तु प्रमाणस्य स्वरूपफलयोर्दोषमूलत्वेऽपि विषयांशे तदभावात् तात्त्विकं प्रामाण्यम् ।

यत्तु प्रकृतिप्रत्ययविभागादिपरिकरोपेतशास्त्ररूपभेदस्य दोषमूलत्वे निर्विशेषात्मतत्त्वश्रवणवेलायामधिगते तथाभूतमप्रमाणमेव शास्त्रमापद्येतेति। तन्मन्दम्, आम्नायस्यानाद्यविद्योपादानत्वलक्षणदोषमूलत्वाधिगतेर्निर्विशेषात्मतत्त्वप्रतिपत्त्यनुकूलत्वात्। दोषमूलत्वेऽपि तस्य यावदात्मापरोक्ष तथैव बोधकत्वाद्, विषयाबाधेन च प्रामाण्यादात्मापरोक्षानन्तर तस्यैवानपेक्ष्यत्वाच्च। यदपि भेदप्रमाणदोषमूलत्वादिग्राहकप्रमाणस्य दोषमूलत्वादोषमूलत्वाभ्यां विषयपारमार्थ्ये तदपारमार्थ्ये च व्याघात., ब्रह्मनिर्विशेषत्वाद्वितीयत्ववादहानेरिति। तदपि न। दोषमूलतयापरमार्थस्वरूपपरिकरस्यापि तस्य व्यावहारिकरूपेण भेदग्राहकमात्रे स्वस्मिन्नपि दोषमूलत्वाद्यावेदने कस्यापि प्रामाण्यासिद्धे। न हि वनदाहाय निसृष्ट उल्मुको वन दग्ध्वा स्वयमवशिष्यते, न वा स्वय दग्ध इति वनं न दहति, तद्वत्। न च यौक्तिकबाधेऽपि प्रमाणकार्यानुपपत्तिरिति वाच्यम्। न हि युक्त्या मानस्वरूपपरिकरादि स्वरूपेणास्तिनास्तिप्रत्ययानर्हमापद्यते, यथाधिष्ठानापरोक्षेणारोप्यरूप्यादि। किन्त्वस्तिप्रत्ययमेव तत् तथा सम्भाव्यते। तथाभूतमेव च सर्व स्वकार्याय पर्याप्नोति। तथैव व्यवहारस्यानादिसिद्धत्वात्। अपवरकालोकारोपितान्धकारादेर्युक्त्या बाधितस्यैवावरणादिकार्यकरत्वदर्शनाच्च। न च सर्वस्य दोषमूलत्वादिकः प्रमाणविषय एव बाध्यते येनाश्रये विषयबाधात् प्रमाणं प्रमितिकार्याय न क्षमेत। किन्तु ब्रह्मतत्त्वापेक्षया सर्वमेव। एव च यथोपस्थिते सर्वत्र मानमेयमित्यादिभेदे दोषमूलत्व बाध्यत्वमन्यद्वा तादृगेव तादृशैव साध्यत इति युक्तं प्रमाणस्य प्रमितिकार्यकरत्वम्। अत एव तादृशमेव व्यावहारिकभेदमादाय व्यवहारदशाया न स्वपरपक्षादिसाङ्कर्यं, तदुपपाद्यव्यवहारभेदस्यापि तादृशत्वेन तद्भेदपारमार्थ्यानपेक्षणात्। अत एवाम्नायस्य दोषमूलत्वाद्यवगमेऽपि विषयांशे तदभावेन प्रमापकत्वमुपपन्नम्। कथ पुनराम्नायस्य विषयांशे दोषमूलत्वाभाव। कथ वा धूमभ्रमाद् वह्निभ्रमे सवादिनि तदभावः। विषयाबाधादिति चेद्, इहापि तथेति सन्तुष्यतात्। एतेन, बाधानवतारेऽपि दोषमूलज्ञानविषयतया ब्रह्मापि मृषैव स्यात् प्रभायामुलूकाद्यन्धकारज्ञानविषये तथा दर्शनादिति तान्त्रिकतमस्विवचनमपास्त, संवादिभ्रमोच्छेदप्रसङ्गात्। अत एव यन्न्यायविद्वचनमुदाहृत 'यस्य च दुष्ट करणमि'त्यादि, तत्रापि कर-

णदोषेऽपि याद्दच्छिकसंवादिज्ञान समीचीन एवेति, बाधादेवासमीचीनप्रत्ययत्व पुनरुच्यते यस्य च मिथ्येति प्रत्ययः स एवासमीचीन इति । तस्माद् दोषमूलविज्ञानत्वेऽपि ब्रह्मणो बाधाभावादेः न मिथ्यात्वम् । अत एव मृषाहेतुजन्यज्ञानविषयत्वाद् ब्रह्मणो मिथ्यात्वानुमान प्रत्युक्त, बाधेन सोपाधित्वात् । तादृशज्ञानस्यापि ज्ञततः सद्विषयत्व वक्ष्यते ।

यत्तु यदृच्छासवादिनि मानान्तरसंवादोऽधिक इति समीचीनत्व, न ब्रह्मज्ञाने, सवादकाभावादिति । तन्न, आगमिकज्ञानस्य स्वप्रकाशापरोक्षानुभवावसानत्वोपगमात् । यदपि सर्व शून्य तदेव तत्त्वमिति माध्यमिकवचनेन पाश्चात्यबाधशून्येन ब्रह्मणोऽपि बाध, बोधकदोषमूलत्व चोभयत्रापि तुल्यमिति । तदपीद वेदब्राह्मस्य वैदिकविद्वेषमूल प्रमाणवृत्ताज्ञानमपराध्यति । भ्रमप्रमादविप्रलिप्सादिरूपागन्तुकदोषमूलत्वज्ञानस्य पौरुषेयवाक्ये बोधकताप्रतिबन्धकत्वात् ततो बोधस्यैवानुत्पत्तेः । प्रत्यक्षाद्यनवगम्यविषये पुवाक्यस्य सर्वविसवादेन भ्रमादिमूलत्वनिश्चयात्, तदनिर्णयदशाया च जातस्यापि शून्यताबोधस्य पश्चादपि तन्निर्णयेऽपेक्षितसंवादाभावेन विषयप्रतिष्ठानुपपत्तेश्च । एतेन निर्विशेषे सर्वमानविरोधिनि वेदान्तप्रामाण्ये बौद्धे किमपराध्यत इति प्रत्युक्त, तस्यागन्तुकदोषमूलत्वनिश्चयेन बोधकत्वायोगात् । निर्विशेषैकात्म्यबोधकाम्नाये त्वपौरुषेयतया नागन्तुकदोषमूलत्वशङ्केति विशेषः ॥

---

## असत्यात् सत्यप्रतीतिसमर्थनम् ।

यत्तु एवमपि सपरिकरस्याम्नायस्य बाध्यत्वे ततस्तत्त्वज्ञानानुदयाद् न प्रत्यक्षादिबाध इति, तन्न, उदीयमानस्य यदृच्छासंवादिन इव विषयाबाधेन तत्त्वज्ञानत्वात् । न च बाध्यस्वरूपेण कार्योदयानुपपत्तिः, सत्त्वलक्षणत्वादर्थक्रियाकारित्वस्येति वाच्यम् । बाध्येऽपि तत्र तादृशसत्त्वाभ्युपगमात् । तदिद बाधार्हत्वे सति व्यवहारानुगुणत्व व्यावहारिकसत्त्वमुच्यते सिद्धान्तिभिः । अपिच यद् बाध्य तदकार्यकरमिति क्व दृष्ट भवतेति वक्तव्यम् । शुक्तिरूप्यादाविति चेद्, ननु तदपि तव सदिति स्वप्रत्यक्षादिकार्यकरमेव । अपिच बाध्यस्यापि कार्यकरत्वे को विरोधः । (अ)सतः स्वसजातीयदृष्टान्तरादिकार्यकरत्वप्रसङ्ग इति चेद्, न, ताप-

नताडनाद्ययोग्यतया आन्तरजनन्यापवोपगृष्टस्येव तादृशकार्यकरत्वाभावेऽप्यविरोधात् । अपिचारोपितह्रस्वदीर्घैर्नूनमेव नगनागादिपदैर्गिरिगजादिसत्यप्रत्यया दृश्यन्ते । न च स्वरव्यञ्जनसमभिव्याहारमात्रमत्र न कस्यचिदारोप इति वाच्यम् । स्वर एव ह्रस्वदीर्घत्वाद्यारोपात्, वर्णव्यञ्जकवायुधर्मो हि ह्रस्वत्वादिर्नानिवर्मो वानुभूयते । न च व्यञ्जकधर्म एव स व्यञ्जके प्रतीयता, प्रकाश्यवृत्तत्वादिकमिव प्रकाश इति वाच्यम्, स एवायमकारो ह्रस्वो दीर्घश्चोच्चार्यत इति प्रत्यभिज्ञाविरोधात् । न च परुद् ये भुक्ता शालयस्तानैषमो भुञ्ज्महे इत्यादिवज्जातिविषया सा

"तेषा ये यानि कर्माणि प्राक् सृष्ट्या प्रतिपेदिरे ।
तान्येव ते प्रपद्यन्ते सृज्यमाना पुनः पुनः ॥"

इत्यादौ कर्मव्यक्तिभेदेऽपि ताज्जात्याद् रूपसामान्याद्वाभेदव्यवहारदर्शनादिति युक्तम् । व्यक्तिस्वरूपभेदविप्रतिपत्तौ तस्या जातिविषयत्वाकल्पनात् । 'अकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवती'त्यौपाधिकभेदमकारस्य ब्रुवाणा श्रुतिरपि व्यक्तिभेदमपवदति । यद्येव ह्रस्वदीर्घादिभेदेन न वर्णा भिद्यन्ते, कथ ते पञ्चाशदुद्दिश्यन्ते,

"त्रिषष्टिर्वा चतुष्षष्टिर्वर्णाः शम्भुमते मता. ।"

इति चाधिका. । न, प्रायिकवोधकतोपयोगिरूपभेदपरत्वेन कथञ्चित् तस्य स्वरूपभेदपरत्वाभावात् । अन्यथा प्लुतादिभेदे सति सङ्ख्याधिक्यादुक्तपरिसङ्ख्यायोगात् । अपिच नावर्णावर्णयो· अ इति सज्ञा लोकतोऽधिगन्तव्या, अकारो नायमाकार इति भेदसप्रत्ययात् । अन्यथा आकारे वाच्ये अकारमुच्चारयन् नोपालभ्येत, गवादिवत् सामान्योच्चारणादेव विशेषसप्रत्ययोपपत्तेः । एवञ्च 'आद्गुण.' (६. १. ८७) 'अस्य च्वौ' (७ ४. ३२) इत्यादिषु दीर्घो न गृह्येत । न च 'अणुदित्सवर्णस्य चाप्रत्ययः' (१ १ ६९) इति पारिभाषिक तद्ग्रहण, 'अइउण्' इत्यादेर्जातिविषयत्वे जात्या(श्रय)व्यक्तिविषयत्वे वा दीर्घादेरपि शक्यत्वेष्टया 'सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणाद्' इति वार्तिकभाष्यादौ तद्वैयर्थ्याभिधानात् । अन्यथा तस्य जातिवृत्तित्वाभावे 'अणुदित्सवर्णस्ये'ति परिभाषाया अप्याक्षरसमाम्नायिकवर्णमात्रविषयतया 'अक सवर्णे दीर्घ' (६ १. १०१) इत्यादौ दीर्घग्रहणेऽपि 'आद् गुण.'

इत्यादौ तदग्रहणप्रसङ्गात्, परिभाषाया अविषयत्वात् । हन्तैवमत एवाकाराकारादिभेदोऽवश्याभ्युपेय । व्यक्तिभेदे सत्येव जातेरनुगतबुद्धिनिर्ग्राह्यत्वात् । न, खण्डमुण्डादावय गौरय गौरितिवदकाराकारयोरयमकारोऽयमकार इत्यनुगतलौकिकव्यवहाराभावात् । न चात एव तौ भिन्नजातीयौ स्यातामिति युक्तम्, 'आद् गुण.' (६. १. ८७) इत्यादौ दीर्घाग्रहणप्रसङ्गात् । भिन्नजातीययोरेवाध्याहृतैकजात्येन पाणिनिव्यवहारः । न खलु विवक्षितैकजात्येऽपि लोकव्यवहारापेक्षेति चेद्, एव हि व्यक्त्येकत्वे सत्येव लौकिकमौपाधिकभेदमुपजीव्य जातिराह्रियतां, यत्राकारादिसञ्ज्ञायाम् 'आद्गुणः' इत्यादावभाव्यमानविषये सर्वोपादान स्यादिति । न खलु भेदकल्पनमपि पाणिन्युपक्रममिष्यते, येन भेदोऽपि कल्पनीयः । तत्र जातिरपीति गौरव स्यात् । किमेवं कल्पयसि न पुनः स्वसिद्धभेदमाश्रित्य जातिकल्पनामात्रमिति । उच्यते— सर्व एव हि सामान्यविशेषात्मानो भावा व्यक्त्यात्मना भिद्यमाना अपि न सामान्यात्मना भिद्यन्ते । तत्रैवं सत्यकाराकारयोः स्वरसभेदे जातिस्वरूप तावदाहार्यम् । तदात्मना चाभेदो व्यक्तीनामाहार्य एवेति गौरवं स्यात् । गगनस्येव त्वकाराकारयोरौपाधिकमात्रभेदेनाभेदाशस्याहार्यतेति लाघवात् । एव व्यक्त्येकत्वे सत्यपि बोधकतौपयिकौपाधिकरूपभेदेनैव तदुपस्थितिर्यथा स्यादित्येवमर्थं जातिमाहृत्यैत्र व्यवह्रियते 'अस्य च्वौ' (७. ४. ३२) इत्यादौ । तस्मादेकस्मिन्नेवाकारे ह्रस्वदीर्घत्वाद्यध्यास एव नगो नाग इत्यादौ, ततोऽपि चार्थाः सत्याः प्रतीयन्ते । प्रयोगव्यवस्थिते चाजिनाजीनादौ नगनागादौ वा विपरीतारोपे जात्यभावादिज्ञान भ्रम एव, आगन्तुकासाधारणदोषोपजनत्वादिति ।

अपिचैवं स्थूलपृषतीमित्यादौ समासे पूर्वपदप्रकृतिस्वरत्वे बहुव्रीह्यर्थः, अन्तोदात्तत्वे च तत्पुरुषार्थ इत्यध्याहृतस्वरभेदैरर्थभेदाः सत्या' प्रतीयन्ते । पञ्चजना इत्यादौ चान्तोदात्तादिना पदभेदा. । न चोदात्तादिभिर्वर्णाः स्वतो भिद्यन्ते, उदात्तादिभेदस्य व्यञ्जकधर्मस्य वर्णेष्वध्यासादिति ॥

---

## स्वप्नमिथ्यात्वम् ।

अपिच शुभाशुभस्वप्नात् तदनुगुणागामिसत्यफलप्रत्ययो जायते, शास्त्राद् नियतसहचारदर्शनाच्च । तथा

स्वप्नेऽेव मनःकान्तां कान्तामङ्गेन संस्पृशन् ।
अल्पं नन्दति भूयोऽपि रममाणोऽतिनन्दति ॥
उपसर्पन् बिभेत्यल्प सर्प भूयः पदा स्पृशन् ।
तेन मर्मणि सन्दष्टस्त्रासेन व्यथतेतराम् ॥
न च स्वप्नस्य सत्यत्व कथञ्चिदपि शक्यते ।
यत् पुरो गोपुर दृष्ट तत् क्षणेनैव वृक्षति ॥
स वृक्षस्तत्क्षणादेव गजत्यजति राजति ।
न चैवमीशसङ्कल्प इति शङ्क्य कथ हि सः ॥
व्यर्थं तदेकद्रष्टव्यलोष्टादि सृजतीशिता ।
सर्व हि चेतनार्थाय परस्परविभागवत् ॥
सृज्यते परमेशेन पुण्यपापव्यपेक्षया ।
तृणलोष्टादिसृष्ट्या च स्वप्नजो न सुखेतरे ॥
न चान्येनानुभाव्य तत्राफल. सर्ग ईशितुः ।
अन्यान्यसुखदु खानि ह्यन्यान्योपेक्ष्यवस्तुभिः ॥
जायन्ते जागर सर्गे परमेश्वरकर्तृके ।
नह्युपेक्षावसानत्व पुण्यपापानुबन्धिनाम् ॥
ऋते भोगावसानत्व वस्तूनामवकल्पते ।
नेशसङ्कल्पज. स्वप्न. स्वय निर्माय वाक्यतः ॥
स्वयमित्यस्य मुख्यत्वमीशोऽनुग्राहकः परम् ।
जाग्रद्देहानहभावात् कुलायाच्चरण बहिः ॥
उच्यते बहिरुक्त्यातो नेशसृष्टत्वसभवः ।
श्रूयते चाबहि स्वप्न कण्ठे स्वप्न विनिर्दिशेत् ॥
स्वे शरीरे यथाकाम परिवर्तत इत्यपि ।
तस्मान्मायामय स्वप्नो हेतुरूपानिरूपणात् ॥
तेनापि सुखदु खादि जायते सर्वसाक्षिकम् ।
तत्रानन्दा मुदो नेति यद्यपि प्रतिषिध्यते ॥
विशिष्टविषयोपाधिसुखभेदस्तथापि तु ।
वासनोपनतानेकविषयोपाधिसभव. ॥
जायते स स्वरूपेण जाग्रत्सुखविलक्षणः ।

विषया वोपलक्ष्यन्ते तदानन्दादिहेतवः ॥
सुखदुःखापरोक्ष यन्नायथार्थमवेक्ष्यते ।
क्षुत्तृष्णोपशम तद्वच्छीताद्युपशमं सुखम् ॥
मन्यते बालबुद्धित्वादिति नोक्तः सुखभ्रमः ।
किन्तु स्वात्मसुखे व्यक्ते ततस्तत्कालताभ्रम. ॥
तज्जातीयस्पृहोत्पत्त्या दु.खमेव हि तत् पुन. ।
तस्मादसत्यमप्यर्थक्रियाकारीति गम्यताम् ॥

'मायामात्र तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' (ब्र० ३. २. ३) इति वक्ष्यति च व्यासो भगवान् स्वप्नमिथ्यात्वम् ॥

---

### मायाशब्दार्थ. ।

यत्तु मायाशब्द आश्चर्यवाची, 'देवमायेव निर्मिते'त्यादिदर्शनादिति । तन्न, शुक्तिरूप्येन्द्रजालादौ नेदं वस्तु सत्, मायैव काचिदेषेति मृषार्थ एव तत्पदप्रयोगात् । लोकातिशायिसौन्दर्यतया च सीताया मिथ्यार्थसाधारणेन दुर्निरूपरूपत्वगुणेन देवमायेवेति मायात्वोत्प्रेक्षामात्रत्वात् । आश्चर्यत्वमपि हि न तावन्नानाकार्यकरत्व नानारूपावभासित्व वा, घटमणिकमल्लिकोदञ्चनादिकार्यकरत्वेऽपि तद्रूपावभासित्वेऽपि च मृदि तदभावाद् मायाशब्दाप्रयोगाच्च । नापि द्रागित्यनवधरणीयहेतुस्वरूपकार्यत्वे सति स्पष्टदृष्टिविषयत्वम्, अवधृतहेतुस्वरूपे कौशिकस्य प्रतिसर्गनिर्माणादौ तपश्चर्याजातानामाश्चर्याणामिति प्रयोगात् । नापि द्रष्टुरशक्यत्वे सति प्राथमिकस्फुटदर्शनविषयत्व, तादृशस्यापि सम्भाव्यत्वप्रतिसन्धानेऽनाश्चर्यत्वावगमात् । तस्मादसभाव्यत्वप्रतिसन्धानोपाधिकमदृष्टचरस्य स्फुटावभासित्वमाश्चर्यत्वम् । एवञ्च असम्भाव्यत्वे सति स्फुटावभासित्वमेव मायापदप्रवृत्तिनिमित्तमस्तु, लाघवात् । तच्च मिथ्यात्वम्, सत्त्वे कथमपि सभावनीयत्वात् । यत्तु ज्ञानमात्रानिवर्त्येषु सत्येष्वेवासुरास्त्रादिषु मायाशब्दः प्रयुज्यते, 'तेन मायासहस्र तद्' इत्यादाविति । तन्न, तेषामपि दुर्निरूपहेतुस्वरूपतया असम्भाव्यत्वात्, तद्विरोधिविषयतत्त्वज्ञानबाध्यत्वाच्च । अत एव तज्ज्ञेषु माया न प्रभवन्तीति प्रसिद्धि. । अत एवेश्वरप्रपञ्चादस्य विशेष. । सत्येव तदुपलब्धरि प्रमातरि बाधयोग्यत्वात् । किन्तु

मिथ्यैव सत् किञ्चिदेककार्यक्षम किञ्चिदनेककार्यक्षममिति दर्शनेनैव व्यवस्थाप्यम् । परस्यापि प्रदीपप्रभाया द्रव्यान्तरत्वे सति दीपसन्निकर्षविप्रकर्षयोरुष्णस्पर्शतारतम्यस्योपलब्धिव्यवस्थाप्यत्वोपगमात् । एवञ्च परयोगप्रक्षुभितदृष्टिविधयैवाविस्मतोऽप्यासुरास्त्रादेः शुक्तिरूप्यादिनो दृष्टविशेषतया छेद्यत्वभेद्यत्वादिक भवदपि न तस्य मिथ्यात्वमपलपति । तस्माद् मायामात्र मिथ्यैव स्वप्नः, कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । नहि स्वाप्निकरथादिः परमार्थविषयोचितदेशकालनिमित्तैरभिव्यज्यते । न वा न बाध्यते । तद्धि तस्य कार्त्स्न्यमिति सूत्रार्थः ।

परमते चेद सूत्रमनर्थकम् । यत् तावद् मायामात्रमाश्चर्यभूतः स्वप्न इति प्रतिज्ञायेत, तत् तदीयजीवसृष्टत्वपूर्वपक्षाविरोधि । अथ मायेतीश्वरसङ्कल्प उच्येत । तन्न, ईश्वरसृष्टत्वोपगमेन तव स्वप्नस्य तत्सङ्कल्पमात्रत्वानुपपत्तेः । अथ लौकिकोपकरणनिरपेक्षमीश्वरसङ्कल्पमात्रजाततया मायामात्रमित्युच्यत इति कल्प्येत, गौणार्थं सूत्रमापद्येत । अपिच तुशब्दार्थे न जीवसृष्टः स्वप्न इत्यत्रान्यत्र वा जीवस्य कार्त्स्न्येनानभिव्यक्तसत्यसङ्कल्पादिस्वरूपत्वादिति त्वदभिमतहेतुवैयधिकरण्यमपरिहार्यम् । कार्त्स्न्येनेति च व्यर्थम् । न च स्वप्ने सत्यसङ्कल्पाद्यभिव्यक्तिः स्यादिति शङ्कानिरासाय तदिति शङ्क्यम् । तस्य कार्त्स्न्येन पटोऽनवदात साकल्येनानवदात इत्यादाविव विशेष्यजीवे विधेयानभिव्यक्तिव्याप्तिपरिच्छेदकतया कादाचित्कतद्व्यावृत्तावप्युपपाद्यमानस्य सार्वदिकानभिव्यक्तिपरिच्छेदकत्वाप्रतीतेः । अपिच स्वप्नजो जीवस्य पक्षत्वे तस्य स्वप्नस्रष्टृत्वाभावविवक्षया हेतूपन्यासस्य जाग्रद्व्यावृत्तहेतुपरत्वकल्पनमनपेक्षितमयुक्तम् । तदवस्थे हेतूपन्यासादेव तत्रैव हेतुसिद्धौ निरुक्तशङ्कानवकाशश्च ॥

---

## स हि कर्तेति श्रुत्यर्थः ।

'न तत्र रथाः' इत्याद्या श्रुतिरपि स्वप्ने रथाद्यभावमुक्त्वा तत्सृष्टिमीरयन्ती तन्मिथ्यात्वमुपक्षिपति । यत्तु 'सृजते' 'स हि कर्ते'ति श्रवणात् जीवस्य च तिरोहितसत्यसङ्कल्पादितया निरुपकरणस्य स्रष्टृत्वायोगादविद्यामात्रत्वे च स हि कर्तेति हेतूपन्यासवैयर्थ्यात्, तदुभयानुग्रहाय पारमेश्वरसृष्टिरेव

तत्रार्थानामिति । तन्न, रथाद्यर्थनिषेधोपक्रमविरोधात् । यत्तु जाग्रद्दृष्टचिरस्थायित्वसर्वानुभाव्यत्वादिविशिष्टार्थनिषेधो विशेष्यसर्गश्रवणाद् विशेषणनिषेधे पर्यवस्यति, सविशेषणे हीति न्यायादिति । तदिदमौत्प्रेक्षिकतन्त्रजडजल्पितमश्रद्धेयम् । उपक्रमस्य स्वरसावगतार्थस्वरूपनिषेधविषयत्वमनिलङ्घ्याप्रतीतविशेषणनिषेधविषयत्वकल्पनायोगात् । अन्यथा वेदोपक्रमन्यायविरोधात् । न च सृजतिरुपसंहारस्थोऽप्यनन्यगतिकतयोपक्रममन्यथयेदिति वाच्यम् । असञ्जातविरोध्युपक्रमानुरोधेन कल्पनाविषये लक्षणोपपत्तेः । तदुक्तं विवरणे— 'स्वप्नसृष्टिश्रुतिर्दृष्टिसृष्ट्यभिप्राये'ति । वरं ह्युपक्रमलक्षणाया उपसंहारलक्षणा । अत एव हि 'प्रजापतिर्वरुणायाश्वमनयत्, स स्वां देवतामार्च्छदि'त्युपक्रमानुरोधेन 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान् निर्वपेदि'त्यत्र 'यावतः प्रतिग्राहयेदि'ति व्यवधारणकल्पनया दातुरिष्टिरिति व्यवस्थापितम् । असिद्धं च सृजतेरनन्यगतिकत्वम् । असदेव सृष्टाय ब्रूते । सृजत्यसावसदेव असतामेष स्रष्टेत्याहतवादिनि विकल्पनापर्यायत्वेन सृजतेर्बहुल प्रयोगेणाविद्यकेऽपि निरूढत्वात् । यत्तु अविद्यामात्रत्वे स हि कर्तेति हेतूपन्यासवैयर्थ्यमिति । तन्न, स्वप्नार्थस्येश्वरसृष्टित्वाभ्युपगमेऽपि तद्वैयर्थ्यात् । तस्य सर्वकर्तृत्वप्रसिद्धेर्हेत्वनाकाङ्क्षत्वात् । अपिच नागमिकोऽर्थो हेतुमपेक्षते । अनपेक्षतया हि प्रामाण्यम् । 'तेन शूर्पेण जुहोति', 'तेन ह्यन्नं क्रियत' इतिवत् हेतुवन्निगदोऽयमर्थवाद । किन्तु 'चतुर्गृहीतान्याज्यानि भवन्ति' 'नह्यत्रानूयाजा इज्यन्त' इत्यातिथ्येष्टिगतहेतुवन्निगदे यत्र यत्रानूयाजाभावस्तत्र तत्राष्टगृहीताभाव इति व्याप्त्या सर्वत्रानूयाजाभाववत्यष्टगृहीतपरिसङ्ख्यालाभवदिहापि कथञ्चिन्मत्पक्षे प्रयोजनं लभ्यते, गर्तपतनगजारोहणादिविचित्रभोगोपकरणकल्पनाया को हेतु., अविद्या हि साधारणीत्यपेक्षायां स हि कर्ता कर्मणामिति कर्मैव हेतुरित्येवंपरत्वात् । अथवा असदर्थविकल्पनायामाहतवादिनो बुद्धिपूर्वकारित्वादुपपद्यते मिथ्यैव सृजतीत्यादिव्यवहारः, न तूपसंहृतकरणग्रामे तमस्विनि स्वप्नजीव्यत उच्यते 'स हि कर्ते'ति । स्वप्नकल्पनाहेतुकर्मणि स्वातन्त्र्यात् तन्निबन्धनो रथादीन् सृजतीति व्यपदेश इत्यर्थः । एवं सति तच्छब्दस्य 'स यत्र प्रस्वपिती'ति प्रकृतजीवपरामर्शित्वमप्रहीणं भवति । ईशविषयत्वे तत् परित्यक्तं स्यात् । 'एष सुप्तेषु जागर्ती'त्यपि जीव-

विषयमेव, तस्य

"यथा च मरणं प्राप्यात्मा भवति गौतम"

इति प्रकृतत्वाद्, 'असुप्त सुप्तानभिचाकशीती'ति श्रुत्यन्तरात्, 'स्वय विहत्य स्वय निर्माय प्रस्वपिती'ति च। 'तस्मिन् लोका. श्रिता सर्वे' इति च जीवपरैकात्म्यादुपपन्नम्। युक्त च 'सन्ध्ये सृष्टिराह हि' (ब्र० ३ २ १) इति यावद् 'न स्थानतोऽपि परस्योभयलिङ्गम्—' (ब्र० ३ २ ११) इत्यतो जीवविषयो विचार इति, तत्र परशब्दोपादानेन प्रकृतविच्छेदात्। अन्यथा अव्यवायेन तदानर्थक्यात्।

तथा 'हस्तीव विच्छाययति' 'गर्तमिव पतति' 'उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन्नि'तीवकारेण स्पष्टमेव स्वप्नमिथ्यात्व श्रावयति। यानि ह्येव जाग्रत् पश्यति, तानि सुप्त इति च दूष्य पक्षभेद। अभ्युपगमे च तानीति जाग्रद्वासनामयत्वमुच्यते। न खलु तान्येव स्वप्नग् द्रष्टुमर्हति। न च तत्सदृशेषु परमेश्वरसृज्येषु तानीति समञ्जसम्। जाग्रद्वासनामयेषु त्वविद्यात्मकेषु तदवस्थान्तरत्वात् तानीति युज्यते परामर्श, मृदेव घट इति दर्शनात्। 'यदेव जाग्रद्भय पश्यति तदत्राविद्यया मन्यते' इत्याहत्य स्वप्नस्याविद्यकत्वश्रवणाच्च। तथा लौकिकस्वप्नावमर्शोऽपि तन्मिथ्यात्वमुपहरति वृक्षमिवाध्यरुक्षं, वत्सानिव व्यसैत्समिति। यत्तु 'नाभाव उपलब्धेः' (ब्र० २. २. २८) इत्यधिकरणभाष्यम्, 'अपिच स्मृतिरेषा यत्स्वप्नदर्शनमि'ति, यच्च ज्योतिर्ब्राह्मणभाष्य 'दृष्टस्मृतिर्हि स्वप्न' इति, तत् स्मृतिरूपत्वाभिप्राय, सस्कारापेक्षत्वात् कल्पनायाः। अन्यथा सर्वजनीनाबाधिततद्बाधानुभवविरोधात्। 'वैधर्म्याच्च न स्वप्नादिवत्' (ब्र० २. २. २९) इति सूत्रभाष्ये बाधाबाधौ वैधर्म्यमित्यभिधानाच्च। तदेवमसत्यादेव स्वप्नात् सत्यसुखाद्यनुभवो भाविशुभादिप्रत्ययश्चेति दृष्टम्।

एव प्रतिबिम्बादसत्यात् सत्यबिम्बप्रतिपत्तिरुदाहार्या। यत्तु दर्पणप्रतिहतगतयो नायनरश्मयो दर्पणगताभिमुख्याद्यविवेकेन स्वमुखमेव विपर्यस्तं ग्राहयन्ति न पाषाणादिप्रतिहतगतय इत्युपलब्धिव्यवस्थाप्यम्। न तु प्रतिबिम्बो नाम कश्चिदर्थः। यथाहुः—

"दर्पणाभिहता दृष्टिः परावृत्य स्वमाननम्।
व्याप्नुवत्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम्॥"

इति । तच्चिन्त्यम् । अनतिदूरपरिवर्तिनस्तटाकादावधोग्रवृक्षादिप्रतिबिम्बप्रत्यये निरुक्तगत्यसम्भवात् । अपिचैवं बिम्बप्रतिबिम्बलिङ्गिलिङ्गभाव सर्वसिद्धो बाध्येत । न च दर्पणाद्यविविक्तमुखादिप्रतिभासात् तद्विविक्तमुखाद्यनुमितिरिति वाच्यम् । मुखादेर्बिम्बस्यैवानुमानात् । नहि दर्पणादिविवेक एव तत्रानुमीयते, प्रतिबिम्बस्य बिम्बपूर्वकत्वानुमितेरेव सर्वानुभवसिद्धत्वात् ।

तस्मादात्मापरोक्षासेर्व्यवहारानुपातिना ।
आगमेनात्मयाथात्म्यविज्ञानमवकल्पते ॥

अथ स्वप्नादिविज्ञानं सत्यमेव स्वरूपतः ।
सत्यप्रत्ययहेतुश्चेदागमज्ञानमस्तु नः ॥

बाधो विषयसम्बन्धनिबन्धस्तुल्य एव ते ।
तदालम्बनमात्रत्व यत्तदप्यावयोः समम् ॥

न खलु विषयावच्छिन्नसद्भावमेव ज्ञानमस्माभिरिष्यते, येन तस्य तद्रूपेणैव लब्धव्यात्मतया तद्रूपबाधे बाध स्यात् । किन्तु निर्विषयापेक्षनित्यसतस्तस्याविद्यको विषयोपराग इति सत्यस्वरूपमात्रस्य साधारण्यादनतिप्रसङ्गाय विषयावच्छिन्नरूपेण हेतुत्व वाच्यम् । तच्च विषयमिथ्यात्वे मिथ्यैवेत्यपि स्वप्नज्ञानादितुल्यमेव । तद्विषयस्य चासत्यत्व न्यरूरुपाम । सत्ख्यातिनिरासे च भ्रान्तिमात्रविषयासत्यत्वं वक्ष्यते । एतेन रेखावर्णाद्युदाहरणमपि व्याख्यातम् । यत्तु सर्वमृषात्वमते नासत्यात् सत्यप्रतिपत्तावुदाहरणसम्भव इति । तन्न, लोकसिद्धसत्यासत्योपजीवनेनोदाहरणाविरोधात् । अत एव श्रुतावपि 'वाचारम्भण विकारो नामधेयं मृत्तिकेत्येव सत्यम्' 'एव सोम्य! स आदेशो भवती'ति लौकिकदृष्ट्यैव निर्दिश्यते[1] । तत्त्वदृष्ट्या मृत्तिकासत्यत्ववचनेऽद्वितीयात्मतात्पर्यविरोधात् । यथा चात्र विकारासत्यत्वेन कारणस्वरूपमात्रपरिशेषपरत्व, तथाग्रे वक्ष्यते। तस्माद् यावत् किञ्चिद् द्वैतजातस्य सर्वशो दोषमूलत्वेऽपि नाम्नायस्य निर्विशेषाद्वितीयात्मतत्त्वबोधकत्व हीयते बाधितविषयत्व वापद्यत इत्युपपन्न तात्त्विक प्रामाण्यम् ॥

---

१. 'दर्श्यते' ख पाठ

## तान्त्रिकौपनिषदयोर्बौद्धसङ्करतदभावौ ।

एवञ्च यो वैदिकमहाजनविद्वेषव्यसनजनितोन्मादवशंवदहृदयस्य कस्यचित् प्रलापः —

"वेदोऽनृतो बुद्धकृतागमोऽनृतः
प्रामाण्यमेतस्य च तस्य चानृतम् ।
बोद्धानृतो बुद्धिफले तथानृते
यूय च बौद्धाश्च समानसविद. ॥"

इति, स तादृशैरेव दासेरैः श्रद्धेयः । यद्यपि प्रामाण्य वेदस्य तज्जनिता बुद्धिर्वा स्वरूपेणानृते, बोद्धा च तदवस्थः, फल च स्वरूपानन्दापरोक्षानुभवात्मा मोक्षोऽविद्यानिरूप्येणाविद्यानिवृत्तिरूपेणानृतनिरूप्यस्यानृतत्वाद्[1], रज्जुसर्पविसर्पणादिवत्, तथापि स्वप्रकाशानन्दैकात्म्यरूपविषयस्य बाधाभावेनानृतत्वाभावाद् विशेषोपपत्ते । ननु तेषामपि सवित्स्वप्रकाशत्वादिविषयो नानृत, सर्वविषयानृतत्वाभावो न तवापीति चेद्, न, वेदतात्पर्यप्रयोजकरूपेण यथास्व सर्वविषयसत्यत्वोपगमात् । 'स्थिते सापवादकमेक शास्त्रमि'ति न्याये सर्वमेव साध्यसाधनरूप नामरूपकर्मात्मक प्रमेयजातमाब्रह्मयाथात्म्यापरोक्षानुभवादाविद्यकव्यवहारास्पदं, तदपरोक्षानुभवे तु विद्याविषये बाधिनाविद्याद्यशेषकलुषनिर्विशेषात्ममात्रपरिशेष इति हि शास्त्रतात्पर्यपर्यवसानम् । न च यागस्वर्गादेरपि व्यवहारविषये तादृशागमतात्पर्यविषयसाध्यसाधनभावो बाध्यते । बुद्धागमे त्वनाप्तप्रणीतत्वनिश्चयेन व्यवहारविषय एव बोधकतारूप प्रामाण्यमपोद्यते । विषयश्चापेक्षितसंवादाभावेन मानान्तरविरुद्धो बाध्यत्व नातिवर्तते । आत्मनः स्वयंप्रकाशत्वाद्याम्नायोऽपि न तदर्थे बुद्धागमस्य सवादक, उक्तरीत्या तस्य स्वयमबोधकत्वात् । स एव तु यादृच्छिकसवादीति नास्माक बुद्धसमसमयत्वम् । तान्त्रिकस्य तु सर्वसत्यत्वाभ्युपगमाद् बुद्धागमतत्प्रामाण्यतत्प्रतिपाद्याना सत्यत्वेनाम्नायतुल्यतया सर्वसमयसाङ्कर्यप्रसङ्ग. । युक्त च तस्य 'पाञ्चरात्र तथा बौद्धमि'ति तुल्यकक्ष्यपठिततन्त्राभिनिवेशिनो वेदार्हतयोस्तुल्यप्रमाणत्वमुपगन्तुम् । परस्परविरोधे च केन कि बाध्यताम्[2] । विनिगमना तु नास्त्येव, सर्वज्ञप्रणीतत्वा-

---

१. 'त्व, र', २. 'दमे' ख पाठ,

वगमस्य तत्र तत्र वेदार्हततन्त्राणामविशेषात् । तदेव

वेदार्हतौ सत्यतया समौ मतौ
प्रमाणभावोऽपि तथा समोऽनयोः ।
प्रणेतृबुद्धी च समे तयोरत'
स तान्त्रिकस्याजनि बुद्धसङ्करः ॥

अस्माक पुनराम्नायस्यापौरुषेयतया बोधकताविरोधिदोषशून्यस्य सवादानपेक्षस्य बाधकाभावात् सिद्ध निर्विशेषवस्तुनि तात्त्विक प्रामाण्यमिति ॥

---

### वेदान्तेषु निर्विशेषप्रतीति ।

यत्पुनर्वेदान्ताना निरूपणे न निर्विशेषवस्तु प्रतीयत इति, तत् तान्त्रिकस्यैव वेदबाह्यत्वापराध । नहि स्थाणोरयमपराध', यदेनमन्धो न पश्यति । आम्नायादेव हि सर्वतो निर्विशेष वस्तु प्रतीम । तथाहि— आत्मविषयौपनिषदी प्रवृत्तिस्त्रिवर्त्मा तावदुपलभ्यते, कारणविषया जीवविषया निर्विशेषैकात्म्यस्वरूपविषया च । न तु किञ्चिदतोऽतिरिक्त प्रतिपाद्यमस्ति । तत्र कारणविषया तावद् 'आत्मन आकाशः सम्भूतः', 'सोऽकामयत बहु स्या प्रजायेये'ति, 'स ईक्षत लोकान्नु सृजा इति', 'तदैक्षत बहु स्या प्रजायेयेति', 'य. सर्वज्ञ सर्ववित्', 'स ईक्षाञ्चक्रे, स प्राणमसृजते'त्याद्या । न चायमात्मा कारणस्वभाव एव प्रतिपिपादयिषितोऽर्थ उपनिषदा, कार्यसापेक्षकारणत्वस्य स्वभावत्वानुपपत्तेः । नहि लाक्षोपरागसापेक्षो रक्तिमा स्फटिकस्य स्वभाव', न वा पुत्राद्युपाधिनिबन्धन पितृत्वादिक पुरुषस्य । एतेन ईक्षितृत्वादिकम् ईक्षणीयादिसापेक्ष व्याख्यातम् । किन्तु निर्विशेषप्रतिपत्त्युपायतया कारणरूपमुपपाद्यते । अत एवान्यार्थकारणरूपोपपादनप्रसञ्जिततदैकात्म्यविरोधिभेदव्युदसनपराणि विशुद्धस्वरूपविषयाणि वाक्यान्याम्नायन्ते । 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने', 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह', 'अस्थूलमनण्वह्रस्व', 'यत्तदद्रेश्यमग्राह्यम्', 'अशब्दमस्पर्शमरूपमव्यय', 'केवलो निर्गुणश्च', 'निष्कल निष्क्रिय शान्तम्', 'अन्यदेव तद्विदितादथो अविदितादधि', 'नान्तःप्रज्ञ न बहिःप्रज्ञ

नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञमदृश्यमव्यवहार्यमि'त्यादीनि । जीवविषयाणि 'अन्योऽन्तर आत्मानन्दमय', 'प्राणनेन प्राणो नाम भवति । स समानः सन्नुभौ लोकावनुसञ्चरति', 'एष हि द्रष्टा श्रोता घ्राता', 'तस्य त्रय आवसथास्त्रयः स्वप्नाः', 'अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः' इत्याद्या । तस्यापि नानावस्थानुसरणाभिधानाप्रापादितदोषपरिहारपराण्याम्नायन्ते — 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः', 'असङ्गो ह्ययं पुरुषः', 'अत्रायं पुरुषः स्वयञ्ज्योतिः', 'अथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्', 'अनश्नन्नन्यो अभिचाकशीती'त्यादीनि ।

तदैकात्म्यविषया च 'स यश्चायं पुरुषे यश्चासावादित्ये, स एकः', 'अयमेव स योऽयमात्मा', 'अयमात्मा ब्रह्म', 'स वा एष महानज आत्मा योऽयं विज्ञानमयः', 'प्रज्ञानं ब्रह्म', 'तत्त्वमसि',

"यदेवेह तदमुत्र यदमुत्र तदन्विह",
"अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य"

इत्याद्या ।[1]

## अध्यारोपापवादन्यायः ।

तत्र ब्रह्मकारणत्वजीवसंसारादिविषयाणि प्रत्यक्षादिप्रतिपन्नभेदाध्यारोपापवादाभ्यां ब्रह्मात्मैकात्म्यवाक्यैकवाक्यानि, सामर्थ्येन तदर्थप्रतिपत्त्युपयोगित्वाद् अभेदप्रतिपादनस्य विशिष्टतत्तदर्थप्रतिपत्तौ सामर्थ्याभावात् । अध्यारोपापवादाभ्यां ह्यात्मैकत्वं प्रतिपाद्यमानं बोध्यबुद्धिमारोहयति । अपरथा प्रत्यक्षादिविरोधोपस्थितिव्याकुलितचेतसो न द्रागित्यात्मतत्त्वं प्रतिपत्तुं शक्यम् । नाप्यविदिताविशेषितपदार्थतत्त्वस्य स्वरूपाभेदो वाक्यार्थः । तथाच प्रत्यक्षादिविरोधोऽपि श्रुत्यनुकूलतर्कानुसन्धानेन समाधास्यते । श्रुतिश्च 'उपदेशाद्य वाद' इति ब्रह्मस्वरूपोपदेशार्थं श्रुतिषु सृष्ट्यादिवाद इति दर्शयति । तथा 'द्वे वाव ब्रह्मणो रूपे' इत्युपवर्ण्य 'अथात आदेशो नेति नेती'ति स्वरूपोपदेशात् तादर्थ्यं सृष्ट्यादिनिरूपणस्यावगम्यते । यथा चाहुः —

"मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा ।
उपायः सोऽवताराय नास्ति भेदः कथञ्चन ॥"

---

१. 'थाह' क-पाठ

इति । एवं स्मृतीतिहासपुराणवादा अपि श्रुतिशैलीमनुसरन्तस्तथैव ब्रह्मात्मतत्त्वं प्रतिपादयन्ति । तदध्यारोपोपाश्रयेण तु नानाफलोपकरणस्वरूपाणि कर्माण्युपासनानि च विधीयन्ते । तत्र चान्योऽसावन्योऽहं, ममेदमित्थमित्याद्यविद्याप्रत्युपस्थापितनानाकामाः प्रत्यक्षाद्युपनीततत्तदर्थमात्रव्यवहारिणोऽधिक्रियन्ते, साध्यसाधनगोचरसर्वव्यवहारस्याविद्याविषयत्वाद्, 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती'त्यादिश्रुतेः । विद्याविषये च सर्वव्यवहारोपमर्दनात्[1] । 'यत्र त्वस्य सर्वमात्मैवाभूत्, तत् केन कं पश्येदि'ति श्रवणात् । एनमेव तु कारणावस्थमात्मानमखिलजगदनुप्रवेशेन समस्तचिदचिद्वस्तुशरीरकमन्तर्यामिणं प्रशासितारं सर्वज्ञं सर्वशक्तिं सत्यकामं सत्यसङ्कल्पं सकलजगन्मर्यादाविधारकमखिलक्रियाफलप्रदमीश्वरं ब्रह्मेति विष्णुरिति शिव इति चैवमादिरूपेण यथासमयमुपासीना यथोपासनमेव फलं प्रतिलभन्ते । 'तं यथा यथोपासते, तदेव भवति', 'यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति',

"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवैति कौन्तेय! सदा तद्भावभावितः ॥"

इत्यादिश्रुतिस्मृतिभ्यः ।

यत्तु प्रत्यक्षादिसकलप्रमाणानधिगतसफलकारणत्वादिप्रतिपादनमपवादायैवाध्यारोपमात्रमिति दुश्शकशङ्कं, फलवदपूर्वार्थप्रतिपादनपरत्वादाम्नायस्येति । तन्न । कारणादिरूपमात्रस्यानुमानाद्यवसेयत्वात् । अत एव न्यायिभिरनुमानादेव कारणाधिगतिरिष्यते । तत्स्वरूपनिर्धारणाय परमस्माभिरागमो मृग्यते । तथाच भगवान् भाष्यकारः '**कार्यमात्रं तु गृह्यमाणं किं ब्रह्मणा संबद्धं किमन्येन केन चिद्वा संबद्धमिति न शक्यं निश्चेतुम्**[2]' इत्यनुमानात् कारणरूपसिद्धिमात्रमङ्गीकृत्य तस्य स्वरूपविशेषनिश्चयाभावमेव दर्शयति । नहि कार्यानुमेयकारणरूपे कश्चिद् विप्रतिपद्यते, किन्तु तत्स्वरूपे असदेव कारणं सदेव वा परमाणवो वान्यद्वेति । नन्वस्ति निमित्तकारणरूप एव विप्रतिपत्तिः केषाञ्चिदीश्वरानभ्युपगमादिति ।

---

१. 'र्दात्' क पाठः. २ 'निश्च' क पाठः

न । तेषामपि कर्मणो वा पुरुषस्य वा निमित्तत्वोपगमात् । स्वभाववादी तु सर्वैरेव हेतुवादिभिः सकललौकिकव्यवहारानुरोधेन बहिष्करणीयः, तेन नापूर्वता कारणत्वस्य । अपूर्वत्वे तस्य ब्रह्मलक्षणत्वानुपपत्तेश्च । अनधिगतस्य लक्षणत्वायोगात् । जगत्कारणत्वं च ब्रह्मणो लक्षणमुच्यते 'जन्माद्यस्य यतः' (ब्र० १. १. २) इति । अपिच 'जर्तिलयवाग्वा वा जुहुयाद्, गवीधुकयवाग्वा वा' 'न ग्राम्यान् पशून् हिनस्ति, नारण्यान्' इति सार्थवादमपूर्वार्थस्यैव 'अजक्षीरेण जुहोती'ति विधिप्रतिपत्त्यर्थतया 'नाहुतिर्वै जर्तिलाश्च गवीधुकाश्चे'त्यपवादायैवाध्यारोपदर्शनादिहापि तथा भविष्यति । एवं 'संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्नि'त्याद्यपूर्वार्थारोपणमन्यार्थमुदाहार्यम् । नापि कारणत्वप्रतिपादनेन किञ्चित् फलमस्ति, निर्विशेषब्रह्मप्रतिपत्त्यर्थकारणरूपव्यपाश्रयविहितकर्मोपासनानामेव फलवत्त्वावगमात् । ब्रह्मणि कारणरूपारोपस्य तदपवादस्य च परमपुरुषार्थभूतब्रह्मैकात्म्यविद्यार्थतयापवादैकार्थत्वाभावाच्च । सर्वस्यैवोपनिषदाम्नानस्य 'स एकः' 'तत्त्वमसी'त्याद्यभेदवाक्यैकवाक्यत्वात् । तत एव मोक्षफलविज्ञानोदये तत्रैव पुरुषार्थोपदेशपर्यवसानात् । तदिदमतो महावाक्यमुच्यते । न चेदमेव कारणवाक्यैकवाक्यमस्तु, 'ऐतदात्म्यमिदं सर्वमि'ति सामान्याभिहिते सर्वात्मभावे चेतनालम्बनेन विशेषोपसंहारोपपत्तेरिति वाच्यम्, अभेदव्युत्पन्नस्य सामानाधिकरण्यस्यैकशब्दस्य च तदात्मकत्वाद्यर्थान्तरे लक्षणापत्तेः । अत एवैकात्म्योपदेशाविघाताय कारणात्मनो जीवस्य च तत्र तत्र स्वरूपकैवल्यमाम्नायत इत्युदाहार्यम् । अन्यथोपास्यरूपकारणात्मन्येव वेदान्तोपदेशपर्यवसाने 'न जायते म्रियते वा विपश्चित्' 'असङ्गो ह्ययं पुरुषः', 'अथ यो वेदेदं जिघ्राणीति स आत्मे'त्यादौ प्रजापतिविद्यादौ च जीवात्मस्वरूपपरिशोधनमक्षप्राणमनोविज्ञानप्रणालिकया च तदैकात्म्योपदेशपर्यवसानं च सर्वत्र वेदान्तानामनर्थकं प्रसज्येत । ब्रह्मण एव यथोपादिष्टगुणस्य सर्वालम्बनसाधारण्येनोपासनयापि मोक्षाधिगमोपपत्तेः ।

यत्तु परमपुरुषविभूतिभूतस्यात्मनः स्वरूपयाथात्म्यं बद्धमुक्तात्मवैलक्षण्येनापवर्गसाधनभूतपरमपुरुषवेदनोपयोगितयावगन्तव्यमिति परिशोध्यत इति । तन्न । निखिलजगदुदयविभवविलयनियमनमहानन्दैकहेतुतैव हि द्विविधजीववैलक्षण्यं ब्रह्मणः । न च तत्तद्वैलक्षण्यरूपेणापि ज्ञातव्यं, यथाश्रुतगुणकब्रह्मोपासनेनैव फलसिद्धौ तथाज्ञानस्योपायत्वकल्पने गौरवान्मानाभा-

वाच्च । प्रत्यगात्मस्वरूपादेव ब्रह्मैक्येवस्थेनापि प्रत्यगात्मस्वरूपपरिशोधन-स्यान्यथासिद्धिरुक्ता । न च मुक्तस्वरूपयोगात् । यदपि तत्क्रतुन्यायेन शोधितस्वभावस्यात्मनः ध्यानं तेन संसारनिवृत्त्याभिव्यक्तस्वरूपेण ब्रह्मस्वरूप-गुणविभवानुभवाय मोक्षाय कल्पते, नान्यथेति तदुपदेश इति । तदपि न । तवोपासितसाक्षात्कृतेश्वरप्रसादादेव संसारकर्मावरणनिवृत्तेरिष्टत्वात् । तस्याश्च कर्मफलस्येव कर्मानुष्ठाने केवल सर्वान्तर्यामितयोपासनेऽपि भावोपपत्ते । न खल्वात्मस्वरूपाभेदेन स्वरूपमतारोपितेन वा तव मोक्षायोपासन विवक्षित, किन्तु आत्मात्मतयैव । तत्रैव सति शोधितात्मालम्बनत्वे कमप्यतिशयमागम' पश्यतीत्याम्नायविस्रम्भ ए नान्त्रिकवराकस्य वेदबाह्यत्वप्रच्छादनाय शरणीकरणीय. स्याद्, नार्थविशेषोपपत्ति । यदपि भगवत्प्राप्त्युपायभूतभगवदुपासनाङ्ग प्रत्यगात्मयाथात्म्यज्ञानमिति स्वपरिशोधनमिति । तन्न । कर्मणीव देहातिरिक्तात्मज्ञानस्यैव सन्निपातित्वोपपत्ते । दृष्टसम्भवे चारातीयत्व-कल्पनस्य श्रुत्याद्यभावे ब्रह्मात्माभेददर्शनविद्वेषव्यसनमात्रमूलत्वात् । अपिच आत्मज्ञानस्याकर्माङ्गतया स्वत पुरुषार्थत्व विवक्षता ब्रह्मविलक्षणजीवज्ञानस्य कर्माङ्गत्वापत्तौ न मुक्तिहेतुत्व शक्यमुपपादयितु, ब्रह्मज्ञानस्यापि हि तदभेदा-पदेशेन कर्माङ्गत्वं पुरुषार्थनये पूर्वपक्षित, किमङ्ग ! पुनस्तज्ज्ञानस्यैव तदङ्ग-त्वमिति । अपिचैव 'तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्,' 'अयमात्मा-ब्रह्मे'त्यादिकार्यकारणभावादिसकलविशेषोत्तीर्णस्वरूपपरिशोधण विरुध्येत । एतेन,

"तदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येद्"

इति श्रुतेः सम्बुद्धात्मन एव ब्रह्मतत्त्वसाक्षात्कारसाधनत्वाद् जीवस्वरूपपरि-शोधनमर्थवदित्यपरोक्तमुदस्तम् । इह देहात्मकृतकर्मावरणे सत्यनाविर्भूतस्व-रूपस्यात्मनो ब्रह्मतत्त्वसाक्षात्कारस्य परेणानुपगमात् । परत्र तदावरणनिवृत्तेरु-पासितब्रह्मानुग्रहलभ्यत्वेनात्मस्वरूपपरिशोधनानर्थक्यात् । उक्तश्रुत्या कारण-स्वरूपोत्तीर्णस्यात्मनो भेदे मानाभावाच्च । एवञ्च दीपोपमेनेति प्रकाशरूपत्व-मुच्यते, न दर्शनसाधनत्वम् । इत्थभावे च तृतीया । स्वात्मतत्त्वरूपेण ब्रह्मतत्त्व प्रपश्येदित्यर्थः । तदेवमवसिते शास्त्रस्यैकात्म्यैदम्पर्ये यत्किञ्चिदपि विशेषणमुपादीयमानमात्मनि तद्विरोधित्वादध्यारोपकोटिमेवानुप्रविशति । पदा-

वति, धर्मविशेषवैशिष्ट्याविषयत्वे व्यवहारसाङ्कर्यप्रसङ्गात्, स्वरूपमात्रस्य सर्वविशेषसाधारण्यात्। अन्यथा भ्रमानुपपत्तेः। सर्वस्यैव विभ्रमस्यारोप्यविषयरूपद्वयावभासितयाधिष्ठानस्वरूपभानगर्भत्वात्। न चात्यन्तमदृष्टचररूपो वेदान्तानामर्थो वेदितुं शक्यते, सर्वबुद्धिपथातिचारिणस्तस्य बुद्धावनारोहात्। न च लोके सुगन्धि सुन्दरमिन्दीवरमिति वा सोऽयमिति वा समानाधिकरणपदवद् वाक्यमप्यविशिष्टार्थं संसर्गागोचरप्रमितिजनकं वा दृष्टं, नानाविशेषणविशिष्टैकार्थप्रतिपादनात्। 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकार्थवृत्तिः सामानाधिकरण्यमि'ति पातञ्जलानुशासनमुद्रेत्युक्तम्।

अथोच्यते— प्रकृष्टप्रकाशश्चन्द्र इत्यादिलक्षणवाक्यस्य सोऽयं देवदत्त इत्याद्यभेदवाक्यस्य वा दृष्टाखण्डार्थता, तयोः प्रतिपाद्यनरप्रसिद्धार्थोपादानेन तदप्रतिपन्नलक्ष्यस्वरूपाभेदमात्रप्रतिपादनपरतया स्वार्थवैशिष्ट्यस्याबोधनीयत्वात्। तावन्मात्रस्यैव व्युत्पाद्यनरजिज्ञास्यत्वात्।

"राकानिशाकरं पश्येदनिमेषप्रसक्तदृक्।
आनिशीथाद् यथायोगमक्षि[1]संज्वरशान्तये॥"

इत्याद्युपश्रुत्य चन्द्रमसि नयनप्रणिधित्सयास्मिन् ज्योतिर्मण्डले कश्चन्द्र इत्यनुयुञ्जानस्य चन्द्रपदवाच्यत्वादौ जिज्ञासायोगात्। न च व्यावृत्तिरपि बुभुत्सिता, वाक्येन तत्संसृष्टो विशेषो बोधनीय इति शङ्क्यम्। चन्द्रत्वरूपाया स्वरूपमात्रस्य वा व्यावृत्तेरपि प्रत्यक्षत एवावगमात्। एवं तर्हि न जिज्ञास्यमवशिष्यते, प्रत्यक्षत एव चन्द्रमसोऽवगमादिति चेत्। सत्यम्। स त्वनवधारणरूपो न प्रवृत्तिक्षमः, अनभ्यासदशापन्नजलज्ञानवदिति तदवगमो लक्षणवाक्येनावधारणात्मा सम्पद्यते। एवं,

मायावत्या सहायातमरिष्टे नष्टमात्मजम्।
पश्यन्ती च स्मरन्ती च रुक्मिणी पुत्रगर्धिनी॥
नारदोक्त्या स एवायमिति केवलमेकताम्।
अबुद्ध्वा बुध्यते तेन तदखण्डार्थमिष्यते॥
सत्यज्ञानादिवाक्यं च तथा तत्त्वमसीति यत्।
तत्प्रसिद्धपदार्थत्वादखण्डार्थकमिष्यताम्॥

---

१ 'स' क. पाठ

तस्मात् प्रकृष्टप्रकाशादिवाक्यव्यापारस्य ससर्गागोचरचन्द्रस्वरूपमात्रप्रमीति-परत्वमेवेति न सत्यादिवाक्यस्याखण्डार्थतायामत्यन्ताप्रसिद्धकल्पनादोष. । प्रयोगश्च — सत्यादिवाक्यमखण्डार्थ लक्षणवाक्यत्वात्, प्रकृष्टादिवाक्यवत् । तत्त्वमस्यादिवाक्य वा अससृष्टार्थप्रमितिपरम्, अभेदपरवाक्यत्वात् । सोऽयमित्यादिवद्, इति ।

अथवा समानाधिकरणवाक्य सर्वमेव स्वपदस्मारितविशेषणाविशिष्ट-प्रमाजनकमिति युक्तम् । तथाहि, समानाधिकरणवाक्य तावदेकार्थपरमित्यविगीतम् । तस्य विशिष्टाविशिष्टविषयत्वे पर विप्रतिप[त्तिः] । तत्र यदि विशिष्टमभिदधन्ति पदानि विशिष्टाभेदमभिदध्यु, विशेषणसाङ्कर्यप्रसङ्गः, तदसाङ्कर्येण विशिष्टैक्यप्रतिपादनानुपपत्ते । अपिच स्वव्याप्त्या विशेष्यव्यवच्छेदक विशेषण नाम । व्याप्तिश्च तस्य स्वेतरविशेषणसमावेशविरोधिसम्बन्धविशेषः । ईदृशश्च विशेषणभावः प्रात्ययिको न वास्तव., विशेषणत्वाभिमताना सौगन्ध्यसौन्दर्यादीनामेकस्मिन्निन्दीवरे समावेशात् । अथवा वस्तुकृतोऽपि, भिद्यमानधर्माणा स्ववृत्त्यवच्छेदभिन्नाधिकरणवृत्तित्वाद्, इहेदानीं स्पन्द इति स्ववृत्त्यवच्छिन्नभिन्नदेशकालाश्रयस्पन्दादिवत् । तथाच खण्डो मुण्ड. शितशृङ्गो गौरित्यादाविव सुगन्धि सुन्दरमिन्दीवरमित्यादावपि विशिष्टबुद्धिस्वरसावगतविशेष्यभेदस्य प्रत्यक्षोपनीतस्वरूपाभेदोत्कटावभासतिरस्कृततया वाक्यादेव विशिष्टाभेदबुद्धिरिति विभ्रम एव । अथवा समानाधिकरणपदैर्वाक्यवृत्त्या वस्तुस्वरूपमात्राभेदे वाक्यार्थेऽवगम्यमाने पदोपनीतविशेषणान्वयस्याबाधेन पदवाक्यवृत्तिभ्यामध्यक्षवद् युगपदेव[1] वाक्यावगते स्वरूपाभेदे प्राप्तप्राप्तव्यस्यातिक्रान्तावालोचनन्यायेन वा पदोपस्थापितमेव वैशिष्ट्यमनुसन्धीयत इति वाक्याद् विशिष्टाभेदबुद्धिरिति विभ्रम । प्रत्यक्षागोचरे तु ब्रह्मणि विशेषणभेदायत्तो विशिष्टभेदो न शक्यवार. । पदोपनीतविशेषणान्वयस्य वाक्यार्थस्वरूपाभेदाधिगतिबाध्यतया च न कथञ्चिदपि विशिष्टाभेदो वाक्यादधिगन्तु शक्यते । तस्मादिन्दीवरादावभेदव्युत्पन्नसमानविभक्तिसमभिव्याहारबलेनापोदितविशेषणभावस्य सौगन्ध्यादेरुपलक्षणत्वापत्त्या तदाश्रयस्वरूपैकत्वमात्रं वाक्येन बोध्यते । समानाधिकरण विशेषणमिति व्यवहारस्तु पदेनैव व्यावर्तकतया तदेकवित्तिवेद्यत्वनिबन्धनः । जटाभिस्तापस इत्यादौ व्यधिकरणस्य जटादेस्ताटस्थ्येन तापसवित्तिवेद्यत्वादुपलक्षणत्वव्यवहारः ।

---

१ 'व वा वा' ख पाठ

तदत्र सत्य[illegible] व्युत्पादि तत्तद्द्वारेण तदभिज्ञा[illegible] [illegible]धरम् । न चैव मति धात-
त्वसामानाधिकरण्यलक्षणविरोधोऽपि तस्य क्वचिद्विषयपर्यवसानोपपत्तेरिति ।

मैवम् । न तावत् प्रकृष्टप्रकाशादिवाक्यं चन्द्रस्वरूपावधारणपरमखण्डार्थं भवितुमर्हति, लक्षणवाक्यस्य जिज्ञासानिवृत्तिप्रयोजनकत्वात् । तत्र लक्ष्ये ज्ञातेऽज्ञाते वा जिज्ञासायोगात् । अनवधारणात्मकमपि जिज्ञासामूलं लक्ष्यज्ञानं धर्मिस्वरूपांशे निश्चय एवेति वाक्यस्य तन्मात्रविषयत्वायोगात् । किंविषयं तर्हि वाक्यम् । यद्विषया जिज्ञासा, सा किंविषया । क्वचिद्व्यक्तिविशेषे शब्दविशेषवाच्यत्वविषया, यथा कीदृशो गवय इत्यादौ । क्वचित् प्रवृत्तिनिमित्तासाधारणधर्मगोचरा, यथा कीदृशो घट इत्यादौ । क्वचित्तु [illegible] यथा कोऽसौ [illegible]त्रादि-
त्यादाविति गृहाण । तत्रैव प्रकृष्टप्रकाशादिवाक्यं चन्द्रपदवाच्यत्वं बुबोधयिषितं, चन्द्रस्वरूपस्य तदेकवित्तिवेद्यप्रकाशसंस्थानविशेषव्यङ्ग्यचन्द्रत्वजातेश्च चन्द्रव्यावृत्तेश्च प्रत्यक्षत्वात् दोषाभावे प्रत्यक्षस्य सामान्यविशेषोभयरूपावगाहित्वात् । अनुमानादौ हि न वस्तुस्वरूपविशेषो भासते, सामान्योपाधौ व्याप्त्याद्यवधारणात् । अत एव परोक्षे व्यावृत्त्यादिविषयेऽपि प्रश्नोत्तरे भवतः । ननु चन्द्रश्चन्द्रपदवाच्य इति प्रागेवाप्तोपदेशादधिजग्मुषः किंविषयः प्रश्नः स्यादिति चेत् । न खलु चन्द्रत्ववांश्चन्द्रः स चन्द्रपदवाच्य इत्यधिज(ग्मे[illegible]-
ग्मुष)श्चन्द्रत्वदर्शने सति तदुपसंहारासमर्थस्याप्यर्थ पिपृच्छिषितमवशिष्यते । तथापि चन्द्रपदवाच्यत्वे तद्व्यक्तिविशेषनिरूपितसम्बन्धापरिज्ञानाद् जिज्ञासा न विरुध्यते । तद्विषयं च प्रकृष्टादिवाक्यं नाखण्डार्थं, समभिव्याहृतचन्द्रपदस्मारितचन्द्रपदवाच्यत्वसंसर्गबोधनात् । अस्तु वा वस्तुस्वरूपमात्रजिज्ञासा बोध्यस्य । [illegible] तु तन्मूलप्रश्नाविकल्पविषयेणोत्तरेण निवर्तनीया । अन्यथा कश्चन्द्र इति प्रश्ने चन्द्रश्चन्द्र इत्येतावतैव तन्निवृत्तिप्रसङ्गात् । अतोऽप्रतीतविशेषविशिष्टव्यक्तौ जिज्ञासानिवृत्तिप्रयोजकधर्मान्तरसंसृष्टमनया वाक्येन बोधनीयमिति नाखण्डार्थता । न खलु पर्वतादौ वह्निसत्त्वमेव जिज्ञासितस्यापि

यावद्रूपमाश्रयैकान्तमसत्त्वमग्नेरपोद्यते ।
अनुक्तत्वमविशिष्टं धूमोऽस्तीत्यग्निबोधकम् ॥

अपि च [illegible] इति [illegible]
गोसादृश्यविशिष्टपिण्डं तदेकवित्तिवेद्यजातिविशेषं चोपलभमानस्यापि गव-

यशब्दवाच्यत्वे तन्निरूपितरूपविशेषज्ञानमजायमानं गोसदृशो गवय इति वाक्यार्थज्ञस्य जायत इत्यविवादम् । ननश्च गवयशब्दवाच्यस्य गोसादृश्यैकार्थसम्बन्धो बोध्यते तेनेत्यवगन्तव्यम् । अन्यस्य तत्र वाच्यत्वमबन्धबोधहेतोरानिरूपणात् । तथेहापि प्रकाशविशेषैकार्थवृत्तिना चन्द्रशब्दवाच्यत्वस्य व्यक्तिविशेषनियमावगमाय बोध्यताम् । अपिच उद्देश्यविधानरूपे वाक्ये विधेयवैशिष्ट्यस्यावश्यबोधनीयत्वेन नाखण्डार्थता युक्ता ॥

---

## समानाधिकरणवाक्यस्य विशिष्टार्थत्वशङ्का।

यत् पुनः समानाधिकरणवाक्यमात्रमखण्डार्थम्, अन्यथा विशिष्टार्थभेदेन सामानाधिकरण्यायोगादिति । तन्न । विशेषणानां समानविभक्तिकैकविशेष्योपादानमहिम्ना विशिष्टैकार्थवृत्तितया सामानाधिकरण्याविरोधात् । न हि भिन्नविशेषणद्वारैव पदानामभिन्नविशेष्यवृत्तितया सामानाधिकरण्यं विशेषणभेदेऽपि विरुध्यते, अभेदेनैव विशेष्यस्यानेकविशेषणवैशिष्ट्यावबोधनात् । न खलु समानाधिकरणपदैरन्यविशेषणविशिष्टेऽवबुद्धे वस्तुन्यन्यविशेषणवैशिष्ट्यमन्यविशिष्टाभेदो वा बोध्यते, येन विशेषणानामन्योन्यसमवायसङ्करौ प्रसज्येयाताम् । किन्तु स्मारितेषु पदार्थेषु यथादर्शनमनेकविशेषणान्वययोग्यैकवस्तुपरामर्शवतो युगपदेव नानाविशेषणविशिष्टमेकं वस्तु प्रतिपाद्यते । यथा द्वाभ्यामक्षिभ्यां जातिगुणाद्यनेकविशेषणविशिष्टम् । तदुक्तं —

"पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।
न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥"

इति । न चैवमुद्देश्यविधेयविभागानुपपत्तिः, परामर्शदशायामेकविशेषणवत्तया प्रसिद्धेऽज्ञातविशेषणान्तरान्वयिविशिष्टैकार्थबोधेन तदुपपत्तेः । न चोपस्थितविशिष्टे विशेषणान्तरान्वयस्य तद्विशेषणेऽपि प्रसङ्गः, अत एव 'सप्तदश प्राजापत्यान् पशूनालभते' इत्यत्र देवतासम्बन्धविशिष्टाविगतपश्वन्वयिन्याः सङ्ख्याया विशेषणदेवतासम्बन्धान्वये सति तन्मूलः कर्मभेदः 'पृथक्त्वनिवेशित्वात् सङ्ख्यया कर्मभेदः स्यात्'*(जै० २. २ २१) इति निरूपित इति वाच्यम् । ज्ञातविशेष्यमात्रान्वयितया विशेषणान्तराणां ज्ञातविशेषणान्वयाप्रसङ्गात् । न च सुगन्ध्या-

---

* 'पृथक्त्वनिवेशात् सङ्ख्यया कर्मभेदः स्यात्' इति मुद्रितजैमिनिसूत्रपाठः ।

दिवाक्येऽपि विशेषणभेदापादितविशिष्टभेदावभासः प्रत्यक्षोपहृतविशेष्याभेदावभासेन तिरस्क्रियते, ब्रह्मणि तु सत्यादिपदाना विशिष्टवृत्तित्वे भिन्नार्थत्व प्रसज्यत एवापवादकाभावादिति वाच्यम् । खण्डमुण्डादिवाक्य एव सुगन्ध्यादिवाक्यवत् समानविभक्तिकधर्मिपदैकत्वप्राप्तविशिष्टाभेदस्य प्रत्यक्षापोद्यत्वोपपत्तेः, ब्रह्मणि तदभावे च विशिष्टाभेदबोधनाविरोधात् । विशिष्टभेदाभेदयोरुभयोरपि प्रत्यक्षानुमतत्वाद् धर्मिपदैक्ये समानविभक्तौ च वाक्यस्य विशिष्टाभेदव्युत्पत्तेः प्रत्यक्षमूलायाः खण्डादिदृष्टान्तमात्रेण बाधायोगात् । खण्डादौ च विशिष्टभेदस्य विशेषणविरोधमूलत्वात् । न च भिन्नाधिकरणत्वमात्रमेव विशेषणानां विरोध', नीलत्वोत्पलत्वादीनामपि कम्बलकुमुदादौ भिन्नाधिकरणानां विरोधापत्तेः । किन्तु स्वाश्रयसजातीये परस्परपरिहारानियमः, यथा गोजातीये खण्डत्वादीनां, यथा वा पशुजातीये गोत्वाश्वत्वादीनाम् । न चेदृशो विरोधो ब्रह्मणि सत्यत्वादीनामुपलब्धचरः । तेन नीलमुत्पलमित्यादाविव 'सत्य ज्ञानम्' इत्यादावपि व्युत्पत्तिमूला विशिष्टाभेदप्रतीतिर्मुक्तसशयमूरीकरणीया । अन्यथा, एकविभक्तिसमभिव्याहारलभ्यैक्यस्थेम्ने विशेषणान्वयस्येव प्रातिपदिकावगतविशेषणान्वयस्थितये तदैक्यस्यैव त्याग किमिति नापद्येत । प्रत्यक्षमूलव्युत्पत्त्या तु नोभयस्यापि त्यागो युज्यते । अपिच 'नियतात्मा महावीर्यः' इत्यादीना श्रीरामप्रशंसार्थतया विवक्षितविशेषणान्वयानामेवैकार्थवृत्तित्वमवश्य वाच्यम् । अन्यथा तस्यैकस्य प्रशंसासंभवात् । इयदेव हि विशेषणानां विशेषणत्व, यद्विशेष्यस्य स्वविरोधिविशेषणान्तरसंबन्धस्य स्वासबन्धस्य वा व्यावृत्तिबुद्धिप्रयोजनकत्वम् । न तु स्वव्याप्त्या स्वेतरसकलविशेषणान्तरव्यावर्तकतापि, गौरवात् । यदि 'रथन्तरसामा सोम. स्याद्' इत्यादिषु रथन्तरादिना तदितरसकलविशेषव्यावृत्त्या सामान्तरयुक्तज्योतिष्टोमात् कर्मान्तरत्वप्रसङ्गेन विशेष्यव्यापित्वस्याप्रवेशनीयत्वाच्च । अपिच 'अरुणया पिङ्गाक्ष्यैकहायन्या क्रीणाति' इत्यादौ विशेषणभेदाद् विशिष्टक्रयभेदे वाक्यभेदप्रसङ्गः । खलकपोतन्यायेन युगपद्विशेषणानामेकविशेष्यान्वयबोधादवाक्यभेद इति चेद् , अन्यत्रापि तथैव भविष्यति, पृथग्विशेष्योपादानस्य समत्वात् ॥

---

१. 'गमित' क. पाठ..

## विशेषणभेदस्य विशिष्टभेदाप्रयोजकत्वशङ्का ।

ननु शब्दान्तरादिविशेषणभेदाद् विशेष्यकर्मभेदो व्यवस्थापितोऽध्वरतन्त्रे । न । पृथगुपनतविधिशब्दस्वरसत एवापूर्वार्थबुद्धिभेदे सति 'यजति', 'जुहोति', 'समिधो यजति', 'तनूनपात यजति', 'तिस्र आहुतीर्जुहोति', 'सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्', 'अथैष ज्योतिरथैष विश्वज्योति.' इत्यादिषु न विशेषणभेदाधीनैव कर्मभेदस्थितिः किन्तु, तत्र तत्र निराकाङ्क्षतया तत्तद्बुद्धिपर्यवसाने सति विशेषणान्तरसबन्धितया विशेष्यविपरिवृत्त्यभावाधीना । यथा यजतीति यागोपरक्ता भावना निराकाङ्क्षमवबुद्धा शब्दान्तरोपादाने निरुद्धविपरिवृत्तिर्न होमसंबन्धितयावगन्तु शक्या ।

"उत्पत्त्यैकानुरक्ता हि नान्येनाप्यनुरज्यते ।"

इत्यतो होमोपरक्ता सान्या बुध्यत इति कर्मभेद. । एवमभ्यासोऽपि पुन. श्रुतिरूपस्वानर्थक्यापत्ते. सन्निधिप्राप्त प्रत्यभिज्ञान निरुन्धन् विधिस्वरसावगतकर्मभेदनिमित्तमुच्यते । बहुत्वसख्यापि पृथक्त्वैकार्थसमवायितया ज्ञाता सती कर्मभेदमाक्षिपति जातिरिव व्यक्तिम् । आमिक्षा च न वैश्वदेवे विशेषणमियेव वाजिनयागभेदनिमित्तम् । किन्तु, आमिक्षावाजिनयोर्यागनिष्पत्त्यैककार्यनिवेशितया प्रथममेकतरसम्बन्धावगतिनिराकाङ्क्षे यागे न वाक्यान्तरगनगुणान्तरसम्बन्धबोधावकाश इत्येव कर्मभेदः । अत एव 'अग्निहोत्र जुहोति' इति निर्गुणोत्पत्तिकस्य कर्मणो गुणाकाङ्क्षाया 'दध्ना जुहोति', 'पयसा जुहोति' इत्यादिनानागुणससर्गावगमेऽपि न कर्मभेदसिद्धि । परन्तु, ते कार्यैकत्वे परस्परनिरपेक्षावगताः प्रयोगभेदेन व्यवतिष्ठन्ते । सज्ञा पुनः स्वय बोधकशरीरानुप्रवेशिन्यपि सज्ञिपरिच्छेदेन तद्विशेषणतयापि भवन्ती न स्वतो विशेषणत्वसामर्थ्यादेव ज्योतिरादिसज्ञिभेदप्रयोजिका, घटकलशपिककोकिलादिपर्यायाणामपि बहुलमुपलम्भात् । किन्तु सत्या गतौ 'अन्यायश्चानेकशब्दत्वम्' (जै० १. ३. २६) इत्यौत्सर्गिक्यानेकशब्दस्यैकार्थसमावेशानुपपत्त्यैव । एवञ्च कर्मणोऽन्यस्य वा विरोधिविशेषणसबन्धाधीनभेदत्वे सर्वत्र समानेऽपि तत्तद्विरोधप्रकारस्यैव प्रतिपादनाय न्यायभेदा व्युत्पाद्यन्त इति ।

तदेवं प्रकृष्टादिवाक्यवत् सुगन्ध्यादिवाक्यवच्च समाहृतानन्दाद्यनेकविशेषणं सत्यादिवाक्यमपि विरोधाभावेन स्वार्थसत्यत्वज्ञानत्वाद्यनेकविशेषणवि-

शिष्टब्रह्मैकार्थपरत्वान्नाखण्डार्थम् । सोऽयमित्यादेरपि कालभेदसमाहितविरोधतद्देनद्देशकालविशेषणभेदवैशिष्ट्यावबोधित्वे वस्त्वभेदासिद्धेस्तद्वैशिष्ट्यप्रतिपादनेनैव तदभेदं बोधयतो नाखण्डार्थत्वसंभव, प्रसिद्धस्यापि विशेषणस्य सामानाधिकरण्यादिप्रकारेण बोध्यत्वोपपत्ते । तथा च तत्त्वमस्यादिवाक्यस्य यथावगतोपस्थितविरुद्धविशेषणकपदार्थस्वरूपाभेदपरत्वासंभवेन स्वप्रधानत्वायोगात् 'सदेव सोम्येदम्' इत्यादिकारणवाक्यैकवाक्यतया चेतनो देवदत्त इत्यादिवद् 'ऐतदात्म्यमिदं सर्वम्' इत्युक्तसामान्यविशेषोपसंहारेण कथञ्चिद् विशिष्टाभेदपरत्वं परिशिष्यते, प्रकारान्तरासम्भवेन यथोचितलक्षणोपगमाविरोधात् । अन्यथा, चिद्रूपस्वरूपमात्रस्य नित्यापरोक्षतया वाक्यवैयर्थ्यप्रसङ्गात् । एतेन लक्षणमनुमानं च निरस्तम्, असम्भवात् साध्याप्रसिद्धेश्च, अतीतकालत्वाद् दृष्टान्तासिद्धेश्च । प्रयोगश्च — सत्यादिवाक्यं तत्त्वमादिवाक्यं वा विशिष्टार्थप्रमितिपरं स्वपदस्मारितार्थसंसर्गप्रमितिपरं वा, प्रमाणशब्दत्वाज् ज्योतिष्टोमादिवाक्यवत् । समानाधिकरणवाक्यत्वे सति यदि समभिव्याहृतैकप्रातिपदिकार्थमात्रनिष्ठं स्यात्, पर्यायतया सह प्रयोगायोगेन समानाधिकरणवाक्यमेव न स्याद् घटकलशादिवत् । पिको नाम कोकिल इत्यादिपर्यायसहप्रयोगेषु व्युत्पाद्यपदवाच्यत्ववैशिष्ट्यस्याधिकतयैकप्रातिपदिकार्थमात्रनिष्ठत्वाभावान्न मूलशैथिल्यम् । यदि स्वपदस्मारितार्थविशेषासंसृष्टवस्तुस्वरूपमात्रपरं स्यात्, तदवगतिमूलकसंशयविरोधिमुक्तिहेतुज्ञानानुकूलविचारविषयो न स्यादिति विपक्षे बाधकस्तर्कः । तस्माद् वेदान्तिनामखण्डार्थसिद्धौ मनोरथमात्रमिति ॥

---

### अनवधारणज्ञानस्य धर्म्यंशेऽनिश्चयत्वम् ।

अत्रोच्यते—अस्ति तावत् संशयाविरोधिज्ञानमनवधारणात्मकमित्युक्तम् । नच तदपि धर्मिस्वरूपांशे निश्चय एव, असद्विशेषसभेदावभासविरोधिस्वभावस्यैव स्वरूपशब्दार्थत्वेन तस्मिन् भासमाने संशयाद्ययोगात् । उक्तं हि तान्त्रिकेणापि — प्रतियोगितयाभिमतार्थान्तरैक्यधीविरोधि वा स्वरूपमिति । दोषवशेन चासद्विशेषसभेदावभासिनि ज्ञाने तादृशस्वरूपावभासायोगात् । अन्यथा स्थाणुत्वसंसृष्टधर्मिनिर्भासित्वस्य संशयाविशेषेण निश्चयस्य संशयाविरोधित्वप्रसङ्गात् । कोट्यन्तराभावावभासित्वस्यापि तुल्यत्वात् । एककोटि-

संसर्गानियमविषयत्वस्यापीतरकोटिव्यावृत्त्या तत्कोटिविषयत्वातिरिक्तस्यानिरूपणात् । अभावनियमस्यापि तदभावरूपकोट्यन्तरव्यावृत्त्या तत्संबन्धरूपस्य तावन्मात्रत्वात् । स्थाणुरेवेति निश्चयेऽपि पुरुषत्वाभावद्वयाप्रतीतेः । एककोटिविषयत्वनियमो विरोधाविषयत्वं वा निश्चये विशेष इति चेत्, तद् यदि स्वसामग्रीविरहादेव कोट्यन्तराविषयत्वं, निश्चयस्य संशयविरोधिता हीयेत । अथ निश्चयेन प्रतिबन्धादित्युच्येत, तन्न । तस्य ह्येककोटिविषयत्वानियमस्तत्प्रतिबन्धसामर्थ्यम् । ततश्च कोट्यन्तराविषयत्वेन कोट्यन्तराविषयत्वमित्यात्माश्रयात् । न च विशेषदर्शनजन्यत्वेन विरोधिता, अव्यापकत्वात् । व्यञ्जकसमवधानमात्रादेव भवतो निश्चयस्यापि संशयविरोधित्वात् । विशेषादर्शनस्य संशयहेतुत्वेन तदभावे विशेषदर्शने संशयसामग्रीवैकल्येन स्वसामग्र्यैव निश्चयोत्पत्तौ विशेषदर्शनहेतुत्वे गौरवाच्च ॥

---

## निश्चयत्वनिरुक्तिः ।

निश्चयत्वं च तादृशस्वरूपावभासित्वातिरिक्तं दुर्वचम् । तद्धि न तावज्जातिः, धर्मिज्ञाननिश्चयत्वमते संशयत्वैकाधिकरण्येन व्याप्यवृत्तित्वायोगात् । तदनिश्चयत्वमतेऽपि भ्रान्तिज्ञाने विशेषांशे निश्चयत्वसत्त्वेनाव्याप्यवृत्तित्वापातात् । अव्याप्यवृत्तेरपि जातित्वोपगमेऽपि तस्या निरुक्तस्वरूपावभासित्वव्यङ्ग्यतया तस्यावश्यकत्वात् । भ्रान्तिज्ञाने विशेषांशेऽप्यसद्विशेषान्तरसंसर्गावभासविरोधिस्वरूपावगाहित्वस्यानपायात् । संशयान्यत्वं तदिति चेद्, न, तदवच्छेदकतयापि तस्यैवोरीकार्यत्वात् । यत्तु संशयधर्मितावच्छेदकावच्छिन्नधर्मिताकसंशयविरुद्धप्रकारकज्ञानत्वं निश्चयत्वमिति । तन्न, अयमसौ वा चन्द्र इति संशयविरोधिचन्द्रत्वधर्मिनिश्चयाव्याप्तेः[1] । न च संशयोऽपि चन्द्रे तदेतत्त्वप्रकारो न धर्मिभेदविषय इति वाच्यं, तस्य निर्हेतुमानसत्वकल्पनाप्रसङ्गात् । ज्ञानरूपभेदस्य विशेष्यांशहेतुतन्त्रत्वात्, चन्द्रांशे च ज्ञानस्य तदा मानसत्वात् । संशयनिवृत्त्यनुकूलस्वरूपत्वं च ज्ञानस्य निरुक्तस्वरूपावभासित्वं निर्वाह्य नियामकान्तराभावात् ।

---

१ 'स्वभावाव' ख. पाठ

ननु चासद्विशेषसभेदावभासविरोधित्व न वस्तुन एव, संशयादिलोपप्रसङ्गात् । तज्ज्ञानस्य तद्विरोधित्वे न हेतुविशेषो निबन्धन, स्वत प्रामाण्योपगमात् । न विषयविशेष., लक्षणवाक्यजन्यावधारणस्याखण्डार्थत्वोपगमेन प्रश्नमूलज्ञानानाधिकविषयत्वादिति चेत् ।

उच्यते । दोषोपाहितहेतोरसद्विशेषसभेदावभासी सशयो विभ्रमो वेति, दोषाभावे तत एव हेतोरुदीयमानस्य विषयहेत्वविशेषेऽप्यसद्विशेषसभेदानवगाहनेन वस्तुस्वरूपावभासित्वस्यैव तद्विरोधित्वप्रयोजकत्वात् । चाकचक्यादेरपि रजतस्वरूपावभाससामग्रीतया तदपेक्ष्यादोषत्वात् । तज्जन्यज्ञानस्यापि स्वविषयेऽसद्विशेषसभेदानवगाहितया तत्संशयादिविरोधित्वोपपत्तेश्च । अनवधारण तु दोषानुषक्तहेतुजन्यतया नासद्विशेषणससर्गावभासविरोधि । किन्त्वारोप्यविशेषोपस्थितिकाले जायमान तत् ससर्गावभास्येव जायते । अन्यथा तदुपस्थितिमपेक्ष्य सशयादिबीजतां भजते । अत एव धर्मिज्ञान सशयादिहेतुरिति केषाञ्चिद् विभ्रमः । अत एव चारोप्यविषयान्निष्कृष्यमाण स्वविषयांशेन निश्चयानधिकविषयमिति न तल्लक्षणानुपपत्तिरपि । तथा च प्राक् प्रकृष्टादिवाक्यश्रवणादनवधारणात्मकमेव चन्द्रस्वरूपानवभासि चन्द्रदर्शनं बोध्यस्य जिज्ञासामूलं, तत्स्वरूपावधारणे चायमसौ वा चन्द्र इत्यादितादात्म्यसंशयायोगात् । सा च जिज्ञासा संशयो वा तुल्यविषयत्वेऽपि तत्स्वरूपावभासिनिश्चयनिवर्तनीय. । नच चन्द्रश्चन्द्र इति प्रतिवचने तन्निश्चय इति प्रकृष्टप्रकाशादिवाक्य तत्स्वरूपप्रमितिपरमेव, प्रागेव चन्द्रे चन्द्रत्वादेरधिगतत्वात् । ननूक्त व्यक्तिविशेषसबन्ध. तेषामज्ञात इति प्रकृष्टप्रकाशसामानाधिकरण्यबोधनेन तद्वैशिष्ट्यप्रमितिपर तदिति । दुरुक्त तत् । यदि हि स व्यक्तिविशेषो विज्ञात स्यात्, चन्द्रत्वादेस्तद्वैशिष्ट्यमपि ज्ञातमेवेति लक्षणवाक्यानर्थक्यम् । स चेदविज्ञातो लक्षणवाक्येन विजिज्ञापयिषित., आवश्यकत्वाद् वाक्यस्य तत्परत्वमेवास्तु । तस्मिन् विज्ञाते तद्वैशिष्ट्यस्य स्वत एवार्थादवगमोपपत्तेः । न चाविज्ञातवस्तुनि वाक्यस्य स्वार्थवैशिष्ट्यावबोधनं शक्य, येन तस्मिन्नवबुद्धे चन्द्रस्वरूपमेवार्थाद् विज्ञायत इति वैपरीत्य शङ्क्येत । ननु चाविदिताधिकरणस्वरूपविशेषमेव प्रकृष्टप्रकाशैकाधिकरण्येन चन्द्रपदवाच्यत्वादौ बोधिते यश्चन्द्रपदवाच्यः स चन्द्र इति जानतश्चन्द्रव्यक्तिविशेषावधारणमर्थाद्

भवतीति चेद्, एव हि वह्न्यवगमोपायतया धूमोऽस्तीतिवत् चन्द्रस्वरूपावगतिद्वारतया प्रकृष्टप्रकाशवैशिष्ट्यं प्रतिपाद्यत इति फलिनोऽर्थः। तस्यैवाबुद्धस्य बुभुत्सितत्वात्। तत्र सामान्यावगतवाक्योपात्तचन्द्रप्रातिपदिकार्थ एव प्रकृष्टप्रकाशवैशिष्ट्यमुपायत्वेन बोध्यता, किमश्रुतचन्द्रपदवाच्यत्वपर्यन्तधावनेन। एवमपि वाक्यस्य वैशिष्ट्यावबोधित्वेन सिद्धं नः समीहितमिति चेद्। भ्रान्तोऽसि। न ह्यन्यतो ज्ञात वाक्येन बोधनीयम्। न चाविज्ञातधर्मिवैशिष्ट्यं किमपि लक्षणं नाम भवति। लक्ष्यलक्षणयोरुभयोरप्यविदितत्वाविशेषे हि तमसेव तमो न किञ्चिदपि ज्ञायेत। न चैव लक्षणस्यान्यत सिद्धत्वे वाक्यानर्थक्य, स्वरूपेणान्यतः सिद्धावपि तस्य लक्षणत्वेन यत्नान्तरवेद्यत्वात्।

यद्येव लक्षणभावेन तद्वैशिष्ट्यप्रतिपादनपरमेव लक्षणवाक्यमस्तु। तत एव सामर्थ्याल्लक्ष्यस्वरूपप्रत्ययोपपत्तौ कि तत्र शब्दव्यापारकल्पनया। न खलु वह्न्युपायतया धूमवैशिष्ट्यबोधिनि धूमवाक्ये वह्निविषयव्यापारकल्पना, तत एव सामर्थ्यादग्निप्रत्ययोपपत्तेरिति चेद्, न। वैषम्यात्। तत्र यदि विदितव्याप्ति प्रति धूमोपदेशः प्रागेवोपायताज्ञानादज्ञातधूमवैशिष्ट्यमेव वक्तव्यं ततो वह्नि भोत्स्यत इति, न शब्दस्य तत्र व्यापारो गौरवात्, विरम्यव्यापारप्रसङ्गाच्च। अविदितव्याप्ति प्रति च धूमवैशिष्ट्यमात्रस्यानुपायतया धूमवाक्यस्योपेयपरत्वायोगः। लक्षणवाक्ये तु ज्ञातवैशिष्ट्यस्यैव धर्मस्योपेयसमभिव्याहारसामर्थ्येनोपायतावगमस्य सर्वजनीनत्वादुपेयमात्रप्रमितिमात्रमाद्रियते। तत्र च तात्पर्यनिर्वाहिका वृत्तिर्लक्षणैव। एवञ्च गङ्गायां घोष इत्यादौ स्वशब्देन तीरोपादानसभवे लाक्षणिकपदोपादानसाफल्यायादूरत्वपावनत्वादिरूपान्तरविशिष्टतीरलक्षणायामपीक्षुक्षीरादिरसविशेषस्येव शब्दान्तरोपादानासंभवे तत्प्रतिपत्त्येकप्रयोजनतया लक्षणवाक्यस्य रूपान्तरवैशिष्ट्यपरत्वाभावादखण्डार्थत्वमिति विशेषः। ननु च शब्दस्य तत्परत्वेऽपि शब्दोपात्तैरन्यैश्च विशेषैर्विशिष्ट एव चन्द्रः प्रतीयत इति चेत्, काम प्रतीयतां बाधकाभावात्। चोरोऽय स्थाणुरित्यादावारोप्यरूपेण वस्तुलक्षणायां च शब्दोपात्तचोरत्वादेः प्रत्यक्षावगततर्जनताडनोद्यमनादेश्च लक्ष्यस्वरूपाधिगतिबाधिततया वैशिष्ट्याप्रतीतेः॥

## उपमानफलम् ।

गोसदृशो गवय इत्यादावप्युक्तरीत्या व्यक्तिविशेषस्वरूपप्रत्ययोपायतयैव गोसादृश्यादिकमुपदिश्यते । तस्मिंस्तु व्यक्तिविशेषे तेनैव सादृश्यवैशिष्ट्येन प्रत्यभिज्ञायमाने सत्र संज्ञिसम्बन्धावगतिः पर्यवस्यतीति सोपमानफलमभिधीयते । न चैवमतिदेशवाक्येनैव व्यक्तिविशेषावगमाद्दार्थे संज्ञासंज्ञिसम्बन्धप्रतीतिपर्यवसाने तद्वैशिष्ट्यप्रत्यभिज्ञानर्थक्यादुपमानोच्छेद इति वाच्यम् । शाब्दसादृश्यादिसामान्यस्यानवस्थितविशेषतया व्यक्तिविशेषानिश्चयेन तदपर्यवसानात् । दीर्घग्रीवः प्रलम्बोष्ठो विकृताकृतिः कठिनकण्टकाशी पशुः क्रमेलक इत्यादिधर्ममात्रनिर्देशस्य तु लक्षणनिर्देशतुल्यतया न तत्र किञ्चिदुपमानकार्यमस्ति । अतीन्द्रियेऽपि धर्मादौ धर्ममात्रनिर्देशेन व्यावृत्तावगते वाच्यत्वप्रतीतिपर्यवसानसम्भवात् । एतेन सोऽयमित्यादि तदेतद्देशादिवैशिष्ट्यरूपोपायोपादानेनोपेयाभेदमात्रपरतयाखण्डार्थं व्याख्यातम् ॥

---

## समानाधिकरणवाक्यस्य विशिष्टार्थत्वभङ्गः ।

यत् पुनरुद्दिश्यविधानरूपे वाक्ये वैशिष्ट्यमवश्यबोधनीयमिति । तन्न, प्रतीतार्थोपादानेनाप्रतीतार्थपरतया वाक्यस्य गामानय, 'ज्योतिष्टोमेन यजेत' इत्यादेर्वैशिष्ट्यपरत्वेऽपि लक्षणवाक्यस्य सोऽयमित्यादेश्चोक्तविधयाखण्डार्थतात्पर्याविरोधात् । एवं सुगन्ध्यादिवाक्येऽप्यविदितवस्त्वभेदपरतैव युक्ता, आर्थिकविशेषणसामानाधिकरण्यपरत्वायोगात् । 'अर्थादर्थो न चोदनार्थ' इति न्यायात् । प्रशंसा चार्थिकविशेषणसामानाधिकरण्यादेवोपपन्ना ।

अन्यथा विशिष्टभेदापत्त्या विशेषणसाङ्कर्यादिप्रसङ्गेन च सामानाधिकरण्यानुपपत्तेः । न च स्मारितेषु पदार्थेषु न्यायेनानेकविशेषणान्वययोग्यैकवस्तुपरामर्शे सति पदैरेवाक्षिभ्यामिवानेकविशेषणविशिष्टमेकं वस्तु प्रत्याय्यत इति युक्तं, वैषम्यात् । अक्षिवृत्तेरविशेषेण विशेष्येऽपि स्वतन्त्रतया युगपदेव सन्निकृष्टयावद्विशिष्टाभिन्नवस्त्ववभासित्वोपपत्तेः । अपि च कीदृशोऽयं न्यायो यत्सम्पादितव्यक्तिकं पदजातं विशिष्टैकार्थबोधकं व्युत्पाद्यते । समानविभक्तिनिर्देशे सति धर्मिपदैकत्वमिति चेत् । ननु भिन्नविभक्तिनिर्देशेऽपि विशिष्टैकार्थबोधनमिष्यते । अरुणादिष्वर्थभेदे वाक्यभेदप्रसङ्गाद् विशिष्टार्थानामभेदबो-

धकत्वमुक्तन्यायोपपाद्यमिति चेत् । तर्हि स एव विशेषणसाङ्कर्यादिदोषः । न चोक्तेनैव न्यायेन यावत्पदोपस्थापितविशेषणान्वययोग्यस्य विशेषणेभ्यो निष्कर्षे सत्यभिन्ने तत्र यावदुपस्थितविशेषणवैशिष्ट्यबोधनमेव विशिष्टाभेदबोधनमिति नोक्तदोष इति वाच्यम् । एवं सति निष्कृष्टविशेषणमात्रवृत्तितया पदानामेकार्थवृत्तित्वाभावेन सामानाधिकरण्याभावप्रसङ्गात् । नहि गन्धो रसो मकरन्द इति सामानाधिकरण्यं घटते । विशिष्टवृत्तिस्तु पदानां भिन्नार्थविषयैवेति न सामानाधिकरण्यम् । यदि च समानविभक्तिसमभिव्याहारेण संभूयकरणे पदानामशेषविशेषनिष्कृष्टवस्तुस्वरूपमात्रवृत्तितया सामानाधिकरण्यमुच्येत, तदेव तर्हि पदानामखण्डार्थत्वमित्यस्मदिष्टसिद्धिः । एतेन विशिष्टाभेदस्य प्रत्यक्षानुमतत्वादेकविभक्तिनिर्देशे वाक्यस्य विशिष्टाभेदव्युत्पत्तिः प्रत्यक्षमूलेति निरस्तम् । प्रत्यक्षस्य विशेष्यवस्तुस्वरूपेऽपि स्वतन्त्रवृत्तितया अभेदनिर्भासिन्येव तत्र युगपदनेकविशेषणवैशिष्ट्यावबोधसम्भवात् । पदानां च प्रतिस्वमेव विशिष्टवृत्तितया एकविशेष्येऽनेकविशेषणवैशिष्ट्यबोधयौगपद्यानुपपत्तेः । अत एव नारुणादितुल्यत्वम् । क्रयस्येव विशेष्यस्य पृथगुपादानेऽपि सुगन्ध्यादिपदानां विशेष्यपर्यन्ततयैकैकशो विशिष्टार्थोपस्थितिपर्यवसानेन निराकाङ्क्षत्वात् । अन्यथा पदेन विशेषणान्वयाप्रतीतौ वाक्येनैव तदन्वये विशिष्टाभेदे च प्रतिपाद्ये वाक्यभेदप्रसङ्गात्, वाक्यस्यैवानेकार्थपरत्वगौरवाच्च । 'सा वैश्वदेव्यामिक्षे'त्यादाविव विशेषणपदोपात्तस्यैव विशेष्यस्य पदान्तरेण समर्पणेऽपि विशिष्टप्रतीतिनिराकाङ्क्षत्वाविघातात् । अन्यथा तत्रापि वाक्यविनियोगाविशेषादामिक्षावाजिनयोरग्निहोत्र इव दधिपय प्रभृतीनामेकत्र समावेशसम्भवात् तत्तद्द्रव्यकर्मभेदो न स्यात् ।

यत्तु खण्डादौ विशेषणविरोधमूलो विशिष्टभेदो न विशेषणभेदमूल इति, तत्तथैव । इयदेव तु विशेषणानां पदसामानाधिकरण्यविरोधिनिमित्तं यदवह परस्परविरोधित्वं यदन्यान्यविशेषणोपरक्तविशेष्यबुद्धिपर्यवसानम्, लाघवात् । अन्यथा, एकभावनायामेव यागदानहोमवैशिष्ट्यबोधसम्भवे शब्दान्तराधिकरणभङ्गप्रसङ्गात् । नहि तत्र तत्तदुपरक्तभावनाबुद्धिपर्यवसानादन्यो विरोधः सम्भाव्यते । एवं च समानविभक्तिसमभिव्याहारलभ्यमैक्यमिव, प्रातिपदिकावगतविशेषणान्वयोऽपि न त्यागमर्हतीति व्युत्पत्तिसाम्यादिति निरस्तम् । विशिष्टभेदे सति वाक्यार्थाभेदबोधानुपपत्तेः । यदि 'रथन्तरसामा सोम-

* 'शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्' (जै० २ २ १) ।

स्यादि'त्यादौ च प्रसक्तोऽपि विशिष्टभेद 'सोमेन यजेते'ति पृथगुत्पन्ने सामान्तरविधिसामर्थ्येन कर्मभेदकल्पनागौरवसनाथेनापोद्यते । अत एव खण्डो मुण्ड इत्यादावभेदव्युत्पन्नसमानविभक्तिसमभिव्याहारलभ्य पदोपस्थितविशिष्टाभेद एव भेदग्राहिप्रमाणेनापोद्यत इति किं न स्यादिति निरस्तम् । भिन्नविशेषणोपरक्तबुद्धिपर्यवसाने यागदानादिभावनाभेदस्य सिद्धत्वेन विशिष्टाभेदव्युत्पत्तेर्विभ्रममूलत्वात् । श्यामो युवा देवदत्त इत्यादौ हि वस्तुस्वरूपमात्रे बोधिते तत्रोपस्थितविशेषणवैशिष्ट्यमुपनीयते । प्राशुभावात्तु विशिष्टाभेदबुद्धिरिति विभ्रम इत्युक्तम् ॥

---

## विशेषणानां विशेष्यपर्यन्ततानिरासः ।

अथ कथं सुरभि नीलमुत्पलमित्यादौ विशेषणपदाना विशेष्यपर्यन्तता, येन विशिष्टप्रतीतिनिरपेक्षतया पदसामानाधिकरण्य भज्येत । नहि गुणपदाना गुणिन्यपि शक्ति, कल्पनागौरवात् । न च गुणगुणिशक्त्येकत्व, शक्यतावच्छेदकभेदे तद्भेदावश्यभावात्, पुष्पवदादिष्वपि शक्तिभेदोपगमात् ।

"एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ"

इति[1] च नाक्षादिवद् व्यवच्छिद्यैकैकविवक्षया तत्पद प्रयोक्तव्य, किन्तूभयविवक्षयैवेति नियनार्थम् । न पुनरेकमेवोभयत्राभिधान शक्यमाश्रयितुम् । अक्षादिशब्देष्वपि शक्यतावच्छेदकभेदातिरिक्तनियामकाभावेन विभीतकेन्द्रियादिषु शक्त्यैकत्वप्रसङ्गाल्लाघवात । न च नीलत्वजातिविशेषणैव गुण इव नीलपद द्रव्येऽपि वृत्तिमर्हति, तत्र तदभावात् । न वा गुणविशेषेणैव द्रव्य इव गुणेऽपि, गुणे गुणाभावात् । न च साक्षात्परम्परौदासीन्येन नीलत्वैकप्रवृत्तिनिमित्ततया गुणगुणिनोर्गुणपदवृत्त्येकत्वमविरुद्धमिति साम्प्रतं, पारम्पर्यनियमसीमाभावेनातिप्रसङ्गात् । उभयसम्बन्धिथितिसमयावच्छिन्नापृथग्भावनियमेन साक्षात्परम्परया प्रवृत्तिनिमित्तवत्त्वस्यापि रूपरूपवतो रूपशब्दशक्त्येकत्वप्रसङ्गेनाप्रयोजकत्वात् । रूपवति रूपशब्दप्रयोगाभावेन तदेकशक्त्युपगमायोगात्, शुक्ल पट इत्यादौ गुणवैशिष्ट्यानुभवविरोधाच्च ।

---

१ 'तिना' क पाठ .

गुणवचनेभ्यो मतुपो लुगनुशासनमपि शुक्लादिशब्दाना गुणिनि शुक्लत्वादिनिमित्तशक्त्यभाव दर्शयति । अन्यथा गुण इव गुणिन्यपि गुणवैशिष्ट्यस्याप्रत्यायकतया गोमानित्यादाविव मतुबप्राप्तेस्तल्लोपानुशासनवैयर्थ्यात् । अत एव 'जनपदे लुप्' (४. २ ८१) इति प्राचा लोपानुशासनमशिष्यमित्यनुवृत्त्या 'लुब्योगाप्रख्यानात्' (१ २. ५४) इति दूषित पाणिनिना । न हि पञ्चाला इति तन्नामकक्षेत्रनिवासो जनपद इति योगार्थ. प्रख्यायत इति । ननु च

"गुणे शुक्लादय पुंसि गुणिलिङ्गास्तु तद्वति"

इत्यभिधानात् शुक्लो गुण शुक्ल पट इति लौकिकप्रयोगाच्च जातिविशेषगुणोपाधिभेदभिन्नवृत्तिकशब्दद्वैधे सति पुण्यो नर पुण्यवान् पापः पापवानित्यादाविव कदापि शुक्लवान् पट इति प्रयोगो मा भूदिति तल्लुगनुशासनमर्थवद् भविष्यतीति चेत् । व्यामोहमात्रमेतत् । यदि हि द्रव्ये गुणनिमित्ता शक्तिरूपा शुक्लादिशब्दवृत्ति', तर्हि गुणे जातिवैशिष्ट्यबोधन इव तच्छब्दस्य द्रव्ये गुणवैशिष्ट्यबोधनेऽपि मतुपोऽनपेक्ष्यतया तदप्राप्ते । पुण्यादिशब्दस्य च धर्मादिशक्तस्य तद्वति सर्वथा मत्वर्थीयान्तत्वात् साधुत्वादिसाधारणशक्तावपि मत्वन्तस्यार्थभेदविवक्षाव्यपाश्रयत्वात् । अथ शुक्लगुणस्वरूपवैशिष्ट्यबोधनाय मतुबनपेक्षत्वेऽपि दण्डीत्यादाविव जातिविशेषविशिष्टवैशिष्ट्यबोधनाय तदपेक्षा स्यादिति चेत् । तत् किं गुणवृत्तिरेव शुक्लशब्दो जातिविशेषविशिष्ट तमभिधाय तद्विशिष्ट द्रव्यमप्यभिदधातु, तथा सति विरम्यव्यापारप्रसङ्ग । यदि पुनरेक एव शब्दो युगपदक्षिवदनेकवृत्त्या जातिविशिष्ट गुण गुणविशिष्ट च द्रव्यमभिदधीत, तदा कुतो मतुप्प्राप्ति । गुणगुणिशब्दान्यत्वे चैकैकेन विशिष्टवैशिष्ट्यबोधासम्भवेन शब्दद्वयैकरूपापत्त्योभयविषयेण शब्दान्तरेण व्यवहितस्य युगपदेव पदद्वयशक्यविशिष्टवैशिष्ट्यबोधनस्योपेयतया तत्रापि मतुबप्राप्तेः । धेनुपदशक्तिनियामकतयाधानकर्मणि गोत्वादेरिव शुक्लादिपदशक्तिनियामकतया गुणिनि शुक्लत्वादिजातिविशेषस्य तज्जन्यज्ञानप्रकारताया †आनर्थक्यतदङ्गन्यायेन गुणद्वारकतया विशिष्टवैशिष्ट्यज्ञानपर्यवसानोपपत्तेश्च मतुप्प्रा-

† 'आनर्थक्यात् तदङ्गेषु' (जै० ३ १ १८) ।

सिकल्पनायोगात् । गुणनिमित्तगुणिशक्तावपि गुणवचनेभ्यो मतुपो लुगनुशासनानुपपत्ति । अथ गुणवृत्तेरेव शब्दस्य गुणिपर्यन्तनीतौ मतुप प्राप्तेर्लुगनुशिष्येत, लक्षणानियमाय तदनुशिष्टिरित्यापद्येत । न च तद् युक्तम्, सुरभि नीलमुत्पलमित्यादौ विशेष्यस्य स्वपदोपादानेना लक्षणीयत्वात् ।

हन्तैव कथमिव सामानाधिकरण्य पदानामेकार्थवृत्त्यभावादिति चेत् । शृणु तावत् । समानविभक्तिसमभिव्याहारोपाधिकं हि सामानाधिकरण्यम् । तथाच व्युत्पत्तिमहिम्ना पदैरेव तुल्यरूपेण विशेष्यैकक्रियान्वययोग्याकारविशेषणोपस्थितविशेषणैराकाङ्क्षाविशेषादेकपदोपस्थापितसङ्ख्याकारकादिभिरिव युगपदन्वितैकार्थबोधनादमीषामनेकप्रवृत्तिनिमित्तानामेकार्थवृत्तिः सामानाधिकरण्यमुच्यते । व्यधिकरणवाक्ये तु गामानय दण्डेनेत्यादौ न तुल्यरूपेण विशेष्यैकक्रियान्वययोग्याकारेण पदार्थान्वय इत्येष विशेषः ।

"पीनवक्षा विशालाक्षो लक्ष्मीवान् लक्ष्मणाग्रजः"

इत्यादियौगिकविशेषणाना विशिष्टवृत्तित्वेऽपि स्वरूपनिष्कर्षे सत्युक्तरीत्या विशिष्टैकार्थबोधकत्व न विरुध्यते । एतेन 'सत्य ज्ञानमनन्त ब्रह्म', 'विज्ञानमानन्द', 'सर्वकर्मा सर्वगन्ध', 'सत्यकाम. सत्यसङ्कल्प' इत्यादि विशिष्टाभेदपर व्याख्यातम् । ननु चैव पदमात्रस्याप्रयोज्यतया सर्वत्रैव विशेष्योपादानादुक्तविधया सामानाधिकरण्यनिर्वाहाद् मतुब्लुगनुशासनवैयर्थ्यं प्राप्तम् । न । शोणो धावतीत्यादावनुपात्तविशेष्ये द्रव्ये लक्षणानियमार्थत्वोपपत्ते, शौक्ल्य पटस्य शुक्लिमेत्यादिप्रयोगनियमप्रयोजकत्वाच्च । भावार्थप्रत्ययाना प्रकृत्यर्थसबन्धिस्वार्थवृत्ति(त्व)व्युत्पत्ते, प्रकृते शुक्लपदस्य द्रव्यपर्यन्तत्वाभावे प्रत्ययार्थभावस्य गुणरूपस्य तत्सम्बन्धिताप्रतीतिविरोधाद्, अन्यशक्तस्यान्यविषयत्वे च लक्षणा, मतुबादिप्राप्तौ लुगनुशासनेन लक्षणानियमनात् ।

यत्तु लाक्षणिकपदाद् भावप्रत्ययो न लक्ष्यस्य भावमाख्यातुमर्हति, गङ्गात्वमित्यादौ तीरभावाद्यनभिधानादिति । तन्न । सौगन्ध्यमित्यादौ बहुव्रीहावन्यपदार्थस्य लक्ष्यस्यैव भावाभिधानात् । द्विरेफत्वमित्यादौ च व्यवहितस्यापि प्रातिपदिकवृत्त्यवच्छेदकभावस्याभिधानाच्च । न च भृङ्गत्व एव तस्य

लक्षणा,

"कान्ते ! कर्णान्तविश्रान्ते दधाते ते कनीनिके ।
कर्णावतंसकलिकामधुलोलद्विरेफताम्" ॥

इत्यादावनन्वयप्रसङ्गात् । गङ्गादौ तु लक्षणा साम्प्रतिकीति ततो भावप्रत्ययो न लक्ष्यस्य भावमभिधत्त इत्यविरोध । शुक्लादिशब्दास्तु लौकिकेन तदभेदाभिमानेन द्रव्ये निरूढलक्षणा एवेति शुक्लिमेत्यादिगुणपरप्रयोगाव्यभिचार । अत एव 'समासकृत्तद्धितेषु सम्बन्धाभिधान भावप्रत्ययेनान्यत्र रूढ्यभिन्नरूपाव्यभिचरितसम्बन्धेभ्य ' इत्यत्र कैयटेनोक्तम्—'अभिन्नरूपा. शुक्लादयो मतुब्लुकि विज्ञायमाने यद्यपि तद्धितान्ता , तथापि तेभ्यो भावप्रत्ययो गुण एव भवति, न तु सम्बन्धे । गुणगुणिनोर्जातितद्वतोरिव सोऽयमिति सम्बन्धेन लौकिकनिरूढेन भेदसम्बन्धस्यासभावाद् , गुणवचनेभ्यो लुग्विधानद्वारेणाभेदेनैव गुणगुणिनोरभिधान, न तु भेद कृत्वा मत्वर्थीयोत्पत्तिरित्याख्यायते' इति । तन्नू रुकस्तु शुक्ल पट इत्यादावन्वयांशे व्यधिकरणवाक्यतौल्येऽपि गुणपदस्य द्रव्यपर्यन्तत्वविश्रान्ति. पदार्थाभदवाक्यार्थविभ्रमश्च, शुक्लो गुण इत्यादावप्यन्यतरपदस्य जातिमात्रपरतया तथैवान्वयबोध , अन्यथा सामान्यविशेषविशिष्टभेदस्यापरिहार्यत्वात् । अत एव न्यायिभिरपि सामान्यविशेषावच्छिन्नप्रतियोगिकाभावौ द्विरुपगङ्गीक्रियेते । अत एव च 'अरुणया पिङ्गाक्ष्ये'त्यादौ गुणस्यैव क्रयसम्बन्धे सति कारकविभक्तिरर्थवतीत्यरुणाधिकरणसिद्धान्त उपपद्यते । अरुणपदस्य द्रव्यपर्यन्तत्वे कारकविभक्तिवैयर्थ्ये विहितविध्यनुपपत्तिश्चेति ।

अत्रोच्यते — स्तम्भावन्नीलो गुणो नीलमुत्पलमिति तुल्यौ प्रयोगप्रत्ययौ । तत्र नियमहेत्वभावादुभयत्रैव शक्तिर्युक्ता । अन्यथा गवादिशब्दा अप्याकृतिमात्र एव पर्यवस्येयु ॥

---

जातिशक्तिनिरासः ।

सत्यम , एवमेव व्यक्तिराक्षेपादुपतिष्ठत इति चेत् । क' पुनरस्य जातिशब्दाद् गवादिशब्दस्य विशेष , येन गवादिशब्द एव व्यक्तिराक्षिप्यते न जातिशब्दे । पारतन्त्र्य तु जातिशब्देनापि प्रतीयत एव, तादृश्येव तद्‌यु-

त्पत्ते । अन्यथा व्यक्तिवैलक्षण्यप्रत्ययायोगात् । विशेषणान्तरान्वयासामर्थ्यादिरूप पारतन्त्र्यमन्यदेव गवादिशब्देन जातौ प्रत्याय्यत इति चेत् । तदपि कुतस्तेनैव प्रत्याय्यते, न जातिशब्देन । न च तन्निर्निबन्धन स्वभावादेवेति युक्त, गोत्वान्वितव्यक्तिनर्यन्तत्वस्य निबन्धनत्वोपपत्ते । अपिचैव त्वतलादिकमनपेक्ष्य गोत्वादिप्रत्यये गवादिशब्दा प्रयुज्येरन्, जातिमात्रनिरूढत्वात् । नहि व्यक्तौ निरूढि, तदाक्षेपोपगमात् । मुख्येऽपि प्रचुरप्रयोगावश्यम्भावाच्च । नखलु सार्षपे स्नेहे तैलशब्दो निरूढ इति तिलतैले न प्रयुज्यते । सर्वप्रयोगानुवृत्त्या तु व्यक्तौ मुख्यैव वृत्तिरित्यवसीयते । आकृतावपि मुख्यवृत्तित्वे स एव हेतु । सर्वेषु गोशब्दप्रत्ययेषु गौरनुवर्तत इत्याकृतावपि गोशब्द प्रयुज्यत इति चेत् । सत्य प्रयुज्यते लक्षणया, शक्तिपृथक्त्वे गौरवात् । प्रचुरतरप्रयोगस्तु विशेष, येनाकृतिविशिष्टव्यक्तौ शक्तिरवस्थाप्यते । नन्वेव स एव सर्वो गोशब्दप्रयोगो गोत्वस्यापि । तथाच क्वचित् त्वतलादिप्रयोगस्य स्फुटप्रतीत्यर्थत्वादयं गौरय गौरित्यनुगतालम्बनव्यवहारमात्रे तदपेक्षाभावदर्शनात् । क्वचिदन्वयाप्रतियोगित्वस्य गामानयेत्यादौ जातेरिव गौरनुवर्तत इत्यादौ व्यक्तेरपि तुल्यत्वाज्जातिशक्तिरेव युक्ता, लाघवादावश्यकत्वाच्चेति चेत् । उच्यते — अस्ति तावन्नियता गवादिव्यवहारे व्यक्तिप्रतीतिर्विश्वजनीना । अन्यथा गौर्नित्येति प्रयोगे न विप्रतिपद्येत, स्वतन्त्रोपस्थितगोत्वे नित्यत्वान्वयाविरोधात् । नच समभिव्याहृतान्वयविरोधाय व्यक्तिराक्षिप्यते, येन गोत्व परतन्त्रमुपतिष्ठेत । ततः पदशक्तिर्व्यक्तिप्रधाना भावमुपसर्जनतयालम्बत इति तस्य स्वतन्त्रोपस्थितये लक्षणा वा कल्प्यते त्वतलादिर्वा प्रयुज्यते, तदतिरिक्तस्फुटप्रतीत्यनिरूपणात् । अनुगतव्यवहारेऽप्याम्रेडनार्थवत्त्वाय जात्यनुगमितपृथग्व्यक्तिप्रत्ययोपगमात् । गौरनुवर्तत इत्यादावपि विना लक्षणा जातेः स्वतन्त्रोपस्थितिरशक्या कल्पयितुमन्यत्राभावात् । अतः शक्यतावच्छेदकतयावश्यकेऽपि भावे गवादिशक्तिपर्यवसानायोगाद् विशिष्टशक्तिगौरवमप्याश्रयणीय, शब्दार्थसामान्योपाधिक शक्त्येकत्वमिति विशिष्टभेदेऽपि शक्त्यानन्त्याप्रसङ्गात् । अपिच गोशब्दशक्तौ गोत्वमात्रनिष्ठाया तत्प्रतिसम्बन्धितया केवलं व्यक्तिराक्षिप्येत । ततश्च विवक्षितप्रतिसम्बन्ध्याक्षिप्तोपसर्जनप्रतिसम्बन्ध्यन्तरवृत्तिना पदेन सामानाधिकरण्य

न स्यात्, खण्डो गौः सुगन्ध्युत्पलमिति(वत्) पिता पुत्र इति सामानाधिकरण्याभावात्। गोपदस्य गोव्यक्तौ वृत्तिर्विशेष इति चेत्। तर्हि गुणप्रधानभावेन गोत्वान्वितायामेव सा, गोपदाद् व्यक्तिमात्रासम्प्रत्ययात्। तथाच प्राप्ता तावद् विशिष्टवृत्ति। लक्षणा शक्तिर्वेत्येव तु विप्रतिपत्ति। तत्र च प्रयोगप्राचुर्याद्, जात्यन्वितव्यक्तिप्रत्ययनैयत्याद्, लाक्षणिकेषु तथा नियमाभावाद्, जातिशब्दवैलक्षण्याच्च भावविशिष्टे शक्तिरेव गवादिपदवृत्तिरिति ब्रूम॥

---

## विशिष्टशक्त्यनुमानम्।

प्रयोगश्च — गवादिपदं स्वार्थविशिष्टशक्तिमद्, नियमेन विशेषणभावापन्नस्वार्थोपश्लिष्टविशेष्यस्मारकत्वाद्, दण्ड्यादिशब्दवत्। नियतप्रयोगमूलप्रत्ययस्य शक्तिनिबन्धनत्वादखण्डदण्डिशब्दस्य दण्डविशिष्टे शक्तिरेवेति न दृष्टान्तासिद्धि। †कुकुदादिशब्दो वा दृष्टान्तयितव्य। एकप्रवृत्तिनिमित्तोपाधिना च प्रवर्तमाना शक्तिरेकैव सती यैवमाकृतिः सा गौरिति प्रकारेण गृह्यमाणा नानन्त्येन यावद्व्यक्त्यनुपस्थित्या दुष्यतीति न बाध। द्विरेफशब्दो भ्रमरत्वविशिष्टव्यक्तिस्मारक, न च तत्र शक्त इति व्यभिचार इति चेद्, न। तद्वाचकभ्रमरपदस्मृत्युपक्षीणवृत्तेस्तदस्मारकत्वात्। तदुपस्थितभ्रमरपदगतभृङ्गस्मारकत्व तु व्युत्पन्नैस्तत्रोपचर्यते योद्धृगतजयादिरिव राजनि, तत्प्रयुक्तत्वात्। तामेनामेके लक्षितलक्षणामाचक्षते। शक्त्यैव द्विरेफपदाभ्यां द्वौ रेफावुपस्थाप्येते, तत्समासवृत्त्या च भ्रमरपद लक्षणया, ततस्तत्सबन्धी भृङ्ग इति। अत्र मते भृङ्गत्वस्य स्वार्थत्वाभावादेव न व्यभिचार, तस्य स्वशक्यपरत्वात्। अव्युत्पन्नानां तु तत्र शक्तिभ्रम एव। अत एव बहुव्रीहौ समासवृत्त्यैव पदत्वाद् द्वित्वविशिष्टरेफस्य स्वशक्यत्वाभावाद् द्विरेफविशिष्टभ्रमरपदस्मारकतया न व्यभिचारः। एवं सति शक्यसबन्धात्मा लक्षणेह न प्राप्नोति। न, समासोपाधौ रेफस्य द्वित्ववैशिष्ट्ये बोध्यमाने रेफपदेनैव स्वार्थसबन्धिभ्रमरपदलक्षणोपगमात्। एवमपि तत्र च कुन्ता धावन्तीत्यादौ च लाक्षणिके मा भूद् व्यभिचार इति नियमेनेत्युक्तम्। विपक्षे चाय गौरिय गौर्गावौ गाव इति लिङ्गवचनभेदानुपपत्ति।

---

† अलङ्कृतकन्यासत्कारदानविधायिवाची कुकुदशब्दोऽखण्डोऽवयवार्थानिर्भासाद् दण्डिविलक्षण.।

तदेव सति गवादिशब्दवदयुतसिद्धविशेषणपदानामविभज्यवृत्तित्वे सति सर्वेषामेव विशिष्टशक्तिसिद्धि, तुल्यन्यायत्वात्। तत्रैव सति नीलपदस्य गुणिनि गुणे च नीलो नीलत्वमिति प्रवृत्तिनिमित्तभेदादक्षादिवदनेकार्थशक्तिरगत्या कल्प्यते। न च नीलत्वोपाधिनैवोभयत्रैकैव शक्तिरतिप्रसङ्गाद्, गुणवैशिष्ट्याबोधप्रसङ्गाच्चेत्युक्तम्। न च जातिसङ्ख्यादिधर्ममात्र प्रत्ययशक्यम्। किन्तु तद्धर्मी। व्युत्पत्तिभेदादनुशासनाच्च। तथाच न प्रकृतिप्रत्ययतुल्य पदसामानाधिकरण्य युक्तम्। अपि च शोणो धावतीत्यादौ गुणविशिष्टद्रव्यानुपस्थितावनन्वयापत्तिः। न चात एव तत्र लक्षणेति वाच्य, गुणिशक्त्यैव गुणे लक्षणेति वैपरीत्यस्यापि सुवचत्वात्। एवं सति यावकस्य शोणत्व शोणिमा पटस्य शौक्ल्यं शुक्लिमा, उत्पलस्य नैल्य नीलिमेत्यादिभावप्रत्ययान्ता गुणपराः श्लिष्यन्ते। 'तस्य भाव —' (५ १ ११९) इत्यधिकृत्य हि वर्णदृढादिभ्य ष्यञिमनिचौ विहितौ। भवत्यस्मादभिधान शब्दस्येति तत्प्रवृत्तिनिमित्त भावमाचक्षते। तथाच सूत्रे दृढशब्दसाहचर्येण वर्णशब्दस्य वर्णविशेषनिमित्तप्रयुक्तद्रव्यवृत्तिशुक्लादिशब्दपरत्वावगमाद्, अत एव भावशब्दितशब्दवृत्तिनिमित्तोपाधिकत्वात् प्रत्ययस्य लाक्षणिकपदादपि भावार्थप्रत्ययोपपत्तिरिति निरस्तम्। द्विरेफवसौगन्ध्यादिव्यवहारश्च शक्तिभ्रममूल एव विसंवादाभावात् सन्तायते। न च सत्या गतौ नैल्यमित्यादिषु चैषा गतिराश्रयितव्या, औत्सर्गि(का[1]क)भ्रममूलत्वोपपत्तेः। अत एवान्यत्र गङ्गात्वमित्यादौ न तीरत्वमुपतिष्ठते।

ननु चैव मतुपो लुङ् नानुशिष्येत, गुणवचनानां शक्त्यैव विशिष्टार्थत्वे मतुबप्राप्तिरिति चेत्। तर्हि कुन्ताः प्रविशन्तीत्यादाविव लक्षणयैव विशिष्टार्थत्वाल्लाक्षणिकत्वेऽपि स न शिष्येत। अथ लक्षणानियमः प्रयोजनमित्युच्येत, शक्तिनियम एव किं न स्यात्। शक्त्यैव गुणवैशिष्ट्यबोधन रूपवानित्यादाविव मतुप्प्रयोगोऽसाधुरित्येवपरत्वोपपत्तेः, व्याकरणस्य च रेखावर्णन्यायेन विकल्पितोपायैरेवोपेयबोधनपरत्वेन वास्तवतत्प्राप्त्यनपेक्षत्वात्। यथाहुः—

---

१. 'व या' ख पाठ.

"असत्ये वर्त्मनि स्थित्वा ततः सत्यं प्रपद्यते"

इति । नहि लौकिको गुणगुणिनोरभेदाभिमानः । वैशिष्ट्यानुभवात्, पटस्य शुक्ल इति व्यतिरेकव्यवहाराच्च । कैयटस्यापि यदभेदेनैव गुणगुणिनोरभिधानमिति न तत्र सर्वथैव सबन्धाभिधानमित्येवपरम्, अनुभवविरोधात् । किन्तु रूपवानित्यादाविव न तादात्म्यविरोधिसंबन्धाभिधानमिति । तदिदमुक्तं—'भेदसंबन्धस्यासंभावादि'ति. 'न तु भेदं कृत्वा मत्वर्थीयोत्पत्तिरित्याख्यायते' इति च । तदिदं गुणशब्दस्य गुणिशक्तावपि तुल्यम् । एवञ्च

"गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति"

इति नामकोशवचनमप्यनुगम्यते । इतरथा असमासलाक्षणिकपदस्य गङ्गायां घोषः, वह्निशिखा माणवक इत्यादाविव नीलः पटो नीलमुत्पलमित्यादिलिङ्गभेदानुपपत्तेः । अजहत्स्वार्थलक्षणायां समानाधिकरणविशेष्योपादानेऽपि 'कान्तिसार इदं रत्नमि'त्यादौ विशिष्टकान्तिमद्रत्नपरतया लाक्षणिकस्य विशेष्यलिङ्गत्वादर्शनात् । ननु मतुबन्तस्य विशेष्यलिङ्गत्वात् तल्लुगनुशासनं लाक्षणिकस्यैव तल्लिङ्गतासिद्धिफलं, 'तथाच लिङ्गसिद्धिः' इति वार्तिकदर्शनादिति चेद् । न । गुणशब्दस्योभयशक्तिकल्पनागौरवमूलकलाक्षणिकत्वमतुबन्तत्वान्यतरप्राप्तौ 'अव्यतिरेकात् सिद्धम्' इति द्रव्ये शुक्लः पट इति प्रयोगमूलशक्त्युपपत्तेर्मतुबप्राप्त्या लुगनुशासनासंभवशङ्कायां, 'दृष्टो व्यतिरेकः' इति पटस्य शुक्ल इति प्रयोगमूलगुणशक्त्या कथञ्चित् तत्प्राप्तिमुपपादयता कात्यायनेन मतुब्लुका गुणिशक्तेरेव नियमनाल्लाक्षणिकत्वनिबन्धनलिङ्गविशेषासिद्धिरेव सति न भवतीत्येवमर्थकतया लिङ्गसिद्धिवार्तिकोपपत्तेः ॥

---

## लाक्षणिकस्य विशेष्यनिघ्नत्वाभावः ।

ननु चैवम्

"अशोकैररुणा वन्या पाटलैः पाटलं वनम् ।
आरामः श्यामलोऽतस्यां तैरेनी भासते मही ॥"

इत्यादिषु लिङ्गभेदो न स्याद्, अरुणादेर्वन्यादौ प्रवृत्तिनिमित्तगुणाभावेन लाक्षणिकत्वात् । प्रवृत्तिनिमित्तपरम्परासंबन्धस्यातिप्रसङ्गेन शक्त्यनियामकत्वादित्युक्तम् ।

यत्तु तदाश्रयताग्राहकप्रमाणे सति तन्निमित्ता शब्दप्रवृत्तिर्न विरुध्यते। न च रूपत्वादेर्द्रव्याश्रयताग्राहकं प्रमाणमस्ति, येन तन्निमित्ता द्रव्ये रूपादिशब्दवृत्तिः शङ्क्येत। अस्ति चात्र नीलमुत्पलं, 'प्रासादैर्धवला पुरी'त्यादि नीलत्वादेर्द्रव्याश्रयतायामबाधितं प्रमाणम्। 'बर्हिषि हवीष्यासादयती'त्यवगतबर्हिराश्रयत्वविषयानिव वेद्याश्रयतया 'वेद्यां हवीष्यासादयती'ति। तन्न। गौराङ्गराजशब्दाद्गौरीति प्रयोगोपपत्तेः। परम्पराघटकानवभासे सति तदाश्रयताधीविषय एव तत्तच्छब्दवृत्तिरिति चेत्, कथं तर्हि 'प्रासादैर्धवला पुरी'त्यादौ परम्पराघटकभाने सति गुणगुणिभ्यामन्यत्र धवलशब्दवृत्तिः स्यात्। घटकभानाभावे वा साक्षात् तदाश्रयतावगाहिनोऽप्रमाणत्वाद्, अयो लोहितमुष्णा हस्तनीत्यादिप्रत्ययतुल्यत्वात्। वेद्याश्च प्रामाणिकबर्हिरनुप्रवेशेनैव हविराश्रयतावगमाद्, अन्यथा तस्य भ्रमत्वात्। आश्रयत्वसामान्यावगमो न भ्रम इति चेत्। न। अनुपसंहृतविशेषसामान्यप्रत्ययापर्यवसानात्। इतरथा 'औदुम्बरी स्पृष्ट्वोद्गायती'त्यादावपि सामान्यतः स्पर्शकर्मत्वप्रतीतेः पारम्पर्येऽपि संभवादौदुम्बरीसर्ववेष्टनस्मृतिरप्रमाणं न स्यात्। तदिह संबन्धप्रतीतिः प्रबलप्रमाणोपनीतघटकोपसंहारेण परम्परासंबन्धविषयैव प्रमाणं, नान्यथेति गौराङ्गराजशब्दातुल्यत्वाद्, वस्त्रादेर्नारुणादिशब्दशक्यतेत्यशक्यविषयदृष्टव्यभिचारो लिङ्गभेदो न शक्तिनियमहेतुः। नन्वजन्तास्तद्वति नगरादौ धवलादिशब्दा वर्त्स्यन्ति। यथायोगं च लिङ्गभेदः। अर्शआदिगणगृहीतवर्णशब्दस्य प्रयोगवशेन शुक्लादिशब्दपरत्वादिति चेद्। न। गुणिन्यपि तथैव गुणशब्दवृत्तिसंभवे विशिष्टशक्तिकल्पनागौरवादिति केचित्। तदिदमयुक्तम्। गुणवचनेभ्यो लुगनुशासनस्य मत्वर्थीयमात्रविषयत्वात्। अन्यथा 'अत इनिठनौ' (५. २. ११५) इति नीली पटः नीलिनी वस्त्रा नीलिकमुत्पलमित्यादिसाधुत्वापत्तेः। न चाज्विधिरेव तद्बाधक इति वाच्यम्। मतुपोऽपि तेनैव बाधे लुग्विधिवैयर्थ्यात्। अपि च पाण्डु पुण्डरीकं बभ्रुः कपर्दः इत्यादावजप्रसङ्गाय लुग्विधेर्मत्वर्थीयमात्रविषयत्वेऽवश्यवाच्ये गुणिनि गुणवृत्तनीलादेरजप्राप्तिरेव। यदि च 'श्वेतमालभेते'त्यादौ चित्स्वरविशेषो दृष्टः, स तस्यैव द्रव्यस्य तत एव भेदकल्पनया निर्वाह्यः। तावतैव स्वरविशेषसिद्धिप्रयोजनस्य वर्णेष्वज्विधेर्लब्धविषयतया कृतार्थत्वात्। अथवा छन्दसि स्वरविशेषलाभाय सामान्यप्रवृत्तमत्व-

१. 'द' ख. पाठ.

र्थीयलुकं बाधित्वा अज्विधिः प्रवर्तताम्, न कश्चिद् दोष इति । मैवम् । एवमपि गुणमुक्तवन्तो गुणवचना इति ततो लुगनुशासनस्य मत्वर्थीयमात्रविषयस्य सार्वत्रिकत्वात्,

"पाण्डुरुपत्यका' पश्य लोध्रैरदलपुष्पितैः"

'तैरेनी भासते मही' इत्यादावच्प्रत्ययाभावेन लाक्षणिकत्वावश्यभावाच्च । तस्माद् नीलो गुणः नीलं रूपमिति प्रयोगदर्शनाद्, 'गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ती'त्यभियुक्तोक्तेश्च शुक्लः पटः शुक्लं वस्त्रमित्यादिलिङ्गभेदो लाक्षणिकत्वेऽप्युपपद्यत इति ।

उच्यते—'अशोकैररुणे'त्यादौ तत्तद्गुणवत्तोपचारेण तदेकावयवीकारेण वा वन्यादौ तत्तत्पदप्रयोगाल्लिङ्गभेदाविरोधः । उपचारश्चाहार्यबुद्धिः प्रतिमादाविव देवताबुद्धिर्न लक्षणा । शुक्त्यादौ रजतादिव्यवहारो न लाक्षणिकः । सत्या हि भेदबुद्धावन्यत्रान्यशब्दप्रयोगो लाक्षणिकः स्यात् । अलक्तेन रक्तः पट इत्यादाविव च गुणवतामशोकैरित्यादिभेदावमर्शेऽपि तद्वत्तारोपो भिन्नाकारतया न विहन्यते । एवं गौरोऽहमित्यादिव्यवहारा आत्मतत्त्वदृशामपि व्यवहारसमये लोकसामान्यानतिवर्तितया तदभेदबुद्धिमूला एव । ये पुनर्गौरोऽहमित्यादिप्रयोगान् गुणदेहजीवपरम्परया शक्त्यैवान्तर्यामिपर्यन्तास्तत्त्वदर्शनसमानविषयास्तदविरुद्धानास्थिषत, ते न्यायानुभवानारूढविषयवादिनो नास्माभिरुपालम्भनीयाः । यत्तु गुणवचनानामाश्रयतो लिङ्गं लाक्षणिकत्वेऽपीति । तन्न । नहि शुक्लिमाश्रयस्य पटादेः किञ्चिल्लिङ्गमस्ति । अथ संस्त्यानप्रसवावुपचयापचयपर्यायौ सत्त्वादयो गुणा वा जातिभेदा वा वस्तुषु क्वचिदुपदेशगम्याः क्वचित्[1] संस्थानव्यङ्ग्या लिङ्गमस्ति इति चेद् । न । एकत्रानेकलिङ्गसमावेशे दाराः कलत्रमित्यादिनियतलिङ्गत्वानुपपत्तेः, विवक्षाया अनियतत्वात् । न च लोकाश्रयोऽयं नियमः । विषय स्वभावं वानपेक्ष्य लोकमात्रेण वस्तुनियमासिद्धेः । शब्दस्वभावापेक्षायां च गुणवचनानामपि तथैव स्यात्, किमाश्रयतो लिङ्गप्रतिपत्त्या । विशेष्यशब्द आश्रयः, तल्लिङ्गता गुणवचनस्येति चेद् । न । शुक्लस्य गुणतेत्यादावभावात् । समानाधिकरणविशेष्यलिङ्गतेति चेद् । न । तदेका-

---

१. 'तत्स्था' ख पाठः

र्थवृत्त्यभावे सामानाधिकरण्यस्यैवायोगात्। लाक्षणिकत्वे च विशेष्यलिङ्गत्वायोगाद्, वह्निशिखा माणवक इत्यादिवद् गुणवचनेषु विशेषैकल्पनायोगाद्, गुणिशक्त्यैव गुणवचनानामाश्रयत्ववचनोपपत्तेः। न च ते ते शब्दभेदाः स्वभावादेवैकद्वित्रिलिङ्गा दृष्टा इत्येतावता शुक्लादिशब्देषु प्राप्तनियमहेतुरनादरणीयः। तेषु लिङ्गभेदस्य विशेष्यसमभिव्याहारनिबन्धनत्वात्। अपिच शुक्लादिशब्दलाक्षणिकत्वे 'प्रकृष्टे शुक्ले कलङ्कोऽमङ्गलमि'त्यादौ प्रकृष्टत्व लाक्षणिकविशेषण नोपादीयेत। न खलून्नताया गङ्गाया घोष इति तीरविशेषणमुपादीयते। शुक्लादौ वृत्तिनिरूढिर्विशेष इति चेत्. प्रयोगप्रत्ययाव्यभिचारे शक्तिरेवास्त्विति दिक्।

न चेवमपि नागृहीतविशेषणान्यायेन प्रथमोपस्थितेरावश्यकत्वाच्च विशेषण एव शक्तिरास्तामिति वाच्यम्। सर्वत्र शक्यतावच्छेदकोपरिचये शक्तेरेव दुर्ग्रहतया तदवच्छिन्ने सा ग्राह्येति विशिष्टशक्तेरेव सिद्धेः। शक्यतावच्छेदके धानकर्मत्वे स्थित एव गोत्वस्य धेनुपदशक्तिपरिचायकत्वात्। योऽयं शुक्लवासाः स देवदत्त इत्यादौ वासोवद् धेनुपदजन्यबुद्धौ नियमेन गोत्वप्रतिभासस्तु शक्यार्थनियतसहोपलम्भसंस्कारसाचिव्यादन्यथासिद्धो न तद्विशिष्टशक्यतामावहति। नचाविनिगम, धानकर्मत्वेऽवयवानुगमात्।

नचैवं सर्व एव शब्दा यथायथ प्रवृत्तिनिमित्तविशेषविशिष्टशक्ता एवेत्यरुणयेत्यादौ कारकविभक्तिवैयर्थ्यदोषः। तस्याः पिङ्गाक्ष्यादाविवानपेक्ष्यत्वात्। अथवा युगपदेव परस्परानपेक्षया सर्वेषामेव क्रयान्वये तत सामानाधिकरण्यालोचनया प्राप्ताप्राप्तविवेचनेन सर्वत्रैवाप्राप्तविशेषणसङ्क्रान्ता विभक्त्यर्थकारकता भविष्यति। गवा क्रीणातीति द्रव्यकारकताया प्राप्तत्वात् प्राप्तपर्युदासेनाप्राप्तांशे बहुशो विधिसङ्क्रमदर्शनात्। यथा 'दण्डी प्रैषानन्वाह' 'लोहितोष्णीषा ऋत्विज प्रचरन्ती'त्यादिषु। 'चतुरो मुष्टीन् निर्वपती'त्यत्र विभक्त्यर्थकारकस्यापि चतुर्शब्दाभिधेयसङ्ख्येयव्युदासेन तद्विशेषणचतुष्ट्वसङ्ख्यासङ्क्रमसम्प्रतिपत्तेश्च। न चैवमारुण्यस्य स्वातन्त्र्याभावेन प्रकृतगोद्रव्यपरिच्छेदकतयैव क्रयान्वयेऽपि कुतश्चिदुद्धृतस्य पिङ्गस्याक्ष्ण स्वातन्त्र्यसम्भवेन द्रव्यपरिच्छेदकता न स्यादिति वाच्यम्। बहुव्रीहितया गोशब्दसामानाधिकरण्येन

---

१ 'षविशेषक', २ 'कावच्छेदकाप' ख पाठ

तद्विशेषणस्यैव तस्योपादानात् । नचैवमरुणाधिकरणपूर्वपक्षासम्भवः, अरुणशब्दस्यापि द्रव्यवृत्तितया पिङ्गाक्ष्यादेरविशेषादिति शङ्क्यम् । गुणमात्रशक्तिसमर्थनेन तत्सम्भवात् ।

तस्मात् तद्विशिष्टवृत्तपदसमानाधिकरणवाक्यं सर्वमेव विशेषणमुखेन लक्षणया विशेष्यस्वरूपवृत्त्यैव सामानाधिकरण्यादखण्डार्थमेव । अन्यथा विशिष्टार्थभेदे पदानां भिन्नप्रवृत्तिनिमित्तानामेकार्थवृत्तित्वाभावेन सामानाधिकरण्यासंभवात् । न च सुगन्ध्यादिपदेन विशिष्टोपस्थितौ विशेष्यविशेषजिज्ञासेन्दीवरसमभिव्याहारे निवर्तते, तथेन्दीवरपदेनावगते विशेष्ये विधेयविशेषजिज्ञासा सुगन्ध्यादिसमभिव्याहारे निवर्तते, ततो विशेषद्वयसमावेशोपहारेणैवाभिन्नार्थवृत्त्या पदसामानाधिकरण्यमेषितव्यमिति वाच्यम् । पदोपस्थितार्थाभेदमनवबोध्यैकविशेषवति विशेषान्तरबोधनासम्भवात् । न च विशिष्टस्योपस्थितस्याभेदो बोधयितुं शक्यः । यद्यपि चेन्दीवरमिति सर्वविशेषसाधारणं विशेष्यमुपस्थापितं तद् गुणभूतविशेषणभेदेऽपि न भेत्तुमर्हति, तथापि पदैरेव भिन्नविशेषणव्यावृत्तबुद्धिपरिच्छिन्नतया तदानुकूल्येनौपाधिकभेदसहस्य विशेष्यस्य प्रधानस्यापि कांस्यभोजनन्यायेन भेदेनैव बोधौचित्याद् न विशिष्टाभेदवृत्त्या पदसामानाधिकरण्यसंभवः । न खलु कालाकाशदिशामेकत्वेऽपि तत्तदुपाधिपरिच्छिन्नोपस्थितानामेवाभेदो बुध्यते ।

यद्येवमन्याऽन्वितशक्तिमते गामुदज दण्डेनेत्यादावपि पदैरेवान्वितोपस्थितौ विशिष्टानामितरेतरान्वयानुपपत्तेरर्थभेदादेकवाक्यत्वं न स्यात् । नहि गामित्येव क्रियान्वितोपस्थिता गौः कर्मान्वितोपस्थितामुदजेति क्रियां विशेष्टुमर्हति, कर्मणि कर्मणः क्रियायां च क्रियाया विशेषणत्वप्रसङ्गात् । अथ नानैवान्यान्वितपदार्थोपस्थित्यनन्तरमाकाङ्क्षाद्यनुरोधेन योग्यलक्षणया युगपदेवैकस्य द्वयमिति न्यायेनानेकविशेषणविशिष्टैकार्थबोधित्वादवाक्यभेद इत्युच्येत, समानाधिकरणवाक्येऽपि यथास्व विशिष्टपदार्थोपस्थित्यनन्तरं समानविभक्तिसमभिव्याहाराद्यनुरोधेन निष्कृष्टविशेषणमात्रलक्षणया तथैवानेकविशेषणान्वितैकार्थबोधो भविष्यति । तदिदमुक्तं —

"न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम्"

इतीति चेद् । न । पृथगुपस्थितविशेष्याभेदं बोधयित्वा तत्र विशेषणवैशिष्ट्यबोधने पदानां विरम्यव्यापारप्रसङ्गात् । स्वपदोपात्तविशेष्य एव विशे-

षणवैशिष्ट्यमात्रबोधने च व्यधिकरणवाक्याविशेषात्। विशेष्यैकक्रियान्वययोग्यरूपावभासिविशेषणान्वितैकार्थबोधिता विशेष इति चेद्। न। न्यायतो निष्कृष्टविशेषणमात्रविमृष्टवृत्तिसुगन्ध्यादिपदानां गन्धो रसो मकरन्द इत्यादीनामिव गन्धादिविशेषणान्वितैकार्थबोधित्वस्यैवानुपपत्तेः।

अपिचैवं भिन्नार्थानामेकार्थवृत्तिः सामानाधिकरण्यमित्येवावक्ष्यद्, लाघवात्। उक्तविशेषेणैव व्यधिकरणवाक्यव्यावृत्तिसिद्धेः। भिन्नप्रवृत्तिनिमित्तानामिति तु[1] ब्रवीति। तेन ज्ञायते य एकोऽर्थो वाक्यबोध्यस्तत्र तेषां प्रवृत्तावेव भिन्नानि निमित्तानि, न तु वाक्यार्थान्वयिता तेषामिति। नह्येकैकपदस्य सामानाधिकरण्यमिदमुच्यते, येन भिन्नार्थानामेकार्थवृत्तिर्विरुध्येत। तथात्वे वा भिन्नप्रवृत्तिनिमित्तानामित्यसाङ्गत्यात्। न खल्वेकस्य पदस्यैकस्मिन्नर्थेऽनेकं प्रवृत्तिनिमित्तमस्ति। किन्तु परस्परापेक्षया समुदायेन, तत्र च व्यधिकरणानामिव समानाधिकरणानामपि भिन्नार्थानां स्वस्वार्थान्वितैकार्थवृत्तिर्न विरुध्यते। नन्वत एव व्यधिकरणपदेषु प्रसङ्गवारणाय भिन्नप्रवृत्तिनिमित्तानामित्युच्यते। तत्र हि न प्रवृत्तिनिमित्तमेव भिन्नं, किन्त्वर्थोऽपीति नातिप्रसङ्गः। एकार्थानामिति तु नोक्तं, पर्यायेष्वपि प्र[2]ङ्गादिति चेद्। न। समभिव्याहारोपाधिकं हि सामानाधिकरण्यं, बहुत्वोपादानात्। पर्यायाणां च सम्भूयवृत्त्यभावादेवानतिप्रसङ्गादेकार्थानामित्येव युक्तं वक्तुं, लाघवात्। न वरणभ्रमणेन गोपुरप्रवेशन्यायानुसरणम्। अथ विशिष्टभेदेन पदानां द्विरुगेकार्थवृत्तित्वमसम्भवीत्युच्येत, तर्हि भिन्नप्रवृत्तिनिमित्तानामित्युक्तेऽपि व्यधिकरणाविशेषः। समानाधिकरणेष्वपि स्वार्थैक्याधिक्यस्य विवक्षितुमशक्यत्वात्। यद्युच्येत — न भिन्नप्रवृत्तिनिमित्तानामिति वस्तुमद्भि[?]ण, किन्तु प्रवृत्तिनिमित्तान्वयेनैकार्थवृत्तिरिति, व्यधिकरणवाक्ये च तद्विशिष्टान्वयेनैकार्थवृत्तितेति विशेष इति। तन्न। स्ववृत्तिव्यावृत्तोपस्थितविशिष्ट्याभेदमनवबोध्य प्रवृत्तिनिमित्तीभूतविशेषणानामेकार्थान्वयबोधासम्भवादित्युक्तम्। यदि पुनरस्मदीयप्रक्रियालभ्येत विशिष्टोपस्थितस्यैव निष्कृष्टस्वरूपाभेदो वाक्येन बोध्यत इति, न तर्हि विशेषणान्वयो वाक्यार्थभावमनुभवति। तदेव भिन्नप्रवृत्तिनिमित्तानामिति व्यधिकरणवाक्यातिप्रसङ्गवारणाय विशिष्टैकार्थवृत्तिव्यावृत्त्यर्थमुपादीयते। तथाचार्थादनर्थितविशेषणान्वयं

---

१ 'तु' ख पाठ. २ 'ष्वतिप्र' ख पाठ.

प्रवृत्तिनिमित्तभेदेनोपस्थापितार्थस्य निष्कृष्टस्वरूपाभेदवृत्तिरेव पदानां सामानाधिकरण्यमिति पर्यवस्यति । न चैवं शब्दानामित्यनेकत्वोपादानात्, तस्य च सहप्रयोगावच्छिन्नस्य विवक्षणीयत्वात्, स्वरूपमदनेकत्वस्य पटो भवति शुक्लो भवतीत्यादावसहप्रयोगेऽपि शुक्लपटयोरेकार्थवृत्त्या सामानाधिकरण्यप्रसङ्गेनाप्रयोजकत्वात्, पर्यायाणां च सहप्रयोगाभावादनेकेषामेकार्थवृत्त्यभावेनानतिप्रसङ्गाद्, व्यधिकरणानिरासस्य चैकार्थानामित्येव निरासोपपत्तेर्भिन्नेत्याद्यनर्थकमिति वाच्यम् । एकार्थत्वे सहप्रयोगासम्भवशङ्कानिरासार्थत्वात् । विशिष्टार्थभेदादपर्यायतया सहप्रयोगे चैकार्थानामित्यसम्भवात् । न चैवं 'स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः' इत्यादिसामानाधिकरण्यस्यापि स्वरूपाभेदमात्रपरत्वे गुणविशिष्टोपासनासिद्धिप्रसङ्ग इति वाच्यम् । अरुणान्यायेन सर्वस्योपासनाविध्यन्वयितया तत्सिद्ध्युपपत्तेः । वाक्यवृत्त्या विशेष्यस्वरूपाभेदे बोध्यमाने पदोपस्थापितविशेषणान्वयस्य बाधाभावेनाहानाच्च । एतेन नीलमुत्पलमानयेत्युक्ते समानाधिकरणशब्दस्य वस्तुमात्रपरत्वादनीलमप्यानीयेतेति प्रत्युक्तम् । नीलस्याप्यानयनान्वितत्वात् । नीलोत्पलयोरानयनान्वयबोधस्यैकत्वेन वाक्यभेदाप्रसङ्गात् । तात्पर्यवशादौपादानिकपदसामानाधिकरण्योपहितवस्तुमात्रे पदोपस्थितविशेषणान्वयाहानेन क्रियान्वयेनार्थैकत्वादेकवाक्यत्वोपपत्तेश्च । अन्यथा प्रथमं पदसामानाधिकरण्ये तस्यां दशायां समभिव्याहृतक्रियापदानर्थक्यात् । तथापि विशिष्टोद्देश्यकक्रियान्वयबोधे वाक्यभेदस्यापरिहार्यत्वाद् 'ग्रहं सम्मार्ष्टी'त्यादिवदिति ॥

---

## सत्यादिपदव्युत्पत्तिः ।

एवञ्च 'सत्यं ज्ञानमि'त्यादिकमपि समानाधिकरणं सत्ताज्ञानानन्दादिस्वरूपाभेदपरम् । तथाहि — न ज्ञानादिपदं तद्वति व्युत्पत्तुं शक्यं, तद्वति लोके नीलादिवदव्यवहारात् । नाप्यलौकिकं ज्ञानादिपदं प्रत्यभिज्ञानाद्, लोकवेदयोः शब्दार्थाभेदस्य* तन्त्रसिद्धत्वात् । अन्यथा तदव्युत्पत्तिप्रसङ्गात् । संस्कारादिविशेषविशिष्टे यूपादिपदस्येव ज्ञानादिमति ज्ञानादिपदस्य वैदिकव्युत्पत्त्यसम्भवाच्च । लौकिक्यैव ज्ञानादिपदव्युत्पत्त्या वाक्यार्थबोधसिद्धावपूर्वव्यु-

---

* जै० अ० १ पा० ३ अधि० १०

त्पत्तिकल्पनावैयर्थ्याच्च। नन्वाश्रिते नानारूपे कथञ्चिदनुगते ज्ञानादौ ज्ञानादि-पदं व्युत्पद्यते। तथाच गन्धो रसो मकरन्द इत्यादिवद् न 'विज्ञानमानन्दं ब्रह्मे'ति सामानाधिकरण्यसम्भवः, येन ज्ञानानन्दात्मकब्रह्मसिद्धिः स्यादिति चेद्। न। तुल्यसम्प्रदायत्वेनाधिगतप्रमाणभावस्य कथमप्युपपाद्यार्थत्वात्। गौरश्व इत्यादेरप्याप्तोक्तस्य धुर्यत्वजवनत्वादिलक्षणयाप्युपपादनीयत्वात्। न चेहापि तद्वल्लक्षणया सामानाधिकरण्यमिति वाच्यम्। गौरवादन्यथाप्युपपत्तेश्च। नहि विषयानुपाधिपरिच्छेदोपाधिका ज्ञानपदशक्तिः, किन्त्वज्ञानविरोधितावच्छेदकप्रकाशरूपोपाधिका। प्रकाशरूपं च सर्ववैषयिकज्ञानानुगतं न भिद्यते। आनन्दश्च सर्ववैषयिकसुखेष्वानुकूल्यात्मनानुवर्तमानं आनन्दपदशक्तिनिमित्तं प्रकाशाद् न व्यतिरिच्यते, सत्ताव्यभिचरितप्रकाशत्वात्। न च तत् तस्य प्रकाशसबन्धाव्यतिरेकादज्ञानादिवदिति वाच्यम्। लाघवेन प्रकाशाभेदस्यैव प्रकाशमानस्वभावत्वे तन्त्रत्वात्। अज्ञानादौ च तद्बाधात् प्रकाशसबन्ध-नियमादेव भानाव्यभिचार उपेयते। सत्ता च वस्तुभावात्मा नानाविशेषो-परागेण सत्यशब्देन गृहीता। तत्र यदि विशेषान्तरमानन्दः स्यात्, परिच्छेदे सत्यल्पत्वादानन्द एव न स्यात्। 'नाल्पे सुखमस्ती'ति श्रुतेः। तत् सर्वानुगता सत्तैवानन्दः। एवं ब्रह्मशब्दार्थानुगते बृहत्त्वेऽपि यदि जातिजीवा-दिवदेष विशेषः स्यात्, सत्ताया प्रतिषिध्येतेति ज्ञानमानन्दश्च न स्यादिति वि-शिष्टवृत्तिसत्यज्ञानादिपदसमभिव्याहारेणानृनजडदुःखादिविरोधिस्वभावं सत्ताप्र-काशानन्दैकरसं ब्रह्म वाक्यार्थोऽवबोध्यते, न त्ववाध्यत्वज्ञानत्वानुकूलत्वा-दिविशिष्टम्। विशिष्टाभेदासंभवेन[1] सामानाधिकरण्यानुपपत्तेः। एवं सोऽयमि-त्यादि वा तत्त्वमस्यादि वा अखण्डार्थे योजयितव्यम्, अन्यथा विशिष्टवि-रोधेन सामानाधिकरण्यायोगात्॥

---

### तत्त्वमादिसामानाधिकरण्याक्षेपः।

अत्राह — तत्त्वमस्यादिसामानाधिकरण्यं न तावदन्वयमुखेन पदोप-स्थापितजीवब्रह्मस्वरूपाभेदपरं, तत्प्रकरणप्रकरणान्तरस्ववाक्यविरोधात्। तत्प्रकरणविरोधस्तावत्,—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्', 'तदै-

---

१ 'दिअ' ख पाठ

क्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजते'ति सृष्टेः प्राक् प्रहीणनामरूपविभाग-चिदचित्समष्टिमयं निमित्तान्तरनिरपेक्षमेव विचित्रस्थिरत्रसरूपेण 'बहु स्यामिति' सङ्कल्प्य, तथैव भवत् तदनुप्रवेशेन सकलनामरूपव्याकर्तृ समस्तचिदचित्प्रपञ्चस्य मूलमायतनमाजीवन प्रतिष्ठा विलये सर्वस्यात्मा निरस्तनिखिलदोषगन्धं प्रक-रणार्थो ब्रह्म, न नानाविधानन्तदु खाकारकर्माधीनचिन्तितनिमिषितादिसक-लप्रवृत्तिकजीवस्वरूप भवितुमर्हति । प्रकरणान्तरे सर्वोपनिषत्सु च 'अपहत-पाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपास सत्यकाम सत्यसङ्कल्प ', 'सर्वज्ञ सर्वविदि'त्येवमादिसमस्तहेयप्रत्यनीकसकलकल्याणगुणात्मक ब्रह्मा-वगत कथमिव समस्तहेयमयजीवस्वरूपमुच्येत । न चामीषु गुणेषु तात्प-र्याभावः । श्रुतेरज्ञातत्वे सति फलवत्त्वात् । स्ववाक्यविरोधोऽपि । अनन्यगो-चरयावदुपपादितविशेषणविशिष्टप्रकृतसच्छब्दितब्रह्मपरामर्शी हि तच्छब्दः । तस्य यथाप्रकृतपरामर्शित्वव्युत्पत्ते' । शुक्ला श्यामललामा कालाक्षी कुण्डोध्नी च या गौश्चरति, तामानयेत्युक्ते निर्विशेषगोमात्रानुपस्थानात् । या तिष्ठन्ती चरति तामानयेत्यत्रानयनदशापन्नगव्यन्वयविरोधित्वेऽपि स्थित्यादिविशेषणस्य कालभेदेनापि गवान्वयितया तदा परामर्शात् । अन्यथा धावन्तीमानयन्नोपाल-भ्येत । यत् कालाक्ष्यां गोत्व तदेव स्वस्तिमत्यामित्यादावपि तदधिकरणविशे-षितमेव तदा परामृश्यते । अन्यथा विशेषणत्यागेन प्रतिसन्धानानर्हस्य प्रकृत-त्वासिद्धे' । न चैव सविशेषे ब्रह्मणि तत्पदपरामृष्टेऽपि स्वरूपेण जीवैकात्म्यम-स्योपपद्यते सत्युपस्थितविशिष्टान्वयसम्भवे । त्वशब्दश्च बोध्यससारिजीवपरा-मर्शी । तस्य च मुक्तस्वभावब्रह्मतादात्म्यमसंभवि । मुक्तस्य विशुद्धस्यापि तस्य स्थितौ नाशे वान्यस्यान्यतादात्म्यानुपपत्ते. । जगद्व्यापारकर्तृब्रह्माभेदा-नुपपत्तेश्च । वक्ष्यति सूत्रकारः 'जगद्व्यापारवर्जं प्रकरणाद् —' (ब्र० ४ ४. १७) इति, 'भोगमात्रसाम्यलिङ्गाद् —' (ब्र० ४. ४ २१) इति च । 'तत्त्व-मसी'ति सामानाधिकरण्याम्नानाद् विशिष्टविरोधेऽपि वस्तुमात्राभेदो बोध्यत एवेति चेद् । न । एकत्रैव ससारित्वापहतपाप्मत्वादिविरुद्धधर्मसमावेशप्रस-ङ्गात् । सोऽयमित्यादाविव कथञ्चिदविरोधेऽपि तदुपदेशानर्थक्यात् । अधिग-तब्रह्माभेदस्यापि संसारित्वानपायात् । अथ व्युदस्तविशेषोपस्थितरूपमभेदेन बोध्येत । न । प्रत्यक्षागमसिद्धविशेषाणामस्मदिच्छया व्युदसनायोगात् ।

शुद्धयापि यथाभगतान्यभावस्यान्यतादात्म्यासंभवाच्च । निर्विशेषचिन्मात्रवपुषो ब्रह्मणो जीवत्वदुःखित्वादिकं जगत्कारणत्वसर्वज्ञत्वादिकं च मिथ्येति चेद्, अहो भवता वाक्यार्थपर्यालोचनकुशलता । उपक्रमोपसंहारादिभिः सविशेषपर प्रकरणम् । 'उत तमादेशमप्राक्ष्य' इति नियन्त्रुपक्रमाद्, 'ऐतदात्म्यमिदं सर्वमि'ति जगदात्मान्तर्याम्युपसंहारादित्याद्युक्तम् ॥

---

## परोक्तमेकविज्ञानेन सर्वविज्ञानम् ।

एकविज्ञानेन च सर्वविज्ञानं प्रतिज्ञातं 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमि'ति । उपपादितं च 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादि'त्यादिना । न चेदं सर्वमिथ्यात्वे घटते । मिथ्यात्वादेव सर्वस्य परमार्थब्रह्मतत्त्वज्ञानविषयानन्तर्गतत्वात् । नहि परमार्थशुक्तिज्ञानविषयान्तर्गतमारोपितं रजतं, तद्बाधेनैव तत्त्वविज्ञानात् । तत्र येन विज्ञातेन सर्वं मिथ्यात्वेन विज्ञातमित्यध्याह्रियेत, तच्च श्रुतोपपत्तावयुक्तम् । सर्वसत्यत्वे तु कारणकार्यावस्थयोरेकानेकभावे सत्यपि तदनुगतस्वरूपविज्ञानमेव सर्वविज्ञानम् । एतदवस्थाविशेषस्य सन्निहितदेशकालादिरूपस्य प्रागविज्ञानेऽपि तदनुगतधर्मिविज्ञानादेव प्रागेवायं मया ज्ञात इति लौकिकानुभवादुपपद्यत एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानम् । एवं हि परिणामिमृदादिदृष्टान्तोऽप्यनुगुणो भवति । वक्ष्यति च सूत्रकारः 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र० २. १. १४) इति । अन्यस्य सर्वस्य मिथ्यात्वे कस्यानन्यत्वमुच्येत । न च तत्रैव 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि'ति दृष्टान्तदर्शितं विकारानृतत्वं कारणस्वरूपसत्यत्वं दार्ष्टान्तिके उपसंहरति 'एवं सोम्य! स आदेशो भवती'ति । अतस्तदितरस्यानृतत्वे तदधीननिरूपणं प्रशासितृत्वसर्वज्ञत्वसत्यकामत्वादिकं पारमार्थिकनिषेधो वा न स्वरूपमिति वाच्यम् । दृष्टान्ते विकारमृषात्वबोधिशब्दाभावाद् । इतिशब्दावबोधेन सिद्धान्तहान्या च तव मृत्तिकासत्यत्वावधारणायोगेन तदर्थसिद्ध्यनुपपत्तेश्च, व्यावहारिकसत्यत्वस्य घटादावपि तुल्यत्वाच्च । बोधेन घटशरावादिविकारमृषात्वापरिज्ञानेन प्रति-

---

१ 'भा' क. पाठ २ 'दास' ख पाठः

ज्ञातार्थसमावनाय 'यथा सोम्ये'ति प्रसिद्धवदुपन्यासानुपपत्तेश्च । तदेव श्रुतितात्पर्यविषयविरुद्धगुणसमावेशाद् न जीवस्य ब्रह्मतादात्म्य शक्यबोधं तत्त्वमसीति ॥

---

बाधसामानाधिकरण्यायोगशङ्का ।

नापि त्वमर्थबाधेन ब्रह्मैकत्वपरं सामानाधिकरण्यम् । उपदेश्यबाधेनोपदेशानुपपत्ते । स्वबाधायैव वेदान्तश्रवणे प्रवृत्त्यनुपपत्तेर्निष्फलत्वाच्च । तद्विनाशस्यैव फलत्वे फलभागिनोऽभावात् । तथा च वरमक्लेशेन भूतसङ्घातात्मवादपरिग्रहः । नापि बाधेन सामानाधिकरण्य क्वचिदुपलब्धचरम् । सोऽयं सर्पो रज्जुरित्यादावपि बाधबोधिनञ्पदाश्रवणात् । ननु सर्पपदस्य व्यतिरेकलक्षणा, तथा त्वपदस्यापि स्यात् । न । व्यतिरेकलक्षणाया जघन्यत्वात् । अपिच

सर्पोऽसौ रज्जुरित्यादौ युज्यते बाधलक्षणा ।
न सर्पो रज्जुरेवेति बाधसप्रतिपत्तित. ॥
नानन्यगतिका तत्त्वमित्यादौ बाधलक्षणा ।
कल्प्या न त्वमसीत्येव बाधस्याप्रतिपत्तितः ॥

अत एव न तत्पदस्य त्वमर्थबाधलक्षणा, स्वार्थाप्रतिपत्तिप्रसङ्गात् । अपिच

भ्रमग्राह्यादधिष्ठानादन्यरूपावबोधनात् ।
सर्पोऽसौ रज्जुरित्यादौ युज्यते बाधकल्पना ॥
तत्त्वमादौ भ्रमग्राह्यतावन्मात्रावबोधनात् ।
भ्रमावस्थाविशेषेण न युक्ता बाधकल्पना ॥
अधिष्ठानस्वरूपं तु भ्रमाग्राह्य विबोध्यते ।
इति ते ब्रुवत प्राप्तो निरधिष्ठानविभ्रम ॥
भ्रमावस्थातिरोभूतरूपान्तरनिरोषितम् ।
बोध्यते यद्यधिष्ठान प्राप्ता ते सविशेषता ॥
यदि बाधो भ्रमग्राह्यतावन्मात्रावबोधनात् ।

साधिष्ठानावभासो न भ्रम एव प्रसिध्यति ॥
तस्मात् तत्त्वमसीत्यादिसामानाधिकरण्यधीः ।
स्वरूपाभेदबोधाय नालं जीवापबाधने ॥

एतेन 'ब्रह्मैवेदं विश्वमि'त्यादिबाधाया सामानाधिकरण्यं व्याख्यातम् । अपिचाविशेषस्वरूपमात्रस्य सदेवेत्यादिस्ववाक्यादेवागमे तत्त्वमस्यादिसामानाधिकरण्येन कस्य केन तादात्म्यमुपदिश्येत । कल्पितभेदनिरासस्तु न वाक्यावसेयोऽतदर्थत्वात् । एवमेतदपि निरस्तं, यदारोप्यस्य विषयात्मतयारोप्यवृत्तिशब्दस्य विषयपर्यन्तत्वात् त्वमर्थस्य जगतश्च ब्रह्मण्यारोपात् 'तत्त्वमसि ब्रह्मैवेदं विश्वमि'त्यादिसामानाधिकरण्यं वस्तुस्वरूपाभेदवृत्तीति ।

जीवस्यारोपरूपत्वे बाध्येतारोप्यरूप्यवत् ।
बाध्यस्यानपवर्ग्यत्वादुपदेशोऽफलस्तव ॥
कथञ्चारोपरूपत्वं प्रागस्मादुपदेशतः ।
जीवस्य गम्यते येन सामानाधिकरण्यधीः ॥
कथं चारोप्यतादात्म्यं सदर्थस्यावसीयते ।
एकार्थवृत्तिता येन विषयारोप्यशब्दयोः ॥
यदि चारोपितैकात्म्यादेकार्थविषये पदे ।
वाक्यमारोपितार्थं ते कथं प्रामाण्यमश्नुताम् ॥
सामानाधिकरण्यं तु बाधायां प्रागदूदुषम् ।
एवं ब्रह्माहमस्म्यात्मा ब्रह्मेत्यादिषु चोह्यताम् ॥
न चाप्यारोप्यशब्दस्य विषयावधिशक्तता ।
अप्रयोगात् प्रयोगाद्धि नीलस्योत्पलशक्तता ॥

नहि प्रतिबुद्धस्य शुक्तौ रजतशब्दप्रयोगो भवति । नेदं रजतमिति भेदव्यवहारात् । भवति तदिदं रजतं शुक्तिरिति प्रतिबुद्धस्यापि प्रयोग इति चेत् । ननु स ते बाधार्थो न व्युत्पत्तिमूलम् । न चाज्ञानमूलो भ्रान्तप्रयोगः शक्तिनिर्वाही । तथाविधस्य देवदत्ते यज्ञदत्तशब्दप्रयोगस्यातथात्वात् । तस्माद् न तत्त्वमसीत्यादि जीवपराभेदपरमर्थविरोधाल्लक्षणापत्तेश्च ॥

## पररीत्या तत्त्वमादिवाक्यार्थः ।

तत् किं प्रमत्तगीतं तत्त्वमसीति सामानाधिकरण्यम् । तुल्यं हि साम्प्रदायिकम् । न । अभिन्नार्थवृत्त्यैव सामानाधिकरण्याविरोधात् । एवं तर्हि विरुद्धविशेषणहानेन निर्विशेषवृत्तितैवापन्ना । न । मुख्यसंभवे लक्षणायोगात् । तथाहि सच्छब्दितस्य सर्वज्ञत्वसत्यसङ्कल्पादिगुणाकरस्य 'बहु स्यामि'ति स्वात्मन एव बहुभवनसङ्कल्पपूर्वकमात्मसृष्टे तेजोबन्नादिमये जीववर्गविविधकर्मानुगुणदेवमनुष्यादिविचित्रसंस्थानसंस्थिते जगति तदात्मतयानुप्रवेशितचिद्वर्गे चात्मेच्छयानुप्रविष्टस्य नामरूपव्याकरणपर्यन्तं बहुभवनं श्रूयते 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोदि'ति । न चेयं तृतीयेत्थंभावार्था, प्राक् सृष्टेर्जीवाभावप्रसङ्गात् । न सहयोगार्था, कारकविभक्तिबलीयस्त्वात् । किन्तु कर्त्रर्था । परमात्मा च नामरूपव्याकर्ता *सञ्ज्ञामूर्तिक्लृप्त्यधिकरणे स्थास्यति । तत्रैव सति जीवेनात्मनेति जीवशरीरकेण मयेत्युच्यते । अनेनेति च जीवद्वारकनानाप्रकारः परामृश्यते । तदेवमस्यात्मनोऽनुप्रविष्टस्यान्तर्यामितया चिदचिदात्मकं जगदखिलं शरीरम् । 'यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति', 'यस्याप शरीरमि'त्यादि'यस्यात्मा शरीरं य आत्मानमन्तरो यमयती'ति पृथिव्याद्यात्मान्तस्यान्तर्यामिशरीरत्वश्रवणात् । इहापि च 'ऐतदात्म्यमिदं सर्वमि'ति सर्वस्यात्मैष इत्युक्ते सर्वमस्य शरीरमित्युक्तं भवति । 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मे'त्यादिश्रुतेश्च । 'पूः प्राणिनः सर्व एव गुहाशयस्याहन्यमानस्य विकल्मषस्य' (आप० ध० प्र० १.८.२२.४) 'तत्सर्वं वै हरेस्तनुरि'त्यादिस्मृतेश्च ॥

---

## शरीरत्वम् ।

ननु च श्रुत्यादिकमन्यथयाम । महीमहीधरसरित्सागरादिसन्निवेशविशेषविशिष्टस्य जगतो मुख्यशरीरत्वायोगात्, तत्र न करचरणादिसंस्थानविशेषः शरीरत्वं, पशुपक्षिसरीसृपाद्यव्याप्तेः । तत्रापि शरीरपदप्रयोगस्यागौणत्वात् । नापि चेतनेच्छाधीनस्वरूपप्रवृत्तिस्थितिकत्वम् । शरीरस्वरूपस्य शरीरापेक्षचेतनेच्छाधीनत्वायोगात्, रुग्णमृतशरीरयोस्तदधीनप्रवृत्तिस्थितिकत्वाभावाच्च, राजेच्छाधीनप्रवृत्तिस्थितिके राष्ट्रेऽतिव्याप्तेश्च, सालभञ्जिकादौ

---

* 'सञ्ज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्' (ब्र० २.४.२०) ।

सर्वस्यैवातिव्याप्तेश्च । एतेन तदेकनियाम्यत्वतदेकधार्यत्वतदेकशेषत्वानि निरस्तानि । स्वामिनापि नियाम्ये धार्ये तच्छेषे च भृत्यादिशरीरेऽव्याप्तेश्च । यदि च तदेकनियाम्यत्वादिकं तन्नियमनार्हतानियतत्वादिकं विवक्ष्येत, सर्वं सर्वशरीरं स्यात् । सत्यपि सर्वस्य सर्वेण नियन्तुं धारयितुं वा योग्यत्वे परशरीरानुप्रवेशादिहेत्वभावेन नियमनादिफलोपधानानुपपत्तेः, सुप्तमूर्छितादिसाधारणत्वात्, प्राणेन्द्रियादीनामपि जीवनियाम्यत्वादिसत्त्वात्, प्रत्येकं तच्छरीरत्वापत्तेश्च । न चैतानि तच्छरीराणीति क्वचिदुदीर्यन्ते । किं तर्हि शरीरत्वं, [1]चेष्टाभोगेन्द्रियाश्रयत्वम् । न च परमात्मनो हितमहितं वास्ति, येन तदाप्तिपरिहारार्थस्पन्दाश्रयतया जगदस्य शरीरं स्यात्। अतिच्छन्दा अपहतपाप्मा सर्वात्मा हि सः । अत एव न भोगाश्रयत्वं, स्वतःसिद्धनिरतिशयानन्दस्याप्तकामस्यात्मकामस्याकामस्य शरीराश्रयभोगासंभवात् । 'अनश्नन्नन्यो अभिचाकशीति' इति श्रुतेः । 'संभोगप्राप्तिरिति चेद् न वैशेष्यात्' (ब्र० १. २. ८) इति च सूत्रम् । नापीन्द्रियाश्रयत्वं, परमात्मनो निरिन्द्रियत्वात् । 'अचक्षुःश्रोत्रं तदपाणिपादम्', 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुरि'त्यादिश्रुतेः । तृणलोष्टकाष्ठादीनामुक्तलक्षणासंभवाच्च । नन्वेवं स्वामिहिताहितप्राप्तिपरिहारार्थस्पन्दाश्रयतया भृत्यशरीरं स्वामिनः स्यात् । एवमाविष्टपिशाचादिभोगार्थचेष्टाश्रयतया देवदत्तादिशरीरं पिशाचस्य स्यात् । कौशिकशापापादितशैलीभावे रम्भादिशरीरे तदसंभवश्च । अत एवेन्द्रियभोगाश्रयत्वं प्रयुक्तमिति चेद् । न । हिताहितयोरव्यवधानेन विशेषणाद्, भृत्यशरीरस्पन्दस्य च स्वहितादिव्यवहितस्वामिहिताद्यर्थतयानतिप्रसङ्गात् । पिशाचादीनां च परशरीराविष्टातीन्द्रियस्वशरीराश्रय एव भोगः, कञ्चुकवत् परशरीरेऽनुप्रवेशस्य भोगनिष्पत्तिमात्रार्थत्वोपपत्तेः । निरन्तरसंश्लेषणकञ्चुकताडनादिना तदन्तरितस्येव परशरीरताडनादिना तस्य दुःखाद्युपपत्तेश्च । वातकिन इव शैलीभूतरम्भादेरपि तादृशस्पन्दाश्रयतायोग्यत्वाद्, निरन्तराहन्तागृहीतत्वस्य च तदवच्छेदकत्वाद् मूर्छितस्येवान्तरदुःखानुभवसंभवाच्च । अन्यथा तन्निविवर्तयिषानुपपत्तेः । एतेनेन्द्रियाश्रयत्वमपि [2]व्याख्यातम् । आमोक्षं करणसंबन्धानुवृत्तेः प्रामाणिकत्वात्। एवञ्च न जगदात्मनः शरीरं, तल्लक्षणाभावात् । श्रूयते च—

१. नोऽनन्द्रि' क पाठः. २ 'षेण क' ख पाठः

* 'चेष्टेन्द्रियार्थाश्रयः शरीरम्' इति तु न्यायसूत्रम् ।

"अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्"

इत्यादि परमात्मनोऽशरीरत्वम्। अन्यथा तस्यापि शरीरित्वप्रयुक्तदुःखादिप्रसङ्गो जीववदेव, 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती'ति श्रुतेः। तस्मात् तन्नियाम्यतामात्रेण गौणं शरीरत्वव्यपदेश इति।

नैवम्। 'यस्य पृथिवी शरीरं', 'यस्यापः शरीरं', 'यस्य तेजः शरीरमि'-त्यादिप्रतिपर्यायमन्तर्यामिब्राह्मणे शरीरपदमादरेणाभ्यस्यमानं 'जगत् सर्वं शरीरं ते' इत्यादिभिरुपबृंहितं न नियाम्यत्वमात्रेण गौणं कल्पयितुं युक्तम्। अभ्यासे हि भूयस्त्वमर्थस्य भवति, नाल्पत्वमपि, प्रागेवोपचरितत्वम्। अशरीरत्ववचनं तु विविक्तस्वरूपविषयं, स्वकर्मनिर्मितभूतसङ्घातमयशरीराभावविषयं वा,

"न भूतसङ्घातमयो देहोऽस्य परमात्मनः"

इति स्मृतेः। ज्ञानमयं हि तस्य निजं शरीरं, 'प्रज्ञानघन एवे'ति श्रुतेः। घनशब्दश्च मूर्तिपर्यायः शरीरवाची। न तु सर्वथैव शरीराभावपरम्। 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः', 'पुरुषं कृष्णपिङ्गलम्',

"सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः"

इत्यादिश्रुतिस्मृतिविरोधात्। शरीरित्वे प्रियादियोगित्वं च कर्मार्जितशरीरिविषयमेव। अन्यथा 'स एकधा भवती'त्यादिस्वच्छन्दशरीराणां मुक्तानामपि प्रियादियोगप्रसङ्गात्। न च भूतभौतिकविकारा वा आत्मगतदुःखादयो वा तच्छरीरे ब्रह्मणि सङ्क्रामेयुः। बाल्यादिविकाराणामिव शरीर एव व्यवस्थोपपत्तेः। ततश्च स्थूलसूक्ष्मावस्थचिदचिदात्मकस्य जगतः परमात्मशरीरत्वे प्रामाणिके तदनुगतमेव लक्षणं कर्तुं न्याय्यम्, अन्यथाऽव्याप्तेः। तत्र च गुणक्रियादीनां द्रव्याधीनवृत्तितया दौवारिकमेव परमात्मशरीरत्वम्। ततो यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं वा शक्यं सर्वात्मना तच्छेषस्वरूपं वा, तत् तस्य शरीरम्। तथा च जगदात्मन इति तस्येदं शरीरम्। न च यस्य सर्वात्मना नान्यस्येति नियन्तृनियमे सर्वात्मना नियन्तुं शक्यं नाशक्यमिति नियाम्यनियमे वा विवक्षिते स्वामिनापि नियाम्ये भृत्यशरीरे भृत्यादिशरीरत्वं स्वामिशरीरत्वं च स्यादिति वाच्यम्। सर्वात्मनेति यावद्द्रव्यभावित्वस्य विवक्षितत्वात्। अथवा

सर्वानुप्रवेशेनेति विवक्षितम् । अत्र सर्वशब्दः सर्वः पटो रक्त इत्यादाविवैक-स्मिन्नपि तदेकदेशापरिशेषार्थ । तेन स्वानुप्रवेशेन नियाम्ये चर्महस्त्यादौ स्वाम्याज्ञादिनियाम्ये भृत्यादौ निरोधादिनियाम्ये प्राणेन्द्रियादौ च नातिव्याप्तिः । यदि तु योगादिमहिम्ना विनैव यत्नान्तर स्वव्याप्त्यैव यावत् किञ्चिन्नियच्छेद् धारयेदविशरणेन स्वकार्यक्षममापादयेद् वा, तदा सर्वमेव तदीश्वरस्यैव तस्यापि शरीरमस्तु । न कश्चिद् दोष । अथवा सर्वात्मनेत्यस्य स्वार्थेऽप्यन्वये सति सर्वप्रकारे सर्वस्मिन् नियाम्यसाध्ये तद्व्याप्त्यपेक्षया नियाम्यत्व लभ्यते । तेन कदाचित् का(र्य'य)विशेषे योगिव्याप्त्या नियाम्येऽपि परशरीरदारुयन्त्रादौ नातिव्याप्ति । एतेनाविष्टपिशाचादिशरीरत्वप्रसङ्गो निरस्त । तच्छेषस्वरूप सर्वात्मनेति च त प्रत्यशेषत्व व्यावर्त्यते, नान्यशेषत्वम् । तेन स्वाम्यादिशेषे भृत्यादिशरीरे नान्याप्ति । दारुयन्त्रादावपि नातिव्याप्ति । तस्य शेषत्वानियमाभावात् । यद्यपि प्राणेन्द्रियादयोऽपि जीवशेषता न व्यभिचरन्तीति तच्छरीरमेव, तथापि तत्र लौकिकशरीरव्यवहाराभावः पृथिव्यादाविव कथञ्चिन्निर्वाह्य. । परमात्मना च स्वव्याप्त्यैव जगन्नियम्यते, 'य पृथिव्या तिष्ठन् पृथिव्या अन्तर' इत्यन्तर्बहिर्भावेनैव तस्य नियन्तृत्वाभिधानात् । 'अन्त प्रविष्टः शास्ता जनानाम्' इति च । धार्यत्वमपि परमात्मना जगत. श्रूयते, 'येन जातानि जीवन्ति' 'सदायतना.' 'विश्वं बिभर्ति भुवनस्य नाभिरि'त्यादि । 'एष भूताधिपति.', 'पति विश्वस्यात्मेश्वर' 'स कारणं करणाधिपाधिप' इत्यधिपतित्वश्रवणाज्जगतस्तच्छेषत्वमर्थसिद्ध राजशेषत्वमिव राष्ट्रस्य । तस्माच्चिदाचिदात्मक जगदस्यात्मनः शरीरम् ।

शरीरशरीरिभावे च सामानाधिकरण्य लोकवेदसिद्धम् । लोके तावद् मृतो जातः पुरुषो गौरश्वो देवो मनुष्य. पुमान् स्त्री षण्ड. कर्मभिरात्मा जायते, अह मनुष्य इत्यादिविवेकिनामपि सामानाधिकरण्य दृश्यते । वेदेऽपि ब्राह्मणो यजेत' 'त्व स्त्री त्व पुमानसि त्व कुमार उत वा कुमारी'त्यादि । न चैनत् तत्त्वदर्शां तत्त्वावेदकवेदस्य वा भ्रान्तिमूलत्व परमात्मभ्रान्त्यनुवादित्वमिति वा शक्य वदितुम् । एवञ्च सर्वानुप्रवेशेन सर्वान्तर्यामिणो द्रव्यद्वारापि सह गुणक्रियादिभि सर्व शरीरमिति मुख्यवृत्तम् 'इद सर्व यदयमात्मा' 'पुरुष एवेद विश्वमि'त्यादिसामानाधिकरण्य, 'अयमात्मा ब्रह्म' तत्त्वमि'त्यादि च ।

---

१. 'न्त्या' ख. पाठ.

अत एव मुख्यार्थाविरोधाद् लक्षणा च न भविष्यति । ननु सति भेदज्ञानेऽतस्मिंस्तच्छब्दो लाक्षणिको गौणो वा गङ्गायां घोषः सिंहो माणवक इत्यादिवदिति चेद् । न । नीलमुत्पलमित्यादावपि तथाभावप्रसङ्गात् । प्रकारशब्दस्य प्रकारिपर्यन्ततया हि तत्र सामानाधिकरण्यम् । तच्च समानं शरीरशरीरिणोरपि । प्रकारप्रकारिभावेन ब्रह्मशरीरजीवादिशब्दानामपि ब्रह्मपर्यन्तत्वोपपत्तेः ॥

---

## प्रकारप्रकारिनिरूपणम् ।

ननु च कः प्रकारः, किञ्च प्रकारि । विशेषणं च विशेष्यं च । के पुनस्ते । सामानाधिकरण्येन व्यावर्तकं विशेषणम् । तथैव व्यावर्त्यं विशेष्यम् । किं पुनः सामानाधिकरण्यम् । अभेदो नहि संभवति, गुणगुण्यादेर्भेदात् । नापि विशेष्यबुद्ध्यालम्बनता, दण्डादिसाधारण्यात् तत्पदस्यापि दण्ड्यादिपर्यन्तत्वापत्तेः । एकार्थपरसमानविभक्तिकपदनिर्देश्यतेति चेत् । सैव हि प्रकारप्रकारितानिर्वाह्या । तत्र तयैव प्रकारत्वं वदता किमुपपादितं स्यादिति । एतेन विशेष्यान्तर्भूतस्तत्प्रतिपत्त्युपायो धर्मो विशेषणमिति श्रुतप्रकाशिकोक्तमपास्तं, विशेष्यान्तर्भावस्य निरुक्तप्रकारान्यतमानतिरेकात् । क्रियान्वये विशेष्यैकरूप्यमिति चेद् । न । विशेष्यतारूपस्य विशेषणताधीननिरूपणत्वादन्योन्याश्रयात् । यस्य क्रियान्वये यदैकरूप्यमित्येव विवक्षिते दर्शनाद्यन्वये शाखाचन्द्राद्यैकरूप्येणातिप्रसङ्गात् ।

उच्यते — वस्तुन इत्थमंशः प्रकारः । यस्य योऽपृथक्सिद्ध्या भेदकत्वधीविषयः, तस्य स प्रकारः । तथा भेद्यत्वधीविषयः प्रकारी । तथाभूतप्रकारशब्दस्यैव प्रकारिपर्यन्तत्वात् प्रकारिपदसामानाधिकरण्यम् ।

अथ यद्यपृथक्त्वमभेदः स न नीलोत्पलयोः । अथ सिद्धिविशेषणमपृथक्त्वं, सा यद्युत्पत्तिः, न नीलस्योत्पलादपृथक्सिद्धिः स्यात् । उत्पत्तृभेदे सत्युत्पत्त्यभेदायोगाद् नित्येषु महदाकाशम्, आनन्दो ब्रह्मेत्यादिसामानाधिकरण्यं च न स्यात् । उत्पत्तियौगपद्यस्यापि तत्रायोगात् । अथ सा बुद्धिः, विशिष्टबुद्धौ दण्डादेरप्यपृथक्सिद्ध्या व्यावर्तकत्वेन दण्डपुरुषसामानाधिकरण्यप्रसङ्गः ।

अथ सा सत्त्वं, तद्यदि कालविशेषसंबन्धात्मकमस्तित्वमर्थक्रियासामर्थ्यमन्यद्वा सर्वमेवातिप्रसक्तम् । दण्डपुरुषयोरेककालसत्त्वाद्, गवानयनाद्येकार्यक्रियाकारित्वादेकसत्ताकत्वाच्च । असंभवि च, नीलोत्पलयोराधारकालस्याधेयोपाधिभेदभेद्यत्वेन कालसबन्धपृथक्त्वापत्तेः । न च परतन्त्रोपाधिरभेदक इति शङ्क्य, विवक्षितप्रकारतातिरिक्तपारतन्त्र्यानिरूपणाद्, जलधारणादिभेदेनापृथगर्थक्रियायोगाच्च । अत एवैकदेशसबन्धाश्रयत्व सत्त्वमिति निरस्त, नीलोत्पलयोरुत्पलावनिदेशभेदेन पृथक्सिद्धिप्रसङ्गात् । न चान्यतरस्य सबन्ध्यनतिरिक्तदेशत्वमपृथक्सिद्धि, दीपदशादावतिप्रसङ्गात् । शरीरात्मनोरसंभवाच्च । नापि सहोपलम्भस्थितिनियमः, दीपपरिमण्डलालोकावयवावयव्यादेरपि तथात्वेनालोकवान् दीप. ककुद्मान्वृषभ इति मत्वर्थीयानपेक्षयैव सामानाधिकरण्यप्रसङ्गादिति ।

उच्यते — अपृथक्सिद्धिस्तावद् भेदकत्वधीविशेषणमिष्यते । सा च विशिष्टबुद्धौ भेदकतावच्छेदकाकारस्य भेद्यसबन्धावगाहनम् । न च पुरुषादिभेद्यसबन्धेन दण्डत्वादीना दण्डादिविशिष्टबोधविषयता, येन मत्वर्थीयनिरपेक्ष सामानाधिकरण्यमापाद्येत । तद्रूपभेदसंबन्धन्यग्भावेन सहोपलम्भनियमस्तु तत्र प्रयोजकः । स च विशेष्यप्रत्ययसभवे प्रतीयमानस्य तद्रूपेण पृथक्प्रत्येयत्वाभाव । अत एव मनुष्योऽह देवस्त्वमित्यादि देहात्मसामानाधिकरण्यमुपपन्नम् । अह मनुष्य इत्यादिप्रकारेण सहै[2]वोपलम्भात् । तदेकाश्रयत्व वा तत्सम्बन्धैकायत्तस्थितिकत्वम् । आत्मविश्लेषे शरीरविशेषविशरणादिदर्शनेन तदधीनस्थितिनियमानुमानात् । तथाच श्रुति. — 'जीवापेत वाव किलेद म्रियते', 'अस्य सोम्य! महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद् यो मध्येऽभ्याहन्याज्जीवन् स्रवेद् योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत् स एष जीवेनात्मनानुप्रभूत पेपीयमानो मोदमानस्तिष्ठत्यस्य यदेका शाखा जीवो जहात्यथ सा शुष्यति द्वितीया जहात्यथ सा शुष्यति तृतीया जहात्यथ सा शुष्यति सर्वं जहाति सर्व शुष्यति' इत्यन्वयव्यतिरेकाभ्यां तुल्यन्यायतया जीवोत्क्रान्तिप्रतिष्ठाभ्या शरीरनाशप्रतिष्ठे दर्शयति । न च प्राणाद्यधीनस्थितिकमपि, सति

---

१. 'दै', २ 'होप' ख पाठः

जीवसबन्धे केवलव्यतिरेकाभावात् । 'प्राणेन रक्षन्नवर कुलायमि'ति च जीवापायशङ्कया मा धाक्षुरित्येवपरत्वात् । सोऽष्मण प्राणवृत्तेरात्मसबन्धलिङ्गत्वात्, 'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुरि'ति श्रुते । नापि धर्माद्यधीनस्थितिक, तस्यापि जीवसबन्धप्रयोजकतयान्यथासिद्धे । तदेकप्रयोजनकत्व वा तदननुबन्धिकार्यविनियोगशून्यत्वम् । कर्मणि भोगे वा शरीरविनियोगश्चात्मानुबन्धेनैवेति दर्शयितुम् 'आत्मैकप्रयोजनकत्व च कर्मफलभोगार्थतयैव सद्भावादि'त्युक्तमाकरे । अथवा, अनयैवापृथक्सिद्ध्या भेदकनैव प्रकारता । भेद्यता च प्रकारिता । न चैव दीपालोकादिसामानाधिकरण्यप्रसङ्ग । दृष्टसामानाधिकरण्यस्यैव तदुपपाद्यत्वात् । तद्रूपेण भेदस्बन्धोल्लेखेन पृथक्सिद्धतद्रूपनिष्कर्षकशब्दसामानाधिकरण्याप्रसङ्गाच्च । तदेवं सति सर्वस्यैव चिदचिदात्मकस्य जगत. परमात्मशरीरतया 'पादोऽस्य विश्वा भूतानि',

"ममैवांशो जीवलोके जीवभूत सनातन."

इत्यादिश्रुतिस्मृतिभ्यस्तदंशतया च तदपृथक्सिद्धे 'तदु नात्येति कश्चन',

"न तदस्ति विना यत् स्यान्मया भूत चराचरम् "

इत्यादिभ्यश्च परमात्मप्रकारत्वे प्रकारशब्दस्य प्रकारिपर्यन्ततया शरीरशब्दस्यैव शरीरिपर्यन्ततया वा 'स एवेद सर्वम्', 'अयमात्मा ब्रह्मे'त्यादिसामानाधिकरण्यं नीलमुत्पल मनुष्योऽहमित्यादिवन्मुख्यमेव । देहोऽह कायस्त्वमित्यादिसामानाधिकरण्य तु न भवति । तद्रूपेणापृथक्सिद्ध्या विशिष्टधीविषयत्वाभावात् । शरीरादिपदस्य विवक्षाभेदेन प्रकारिविवेकप्रयोजनतया तद्रूपेण निष्कर्षकस्य प्रकारिपर्यन्तत्वाभावाच्च । निष्कर्षकत्व च पादाना प्रयोगविशेषापेक्ष,

"रसोऽहमप्सु कौन्तेय ! प्रभास्मि शशिसूर्ययो. ।
पुण्यो गन्धः पृथिव्यां च"

इत्यादिसामानाधिकरण्यदर्शनात् । ननु देवादिशब्दस्य शरीरिपर्यन्तता न शरीरशब्दतया, अतिप्रसङ्गात् । न च शरीरादिशब्दो निष्कर्षक' । प्राकृतलोकायतिकासम्प्रतिपत्तेः । अन्यथा शरीरादिशब्दमात्रसिद्धशरीरात्मभेदसाधनक्लेशा-

---

१ 'दन्नु' ख पाठ .

नर्थक्यात् । किन्तु प्राणिविभाजकोपाधिवृत्तशब्दतया। न चैव जगदात्मशब्दाविति कथ ब्रह्मपर्यन्तत्वे ब्रह्मशब्दसामानाधिकरण्यमुख्यता । कश्चाय प्रयोगविशेष, यद्भावाभावनिबन्धनौ निष्कर्षानिष्कर्षौ । व्यधिकरणसमानाधिकरणप्रयोगौ राहोः शिरः आयुर्घृतमित्यादावतिप्रसक्ताविति चेद् । मैवम् । डित्थादिशब्दस्यापि शरीरिपर्यन्ततया सामानाधिकरण्यात्, शरीरशब्दस्य निष्कर्षकत्वेऽपि प्राकृतादेरात्मभेदोपचारनिबन्धनत्वभ्रमेणाभेदभ्रमाविघाताद् वैयधिकरण्यमेव निष्कर्षकत्वे प्रयोजकत्वम् । राहो शिर इत्यादौ चाभेदप्रसिद्धेरनिष्कर्ष । अप्रसिद्धभेदमामानाधिकरण्य चानिष्कर्षहेतु. । घृतसाध्यत्वलक्षणया चायुर्घृतमित्यादिसामानाधिकरण्यनिर्वाह । एव शाखाग्र चन्द्रमा इत्यादावपि विशेष्यापृथग्भूतविशेषलक्षणया सामानाधिकरण्यमूहनीयमिति ॥

---

## ब्रह्मणः सर्वपदवाच्यत्वम्।

अथवा कार्यकारणावस्थाद्वयापन्नमशेषचिदचिदात्मक ब्रह्माभेदेन बोध्यते 'ब्रह्मैवेदं विश्वमि'ति मृद् घट इत्यादिवत्, सर्वस्यैव शब्दस्य तद्विषयत्वात् । श्रूयते च ब्रह्मण· सर्वशब्दवाच्यत्व 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति । नन्वत्र जीवान्तरात्मना परमात्मना भूतानुप्रवेशेन व्याक्रियते देवादिरूपं नाम चेत्येतावदुच्यते । न ब्रह्मणः सर्वशब्दवाच्यत्वम् । रूप इव नामन्यपि व्याकरणस्य निष्पादनपर्यायत्वात् । नैवम् । 'तद्धेद तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्या व्याक्रियते'ति श्रुत्यन्तरात् । प्रकृत्यादितृतीया नामरूपाभ्यामिति व्याकरणप्रकारार्था, नामरूपाभ्यां विशिष्टमक्रियतेत्यर्थः । न च नामकर्तुर्नामविशिष्टत्वं, सङ्केतयितरि पित्रादावदर्शनात् । न च तदुपादानत्वमस्य विशेषः । उपादानेऽपि नभसि गवादिनामविशिष्टत्वासम्प्रतिपत्तेः । उपादानत्वे सति कर्तृत्वं तु नामविशिष्टत्वप्रयोजकमिहैव कल्पनीयम् । ततो वरमदृष्टकल्पनातो दृष्टमेव नामवाच्यत्वं तत्प्रयोजकम् । अथापि स्यात् कर्मण्यभिचारे श्येनशब्दत्वमिव ब्रह्माणि लाक्षणिकं सर्वनामत्वम् । तथा चे न मुख्यवृत्त तत्त्वमसीति। न। मुख्यत्वे बाधकाभावात्, अन्यत्र 'यथा वै श्येनो निपत्यादत्ते एवमय द्विषन्त भ्रातृव्यं निपत्या-

---

१. 'र्वपदवा' क पाठ. २. 'च मु.' ख. पाठः.

दत्त' इति निपत्यादानेन गौणत्वस्य श्रुत्यैवोक्तत्वात् । अपिच 'नामरूपे व्याकरवाणी'ति व्याकरण व्यक्तीकरण, वाच व्याकरोतीति दर्शनात् । ततश्च रूपस्य निष्पादनमेव व्याकरणम् । नाम्नस्तु व्युत्पादन, शब्दस्वरूपनिष्पादनस्य रूप्यते शब्दज्ञानविषयीक्रियत इति कर्मव्युत्पन्नामसङ्कुचितवृत्तिरूपशब्दोदितरूपव्याकरणोक्तिसिद्धत्वाद्, नामेति निर्देशस्वारस्याच्च । तच्च व्युत्पाद्यमान 'बहु स्या प्रजायेये'ति, 'सच्च त्यच्चाभवदि'त्याद्यवगतसर्वप्रकारे ब्रह्मण्येव व्युत्पादित भवतीति तदुक्तनिमित्तेन दौवारिक ब्रह्मण' सर्वनामत्वमुपपन्नम् । तदेतदाह श्रुत्यन्तर —

'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते''

इति । अत्र यद्यपि नामकरणमेवोच्यते तथापि 'धाता पुरस्ताद्यमुदा जहारे'ति प्रतीतोदाहरणकरणापेक्षाया तैरेव नामभिरिति प्रतीते. सर्वनामवाच्यत्वमपि गम्यत एव । तथाच स्मृतयः—

''न ताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती''

''वचसा वाच्यमुत्तमम्''

''सुरपशुमनुजादिकल्पनाभिर्हरिरखिलाभिरुदीर्यते तथैक.''

इत्याद्याः । एतदुक्त भवति — गवादिशब्दा आकृतिमभिदधानास्तत्प्रकारिणि पिण्डे पिण्डप्रकारिणि जीवे च परमप्रकारिणमन्तर्यामिणमनभिधायापर्यवस्यन्तो गोत्वादिनिमित्तेनैव तत्र प्रवर्तमाना. प्रवृत्तिनिमित्तमबन्धघटकतयान्तरालिकानपेक्ष्य प्रवर्तन्ते । रसगन्धशरीरादिशब्दास्तु द्रव्यजीवाद्यनपेक्ष्यैव, तेषा तद्रूपेण तदप्रकारत्वात् । उदाहृतसर्वशब्दवाच्यत्वाविघाताय च ब्रह्मणि यावदुपपादकद्वारैव प्रवृत्तिनिमित्तसबन्ध. कल्प्यते । ब्रह्मादिशब्दाना च वाच्यमेवेत्यतः सर्वशब्दवाच्यं ब्रह्मेति ।

अथवा 'सोऽह नामाभवत्', 'तस्योपनिषदहमि'तीत्यहंपदस्य ब्रह्मवृत्तित्व श्रूयते । तथा प्रतर्दन प्रति 'मामेव विजानीही'तीन्द्रस्योपदेशो वामदेवस्य 'अह मनुरभव सूर्यश्चाह कक्षीवानि'त्यादिसर्वात्मभाववचन च शास्त्रदृष्टिमूलम् । यथाह भगवान् सूत्रकारः — 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' (ब्र० १. १. ३०) इति । तत्र सर्वात्मभूतेऽन्तर्यामिणि प्रयुज्यमानोऽस्मदा-

यत्तु अस्यास्मिशब्दौ त्वमहंशब्दप्रयुक्तौ तदर्थपर्यवसायिसामानाधिकरण्येऽपि न विरुध्येते । अथापि प्रथमपुरुषप्रयोगो वा कस्मान्न भवति । 'त्वं भूतानामधिपतिरसि' 'अहमस्मि प्रथमजा ऋतस्य' 'यदग्ने स्यामहं त्वं त्वं स्या अहं स्युष्टे सत्या इहाशिष' इत्यादौ युष्मदस्मदो सामानाधिकरण्ये तिङन्तस्योद्देश्यतन्त्रतादर्शनात् । यद्यपि 'तत्त्वमसी'त्यादौ न किञ्चिदुद्दिश्य विधीयते, 'ऐतदात्म्यमिदं सर्वमि'ति प्रकृतनिगमनरूपत्वात्, तथापि तस्य प्रापकवाक्यानुरोधो न्याय्यः । तत्र नामरूपव्याकरणश्रुत्यैव परमात्मशरीरभूतचिदचिद्वाचकशब्दानां परमात्मपर्यन्तत्वावगतेरिदं सर्वमिति निर्दिष्टजगदन्तर्गतचिदचिद्विशेषविशिष्टपरमात्मवाचिनस्त्वपदस्य प्रापकवाक्यगतोद्देश्यपदवाच्यैकदेशविषयत्वात्, तदनुरोधेन मध्यमपुरुषप्रयोगोपपत्तिरिति ।

तन्न । एवं हि शब्दस्वरसलभ्यं बोध्यबोद्धृप्रत्यगात्मालम्बनत्वमकस्मादेव हीयेत । भवानस्ति अयं जनोऽस्मीत्यादौ शब्दस्वरसलभ्यं बोध्यबोद्धौदासीन्यं हीयते । ततस्तत्प्रत्यगालम्बनानुभवविरोधात् । न चात्र प्रत्यगात्मावसायिनि सामानाधिकरण्ये कश्चिद् विरोध इति वक्ष्यते । अस्यादिपदं च तवानर्थकं, तदात्मकस्त्वमित्यत एव तादात्म्यसत्तावगमात्, अस्माकं तु सामानाधिकरण्यस्य प्रत्यगात्मावसायितानियमनं प्रयोजनम् । अन्ये तु न ज्ञानानन्तरमभेदः किन्तु प्रागपीति भेदमृषात्ववेदनं प्रयोजनमित्याहुः । अपिच त्वम्पदस्य स्वविषयप्रयुक्तस्य श्वेतकेतुना बोध्येन परमात्मपर्यन्तत्वं नावगतमिति तदर्थपर्यवसायिसामानाधिकरण्यं प्रतिपत्तिवन्ध्यमापद्येत । नामरूपव्याकरणश्रुतेरप्यग्रे सर्वपदवाच्यतापरत्वनिरासात् । न'चैतदात्म्यमिदमि'त्यस्य निगमनं तत्त्वमसीति युक्तमर्थभेदात्, एकस्यैष आत्मास्येति वैयधिकरण्येन सामान्यविषयत्वात् । त्वपदस्य जीवशरीरकपरमात्मपर्यन्ततया सामानाधिकरण्येन विशेषविषयत्वात् । अन्यस्याप्रयोजनत्वाच्च । नचोक्तार्थप्रतिष्ठानुमानेऽपि निगमनफलमिष्यते, किन्तु पक्षधर्मतायै हेतूपसंहारे फलजिज्ञासोपशम एवेति यत्किञ्चिदेतत् । अपिचैवं सर्वात्मतयैवोपासनं विधित्सितं स्यात्, नात्मात्मतया, ऐतदात्म्यमित्युक्तशेषतया तत्त्वमसीत्यविधित्वात् । तथाच

---

१. 'ति' ख. पाठ.

'आत्मेति तूपगच्छन्ति—' (ब्र० ४. १ ३) इत्यादिविरोधः । अथैतदेव विशेषो यदाहग्रहयोरन्न यदेतावदेवेदन्तन्न आत्माहन्तयोपासनप्रत्यय इति । नन्विदमेव प्रयोजनं किं न स्याद् यत् स्वात्मन एव सर्वात्मतयोपासनप्रत्यय इति । 'य उपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद', 'पृथगात्मानं प्रेरितारं च मत्वा' 'अमृतत्वमेती'त्यनयोरिहैवोपपादनीयत्वेनाविशेषकत्वात् । अपिचैवं व्यतिहारेषु 'तत्त्वमेव त्वमेव तत्', 'तद्योऽहं सोऽसौ योऽसौ सोऽहं' 'अहं वै त्वमसि भगवो देवते त्वं वा अहमस्मि भगवो देवते' इत्यादिषु स्वार्थाभेदतात्पर्यविरोधापत्तिः । 'यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः' इत्यत्राभेद एव प्रतिपाद्यः । किन्तु स गौणः । 'सह ह्येतावस्मिन् शरीरे वसत' इत्यादिवाक्यशेषात् । प्राणप्रज्ञोपहितात्मस्वरूपाभेद एव वा प्रतिपाद्यः, तस्य प्रकरणित्वात् प्राणादिपदस्यैवोपहितवृत्त्युपपत्तेः । 'यद्वाव कं तदेव खं यदेव खं तदेव क'मि'त्यत्रापि ब्रह्मस्वरूपाभेद एव गम्यते । प्रकृते च तदात्मकस्त्वं त्वच्छरीरकं तदित्यर्थभेदे सति व्यतिहारासामञ्जस्यात्, 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः' इत्यभेदबोधिशास्त्रान्तरैकार्थ्याच्च । यत्त्वभेददर्शनार्थानीमानीति । तन्न । तथापि सामानाधिकरण्यस्य पदार्थाभेदपरत्वानपायात्, स्वरूपोपदेशमात्रपर्यवसानाच्च । अपिच व्यतिहारेषु ब्रह्मणि संसार्यात्माभेददर्शनविध्युपगमे 'ब्रह्मदृष्टिरुत्कर्षाद्' (ब्र० ४. १. ५) इति न्यायविरोधः । न च सामान्यन्यायो विशेषवचनेनापोद्यते । वचनस्याभेदपरत्वेऽप्युपपत्तेः । न च सत्तयैवाभेदं बोधयच्छास्त्रं भ्रममूलेदरजतादिवाक्यवदसद्विषयं शक्यं कल्पयितुम् । नाप्यौपचारिकं, प्रयोजनाभावात् । 'यजमानः प्रस्तरः' इत्याद्युपचारस्य प्रस्तरसादनादिविधेयप्रशंसादिप्रयोजनत्वात् । न च ब्रह्मोपासनमन्यत्र विधीयमानमिह जीवाभेदोपचारेण प्रशस्तं भवति । प्रत्युत प्रवृत्ति[1]विघाताय निन्दितमेव स्यात् । जीवस्य तु ब्रह्माभेदोपचारेण प्रशंसा भवन्त्यपि निष्प्रयोजना, तस्यानुपास्यत्वात् । अत एवाहमादिपदस्य ब्रह्मणि शक्त्या सामानाधिकरण्यमिति निरस्तम्, अग्न्यादिपदसमभिव्याहारविरोधात् । यत्त्वत एवाहंपदस्याहङ्कारवृत्तित्वे तव सामानाधिकरण्यानुपपत्तिः सर्वमानपथातिवर्ति-

---

१ 'त्त.' ख. पाठः.

निर्विशेषस्वरूपलक्षणया तदभेदो देवानामेवोपदेश्यः । अपिचैवमवक्रात्मन्य-स्मिपदवृत्त्युपगमेऽन्तर्यामिण्येव तदपि वर्तताममिति । तन्न । एवं हि 'यो वेदाहं ब्रह्मास्मीति स इदं सर्वं भवती'ति को नु वाक्यार्थः स्यात् । अहं ब्रह्मास्मीति यदवेत् तद्यो वेदेति । तत्र चाधिकावापे गौरवम् । तटस्थवेदनं चैवमापद्येत । तत्र चात्मा ह्येषां स भवतीति प्रशंसा । 'अथ योऽन्यां देवतामुपास्ते' 'न स वेद यथा पशुरेव स देवानाम्' इत्यादिनिन्दा चानाञ्जसी कल्प्येत, अथापि नाधिकमावप्स्यत यदि 'अस्मद्युत्तमः' (१ ४ १०७) इति नान्वशासिष्यत । अस्मदादेशस्य चाहम प्रत्यग्वृत्तितयान्तर्यामिवृत्त्याहंगोऽतथात्वेऽस्मिपदसामा-नाधिकरण्यानुपपत्तिः । अस्माकं तु प्रत्यगात्मनोऽप्यहमर्थानुषङ्गादावास्मि इत्यादाविवोत्तमपुरुषवृत्तिरुपपन्ना । यत्तु निर्विशेषचैतन्यस्वरूपाभेदो देवाना-मुपदेश्य इति, तत् तथैव । दैवसम्पदमभिजातानामेवैष उपदेशः, न त्वादृ-शामासुरसम्पदुपहतानाम् ॥

---

## ब्रह्मण्यहमादिपदशक्तिनिरासः ।

अपिच ब्रह्मणि नाहमादिपदशक्तिरुपपन्ना, तत्र लौकिकबुद्ध्यगोचरे तद्व्यवहाराभावात् । न चौपनिषदव्यवहारमूलः शक्तिग्रहः, उपनिषत्स्वप्यस्म-(दो? द.) प्रतीच्यप्रयोगात् । 'सोऽहं नामाभवदि'ति च हिरण्यगर्भविषयं नान्तर्यामिविषयम्, 'आत्मैवेदमग्र आसीत् पुरुषविधः' इति प्रकृत्य 'अहमि-त्यग्रे व्याहरत् सोऽहं नामाभवदि'ति श्रुतेः । हिरण्यगर्भश्च

> "मनो महान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः ।
> प्रज्ञा संविच्चितिश्चैव स्मृतिश्च परिपठ्यते ॥"

प्रत्यगात्माविविक्ता च बुद्धिः, (?) अहङ्कारोऽस्मदर्थ इति । न च 'अहमि-त्यग्रे व्याहरदि'ति तदन्तर्यामिविषयं, 'नान्यदात्मनोऽपश्यदि'ति व्यतिरिक्ता-दर्शनवचनादिति शङ्क्यम् । 'आत्मैवेदमग्र आसीत् पुरुषविधः' इति लिङ्ग-समष्टिमयादन्यस्य भूतभौतिकादेरभावोपक्रमात्, तस्यैव स्वस्मादन्यस्यादर्शन-वचनात् । अन्यथा ब्रह्मणोऽन्यस्य स्वस्यैव दर्शने तत्र स्वातन्त्र्येणेत्युपक्षिप्या-न्यादर्शनवचनं कल्प्येत । तस्मादपि 'एतर्ह्यामन्त्रितोऽयमहमि'त्येवाग्रे उक्त्वा 'अथान्यन्नाम प्रब्रूत' इति लौकिकाहंव्यवहारस्य निदर्शितत्वेन तद्वदेव प्रत्य-गात्मोपसृष्टाहङ्कारविषयत्वौचित्याच्च । 'तस्योपनिषदहमि'त्यत्राप्यध्यात्ममक्षि-

पुरुषस्य जागरव्यवहारिणोऽहङ्कारोपसर्गादहमर्थस्य तत्सञ्ज्ञाया उपासनार्थमुपदेशाद् ब्रह्मणि तच्छक्तिग्रहणानुपपत्तेः । एतेन 'मामेव विजानीहि' इतीन्द्रस्य, 'अहं मनुरभवमि'त्यादि वामदेवस्य च ब्रह्मण्यस्मत्पदप्रयोगो व्याख्यातः । प्रत्यक्-चैतन्यस्य सत्तामात्रस्य ब्रह्मणोऽहङ्कारोपसर्गेणाहंपदशक्यस्य शास्त्रदृष्ट्या निष्कृष्टस्योपदेशोपपत्तावन्तर्यामिणि तत्पदशक्तिकल्पनानवकाशात् । न चेदनेन वाक्येन ब्रह्मणि तत्पदव्युत्पादनार्थं ब्रह्मज्ञानविधानार्थं च, यद् ब्रह्मनाम तदहं तं मा विजानीहीति वाक्यावृत्तिप्रसङ्गात् । वामदेववचनोपन्यासश्च ब्रह्मदर्शनस्य सर्वात्मभावफलत्वप्रसिद्ध्यर्थो नाहंपदव्युत्पादनार्थः । प्रयोगमात्र न शास्त्रसिद्धां शक्तिं कल्पयतीत्युक्तम् । एवं 'त्वामेव विजानीयामि'ति चानेनैव दिशा व्याख्यातम् । तस्माद् वाक्यार्थबोधाय पदार्थव्युत्पत्त्यपेक्षायामहमादिपदं जीव एव व्युत्पद्यते लोकव्यवहारात् । एतेन पूर्वपूर्ववेदार्थव्युत्पन्नजनप्रवर्तितलौकिकव्यवहारमूला ब्रह्मण्यहमादिपदव्युत्पत्तिरुत्तरोत्तरेषामिति परास्तम्, अन्तर्यामिणो लोकव्यवहाराननुपातित्वात् । विनेयोपदेशरूपव्यवहारस्य च विधितुल्यतया लोकव्युत्पत्त्यपेक्षयैव बोधकत्वात् । पूर्वपूर्वस्य पूर्वतरपूर्वतरवैदिकव्यवहारमूलव्युत्पत्तिकल्पनाया अन्धपरम्पराकल्पनामात्रत्वात् । अत एव लोकव्युत्पत्त्यनुसारेण कथञ्चिदहं ब्रह्मास्मीतिप्रतिपन्नार्थोऽनन्तरं वैदिकप्रयोगबाहुल्यादन्तर्यामिण्यपि शक्तिं कल्पयतीत्ययुक्तम् । स्वप्रयोजनाभावाद्, उपदेश्यस्यापि तथैवार्थप्रतिपत्त्युपपत्तौ शक्तिकल्पनावैयर्थ्यात् । अथ स्वर्गकामस्य क्रियाकार्यत्वानुपपत्तिविमर्शवतः 'स्वर्गकामो यजेते'त्यत्रैवापूर्वकार्ये लिङादि व्युत्पद्यते । एवमिहापि विरुद्धार्थसामानाधिकरण्यानुपपत्तिविमर्शवतोऽहं ब्रह्मास्मीत्यादावेवाहमादिपदं ब्रह्मणि व्युत्पद्यतामिति चेद् । न । सामानाधिकरण्यस्यान्यथैवोपपत्तौ शक्तिकल्पनानवकल्पनात् । ननु च युष्मदस्मदोरात्मत्वेन परमात्मन्यपि शक्तिः स्यात् । न । प्रयोगमूलायाः शक्तेः सम्बोध्यप्रत्यक्त्वाभ्यामवच्छेदात्, तयोः प्रयोगोपाधित्वेऽपि परमात्मन्यसम्बोध्येऽप्रतीचि च तत्प्रयोगस्येहायोगात् । नहि 'तत् त्वमसि श्वेतकेतो' इत्यन्तर्यामी सम्बोध्यते । न वा 'य एवं वेदाहं ब्रह्मास्मी'त्यत्र प्रत्यङ् निर्दिश्यते । सर्वथैवास्यास्मिसमभिव्याहारविरोधानुद्धाराच्च । 'अयमात्मा ब्रह्मे'त्यत्राप्यपरोक्षनिर्दिष्टात्मशब्दस्य परोक्षब्रह्मवृत्त्यसम्भवादुक्तगत्या भावाच्च ।

१ 'त्यभावा' क पाठ,

यदप्युपादानोपादेयावस्थब्रह्माभेदे चिदचिदात्मपदसामानाधिकरण्यमुख्यतेति । तन्न । जगद्विवर्तोपादानत्वं हि ब्रह्मणो न नाभिज्ञैरनुमन्यते । नापि परिणामित्वम्, अवि[1]भक्तनामरूपशक्तिमात्रावस्थसमस्तचिदचिद्विभागतमःप्रकृत्यादिशब्दितपरमात्मसूक्ष्मोपाधेरेव विभक्तनामरूपस्थूलचिदचिद्रूपेण जगदाकारपरिणामित्वोपगमाद्, अन्यथा निर्विकारत्वाम्नानविरोधात् । एवं चातदवस्थे तदवस्थवृत्तपदसामानाधिकरण्यमुख्यतानुपपत्तिः । न च ब्रह्मशब्दोऽपि परिणामितमोविशिष्टवृत्तिरिति वाच्यम् । 'अक्षरात् परतः परः' 'आदित्यवर्णं तमसः परस्तात्', 'अक्षरादपि चोत्तमः' इत्यादिस्वरसविवेचनेन तदुपस्थापनस्वरसस्य तस्य तमोविशिष्टविषयत्वकल्पनायोगात् । बाधेन विवर्ताधिष्ठानतया सर्वं ब्रह्मेत्यादिसामानाधिकरण्योपपत्तेश्च । अपि च न जीवस्य स्वरूपेण परमात्मोपादेयता, नित्यत्वात् । वक्ष्यति सूत्रकारः — 'नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः' (ब्र० २. ३. १२) इति ॥

---

## जीवनित्यत्वम् ।

ननु जीवानामुत्पत्तिः श्रूयते परमात्मनः 'सर्व एत आत्मानो व्युच्चरन्ति', 'जीवान् विससर्ज भूम्यामि'त्यादिषु । 'स वा एष महानज आत्मा' 'न जायते म्रियते वा विपश्चित्', 'न जीवो म्रियते', 'अविनाशी वा अरेऽयमात्मा' 'नित्यो नित्यानामि'त्यादिषु जीवस्योत्पत्तिर्विनाशो वा निषिध्यत इति चेद् । नैतावता श्रुतोत्पत्तिर्वारयितुं शक्यते । न चैवं कृतहानादिप्रसङ्गः, जीवस्यानादित्वात् । उत्पद्यते चानादिरित्यसबद्धमिति चेद् । न । विवक्षाविशेषोपपत्तेः । कारणस्यावस्थान्तरापत्तिर्हि कार्योत्पत्तिः । तत्र वियदादिरचिदंशः स्वरूपेणैव ब्रह्मणोऽवस्थान्तरमुत्पद्यते । जीवस्तु सत्येव स्वरूपे ज्ञानसङ्कोचविकासेन । एतदुक्तं भवति—भोक्ता भोग्यं प्रेरिता चेति त्रिभङ्गिस्तावदुपनिषदां प्रवृत्तिः । तत्र नियन्तुरविभक्तनामरूपतया व्यपदेशानर्हातिसूक्ष्मचिदचिद्वस्तुशरीरात् कारणावस्थाद् भोग्यरूपाचिदंशस्य भोग्यरूपेण स्वरूपान्यथाभावविकारे सति, चिदंशस्य भोक्तृरूपविकलस्य नानाकर्मफलभोगानुगुणतत्तद्देहसबन्धनिबन्धनज्ञान-

---

१. 'विक्त' ख पाठः

सङ्कोचविकासरूपाविकारापत्तौ, तदवस्थचिदचिद्विशिष्टतया नियन्तुरेव सावस्थान्तरापत्तिरिति सैव जीवस्याचिदंशविकारोपाधिका परमकारणादुत्पत्तिरभिधीयते। स्वरूपेण तु जन्मादि निषिध्यत इति न किञ्चिदसबद्धमिति चेद्। न। एतावता जीवस्य स्वरूपेण तदेकशब्दत्वप्रयोजकपरमात्मावस्थान्तरत्वासिद्धे। न चाचिदंशाभेदवृत्तमहद्ब्रह्मशब्दसामानाधिकरण्यम्, असङ्गनिर्वाणमयाविशेषात्मस्वरूपपरिशोधनफलवत्त्वाय तदभेदपरत्वौचित्याद्, विशेष्यांशस्य स्वप्रधानत्वात्॥

---

### प्रकारशब्दस्य प्रकारिपर्यन्तत्वभङ्गः।

यदपि चिदचित्प्रपञ्चशब्दस्य तत्प्रकारिब्रह्मपर्यन्ततया तत्पदसामानाधिकरण्यमुख्यतेति। तत्र वक्तव्यम्। केय प्रकारिपर्यन्तता नामेति। यदि वृत्तिं विना बोधकता, तदसम्भव, सर्वप्रमाणानामेव सबद्धार्थबोधित्वात्। अन्यथा लक्षणादिकल्पनानर्थक्यात्। वाक्यार्थेऽपि शब्दवृत्तिर्वक्ष्यते। अथ दुर्दर्शे दर्शनीये तदनन्तरसुदर्शदर्शनमविक्षेपमक्षिप्रणिधानायेति न्यायेन प्रकारिबोधपर्यवसायितैव प्रकारशब्दस्य प्रकारिपर्यन्ततेति चेद्। नैतत् सार, वृत्त्या विना पदसामानाधिकरण्यासभवात्। भिन्नप्रवृत्तिनिमित्तानामेकार्थवृत्ति. सामानाधिकरण्यमित्युक्तम्। वृत्तिरेव तत्र पदानामिति चेत्, सा यदि परमप्रकारिण्यन्तर्यामिणि गवाहमादिपदाना गोत्वाहन्त्वादिनिमित्ता शक्तिरेव, तर्हि पृच्छामः किं गवादिपदाना गवादिषु शक्त्यन्तरेण प्रयोगो लक्षणया वा शक्तिभ्रमेण वेति। नाद्य.। प्रवृत्तिनिमित्ताभेदे शक्त्यन्तरासभवात्। गवादेरप्यन्तर्यामिणि पदवृत्तिनिमित्तसबन्धघटकतया तदन्तर्भावेन तदेकशक्तिकत्वासभवात्। न च निमित्तसबन्धभेदेन शक्तिभेद, अक्लृप्तत्वात्। प्रवृत्तिनिमित्तवत्तया गवादिष्वपि गवादिपदशक्तिरिति चेद्, न तर्हि ब्रह्मणि शक्ति', प्रवृत्तिनिमित्तसबन्धाभावात्। नहि प्रवृत्तिनिमित्ताश्रयतामनन्तर्भाव्य गवादेस्तत्सबन्धघटकता घटते। न च गवादिपदादाश्रयतया तदुपस्थितौ सत्या पुनः परमात्मोपस्थितौ व्यापार., विरम्य व्यापारायोगात्। शक्योपस्थित्यैव लक्ष्योपस्थितिरिव

---

१. 'न्व', २. 'त् तदाध' ए पाठ..

स्यादिति चेद् । न । शक्योपस्थितिद्वारेणैव पदस्य लक्ष्योपस्थितिहेतुत्वात् । पूर्वानुभवयागादीनां संस्कारपूर्वादिद्वारेव स्मृतिस्वर्गादिहेतुत्वम् । ब्रह्मणस्तु गवादिपदेनैवोपस्थितिर्वाच्या, अन्यथा लक्षणापातात् । तत्र च विरम्यव्यापारो दोषः । अथ तदन्तर्भूतत्वेनोपस्थितस्यैव गवादेरात्मनि गवादिपदवृत्तिनिमित्तसंबन्धघटकता, ततो गवादिपदेन ब्रह्मैवोपस्थापनीयमिति न विरम्यव्यापार इति । न । गवाद्युपस्थापकत्वनियमात् । पदजन्योपस्थिते: परम्पराघटकाविषयत्वेन साक्षात्प्रवृत्तिनिमित्तवैशिष्ट्याविषयाया भ्रान्तित्वापत्तेः । परम्परानवगाहिन्याः संसर्गोपस्थिते: साक्षात्संबन्धविषयत्वानियमात् । अत एव 'स्वतन्त्रः कर्ता', 'तत्प्रयोजको हेतुश्च' (१. ४. ५४, ५५) इति द्विरूपे कर्तरि सामान्येन 'लः कर्मणि च—' (३. ४. ६९) इत्यनुशासनेऽपि 'यावतोऽश्वान् प्रतिगृह्णीयादि'ति प्रतिग्रहकर्तृत्वगतिः साक्षात्कर्तृविषया मा भूद् भ्रान्तिरुपक्रमविरोधिनी वेति हेतुमण्णिजर्थलक्षणया वा, 'प्रजापतिर्वरुणायाश्वमनयदि'ति प्रक्रमोपस्थितदानोपसंहारेण वा, परम्पराविषयावस्थाप्यते । अन्यथा देहादावात्मत्वादिबुद्धिर्भ्रान्तिः स्यात्, साक्षात्परम्परौदासीन्येन संबन्धमात्रावगाहनस्य कथञ्चिद् याथार्थ्यसंभवात् । प्रतिग्रहेष्टिनयश्च न पृथगारभ्येत । 'अचोदितं च कर्मभेदाद्' (जै० ३ ४. ३६) इति प्रयोजके दातर्यप्यौपसंहारिकप्रतिग्रहकर्तृसामान्यावगतेरुपक्रमाविरोधात् । अथात्मनि गोत्वादिसंबन्धघटकतया गवादेर्न गवादिपदशक्यता । न च परम्परातिप्रसङ्गः, प्रकारप्रकारिभावस्य नियामकत्वात् । तथाच नीलत्वनिमित्तेन नीलपदस्य द्रव्य इव गोत्वादिनिमित्तेन गवादिपदस्य ब्रह्मण्येव शक्तिरिति चेद्, एवं गवादौ गवादिपदप्रयोगो निखिललौकिकव्यवहारानुगतो लक्षणया शक्तिभ्रमेण वा गिरिखननगिरिकाग्रहणन्यायकल्प्यो वैदिकप्रयोगः शक्त्येति साधु न्यायवित्त्वं तान्त्रिकस्य । अपिचैवं प्रकारतैव पराभिमता नीलादेः प्रत्यादिश्येत, भेदकाकारस्य भेद्यसंबन्धानवगाहनात् । परम्परायाश्च नियामकाभावेनातिप्रसङ्गात् । शुक्लपटाविति विशेष्यपदप्रत्ययसंभवे शुक्लस्य स्वातन्त्र्येण प्रत्येयत्वेनापृथक्सिद्धत्वानियमात् । विशेष्यतया प्रतीतिसंभव इति विवक्षाया दण्डस्यापि विशिष्टप्रत्यये पृथक् स्थितत्वेन स्वातन्त्र्येणाप्रत्येयतयातिप्रस-

---

१ 'वित्वात्', २ 'ग' ख. पाठ

ङ्गात्। न च देवादिकमपि सर्वथा पृथक्सत्त्वेन न प्रतीयते, पुमान् न देवो नरो न पशुरित्यादिप्रत्ययात् । इदं तर्हि तदेकाश्रयत्वम्। न, तत्सबन्धैकायत्तस्थितिकत्वस्य नित्येषु स्वरूपेणाऽनियाम्यत्वाद्, विशेषणविशेष्यभावादिरूपतश्चान्योन्यसम्बन्धायत्तस्थितिकताया अव्यवस्थानात् । इदं तर्हि तदेकप्रयोजनत्वम् । किमिद, तदननुबन्धिकार्यविनियोगशून्यत्वमिति यदि, तादर्थ्येनैव कार्यविनियोग इति शुक्लमधुरादावसम्भवः । दर्शनस्वदनादिकार्यविनियोगस्य पुरुषार्थत्वात्। अथ तद्विशिष्टस्यैव कार्यविनियोग इति। न। ब्रह्मविदो देहस्यातद्विशिष्टस्यैव दिष्टान्तकार्यविनियोगाद्, जगतश्चोभयथापि ब्रह्मानुबन्धिकार्यविनियोगवत्त्वेनाव्यापनाच्च । अत एवेयमेवापृथक्सिद्धिरिति निरस्त, बहुलमव्यापनात्।

किञ्चैवमाकाशादिशब्दाना ब्रह्मण्येव परमा शक्तिरिति नास्तिपूर्वपक्षम् 'आकाशस्तल्लिङ्गात्' (ब्र० १. १. २२) इत्याद्यधिकरण प्रसज्येत। नहि जगदुत्पत्त्यादिलिङ्गानुगृहीतब्रह्मश्रुतिरूपाकाशादिशब्दो लाक्षणिकभूताकाशादिविषये शक्यशङ्कः। अथ लोकव्युत्पत्त्या तेषु तेष्वर्थेषु शक्तिरुपेयेत, न तर्हि तेषा ब्रह्मणि शक्तिः, उक्तदोषानुषङ्गात् । अपिचैव ब्रह्मण. सर्वपदवाच्यत्वे 'ब्राह्मणो यजेत', 'मद्य ब्राह्मणो वर्जयेद्' इत्यादिविधिनिषेधाधिकारित्वमीश्वरस्य प्रसज्येत। न खलु प्रथमोपस्थितेऽपि देहे ब्राह्मणशब्दः पर्यवस्यति। तत् कस्य हेतोः, जीवपर्यन्तत्वोपगमात्। एव ब्रह्मपर्यन्तत्वोपगमे प्रथमोपस्थितमपि जीवमतिक्रम्य विशेष्यस्य ब्रह्मपर्यवसान युक्तम्।

यत्तु ब्राह्मणादिशब्दैः प्रथमोपस्थिततत्तच्छरीराभिमानि[1]जीवान्वयेन झटिति वाक्यार्थबोधनिष्पत्तौ सत्यां तावतैव वाक्यप्रामाण्यस्य चरितार्थतयेश्वरस्य सर्वान्तर्यामित्वमन्तर्यामिणं प्रति नियाम्याना शरीरत्व शरीरवाचिशब्दानां शरीरिपर्यन्तत्व श्रुतिन्यायाभ्यामवगन्तव्यमपेक्ष्य विलम्बितोपस्थितिकस्येश्वरस्यान्वयेन पुनर्वाक्यार्थबोधान्तर नोदेतुमर्हति। अत एव 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इत्यत्र प्रथमोत्तमशब्दाभ्या शीघ्रोपस्थितिकयोः प्रथमचरमस्थानयोरेव वाक्यार्थान्वयः। न तु प्रथमचरमस्थानानुवचनीययोः 'प्रवो वाजा, आजुहो तदुपस्यत' ऋचोर्विलम्बितोपस्थितिकयोरिष्यत इति । व्या-

१. 'नी' स्व पाठः.

मोह एषः । तटस्थो हि ब्राह्मणादिप्रत्ययो जातिविषयो यथायोगं विशेषेषु सङ्क्रामन् न विशिष्यते । श्रुतिन्यायौ च ब्रह्मणि शक्तिग्रहोपक्षीणौ न प्रत्यय-कार्यकालौ, येन तदपेक्षया विलम्ब इष्येत । न च तत्तच्छरीर जीवमभिधाय परमात्मानमभिधत्ते, वृत्तिविगमप्रसङ्गात् । तस्य तस्य प्रत्येतु प्रत्ययस्तु व्य-क्तिविशेष एव प्रथम इति तत्रैव वाक्यप्रामाण्यन्नारिताध्र्ये सामान्यद्वारविलम्बितो-पस्थितिकविशेषान्तरान्वयबोधान्तरानुदयप्रसङ्गात् । 'त्रि. प्रथमामन्वाहे'त्यादौ तु युक्त प्राथम्याद्युपाधिनैव सामान्यप्रत्ययाद् यथाविषयमनुवचनव्यवस्थेति । यत्तु राजा न स्वानुशासनविषय इति निदर्शन तद् वेदापौरुषेयत्वेन प्रतिविधेयम् । अपिच राजधर्म वा राजा ब्राह्मणधर्म वा ब्राह्मणोऽनुशासत् स्वयमन्यथावृत्तिर्वृद्धहंसाख्यायिकया (न) निन्द्येत । तथाच न विधिनिषेधोल्लङ्घने जीवः प्रत्यवेयात् , नापि कर्मणा ससरेद् मुच्येत वा । न च ब्राह्मणः शुक्ल इत्यादाविव ब्रह्मणोऽयोग्यतया जीव विशेषणमेवावक्रामति विधिरिति वा-च्यम् । ब्राह्मणशरीरेत्वातिरिक्तविधियोग्यताया जीवेऽप्यभावात् । कर्मवश्य-ता च ब्रह्मपर्यन्तत्वेऽस्माद्विधेरेव प्रसज्यमाना वारयितुमशक्या । अत एव सुखदु.खादिभाक्त्वस्यापि प्रसङ्गात । न च श्रुत्यन्तरविरोधः । जीववदात्म-न्यपहतपाप्मत्वादेरवस्थाभेदनेयत्वोपपत्तेः ॥

---

### ब्रह्मणः सर्वशब्दवाच्यत्वनिरास. ।

अपिच 'यद्वाचानभ्युदित,' 'नैव वाचा न मनसा प्राप्तु शक्य.', 'यतो वाचो निवर्तन्ते', 'सत्तामात्रमगोचर वचसा'

"रूपवर्णादिनिर्देशविशेषणविवर्जित:"

इत्यादिवाच्यत्वसामान्यनिषेधो जातिगुणादिपदवृत्तिनिमित्ताभावमूलो ब्रह्मणः सर्वपदवाच्यत्वे विरुध्येत । यत्तु श्रूयते सर्वपदवाच्यत्व ब्रह्मण इति । तन्न, श्रुतौ नामरूपव्याकर्तृत्वमात्रावगमात् । व्याकृतत्वाव्याकृतत्वे हि व्यवहारार्हत्व-तदनर्हत्वे तस्य रूपात्मनेव नामात्मनाप्युपपद्येते । 'यथार्द्रैधाग्ने. पृथग्धूमा वि-निश्चरन्ति एवमेवास्य महतो भूतस्य नि.श्वसितमेतद् यद् ऋग्वेदः' इत्यादि-श्रुतेः । 'ऋचो यजूंषि सामानी'त्यादिनामप्रपञ्चमनुक्रम्य

---

१. 'रि' ख. पाठ

'शब्दमूर्तिधरस्यैतत् वर्ष्म विष्णोर्महात्मनः ।'"

इति स्मृतेश्च । एवञ्च यादृशरूपवैशिष्ट्यं ब्रह्मणस्तादात्म्यं तादृशमेव नामवैशिष्ट्यं श्रुतिप्रतीतमिति तत्र नामवाच्यत्वमनन्यम्, उपादानतयैव तत्सिद्धेः । यत्त्वेवरूपव्याकरणोक्तिसिद्धत्वाद् नामव्याकरणं पृथङ् नोच्यतेति । तन्न, 'त्रयं वा इदं नामरूपं कर्मे'ति व्याकृतप्रपञ्चकोटौ स्वभावभेदविवक्षादर्शनात् । अवान्तरसर्गेऽपि

"नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥"

इति भेदनिर्देशादादिसर्गेऽपि विरिञ्च्य नामरूपनिष्पत्तिविवक्षोपपत्तेः । 'धाता पुरस्ताद् यमुदाजहारे'ति च न प्रकृततत्नामवाच्यत्वं गमयितुमर्हति, अर्थप्रत्यभिज्ञानेन 'सोऽहमस्मीत्यग्रे व्याहरदि'त्यस्योपस्थानात् । नान्यदात्मनो ब्रह्मणोऽपश्यदिति लिङ्गेन, 'यत्र नान्यत् पश्यती'त्यादिलिङ्गेन तदहव्याहारस्य परमते शक्त्यैव ब्रह्मविषयत्वोपपत्तेः । अस्माकमपि लक्षणया प्रत्यगभिन्नब्रह्मविषयत्वोपगमेऽप्यविरोधात् । 'सर्ववचसां प्रतिष्ठा यत्रे'ति च स्वरूपप्रतिष्ठयाप्युपपत्तौ वाचकत्वासिद्धेः । प्रतिष्ठाशब्दस्य स्थित्यभिधायितया वाचकतयेत्यावापप्रसङ्गात् । न चैव नामरूपप्रपञ्चस्यैव प्रतिष्ठा ब्रह्मणीति तदेकदेशग्रहणायोग इति शङ्क्य, 'वाक् तन्तिः नामानि दामानि वाचा तन्त्या नामभिर्दामभिः सर्वं सित', 'सर्वं हीदं नामनी'ति श्रुतेर्वागर्थाविनाभावेन लक्षणाया वा शब्दसंकीर्णावभासितया सर्वस्याभेदोपचारेण वा वचसामित्येव सर्वानुवादोपपत्तेः । एवञ्च 'तदनुप्रविश्य' तादात्म्येनाभिव्यज्य, अन्यादृशप्रवेशानिरूपणात् 'सच्च त्यच्चाभवद्', 'इदमयोऽदोमय' इत्यादिश्रुतेस्तत्तद्विकारभावेन विवृत्तं ब्रह्मैवेति तेन तेन रूपेण तदेव सर्वशब्दवाच्यमित्येवपरम् । 'वचसां वाच्यमुत्तममि'त्यादि नाहत्यैव ब्रह्मणो वाच्यत्वपरमुक्तदोषात् । न चैनमपि 'सर्वं ब्रह्मे'त्यादिसामानाधिकरण्यमुख्यता । विवर्तरूपेण बाध्येन ब्रह्मणः स्वरूपाभेदानुपपत्तेः । विवर्तपरिशेषे शून्यवादप्रसङ्गाद्, ब्रह्मपरिशेषे च विवर्तबाधस्य नान्तरीयकत्वात् । यद्युच्येत — झङ्करोति सरोरुहमित्यादौ सरोरुहादिपदस्य भ्रमरादाविव तात्स्थ्यादहमादिपदस्य ब्रह्मणि लक्षणेति, तर्हि सामानाधिकरण्यमुख्यत्वभङ्गः, प्रकारशब्दस्य प्रकारिशक्त्युपगमबाधप्रसङ्गश्च । अपिच यो यत्सब-

न्धी यथा विज्ञातः तत्र हि तत्पदलक्षणा स्यात् । स्मर्यमाणशक्यसबन्धस्यैव लक्षणात्वात् । न च प्रागस्मादुपदेशादात्मान्तर्यामितया परमात्मा बोध्येन विज्ञातः । तथा सत्युपदेशानर्थक्यात् ॥

---

अपृथक्सिद्ध्या प्रकारप्रकारिभावनिरासः ।

अथापि कथञ्चिज्जीवे जीवप्रकारिणि ब्रह्मणि च शक्तिभेद उपागस्यत यदि, नीलमिति तद्विशिष्टद्रव्यमिवाहमिति जीवविशिष्ट॰ परमात्मा प्रत्यै(ष ? प्य)त । न चैव, न वा जीवपरयोः प्रकारप्रकारिभावोऽपि । अपृथक्सिद्धविशेषणविशेष्यत्वाभावात् । 'आत्मानमन्तरो यमयती'त्यादावन्तर्यामिबुद्धौ जीवत्वस्य तत्संबन्धानवगाहनात् । अह ब्रह्मेत्यादिसामानाधिकरण्यस्याधुनैव निरूप्यत्वेन ततस्तदसिद्धे', प्रयोजकानिरूपणाच्च । नहि सहोपलम्भस्थितिनियमो जीवपरयोर्मनसा वा 'य सर्वज्ञ' इत्याद्यागमेन वा, दण्डपुरुषयोरिव स्वतन्त्रोपलम्भात् । तयोरुपादानोपादेयता च नेत्युक्तम् । अथोपादेयस्य व्याप्यतयोपादानेनापृथक्सिद्धिरिति ब्रह्मव्याप्यतया सर्वस्य तदपृथक्सिद्धि॰ स्यादिति चेद् । न । आकाशव्याप्यस्य सर्वस्य तत्प्रकारत्वप्रसङ्गात् । तेन सर्वात्मना व्याप्यं तत्प्रकार इति चेद् । न । तस्यैव तद्भावापत्तौ हि तत् सर्वात्मना तेन व्याप्येत तरङ्गादिरिव जलेन, अहिरिव वा रज्ज्वा, जलाकाशादिरिव वाकाशेन। जीवस्य च परस्मात् स्वतो भेदे सति तदनुपपत्तेः । अथोत्पलापृथक्सिद्धगुणद्वारा नीलत्वस्य तत्प्रकारत्ववद् ब्रह्मापृथक्सिद्धजीवोपाध्यचिदशद्वारा जीवस्य ब्रह्मप्रकारता स्यादिति चेद् । न ।नीलत्वस्योत्पलप्रकारत्वासिद्धे । गुणगुणिनोर्नीलप्रत्ययप्रयोगौ च भिन्ननिमित्तनिबन्धनावित्युक्तं विशिष्टशक्तिनिरूपणे । अपिचैवमचिदशो हि परमात्मन इव देहादिरूपो जीवस्य प्रकार इति ते मतम् । तथा च स्वप्रकाराचिदंशद्वारा तस्य परमात्मैव प्रकार॰ किं न स्यात् । यद्युच्येत — परद्वारा भवन् प्रकार' स्वप्रकारिद्वारा तत्प्रकारिण एव भवतीति, तर्हि देहाद्यचिदशस्य जीव प्रत्यप्रकारितया तद्द्वारा जीवस्य परमात्मप्रकारत्वासंभवः ॥

---

१. 'सब' क पाठः.

शरीरशरीरिभावेन प्रकारप्रकारित्वभङ्गः ।

अथोच्येत — शरीरशरीरिभावेनैव प्रकारप्रकारिता, परस्य च शरीर जीवः 'यस्यात्मा शरीरमि'ति श्रुतेरिति । तन्न । शरीरशरीरिभावेऽपि लोके प्रकारप्रकारिभावासिद्धौ जीवपरयोरेव तत्कल्पनायोगात् । नहि लोके शरीरम-पृथक्सिद्ध्या जीवभेदकमधिगम्यते । अहं मनुष्यः, गौरश्वोऽन्यो वा कर्मभिरात्मा जायत इत्यादिव्यवहारस्य असावहिरिदं रजतमित्यादिवदभेदविभ्रमव्यपाश्रयत्वो-पपत्तेः । विवेकिनामपि व्यवहारसमये लोकसामान्याननतिवर्तिनामनादिप्रवृत्तवा-सनानिमित्तयथागतलौकिकव्यवहारमनुरुन्धानानां भोगतावन्मात्रोपयोगिविभ्रम-रूपाहमनुष्यादिव्यवहाराविरोधात् । अथवा आत्मादिशरीरान्तेऽन्वयः पिण्ड-वदाविद्यकतादात्म्यादेकतापन्ने सम्पिण्डे गृहीतशक्तिकमहमादिपदं विविक्तात्म-दर्शिनो यदि लौकिकव्यवहारेऽहं मनुष्यो गच्छामीत्यादौ निष्कृष्टशरीरेऽहं ब्रह्मा-स्मीत्यादौ निष्कृष्टात्मनि वा लक्षणया प्रयुञ्जीरन् । न तावता शरीरात्मनोरपृ-थक्सिद्धिर्विवेकिव्यवहारमूला शक्याश्रयितुम् । न चाविवेकिनामपि नाहम्प्र-त्ययो देहाद्यविविक्तात्मविषयो विभ्रमः, आत्ममात्रविषयत्वात् । तथा चाहं मनुष्य इत्यादिव्यवहारः प्रकारप्रकारिभावमुपहरतीति वाच्यं, देहात्मविवा-दाभावप्रसङ्गात् ।

"पिण्डः पृथग् यतः पुंसः शिरःपाण्यादिलक्षणः ।
तदाहमिति कुत्रैतां सञ्ज्ञां राजन्! करोम्यहम् ॥"

इति देहविविक्तात्मन्यहंशब्दप्रत्ययायोगस्मरणात् ।

"अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः ।
अविद्यातरुसम्भूतिबीजमेतद् द्विधा स्थितम् ॥"

इत्युक्ताविद्याया एव

"पञ्चभूतात्मके देहे देही मोहतमोवृतः ।
अहमेतन्ममेत्युच्चैः कुरुते विमतिर्मतिम् ॥"

इति विषयविशेषोपसंहारेणाहंप्रत्ययात्मकत्वस्मरणाच्च । 'ब्राह्मणो यजेते'ति च पारलौकिकात्मसत्तामात्राधिगमाविरोधिदेहतादात्म्याविद्योपादानमेव । न

खल्वात्मा ब्राह्मण इत्यादिप्रकारेण वस्तुस्वरूपोपदेशोऽयमागमः, किन्तु यथासिद्धकारकस्वरूपोपादानेन क्रियाविधिपरः । तत्र यद्यात्मनो ब्राह्मणादिशरीर प्रकारः, यदि वा अविद्यया तादात्म्यापन्नम्, उभयथापि ब्राह्मणोऽहमित्यभिनिविशमानमधिकारिणमुपाददानस्य विधेरौदासीन्यमेव । किन्तु मनुष्योऽहमिति प्रत्ययस्य स्मृत्यनुमतेऽविद्यात्वे तादृशवेदव्यवहारोऽपि तदाश्रय एवेति न शरीरमात्मनः प्रकारः ।

यदपि 'त्वं स्त्री त्वं पुमानसी'त्यादि वस्तुनिष्ठ सामानाधिकरण्यमुदाहारि, तदपि न । स्त्र्यादिशब्दैरविद्यया तत्तादात्म्यापन्नात्मोपादानात्, तथारू(पे?पो) जीवोऽपि परमात्मैवेति त्व स्त्रीत्यादिसार्वात्म्योपदेशोपपत्ते । 'स एष इह प्रविष्ट आनखाग्रेभ्य.' इति तस्य जीवरूपानुप्रवेशश्रवणात् । 'तदनुप्रविश्य सच्च त्यच्चाभवदि'ति तादात्म्येन सर्वभाववचनाच्च । नह्यात्मनो जगति प्रवेशो बिले सर्पादेरिवान्तर्नि(ल)यन, व्यापित्वात् । नापि गगनादेरिव घटादाववच्छेदः, 'तदात्मान स्वयमकुरुत'त्यनन्यत्वात् । अत एव न सवितुरिव जलादौ प्रतिबिम्ब , अव्यवधानात् । नापि जीवस्येव देवादिसन्निवेशे शरीरिभाव., तादात्म्याभिनिवेशमन्तरेण तदधीनभोगाभावे तच्छरीरि(त्व?त्वा)योगात्, किन्तु तादात्म्येनाभिव्यक्तिरिति । व्यपदेशोपाधिकमेव क्रमवचन, बहु स्यामिति जगद्भावातिरेकेण सर्गानुपवेशानिरूपणात् ।

"नैव स्त्री न पुमानेष नैव चाय नपुसक ।
यद्यच्छरीरमादत्ते तेन तेन स चोद्यते ॥"

इति चात्मनि तत्तद्व्यवहारस्तच्छरीरादाननिमित्तोऽवगम्यते । शरीरस्य चादानमहबुद्ध्या तादात्म्याभिमान एव । अन्यादृशस्य कर्ममूलदेहयोगस्यानिरूपणादित्युक्तम् ।

यच्च —

"ऋत सत्य पर ब्रह्म पुरुष कृष्णपिङ्गलम्"

'हिरण्यश्मश्रुर्हिरण्यकेश.' इत्यादिदिव्यमङ्गलविग्रहसामानाधिकरण्यमात्मनः श्रूयते, तदपि न शरीरात्मनो' प्रकारप्रकारितामुपसहरति । अन्यथा-

सिद्धत्वादेव योगयुजो युञ्जानस्य प्रत्यस्तमितभेदे वाङ्मनसागोचरे सत्तामात्रे ब्रह्मणि धारणाप्रभवात् तदालम्बनाय तत्र तत्र तत्तद्विशेषोपहितं ब्रह्मोपदिश्यमान स्वेच्छामयदिव्यमङ्गलविग्रहतादात्म्येनैवोपदिश्यते, उपदेश्यबुद्ध्यनुरोधात् । सर्वस्य हि स्वस्मादन्यस्मिन्नपि मनुष्योऽयमिति तादात्म्यालम्बनैव लौकिकी बुद्धिरनुवर्तते । न च तद्बुद्ध्यनुरोधेन ब्रह्म विग्रहतादात्म्येन धारणाविषयमुपहरतो निगमस्यातत्त्वावेदकता, तात्पर्यविषये धारणाविषयांशे बाधकाभावात् । न खलु शङ्खचक्राद्याकारविकाराङ्कित शिलापुत्रकमसौ शङ्खी चक्री विष्णुरिति विष्णुमुपदिशन्तो बालेभ्यो वृद्धा विसवदन्ते । तत् कस्य हेतोः । तादात्म्येन पूजाविषयमात्रोपदेशपरत्वात् । तस्माद् न शरीरात्मभावेन शरी-(रि?र)शब्दस्य शरीरिवृत्त्या तत्त्वमस्यादिसामानाधिकरण्यमुख्यत्वम् ।

यदपि 'विश्वं नारायणं देवमि'त्युक्तसामानाधिकरण्यनिर्वाहाय 'तद्विश्वमुपजीवति, पतिं विश्वस्यात्मेश्वर', 'सर्वं व्याप्य नारायण. स्थितः' इति धार्यधारकत्वशेषशेषित्वनियाम्यनियामकत्वानि निर्दिश्यन्ते ।

"योऽय तवागतो देव! समीपं देवतागणः ।
स त्वमेव जगत्स्रष्टर्यतः सर्वगतो भवान् ॥"

"सर्वगत्वादनन्तस्य स एवाहमवस्थितः ।"

'सर्वं समाप्नोषि ततोऽसि सर्वः' इत्यादौ स्पष्टमेव व्याप्यव्यापकत्व सामानाधिकरण्यप्रयोज(कत्व?कं) स्मर्यते । तानि च शरीरात्मभाव इति तन्निबन्धनमेव चिदचित्सामानाधिकरण्यं परमात्मन इति । तदप्यपेशलं, धार्यत्वादिशरीरलक्षणस्यानन्तरमेव निराकरिष्यमाणत्वात् । निमित्तोपादानतया केवलं परमात्मनि श्रुतिवृत्त्युपपत्तेः, 'विश्वं नारायणमि'ति कारणरूपोपादाने चोपादानोपादेयतादात्म्यादेव सामानाधिकरण्योपपत्तेः । न चान्तर्बहिर्व्याप्तिरतादात्म्ये सभवति । न च सर्वगतत्वमात्रमभेदवृत्तिसामानाधिकरण्यप्रयोजकम्, आकाशादावदर्शनात् । न च स त्वमेव स एवाहमिति च सामानाधिकरण्य स्वरूपाभेदमनपेक्ष्याञ्जसमवकल्पते । तच्छरीरकस्त्वं, तदात्मकोऽहमिति लक्षणायामप्यवधारणानाञ्जस्यात् । नापि चिदचित्प्रपञ्चो ब्रह्मणो मुख्यं शरीरमित्युपपत्तिमत् ॥

## जगतो ब्रह्मशरीरत्वनिरासः ।

यत्तावदुक्त — यावत्सत्त्व स्वव्याप्त्या नियाम्यत्वेनाव्यक्तादिविशेषान्तं जगदात्मनः शरीरमिति, तदसत् । गर्भदासादौ तथानियमनयोग्येऽतिचारात् । सत्यकामस्य सत्यसङ्कल्पस्य सर्वज्ञस्य सर्वशक्तेर्यत्र तत्र सत एव सङ्कल्पमात्रेण नियमनोपपत्तौ राजादिवदात्मना नियाम्यव्याप्त्यनपेक्षणाच्च । 'अन्तः प्रविष्टः शास्ता जनानामि'ति तस्यानुप्रवेशेन व्याप्त्या जगन्नियमन श्रूयत इति चेद् । न । 'स मानसीन आत्मा जनानामि'ति वाक्यशेषेणान्तः प्रविश्य शासितुर्मानसीनत्वविशेषणाद्, जीवरूपापन्नस्यैव तस्य व्याप्त्या नियन्तृतापरत्वात् । नहि योऽ'प्राणोऽमनाश्शुभ्रस्तस्य परमात्मनो वाङ्मनसाविषयस्य मानसीनत्वमाञ्जसम् । ननु च जीवस्याप्यन्तः प्रविश्य नियन्ता शास्त्रेण शिष्यते 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीर य आत्मानमन्तरो यमयति' इति, प्रतिपर्यायं च 'यं पृथिवी न वेद', 'यमापो न विदुरि'ति तत्तदभिमानिजीवव्यावृत्त्यैवान्तर्यामिणो नियन्तृत्वाभिधानाद् 'अन्तः प्रविष्टः शास्ता जनानामि'ति च तदेकार्थं युक्तमिति चेत् । सत्य, जीवव्यावृत्तरूपः परमात्मान्तर्यामी प्रतिपादितो न तु स्वव्याप्त्या नियन्ता, तद्व्यावृत्तरूपेण सर्वात्मना तद्व्याप्त्यसम्भवात् । सत्यसङ्कल्पस्य नियन्तृत्वाय तदनपेक्षत्वाच्चेत्युक्तम् । नह्यत्र 'यः पृथिव्या तिष्ठन् पृथिव्या अन्तर' इत्यन्तर्बहिर्भावेन व्याप्त्यभिधानमात्रेण तस्य नियमनहेतुत्वमपि कल्प्य, मानाभावात् । अन्यथा पृथिव्याद्यवेदनस्यापि तथात्वापातात् । 'यः पृथिवीमन्तरो यमयती'ति नियमनसन्नियोगेनान्तरत्वश्रवणेऽपि तादर्थ्येन सर्वात्मना व्याप्त्यनभिधानात् । न चान्तरशब्द एवैवमर्थकः । न चापेक्ष्यस्याक्षेपो युक्तः । तदयमर्थ — जीववद् न नियाम्यशरीरैकतापत्त्या व्याप्त्या नियच्छति परमात्मा, किं तर्हि, पृथग्भूतोऽन्तर इति । अन्यथानवयवजीव प्रत्यन्तरत्वासम्भवात् । नियाम्यतादात्म्याभिमानशून्यस्य नियन्तृत्व वास्यादौ तक्षादेः शरीरसापेक्षं दृष्टम् । तदिद तस्य शरीरयोगे सत्येव, नियमनशक्त्याविर्भावात् । परमेश्वरस्य तु नित्याविर्भूतसर्वशक्तितया न शरीरान्तरापेक्षेत्युच्यते । 'यस्य पृथिवी शरीरमि'ति विविक्तवस्तुनियमनेऽप्यात्मनो न शरीरान्तरापेक्षेत्यर्थः । तस्य नियाम्यान्तर्बहिर्भावस्त-

दवेद्यत्वमित्यैश्वर्यमात्रमुपवर्ण्यते, न नियमनोपयोगितया । 'अन्तःप्रविष्टः शास्ता जनानामि'ति परमात्मपरत्वेऽप्युक्ताभिप्रायमेव व्याख्येयम् ।

एतेन व्याप्त्या धार्यत्वमपि निरस्तम् । 'एतस्य वा अक्षरस्य प्रशासने गार्गि! सूर्याचन्द्रमसौ विधृतौ तिष्ठत ' इति धार्यव्याप्त्यनपेक्षया प्रशासनमात्रेण धार्यत्वावगमात् , स्वरूपसत्त्वेऽपि व्याप्तेर्धारणाप्रयोजकत्वात् ॥

---

**शेषतया जगतो ब्रह्मशरीरत्वनिरास ।**

यत्तु तच्छेषत्वेन तच्छरीरत्वमिति । तन्न । शेषिणं प्रत्यकिञ्चित्करस्याशेषत्वात् । न च किञ्चिदपि जगत् परमेश्वरस्य किञ्चित् करोति । न तावत् भोगम् , अपहतपाप्मन आप्तकामस्य तदसम्भवाद् 'अनश्नन्नन्यो अभिचाकशीति' इति श्रुते. । नापि क्रीडानिर्वृतिः प्रयोजनम् ,

''अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी ।
मोदते भगवान् भूतैर्बालः क्रीडनकैरिव ॥''

इत्यादिस्मृतेरिति वाच्यम् । स्वसिद्धनित्यनिरतिशयानन्दस्वभावस्याप्तकामस्य परनिमित्तप्रयोजनलेशस्याप्यसम्भवात् । यथा हि श्रूयते —

''क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमिति चापरे ।
देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ॥''

इति । स्मृतिरपि प्रयोजनानिरपेक्षमेव पांसुगृहनिर्माणादौ बाल इव विश्वसर्गादौ प्रवर्तते स्वभावादेव प्राणिकर्मापेक्षया परमेश्वर इत्येवपरा । अत एव —

''क्रीडतो बालकस्येव चेष्टां तस्य निशामय''

इति स्वप्रयोजनाभावाभिप्रायेण चेष्टाशब्दः प्रयुज्यते । मोदत इति च निष्प्रयोजने महायासे बुद्धिपूर्वकारिणो न प्रवृत्तिर्युक्तेति शङ्का व्यावर्त्यते लीलैव तत्प्रवृत्तिर्नायासकरीति । तथा च सूत्र 'लोकवत्तु लीलाकैवल्यम्' (ब्र० २. १ ३३) इति ।

प्रयोजनानुद्देशेन स्वच्छन्दव्यापारो लीला । सा च पराधीनेषु नान्तरीयकनियमनावसादनिवृत्तिफला । बाल इव परमात्मनि सा निष्फलेति दर्शयितुं लीलाकैवल्यमित्युक्तम् ॥

---

## परोक्तशेषलक्षणखण्डनम् ।

अत एव परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूप, स शेषः, परः शेषीति परकीयं शेषलक्षणं प्रत्युक्तम् । ब्रह्माणि निरस्तनिखिलदोषभावस्वरसे निसर्गसिद्धनिरतिशयानन्तकल्याणगुणपरिपूर्णमहोदधौ जगदाधेयातिशयाभावात् । अपिच परगतेति व्यर्थ, शेषिण उद्देश्यस्य स्वस्मिन्नतिशयाधानेच्छयोपादेयत्वाभावेन तत एव व्यावृत्ते । अथोच्येत — कर्ता फलीत्यवस्थाभेदेनोपादेयतापि स्यादिति, तर्हि तदवस्थाभेदेन शेषशेषिभावोऽपीति तद्व्यावृत्तिरयुक्ता । अपिच यद्यतिशयो धर्ममात्र, दुःखभयाद्याधायकाहिकण्टकादौ दुःख्यादिशेषत्वापत्तिः । न चेष्टापत्तिः । तथा लोकव्यवहाराभावात् । तस्येद प्रतिकूलमिति च वस्तुस्वरूपमनतिरिच्य प्रातिकूल्यांशसम्बन्धमात्रव्यवहारात् । अथ प्रतिकूलेतरधर्मोऽतिशयः, सुखाद्याधायकचन्द्रादावतिप्रसङ्गः, उपेक्षातिशयाधायिनि तृणादावुपेक्षक प्रति शेषत्वापत्तिश्च । न चोपादेयत्वविशेषणेन तद्व्यावृत्तिः, इह साधनत्वेन ग्रहणातिरिक्तोपादेयत्वासम्भवात् । अपिच प्रस्तरप्रहरणादेस्तदेशषत्वापत्तिः, यातनाशरीरे दुःखहेतौ तच्छरीरिण प्रत्यशेषत्वापत्तिश्च । अत एव सोऽनुकूलधर्म इति निरस्तम् । न च दुःखजननेन पुरुषानुकूलपापक्षयरूपातिशयाधायकत्वाद् यातनाशरीरस्योपपन्न शेषत्वमिति वाच्यम् । अहिकण्टकादावप्युक्तगतिसम्भवेनातिप्रसङ्गात् । अपिचेच्छयेति व्यर्थम् । इच्छाविषयत्वलभ्यप्रयोजनभावस्यानुकूलत्वविवक्षयैवाहिकण्टकादिव्यावृत्तिफलया लाभात् । अथानुकूलधर्मस्यैव साक्षादिच्छाविषयत्वेन परमप्रयोजनत्वविवक्षया तदुपादीयेत, किं पुनस्ताद्विवक्षाप्रयोजनम् । स्वातिशयाधायिनि भृत्यादावव्याप्तिनिवृत्तिरिति चेद् । न । भृत्यस्य स्वबुद्ध्या स्वातिशयोद्देशपर्यवसानेऽपि तज्ज्ञबुद्ध्या सातिशयस्यैव तस्य परगतातिशयाधानायोपादेयत्वसत्त्वादव्याप्त्यभावात् । अज्ञचेतनस्येश्वरशेषत्वेऽपि तत्त्वज्ञबुद्ध्यैव तत्परिकरत्वेनोपादेयत्वस्य वक्तव्यत्वात् । उपादेयत्वोपादानमप्यधिक, परगतातिशयाधायकस्यैव तदवस्थस्य त प्रति शेषत्वोपपत्तेः । एवकारश्चायुक्तः । उपादेयत्वमेव नानुपादेयत्वमित्यर्थविवक्षाया कदाचन भृत्यस्य भृत्यतोत्तीर्णावस्थासम्भवेऽशेषत्वापत्तेः । उपादेयत्वमस्त्येव न नास्तीति विवक्षायां स्वामिनोऽपि गर्भदास प्रति शेषत्वप्रसङ्गात् । अत एव तदवस्थः शेषो नातद-

वस्थ इति विवक्षया तदुपादानम् । तथाच स्वाम्यपि तदवस्थस्त प्रति शेष एवेति चेत्, हन्तैव सदैव विश्वगतसर्गस्थेमाद्यतिशयाधानेच्छयोपादेयतावस्थेश्वरस्य सदैव विश्व प्रति शेषत्वप्रसङ्ग. । लीलारसातिशयहेतुतया तस्यापि शेषो विश्वमित्यव्यवस्था शेषशेपिभावस्य प्राप्ता । एतेन परातिशय एव यस्य परमं प्रयोजन, स पर प्रति शेष इति तल्लक्षणनिष्कर्षोऽप्यपास्तः । ईश्वरस्य विश्वसर्गाद्यतिशयैकप्रयोजनत्वात् । यथाहुर्योगा. — 'तस्य स्वप्रयोजनाभावेऽपि भूतानुग्रहः प्रयोजनमि'ति ।

अपिच न चेतनस्य परातिशयः परम प्रयोजनमिति युक्तम् । 'आत्मनस्तु कामाय सर्वं प्रिय भवती'ति श्रुतेः ॥

---

आत्मनस्तुकामायेतिश्रुत्यर्थ ।

यत्तु — नात्रात्मार्थतया सर्वं प्रियमुच्यते । तथा सति स्वकामाय तदेवोपादेयं स्यादित्यत. आत्मा द्रष्टव्य इति न सङ्गच्छेत । नहि यस्मादात्मन इष्टसम्पत्तये पत्यादि सर्वं प्रियं भवति तस्मात् तत् परित्यज्य केवलमात्मस्वरूपमन्वेषितव्यमिति सङ्गच्छते, प्रियस्यैवोपादेयत्वात् । तदयमर्थः — न पत्यादि स्वप्रयोजनायाहमस्य प्रिय स्यामिति प्रिय भवति । अपि त्वात्मनः कामाय परमात्मन. स्वाराधकप्रियप्रतिलम्भनरूपेष्टनिर्वृत्तये । परमात्मैव तत्तत्कर्मानुगुणं तत्तद्वस्तुगत प्रियत्वमापादयति । न तु स्वरूपेण प्रियमप्रियं वा किञ्चिदिति फलितोऽर्थ. । एवञ्च यः स्वय निरतिशयानन्दः सन्नन्येषामपि प्रियत्वलेशास्पदत्वमापादयति स प्रियतमः परमात्मैव द्रष्टव्य इति सङ्गच्छत इति । तदसारं, तत्तत्कर्मानुगुणमप्रियत्वमप्यापादयतीति तस्य निरतिशयाप्रियत्वेन द्वेष्यत्वप्रसङ्गात् । तस्माद् यादर्थ्येन सर्वं प्रिय भवति, स निरतिशयप्रिय आत्मान्वेष्टव्य इत्येव सङ्गततर, शब्दवृत्तिस्वारस्यार्जवोपपत्तेः । नह्यात्मा न प्रियतम', येनान्योज्झ नान्विष्येत । प्रियतमस्तु स., 'तदेतत् प्रेय' इत्यादिश्रुत्यन्तरात् । अन्यथा कथमात्मनः कामाय सर्वं प्रिय भवति, नान्यस्य कामाय । एवञ्च 'न वा अरे पत्युः कामाये'त्यादेरवबोधनीयमैत्रेयीप्रसिद्धार्थानुवादपरत्व वैशब्दसूचितमुपपन्नम् । आत्मनस्तु कामाय जाया प्रिया भवतीति स्वसाक्षिकमपि बोध्याप्रसिद्ध प्रथम मा वोचामिति ह्यात्मनस्तु

कामाय पतिः प्रियो भवतीति ब्रुवन् कथमत्यन्ताप्रसिद्ध मैत्रेय्याः परमात्मायत्तं पत्यादिप्रियत्व प्रसिद्धवदाचक्षीत । तद्बोधपरत्वे चास्य वाक्य भिद्येत । आत्मार्थतया प्रियत्वमन्यस्यात्मनः प्रियतमत्व च सर्वसिद्धमनूद्यात्मश्रवणादिविधौ च न स दोष । न चैव मोक्षात्मम प्रक्रमोऽन्यस्य द्रष्टव्यत्वमिति विषयभेद', प्रक्रमेऽप्यात्मशब्दस्य ब्रह्मपर्यन्तत्वे तस्य कामाय सर्व प्रियं भवतीत्यसंबन्धादिति वाच्यम् । ब्रह्मात्माभेदस्य विवक्षितत्वात् । तथाच सूत्रम्— 'अवस्थितेरिति काशकृत्स्न.' (ब्र० १ ४. २२) इति । तस्मादात्मार्थमेव प्रयोजनं युक्तम् । गुरुतरदयास्नेहनिभृतानामपि गुरुपित्रादीनामात्मदु.खनिवृत्त्यतिशयाधानेच्छयैव शिष्यसुतादिदु खनिवृत्तौ प्रयत्न, कृपालो स्निग्धस्य च परदुःखेन दु खितादर्शनात्। परदु'खादु खिन हि निर्दयमस्निग्ध च कर्कशमाचक्षते । तथाच तान्त्रिकाभियुक्तवचन —

> "मत्पापक्षपणाय योजयसि चेद् घोरेण दण्डेन मा
> रङ्गाधीश्वर! केवलाघकरणाद् दु ख महत् स्यान्मम ।
> तद् दृष्ट्वा भवतोऽपि दु खमतुल घोर दयालो! भवेत्
> तस्मात् तेऽपि सुखाय मत्कृतमिद सर्व त्वया क्षम्यताम् ॥"

इति । तस्मादात्मशेषतयैव सेश्वर विश्वमुपादेयमिति न जगद् ईश्वरस्य शेषः । एतेन स्वव्याप्त्या नियन्तृत्वादिशरीरित्वमपि व्याख्यातम् । तस्माद् न जगदीश्वरयोः शरीरशरीरिता ॥

---

## अनेनजीवेनेतिश्रुत्यर्थ ।

'अनेन जीवेनात्मनानुप्रविश्ये'ति नेय तृतीया कर्त्रर्था, येन जीवशरीरकेण मयेति व्याक्रियेत । तथा सत्यनन्वयात् । न तावद् व्याकरवाणीति सबन्ध', तिङभिहिते कर्तर्यनभिहिताधिकारविहिततृतीयानुपपत्ते । नाप्यनुप्रविश्येति सबन्धः, कृदभिहिते कर्तरि तदनुपपत्ते । समानकर्तृकयोः पूर्वकाले क्त्वः स्मरणात् स्थानिवत्त्वादेशः । नन्वत एवार्थभेदानुशासनादनभिहित कर्तेति

---

१. 'त्व सि' ख पाठः. २ 'र' क पाठ

चेद्, एव तर्हि 'तयोरेव कृत्यक्तखलर्थाः' (३ ४ ७०) इति च प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' (३. ३. १६३) इति च कृत्या भावकर्मणोर्विध्यादौ चानुशिष्यन्ते। तत्र यदि 'स्वाध्यायोऽध्येतव्यः' इति विधि. प्रतीयेत, न कर्म, ततश्चानभिहिते कर्मणि द्वितीया स्यात्, स्वाध्यायमध्येतव्यमिति। अथ कर्म प्रतीयेत, विधौ तर्हि यत्नः स्यात्। तत्र वाचकरूपभेदाभावेऽपि यदि कृत्यानामनुशासनादुभयार्थता, किम्पुनरिह क्तादिति च क्त्वेति च वाचकरूपभेदे सति तदुभयार्थता नेष्यते। अथ विध्युपाधितया कृत्येषु भावकर्मणोरर्थप्राप्तेस्तादर्थ्यमुपचर्येत, तर्हीहापि क्रियापूर्वकालत्वोपाधितयैव समानस्य कर्तुरर्थप्राप्तिरुपगम्यताम्। यद्येव साक्षादनभिधानादिह कर्तरि तृतीया स्यात्, तत एवान्यत्र कर्मणि द्वितीया कस्मान्न भवति। अथासन आस्ते, प्रासादे प्रसीदतीति ल्युडाद्यभिहितेऽप्यधिकरणे सप्तमी दृश्यते। किमङ्ग पुनरनभिहिते कर्तरि तृतीया। अतिप्रसङ्गे पुनरप्रयोग एव शरणमिति चेत्। न। साधनादिभेदेन ल्युडादिप्रकृत्यन्तर्गतक्रियान्यत्वादाख्यातक्रियायास्तदधिकरणेऽनभिहित एव सप्तमी स्यात्। अप्रयोगस्तु द्वितीयाया इव कर्मण्यर्थप्राप्ते कर्तर्यपि तृतीयाया न विशिष्यते। प्रकृतस्तु प्रयोगो नानन्यथासिद्धः। अपि चाहमिमा अनुप्रविश्य व्याकरवाणीति सबन्धेऽनभिहिते[२] प्रवेशकर्तर्यर्थलभ्ये तृतीयानुपपत्ति[३]। न खल्वह मयौदन भुक्त्वा ग्राम व्रजामीति साधुः प्रयोग.। तत् कस्य हेतो', भोजनकर्तुरार्थिकत्वात्। अनेनेति चायुक्तम्, आत्मनि परागवचनानुपपत्तेः। अयमहमस्मीत्यादाविव कथञ्चिदुपपत्तावपि तदानर्थक्याद्, जीवद्वारकनानाप्रकारानुसन्धानस्यात्मनि व्याकरणानुपयोगित्वात्। अथापि जीवविषयैव तृतीया कर्त्रर्था स्यात्। न स्यात्, नामरूपव्याकरणस्य परमात्मकर्तृकत्वात्। अनुप्रवेशस्य च तत्समानकर्तृकत्वावगमात्। अत एव प्रयोज्यकर्तरि तृतीयेति निरस्त, जीवस्य साक्षान्नामादिव्याकर्तृत्वासभवात्। अनुप्रविश्य व्याकरवाणीति प्रयोजकव्यापारलक्षणाप्रसङ्गाच्च। नापि करणार्था। न खलु तक्ष्णो वास्यादिवदीश्वरस्य व्याकरणे करणं जीव., सङ्कल्पमात्रकारित्वात्। न च विविधविचित्रत्रसस्थिरसन्निवेशनामरूपव्याकरणे जीवकर्मसा-

---

पेक्षत्वाद् 'अनेन जीवेने'ति हेतुतृतीयेति युक्तम्, अन्यदीयहेतुतोपचारेण लाक्षणिकत्वापत्ते· । नापि सहयोगार्था. जीवस्य नामादिव्याकरणे तुल्ययोगित्वाभावात् । तत्र

"सहैव दशभि पुत्रैर्भार वहति गर्दभी"

इत्यादिवदप्रयोजनमेव सहवचन स्यात् । तस्मादित्थभावे तृतीया । तत्र चानुप्रवेशेन स्वयमेव जीव सम्पद्यत इत्यात्मनेत्युच्यते । तद्रूपस्य सङ्कल्पेन बुद्धिसन्निहितत्वादनेनेत्युक्ति· । न चैव प्राक् सृष्टेर्जीवाभावप्रसङ्ग·, अनादित्वात् । नहीह प्रलयावसानसमया सृष्टिर्विवक्षिता, 'तम आसीत् । तमसा गूढमग्रे प्रकेतमि'त्यादाविव

"आसीदिद तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥"

इति स्मृत्यनुवर्णितप्रलयोपक्रमाप्रतिपत्ते·, यत· सृष्ट्वा जगदनुप्रविश्य जीवभावे तस्य प्रागसत्त्व शङ्क्येत, कि तर्हि निर्विशेषाद्वितीयात्मतत्त्व कथ नाम नैसर्गिकनानादृष्टिरय बोध्येतेतीदमप्रथममिव स्वर्ग कृत्वा ब्रवीति—'सदेव सोम्येदमग्र आसीदि'त्यादि, निर्विशेषोपादानात् । अग्रे चेद वक्ष्यते । अस्या च विवक्षाया यदि जीवस्येदमादित्वमाहार्येत, न कश्चिद् दोष । एवं जीवभावेनानुप्रवेशो यद्यपीश्वरस्य न जगन्नामरूपव्याकरणशक्तिनिर्वाहकतयोच्यते, निसर्गनिरूढशक्तित्वात्, 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकीति' श्रुते· । तथापि भोक्तृभावे भोगार्थनामादिव्याकरण विफल मा शङ्कीति तदभिधानमर्थवदेव । एवञ्च 'तदनुप्रविश्य, सच्च त्यच्चाभवदि'ति जीवभावापत्त्या तादात्म्यपर, न तु नियमनार्थानुप्रवेशेन तच्छरीरकत्वपरमिति व्याख्यातम् ॥

---

## शरीरश्रुत्यन्यथासिद्धि ।

न च श्रुत्यादौ शरीरव्यपदेशमात्रेण जगद् आत्मनो मुख्य शरीरं, 'तस्यै वाचः पृथिवी शरीरम्' 'अथैतस्य मनसो द्यौ· शरीरमि'त्यादावपि प्रसङ्गात् । गौणस्तु व्यपदेशः· परमात्मना व्याप्तत्वे सति नियाम्यत्वादेव । मुख्ये तु शरीरभावे भोगायतनत्वं तादात्म्याभिमानश्च प्रयोजकः । न चैवमपि शरीरत्वो-

पचारस्य फलं विमृश्यमानं शरीरशरीरिभावनिबन्धनविशिष्टाभेदपरसामानाधिकरण्यसिद्धिरेव, फलान्तराभावादिति वाच्यम् । जगन्नियन्तुर्नियाम्यातिरिक्तशरीरानपेक्षत्वसिद्धिफलस्योक्तत्वात् ।

हिरण्यश्मश्रुकेशादिशरीरः परमेश्वरः ।
उदितः सर्वपाप्मभ्यश्छान्दोग्ये यद्यपि श्रुतः ॥
ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षमिति चान्यत्र स श्रुतः ॥
तथापि तादृशं सन्तमुपासीतेति नेष्यते ।
ईश्वरं तादृशाकारमुपासीतेति चोद्यते ॥
एकस्य न द्विर्व्यापारो वाक्यस्यैव प्रसज्यते ।
नेतुर्मायामयं देहं साधकानुग्रहोन्मुखम् ॥
साक्षाद्भवन्तं निध्यानविपाकेनाह भाष्यकृत् ।
ईशोऽनभिनिविष्टात्मा मायाविष्कृतवर्ष्मणि ॥
नैति प्रियादिसंस्पर्शमशरीरपदोदितम् ।
अभोगसाधने मायामूर्छनाभाविते घने ॥
सन्निवेशविशेषेण शरीरव्यपदेशनम् ।
माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ! ॥
सर्वभूतगुणैर्युक्तमित्यार्षमपि दर्शनम् ॥

अथवा —

हिरण्यश्मश्रुकेशादिसूर्यदेहोपलक्षितः ।
परमात्मेह पाप्मभ्य उदितः समुपास्यते ॥
सर्वतःपाणिपादं तत् सर्वतोक्षिशिरोमुखम् ।
इति जैवशरीरेण सर्वात्मेशो हि वर्ण्यते ॥

एवं सत्यशरीरश्रुतिरपि न सङ्कोचनीया । प्रज्ञानघनशब्दोऽपि ज्ञानैकरसतामाचष्टे, घनशब्दस्य नैरन्तर्यपरत्वाद्, निरवयवात्मन्यवयवमूर्छनारूपमूर्तिपरत्वानुपपत्तेः । 'न प्रज्ञानघनमि'ति प्रतिषेधाच्च । अपिच जीववदेव शरीरित्वे परमात्मनः प्रियादिसंश्लेषप्रसङ्गः । तादात्म्यानभिमाने च गौणमेव

शरीरित्वम् । अवान्तरमुक्तानां स्वच्छन्दमार्गेणाकृतिमात्रया प्रियादिसम्बन्धापरिहाराद् ऐश्वर्यन्यूनत्वतारतम्येनाशरीरित्वमुक्त्वञ्च नाविरुद्धत्वात् । एवं सति 'आप्तो वै सशरीर' इत्यादिकमशरीरत्वादिनिदिकावाधेन सङ्कोचनीयम् । तस्माद्

मुक्तोऽप्युपासनासक्तैरीरितानेकविग्रहः ।
न प्रियाप्रियसम्पर्शमनिवर्तितुमर्हति ॥

---

ब्रह्मणोऽशरीरत्वानुमानम् ।

प्रयोगश्च — परमात्मा न स्वविशेष्यकाहम्भावगृहीतशरीरविशिष्टप्रमाविषयः, स्ववृत्त्यवच्छिन्नभोगशून्यत्वाद्, वाय्वभ्रादिवत् । देवदत्तो देवदत्तेतरशरीरित्वानाधिकरणचेतनान्य, चेतनत्वाद् यज्ञदत्तवदिति ॥

---

जीवांशत्वान्यथासिद्धिः ।

अत एव न जीवपरयोरंशांशितापि, शरीरशरीरिभावादिनिरासेनाविशिष्टैकदेशत्वाद्, अनवयवावयवित्वाच्च । अंशत्वव्यपदेशश्च जीवेषु परमात्मन एवौपाधिकखिल्यभावेनानेकत्वे सति तदेकदेशत्वोपचारात्, स्फुलिङ्गेष्वग्निकणत्वव्यपदेशवत् । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति दर्शनात् । न खलु विषयवृत्त्युपाधिकखिल्यभावादन्ते सत्तातावन्मात्रस्वरूपानन्दस्य मात्रालेशो नाम भवति । 'पादोऽस्य विश्वा भूतानि' इति च विश्वविवर्तस्येयत्तापरिमितस्य स्वाधिष्ठानखिलीकारनान्तरीयकात्मलाभतया व्यपदेशमात्रम्, उक्तगत्या वास्तवतदेकदेशत्वानुपपत्ते ।

तदेवं प्रकारप्रकारितया जीवपरयोरितरेतराविशिष्टपृथगर्थवृत्ततत्त्वमादिपदसामानाधिकरण्य जीवपरस्वरूपाभेदपरमेव युक्तमिति ॥

---

जीवपराभेदे तत्प्रकरणादिविरोधोद्धार ।

यत्त्वत्र तत्प्रकरणादिविरोध इति । तन्न । नह्यत्र प्रकरणे जीवस्वरू-

---

१. 'वपरस्व' ख पाठ

पाभेदविरोधित्रिष्वत्र प्रतिबिम्बयिषित, प्रकरण्यात्माभेदविरोधिपरत्वानुपपत्तेः । पदार्थे हि जातकारणतया समर्पितया च तत्र तत्र मङ्गलामङ्गलगुणाभ्यामुपवर्ण्यते । तच्च प्रधानभूतवाक्यार्थाविरोधेन नेयम् । अङ्गिविरोधेनाङ्गवृत्त्यनुपपत्ते । कारणरूपोपन्यासश्च तदविघातायैव । अन्यथाद्वितीयस्वरूपाभेदबोधनानुपपत्ते । अत एव न प्रकरणान्तरविरोधोऽपि । न च स्ववाक्ये किञ्चिद् विरुध्यते, विरुद्धविभक्तिसमभिव्याहाराभावात् । अर्थविरोध इति चेत्. कस्य नु भो. । पदाना हि यथास्वमर्थो न विरुध्यते । वाक्यार्थोऽभेदो विरुध्यत इति चेत्, कथ नु । पदार्थयोर्विरुद्धविशेषणत्वादिति चेत् । कुत. पुनरिदमधिगत भवता । आगमादिति चेत् । किमिद प्रमत्तगीत 'तत्त्वमसी'ति । तथाप्युपपत्तिरनुमर्तव्येति चेद्, ननूभयथोपपत्तिः सम्भवति । दृश्यते ह्येक एवाकारो ह्रस्वो दीर्घश्चोदात्तोऽनुदात्तश्च । एकमेवाकाश तारशब्दसमवायि मन्द्रशब्दसमवायि च । सयोगी चासंयोगी चैको वृक्ष । दृश्यते च विरुद्धविशेषणाना भेदो दहनतुहिनादेः ॥

---

## विरोधविवेचनम् ।

आत्यन्तिको विशेषणविरोधो विशेष्यभेदप्रयोजक इति चेत्, कोऽयमात्यन्तिकविरोधो विशेषणानाम् । एकतरावच्छेदाधिगते धर्मिणि तदैवेतरस्य तदवच्छेदानुभवाहेतुत्व श्यामरक्तस्नानानुलेपनतदेतद्देशादीनामपीति श्यामरक्तस्नातानुलिप्तादिभेदापत्तिः इतरेतराश्रयाभेदधीविरोधिधीविषयत्वमितरेतरस्य विरोध इति चेत् । न । धीविरोधस्य विषयविरोधाधीनत्वेनान्योन्याश्रयत्वात् । अनुमितिव्यभिचारधियोरिव प्रतिबध्यप्रतिबन्धकताविरोधो धियां विषयविरोधानपेक्षो विज्ञायतइति चेत् । न । तादृशविरोधस्य सिद्ध्यनुमित्योरिव स्वविषयाश्रयभेदाप्रयोजकत्वात् । सिसाधयिषाया सिद्धेरप्रतिबन्धकतापीति चेद्, अन्यत्रापि दोषे तदभेदधीसम्भवेन सर्वथा विरोधाभावात्, तमःप्रकाशाद्यविरोधप्रसङ्गाच्च । य एव तमस्वी स एवेदानीं प्रकाशवानिति तदाश्रयाभेदधियस्तमआदिधियानिवृत्तेरप्रतिबन्धाच्च । यदि चान्यान्यविशिष्टरूपेणेतरेतराश्रयाभेदधीत्यादि विवक्ष्येत, पूर्वदोषानुवृत्तिः । नीलत्वोत्पलत्वादीनामपीतरेतरविशिष्टाभेदधीवि-

रोधिधीविषयतयातिप्रसङ्गश्च । अत एव नैकावच्छेद्यरूपेण तद्धर्मिणोऽनवच्छेदकत्वमन्यस्य विरोध . श्यामरक्तादिसाधारण्येनातिप्रसङ्गात् । गोत्वद्रव्यत्वादेरप्येव विरोधप्रसङ्ग , व्यञ्जकसंस्थानभेदात्तद्रूपभेदेनैव तयोरप्यवच्छेदकत्वात्, सत्तामात्रेण च गोत्वाश्वत्वाद्यवच्छेद्यस्य व्येकत्वात् । अथ नैकरूपो विरोध· । धर्माधर्मादीनां तावत् परस्परानात्मकत्व, स्थितिगत्यादीनामसहभावनियम । अध्यस्ताधिष्ठानतत्त्वयो· सहानुपलम्भनियम । ज्ञानाज्ञानादीनामुपमर्द्योपमर्दकता । गोत्वाश्वत्वादीना भिन्नाश्रयतानियत सामानाधिकरण्याभावनियमो वा, परस्परात्यन्ताभावसामानाधिकरण्यनियमो वा, केषाञ्चित् प्रतिबध्यप्रतिबन्धकभाव इतीति चेत् । कीदृश· पुनरिह तत्त्वमस्यादार्थविशेषणविरोध., यत स्वरूपाभेदो न वाक्यार्थ । परस्पराश्रयभेदनियतत्वादिरिति चेत् । न । तत्र तस्याधिगमोपायाभावेनासिद्धे । विशेषणविरोधतदाश्रयभेदयोरितरेतराधीनसिद्धावन्योन्याश्रयात् । नहि तत्त्वमादिशोधनीयाभेदवस्तुस्वरूपभेद स्वसाक्षिकोऽनुभूयते । य पुनरहमित्यहङ्कारोपश्लिष्टरूपेण व्यावृत्तस्वभावोऽध्यक्ष्यते, यश्चेश्वररूपेण कथञ्चिद् व्यावृत्तस्वभाव श्रूयते, तद्रूपाभेदो न वाक्यार्थ । किन्तु सत्तामात्रेण वस्तुस्वरूपाभेद. । न च तत्र धर्मविरोध शक्योऽधिगन्तुम् । न च विरुद्धधर्मवत्त्वमनधिगम्य वाक्यार्थो वस्तुस्वरूपाभेदोऽनधिगन्तु शक्य. । न चाहमित्येवात्मनो रूप. येन तद्रूपविवेकेन भेदोऽधिगम्येत । अहङ्कारातिरेकश्चात्मनो वक्ष्यते ।

अथ स्वभावविशेष एव विशेषणाना विरोधो नाम, अस्तु तावदेवम् । तथापि सोऽयमित्यादौ कालभेदसमाहितविरोधतत्तेदन्ताविशिष्टाभेदप्रत्ययमुपयतस्तव तत्त्वमादावपि कथञ्चिदवच्छेदकभेदेन विशेषणविरोधसमाधाने विशिष्टाभेदप्रत्ययाविघातात् । नित्यसमुदाचरत्स्वभावसार्वज्ञ्यादिकल्याणगुणमयेऽपि ब्रह्मणि तद्विपरीतगुणस्याप्यवच्छेदभेदेनानादिसिद्धत्वेनापर्यनुयोज्यत्वात् ॥

---

## श्रीरामादीनां जीववैलक्षण्यम् ।

अपिच ब्रह्मणः सत्यसङ्कल्पत्वादेव जीवभावापत्तिरुपपद्यते । उपा-

ख्यायते हि कुतोऽपि हेतोरीश्वरस्यैव मानुषत्वाजत्वादिमकल्पनेन तथैव श्रीरामादिरूपेणाविर्भाव

"अथ देवगणश्रेष्ठ नात्मानमवबुध्यसे"

इति तदज्ञानानुवादिदेववचनात् ।

"आत्मानं मानुषं मन्ये रामं दशरथात्मजम्"

इति तदीयवचनाच्च । न चायमन्यत्रामो जीव एव,

"भवान् नारायणो देवः श्रीमांश्चक्रायुधो विभुः"

इत्यारभ्य

"सीता लक्ष्मीर्भवान् विष्णुर्देवः कृष्णः प्रजापतिः !"

इत्यन्ततद्विषयब्रह्मवचनानाञ्जस्यप्रसङ्गात् ।

"एतत्तदुक्तमव्यक्तमक्षरं ब्रह्म शाश्वतम् ।
वेदानां परमं गुह्यं सौम्य! रामः परन्तप! ॥"

इति दर्शनाच्च । असावनाधीनातिशयितज्ञानशक्त्याद्याविर्भावातिशयेन स्वच्छन्दोपात्तलीलाविग्रहयोगितया च तस्य संसारिभ्यो विशेष उपपद्यते । श्रूयते च ब्रह्मणः स्वसङ्कल्पनिबन्धनो जीवभावः 'सेयं देवतैक्षत' 'अनेन जीवेनात्मनानुप्रविश्यति' । इत्थभावे च तृतीयेत्युक्तम् । किमेवं कर्माविद्यावृतसर्वज्ञत्वादिगुणको जीवः शास्त्रीयेण विज्ञानेन तद्गुणकं ब्रह्मैव सम्पद्यत इति जगत्कारणमप्यस्तु । किञ्चातः, जगज्जन्मादिकारणत्वं मुक्तस्यापीति न ब्रह्मलक्षणं स्यात् । न, मुक्तस्यापि ब्रह्मसम्पन्नस्य मात्रयापि पृथग्भावाभावात् । ब्रह्मोपदेशेन श्रीरामस्येव गुरूपदेशेन जीवस्य ब्रह्मभावपर्यवसानात् । उपासकानां तु सत्येव मात्रयाविद्यावरणेऽपहतपाप्मनामाविर्भूतज्ञानादिगुणानामवान्तरमुक्तानां ब्रह्मलोके जगद्व्यापारवर्जमीश्वरेण भोगमात्रसाम्यमिष्यते, परममुक्तानां 'ब्रह्म वेद ब्रह्मैव भवती'ति ब्रह्मभावापत्तिश्रवणात् । वस्तुतस्तु यद्यपि कारणात्मना सर्वज्ञादिरूपस्य जीवभावानुप्रवेशो गम्यते, तथाप्यात्मनेति विशेषणादुभयानुगतात्मिदुरस्वरूपेऽनादिसिद्धाविद्यानिबन्धनो जीवेश्वरविभागो [illegible][1] । तान्त्रिकस्यापि ब्रह्मव्यपदेश्यपरमात्मातिरिक्तस्वरूपाचिच्छक्त्युपाधिककारणब्रह्मैकान्तिकं सर्वज्ञत्वादि

---

१ 'दिक' ख. पाठ .

सम्प्रतिपन्नम् । जीवस्यापि कर्माविद्याद्युपाधिनिबन्धनमेव किञ्चिज्ज्ञत्वादि । तदेवं सति तत्त्वपदाभ्यां विरुद्धविशेषणविशिष्टपरामर्शेऽपि प्रहीणविशेषण-स्वरूपाभेदो वाक्येन बोध्यते । न कश्चिद् विरोधः । मानसिद्धं विरुद्धमविरुद्धं वा विशेषणमस्मदिच्छया न हातव्यमिति चेद्, न, नहि वयमिदानीमात्मनि वाऽन्यत्र वा विशेषणं स्वरूपेण परिसंख्येयमाचक्ष्महे, किं तर्हि, वाक्य-मनवगाहितविशेषणमेव विशेष्यस्वरूपतावन्मात्राभेदं बोधयतीति । समस्तहेयप्रत्यनीके ब्रह्मणि जीवत्वादिसंसारो नोपपद्यत इति चेद् । नहि वयं ब्रह्मणो जीवभावमुपपादनीयं मन्महे, किन्तु जीवस्य ब्रह्मभूय, त्वं तदसीति तस्य ब्रह्मभावे पर्यवसानात् । न खलु तत् त्वमस्तीत्याह, येनात्र ब्रह्मणो जीवभावो वाक्यार्थः स्यात् । उभयथाप्यभेदे वाक्यार्थे को विशेषः । न कश्चित् । किं तर्हि, पूर्वत्र ब्रह्मभावावगमः प्रत्यगात्मनो जीवत्वादिसकलसंसारातीतस्वरू-पापरोक्षानुभवपर्यवसायी, प्रतिभासमानशबलरूपेण समस्तहेयास्पृष्टब्रह्मभावानु-भवायोगात् । परत्र तु परोक्षस्यैव सतः कारणात्मनः कथञ्चित् तद्रूपावस्थिति-विषयाऽप्यधिगतिः स्याद्, जगदाकारावस्थित्यधिगतिवत् । ततश्च 'निचाय्य तं मृत्युमुखात् प्रमुच्यते', 'भिद्यते हृदयग्रन्थिः ..तस्मिन् दृष्टे परावरे' इत्यादिश्रु-तामृतत्वहेतुब्रह्मसाक्षात्काराय विधेयध्यानादियत्नान्तरेऽनुसर्तव्ये 'तत्त्वमसि', 'अयमात्मा ब्रह्मे'त्यादिस्वरूपोपदेशमात्रपर्यवसायिनो वेदान्ता विरुध्येरन् ॥

---

## सत्यादिश्रुतेः स्वरूपमात्रपरत्वम् ।

अथ कथं सत्यज्ञानादौ तत्त्वमादौ वा पदाद् विशिष्टार्थोपस्थितौ विशे-ष्यस्वरूपतावन्मात्राभेदो बोध्येत, वाक्यस्य पदोपस्थितरूपान्वयबोधित्वात् । अन्यथा अग्निना सिञ्चेदित्ययोग्यं न स्यात् । कथञ्चित् क्रियाकारकान्वयसम्भवात् । 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यत्रापि हि पदोपस्थापितरूपेणैव श्रुत्यवगते विनियोगे तन्निर्वाहाय पदार्थसामर्थ्यकल्पनाश्रीयते । प्रकृते च पदोपस्थापि-तरूपमेव विशिष्टमभेदबोधविरोधीति कस्य निर्वाहाय विशेषणहानेन पदार्थसा-मर्थ्यं कल्प्येतेति । नैवम् । वाच्यविशेषानुगतविशेष्यस्वरूपतावन्मात्रलक्षणया

---

१. 'पस्थित' ख. पाठ

तदंशस्यैवोपपत्तेः । अथैवमग्निर्माणवक इत्यादौ लक्ष्यस्यानग्नित्वादिकमिवाज्ञानादित्वमात्मनः स्यादिति चेद्, न, नहीहान्यत्रेव वाच्यानन्तर्गतमत्यन्तमन्यदेव लक्ष्यमुपपद्यते । यद्यपि गौर्नित्येत्यादौ शक्यैकदेशोऽपि गोत्वं लक्ष्यमाणमगौरेव, तथापि तत्र लक्षणीयस्य विशेषणस्यातथाभावेऽपीह विशेषणानुगतविशेष्यस्वरूपमेव लक्ष्यत इति वैषम्यम् । न चायमस्ति नियमो लक्षणीयं शक्यादत्यन्तविलक्षणमिति, सामान्यविषयेण गोशब्देन लक्षणीयस्य खण्डादिविशेषस्यागोत्वाभावात् । तत्र सत्यशब्दस्तावद् यद् यथा प्रतीतमस्ति तत् सत्यं, यथा हट्टादौ रजतम् । इतरदनृतं, यथा शुक्त्यादौ । तदेव बाध्यमानमिति व्यवहारेण विशिष्टसत्ताव्युत्पन्नस्तेषु तेषु विशेषेषु व्यावर्तमानेष्वनुगतसत्ताव्यभिचारिणि ब्रह्मणि ज्ञानादिशब्दसामानाधिकरण्याविघाताय निर्विशेषसत्तामात्रं लक्षयति । यदि हि विशेषान्तरवैशिष्ट्येनैव सत्यशब्दो ब्रह्मणि वर्तेत, तस्य विशेषस्य ज्ञानत्वाभावात् सामानाधिकरण्यं भज्येत । एवं करणव्यापारानुविधायिवृत्तिविशिष्टे प्रकाशे गृहीतशक्ति ज्ञानपदं तत्र तत्र विशेषे[1] व्यावर्तमाने तदनुयायिप्रकाशरूपाव्यभिचारि तथैव[2] सत्यादिपदसामानाधिकरण्याय प्रकाशमात्रं लक्षयति । विशेषस्य व्यावर्तमानतया रज्जौ सर्पधारादिवत् सत्यत्वानुपपत्तेः । एवमानन्दपदमपि विषयसंश्लेषजवृत्तिविशिष्टेऽनुकूलस्वभावानुगते सुखे गृहीतशक्ति तत्स्वरूपमात्रं लक्षयति, विशिष्टस्य व्यावृत्तस्य ज्ञेयस्य सत्यज्ञानाभेदायोगात् । तथा ब्रह्मशब्दोऽपि नानाविशेषपरिच्छेदे बृहत्त्वे गृहीतशक्तिर्ज्ञानादिसामानाधिकरण्याय सर्वानुगतबृहत्त्वस्वरूपमात्रं लक्षयति । नहि विशेषान्तरपरिच्छिन्ने ब्रह्मशब्दार्थे ज्ञानादिसामानाधिकरण्यं युज्यते । व्यावृत्तस्य ज्ञेयस्याल्पस्यानृतत्वादज्ञानत्वादसुखत्वाच्च । नह्यत्र ज्ञानादिकं स्वप्रधानं, येन ब्रह्मपदेन तद्गतं सर्वविषयत्वादिकं बृहत्त्वमुच्येत । ब्रह्म तु स्वप्रधानं, 'ब्रह्मविदाप्नोति परमि'त्युपक्रमात्[3] । तदभिसमभिव्याहृतज्ञानाद्यभेदाविघाताय निरुपाधिकबृहत्त्वतावन्मात्रं लक्षयतीति ॥

---

### सत्यादिपदानामपर्यायत्वम् ।

यत्त्वेवमेकार्थत्वे पदानां पर्यायतया सहप्रयोगो न स्यादिति । तन्न । विशिष्टार्थशक्तिभेदेन पदानामपर्यायत्वात् । न चैवमप्युपस्थितविशेष्यस्वरूपाभे-

---

१. 'ष', २. 'थै', ३ 'पि स' ख. पाठ.,

दबोधनाय तेन तेन पदेन तावन्मात्रलक्षणाया कृतकरणानर्थक्येन पदान्तरवैयर्थ्यमिति वाच्यम् । पर प्रत्यबोधकतया पदमात्रस्याप्रयोज्यत्वात् । पदमात्रस्य विशिष्टार्थविरोधाभावेन लक्षणानुत्थितौ प्रकाशानन्दसत्तामात्रब्रह्मबोधकत्वायोगाच्च । अथापि तस्यैवार्थस्य तेन चान्येन च पदेन बोधने किं प्रयोजनं, यदेकेन बोधने सम्भावित कैवल्यम् । किमर्थं तह्यनेकपदोपादानगौरवाश्रयणम् । अनतिशङ्कनीयस्याम्नायस्य खल्वेष दोष , नास्माकम् । अपिच तत्तद्भ्रमप्रसञ्जनीयानेकासद्विशेषसंसर्गावभासविरोधिस्वरूपनिर्भासिविज्ञानाय विशेषणान्युपसह्रियन्ते । तत्रास्थूलानण्वादिविशेषणान्याहत्यैव स्थूलादिनिषेधेन वस्तुस्वरूपमुपलक्षयन्ति । तत्रैकस्य निषेधेनोपलक्षितेऽपि ब्रह्मणि रूपान्तरविभ्रमानिवृत्तेर्विशेषणान्तरमुपादेयम् । सत्यज्ञानादिकं तु विधिमुखेनानृतजडाद्यविवेकावभासविरोधिस्वरूप लक्षयति । एवमन्यान्यपि विशेषणान्यविविसमभिव्याहृतानि तत्तद्विपरीतविभ्रमनिवृत्त्या स्वरूपमात्रलक्षकाणि योजनीयानि ॥

---

## सत्यादिलक्ष्यस्वरूपविवेक. ।

यत्तु — यदि सत्यादिपद स्वार्थविपरीतरूपव्यावृत्त्यवच्छिन्नं ब्रह्म लक्षयेद् व्यावृत्तिश्च स्वरूपादतिरिच्येत, विशिष्टार्थता पुनरापन्ना । अथ विशद. श्याम., अरक्तोऽपीतोऽकृष्ण शुक्लिमेत्यादौ विशेषान्तरासभवेन तदसंभिन्नश्यामशुक्लिमस्वरूपमात्रमिव सत्य ज्ञानमस्थूलमनण्वित्यादावपि ब्रह्मस्वरूपमात्र लक्ष्येत । स्वरूपमात्रज्ञानस्याविशेषे कथ भ्रान्तिर्निवर्तेत । शुक्लिमादेश्च स्वस्वाश्रयव्यावर्तकस्वभावतयोपलब्धमात्रस्यैव भ्रमविरोधितया युज्यते स्वत एवेतरव्यावृत्त्यात्मकत्व. न ब्रह्मण , सर्वभ्रमसहस्वभावत्वोपगमादित्यादि । तदसारम् । दूराद् दृश्यमानेऽनवसितवर्णविशेषे नीलत्वहरितत्वधूमलत्वादिनानाविशेषसंसर्गावभासाविरोधिरूपे गुणे भासमाने तमुपसर्पतो नीलस्वरूपविज्ञानमात्रेण निरुक्तविभ्रमनिवृत्तेरानुभविकत्वात् । नहि तत्र तदितरव्यावृत्तिवैशिष्ट्यं प्रागप्रतीतमिदानीं प्रतीयते, नीलस्वरूपमात्रानुभवात् । न च नीलत्वमेव नीलस्येतरव्यावृत्तिरुपस्तस्य प्रतीयत इति वाच्यम् । प्रतीयमानस्यापि प्रतियोगिनिरपेक्षावभासस्य नीलत्वस्येतरव्यावृत्तिरूपेणाप्रतीयमानत्वात् । शुक्लिमासङ्कीर्णबुद्धिप्रयोजकतया प्रागपि नीलत्वानुभवावश्यंभावाच्च । नहि शुक्लव्यावृत्त हरितादिसाधारणमुक्तबुद्धिप्रयोजकमुत्प्रेक्षितु शक्यम् । अत एव शुक्लिमसशयाद्यभा-

(वात्[1] व), तदनुसन्धानानियमेन तदन्यरूपत्वेन सामान्योपस्थित्यसंभवात्। प्रथम रूपत्वेन सामान्योपस्थितेरननुभवहतत्वात्। दूरोत्पातिनि पतगे कपोतादौ वा रूपसंशये धर्मिज्ञानादिकमहेतुरित्यन्यदेतत्। अत. स्वरूपावधारणहेत्वभावे दोषाद् नीलस्यैव ज्ञानं प्रागनवधारणात्मक संशयादि सहते। अनन्तरमवधारणरूपं तदेव तद्विरोधि। एव दोषवशादनेकासद्विशेषसमर्गावभाससहस्वरूपावभासस्यैव ब्रह्मण. स्वरूपावधारणे सर्वविभ्रमनिवृत्तिरुपपद्यते। एतावांस्तु विशेष जातिर्वा गुणो वा प्रत्यक्षत. सर्वतो व्यावृत्तस्वरूपोऽवधार्यते, शब्दतस्तु ब्रह्म। तदवधारण चापरोक्षात्मनि स्वरूपानुभवावसानमेव। एवञ्चकृत्वा न सत्यज्ञानादिपदस्य लक्षितानृतादिव्यावृत्तिविशिष्टवृत्तिरुपेयते, येन वर सत्यत्वादिविशिष्टवृत्तिरुपगतेति पर्यनुयुज्येत। किन्तु सर्वत्र पदाभिधेयविकल्पितभावाभावविशेषोपलक्ष्यस्वरूपमेवानृतादिस्थूलादिविरोधिस्वभावमवबोध्यत इति विशद श्याम इत्यादावपि समानोऽय चर्चः, तत्र जातिभेदविशिष्टाववबोधेऽपि तस्यैव लक्ष्यस्वरूपतया पदाभिधेयरूपबहिर्भावेनाभिहितरूपविशिष्टाभेदवृत्त्यसिद्धेः। सर्वपदलक्षणा च वाक्यार्थतात्पर्यानुगुणा गुण एवेति न दोष.। एव विशेष्यस्वरूपस्यालक्ष्यत्वपक्षे च विशिष्टाभेदबोधायोगेन तदभिधानस्वारस्यहानिरदोष॥

---

## वाक्ये सर्वपदलक्षणा।

यत्तु तात्पर्यानुपपत्तिर्लक्षणाबीज तात्पर्यविषयान्वयानुपपत्तिर्वा। नान्वयानुपपत्तिमात्रम्। यष्टीः प्रवेशयेत्यादावभावात्। वाक्ये सर्वपदलक्षणाया चान्यतमशक्योपस्थितिव्यङ्ग्यस्य तात्पर्यस्याध्यवसाये बीजाभावान्न लक्षणैवोत्तिष्ठेदिति। तन्न। विषं भुङ्क्ष्वेत्यादाविवान्यतोऽपि तात्पर्यस्यावसेयत्वात्। प्रथित चोपक्रमोपसहारादि निर्विशेषतात्पर्यलिङ्गमशेषोपनिषत्सु। यत्तु वाक्ये सर्वपदलक्षणा न दृष्टचरीति। तन्न। वाक्यार्थतात्पर्याविरोधे हि नैकस्यापि सा दृष्टचरी। तात्पर्यानुपपत्त्या तु सैकस्मिन्निव सर्वस्मिन्नपि न दुष्यति। विष भुङ्क्ष्वेत्यत्राभोज्ये भोजननिषेधे च लक्षणादर्शनात्। न च विधिप्रत्ययस्तत्र मुख्यः। नहीह 'नेक्षेते'त्यादाविव पर्युदासलक्षणया विधिपर्यवसानमेषित-

---

1. 'तु' ख. पाठः

व्यम् । प्रसक्तनिषेधोपपत्तेरनिष्टसाधनताया लक्षणीयत्वात् । गुरुणा च लौकिकवाक्ये सर्वपदाना क्रियाकार्ये लक्षणोपगमाच्च ॥

---

## लाक्षणिकस्याप्यनुभावकत्वम् ।

एव सर्वाविरोधे सति लाक्षणिक नानुभावकमिति केषाञ्चित् कुलधर्ममात्रमनादरणीयम । समभिव्याहृताना सभूयकारित्वस्य व्युत्पत्तिसिद्धतया गङ्गाया घोष इत्यादावनुभावकत्वावश्यभावात् । अन्यथा शक्त्या लक्षणया वा पदैः पदार्थोपस्थितौ मनसैव ससर्गानुभवोपपत्तौ पदमात्रस्यैवाननुभावकत्वप्रसङ्गात् । अग्निर्माणवक इत्यादौ लाक्षणिकैकपदे पदमात्रस्य प्रमाकरणत्वे

"पद[1]मभ्यधिकाभावात् स्मारकान्न विशेष्यते"

इति पदान्तरेण सभूय वाक्यविधया प्रामाण्याभ्युपगमभङ्गप्रसङ्गाच्च । एव पदमात्रस्यानुभावकत्वे द्वारमित्यादा[2]वपि कथञ्चिदुपस्थितपिधानान्वयानुभवोपपत्त. पदाध्याहारो न स्यात् । पदार्थोपस्थितिरेव हि शाब्दबोधाङ्गं, न पदजन्यत्वविशेषिता, गौरवात् । तथाच प्रकरणोद्भूतशब्दबोधितैदमर्थ्यस्य मन्त्रेषु शाब्या विनियोगभेदाकाङ्क्षाया लिङ्गत. श्रुतितो वा तदुपस्थितावुपशमे शब्दकल्पनापेक्षाभावेनार्थविप्रकर्षाभावात् तुल्यबलतया श्रुतिलिङ्गविरोधे विनियोगविकल्पः प्रसज्येत । संभूयकारित्वे तु शब्दाना नाय दोषः । शब्दान्तरानध्याहारे कारणाभावादेवान्वयाननुभवेनाकाङ्क्षानुपशमात् । तदेवं जहदजहत्स्वार्थलक्षणया पदोपस्थापितस्वरूपाभेदो वाक्येन बोध्यत इति सम्प्रदायः ॥

---

## वाक्यलक्षणा ।

अन्ये मन्यन्ते — यद्येकैकेन पदेन यथावगमनीय ब्रह्मस्वरूपमुपलक्ष्येत, पदान्तरवैयर्थ्यम् । एकेनैवाशेषविभ्रमविरोधिस्वरूपावभासात् । अथ पुरुषदोषादन्यत्रानवधारणमित्युच्येत, एकैकाशो लक्ष्येत । तत्र व्यवस्थितलक्ष्यतावच्छेदकापेक्षया विशिष्टोपस्थितौ सैव वाक्यार्थाभेदबोधानुपपत्ति. । न चावच्छेदकभेदमन्तरेण स एव तावन्मात्रस्वभाव एवोपतिष्ठते नोपतिष्ठते चेति संभ-

---

१. 'मा', २ 'दाविव क' ख. पाठ

वति । तस्माद् यथास्वमितरेतरानपेक्षया पदैरेव विशिष्टार्थस्मरणे सत्यभेदव्यु-त्पन्नसमानविभक्तिसमभिव्याहारावगतपदार्थाभेदतात्पर्यानुपपत्त्या सभूय लक्ष-णया स्वरूपतावन्मात्राभेदो वाक्येन बोध्यते ॥

---

### विशिष्टाभेदभङ्ग ।

एवञ्च यदिद परेणोच्यते — पदवृत्त्या विशिष्टोपस्थितौ समानविभ-क्तिसमभिव्याहारेण विशेष्यैक्यमेव वाक्येन बोध्यत इति न विशेषणसाङ्कर्या-दिप्रसङ्ग इति, तदपास्तम् । विशेषणव्यावृत्तरूपेण विशेष्याभेदबोधानुपपत्तेः । सूचीपाशाकाशयोरिव तद्रूपेणाभेदासंभवात् । अत एव 'प्रदानवदेव तदुक्तम्' (ब्र० ३ ३ ४६) इति सूत्रवृत्तौ परेणैव 'गुणिन स्वरूपैक्येऽपि तत्तद्गुणवि-शिष्टाकारभेदादावर्तनीय पृथक् कामादिविशिष्टानुचिन्तनमि'त्युक्तम् । अत एव च 'इन्द्रायाधिराजाय', 'इन्द्राय स्वराज्ञे' इत्यादौ देवताभेदात् प्रदानभेद इष्य-ते । स्वरूपमात्राभेदबोधोपगमे तु वाचोयुक्त्यन्तरेणास्मन्मतानुज्ञैवेति ॥

---

### वाक्यार्थलक्षणोपपत्ति ।

ननु वाक्यार्थो न लाक्षणिको युक्त । कोऽयमभिप्रायः । पदस्य वृत्ति-र्लक्षणा, न वाक्यस्येति । न खलु पदेभ्यो वाक्यमतिरिच्यते, अखण्डवाक्यस्य स्फोटसंज्ञस्य मानाभावेनानभ्युपगमात् । विभागे सति साकाङ्क्षाणा पदानामेवैका-र्थकारित्वोपाधिना वाक्यत्वे च न युक्त पदस्य वृत्तिर्लक्षणा न वाक्यस्येति । अथा-यमभिप्राय — समभिव्याहृतानेकपदैरेकार्थो न लक्षणीय इति । कोऽत्र विरो-ध । पर्यायता हि नापतति, पदाना विशिष्टार्थभेदात् । नापि वैयर्थ्यमन्यतमस्य, सभूयकारित्वात् । अथ स्मर्यमाणशक्यसबन्ध तत्स्मृतिर्वा लक्षणा, स्वरूपसत-स्तस्य शब्दवृत्तित्वायोगात् । अन्यथातिप्रसङ्गात् । तत्र यदि प्रागतो वाक्यात् तदर्थो विज्ञातः, वाक्यानर्थक्यम् । अथाविज्ञात, न लाक्षणिकत्वमिति चेद् । ननु शक्तिरपि वाक्यस्याविज्ञाते वाक्यार्थे दुर्ग्रहा । यद्युच्येत — न शक्त्या वाक्यमर्थ बोधयति न वा लक्षणयेति, तर्हि वाक्यार्थानवबोध एव । वृत्ति विना शब्दस्याबोधकत्वात् । सर्वस्यैव प्रमाणस्य संबन्धावबोधित्वात् । अन्यथा तस्या-शाब्दत्वप्रसङ्गात् । शब्दोपजीवनमात्रेण शाब्दत्वे न्यायोपजीव्यनुमितेरतिदे-

शोपजीव्युपमितेश्च शाब्दत्वप्रसङ्गात् । तदेवं सति पदसमाहारेष्वभेदस्यान्यस्य वा वाक्यार्थस्यानादिवृद्धव्यवहारेण पदार्थविशेषमनपेक्ष्य सामान्यतो योग्य-पदवृत्तिविषयसबन्धमात्राधिगत्युपपत्तेस्तत्तत्पदवृन्दसमभिव्याहारसाचिव्येन ल-क्षणयानधिगतचरवाक्यार्थविशेषसिद्धिरुपपद्यते ।

अन्ये तु —

"वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति च स्थिति."

इत्यभियुक्तोक्तेः शब्द वृत्ति विना च शाब्दत्वानुपपत्तेरगत्या वाक्यार्थलक्षणाया स्वरूपसत्संबन्ध एव तन्त्रमित्याहुः ॥

---

## वाक्यार्थे पदशक्ति ।

अपरे तु वाक्यार्थे पदाना स्वरूपसती शक्तिरुपयुज्यते । सा हि समभि-व्याहारोपाधिक तत्प्रतीतिजननसामर्थ्यमेवेति मेनिरे ।

अत्र पक्षेऽपि शक्तेरग्राह्यतया प्रवृत्तिनिमित्तवैशिष्ट्यानवबोधनादखण्डा-र्थत्वमविरुद्धम् ॥

---

## वाक्यार्थतच्छेषौ ।

अथ लाक्षणिको वाक्यार्थशेष एव दृष्टो न स्वतो वाक्यार्थः, अर्थवाद-पदकदम्बकलक्षितस्यापि प्राशस्त्यस्यान्यशेषत्वादिति चेद् । ननु पदशक्योऽप्यर्थो वाक्यार्थशेषो दृष्ट. । तत्र लाक्षणिकत्वमतन्त्रम् । अतोऽधिगतमात्रस्य पदोप-स्थितस्य वाक्यार्थशेषता । अर्थवादस्यापि स्तुतिलक्षणया पदैकवाक्यत्वोपग-मात् । वाक्यैकवाक्येष्वपि पर्यवसितवृत्तेरवान्तरवाक्यार्थस्य पदार्थकक्ष्यामारूढ-स्यैव पुनः स्मृतस्य महावाक्यार्थशेषत्वात् । यथास्वमवान्तरवाक्यार्थबोधापर्य-वसाने चान्योन्यमाकाङ्क्षानुन्मेषादेकवाक्यत्वानुपपत्ते[1] । अवसितवृत्तेराकाङ्क्षा-नुरोधेनैकवाक्यत्वकल्पने च पदवृत्तिकक्ष्यानतिपातात् । यद्वा शब्दोपस्थितः

---

१ 'वि' ख. पाठः,

साकाङ्क्षो वाक्यार्थशेष । अतथाभूतस्तु लाक्षणिकोऽन्यो वा वाक्यार्थ इति तत्त्वम् । नन्वेव सति स्वार्थप्रहाण दोषः । न । तात्पर्यानुरोधेन 'अर्धमन्तर्वेद्यर्धं बहिर्वेदि', 'गच्छ गच्छसि चेत् कान्ते'त्यादाविव मुख्यार्थासभवे तस्यादोषत्वात् । लाक्षणिकस्यैव स्वरूपाभेदस्य ससर्गस्य वा स्वार्थतया वाक्यस्य तत्प्रहाणाभावाच्च । नन्वेवमपि गौरश्व' पुरुषो हस्तीत्याद्याप्तवाक्ये कथमविशिष्टार्थसामानाधिकरण्य, पदान्तरसमभिव्याहारोत्थाना हि लक्षणा । ततश्च वाक्यार्थबोध एव धुर्यत्वजवनत्वाविवेकित्वादिविशिष्टविषयो जायेत । तत्र विशिष्टाभेदप्रतीत्यविरोधे च नापराधो नीलोत्पलादौ सत्यादौ चेति । मैवम् । द्विरेफो नील इत्यादाविव लक्षितलक्षणया अविशिष्टार्थसामानाधिकरण्याविघातात् । अपिच वाक्यार्थानुगतपदार्थोपस्थितिद्वारैव पदानामर्थबोधकत्वात् प्रथम प्रतिपदलणाया अप्याश्रयणीयतया वाक्यावृत्त्या पुनर्वाक्यार्थलक्षणायामदोषः ।

"अरविन्दे मकरन्द झङ्कुर्वन् पिबति चञ्चरीकोऽयम्"

इत्यादावप्रसिद्धचञ्चरीकपदव्युत्पत्त्यपेक्षया वाक्यावृत्त्यैव तदर्थप्रतीतेरवश्यवाच्यत्वात् । एव सर्वत्र ससर्गस्य विशिष्टस्याभेदस्य वा वाक्यार्थस्य लाक्षणिकत्वे साधारणे मुक्तगौणमुख्यग्रहणव्यवस्थापन पदार्थविषयं दविष्ठविषय वावतिष्ठते । एतेन तत्त्वमस्यादावपि सद्वितीयत्वपारोक्ष्यादिविशेषससर्गावभासविरोधिस्वरूपाभेदलक्षणया सामानाधिकरण्यं व्याख्यातम् । एवञ्च,

"नातत् तन्मन्यसे तावद् न तत् तदपि मन्यसे ।
सामानाधिकरण्य हि रूपभेदमपेक्षते ॥ "

इति खण्डनमपास्तम् । वाच्यरूपभेदेन पदानामर्थस्वरूपमात्राभेदवृत्त्या सामानाधिकरण्याविरोधात् ॥

---

### पदार्थविशेषणवाक्यार्थविरोधे बलाबलचिन्ता ।

यत् पुनरत्र तान्त्रिकवाचाटेन रटित समानाधिकरणपदसमाहारे विशेषणपरिहाणौ को हेतुः । समानविभक्त्यवगम्यमर्थैक्यमिति चेत्, प्रातिपदिकावगतविशेषणान्वयादैक्यमेव । विभक्त्यर्थस्त्यज्यताम् । सञ्जातविरोधितयास्य दुरधिगमत्वात् । 'आदितिः पाशान् प्रमुमोक्तु,' 'ग्रह संमार्ष्टी'त्यादौ

प्रातिपदिकार्थप्राधान्योपगमेन विभक्त्यर्थबहुत्वादिपरित्यागाश्रयणात् । प्रयोगप्रतीत्योर्विशेषणान्वये विशेष्ये च परोक्षेऽपरोक्षे च साधारण्ये सत्यैक्यमेव शाब्दं, विशेषणान्वयः प्रात्यक्षिक इति नियमानुपपत्तेश्चेति ।

तत् तुच्छम् । अदितिः पाशानि'त्यादौ हि बहुत्वानादरो न प्रातिपदिकार्थविरोधात् । किं तर्हि, प्रकृतकर्मणि बहुपाशाभावेनासमवेतार्थतया मन्त्रस्य विनियोगरूपवाक्यार्थं प्रति पदार्थभावेनाङ्गस्य सतो गुणभूतबहुवचनार्थस्य प्रधानभूतवाक्यार्थविरोधाद्, 'अङ्गगुणविरोधे च तादर्थ्याद्' (जै० १२. २. २५) इति न्यायात् । तथाच पाशानिति प्रकृतिप्रत्ययमुख्यार्थत्वे विनियोज्यसामर्थ्यानुरोधेन पूषानुमन्त्रणमन्त्रवदुत्कृष्य बहुपाशककर्मनिवेशेन विनियोगे प्राप्ते प्रकृत्यर्थानुगमेन प्रकरणविनियोगोपपत्तये 'गुणे त्वन्याय्यकल्पनैकदेशत्वाद्' (जै० ९. ३ १९) इत्युच्यते । ग्रहैकत्वमपि प्रधानवाक्यार्थभेदप्रसङ्गादेव त्यज्यते । तथैवेहापि समानविभक्त्यवगमनीयैक्यस्य वाक्यार्थतया प्रधानत्वात् तदङ्गभूतपदार्थैकदेशो विशेषणं तद्बोधविरोधात् त्यज्यत इति विपरीतमुदाहरणम् । न च गोत्वाश्वत्वादेरिव सत्यज्ञानादौ नीलोत्पलादौ च विशेषणानामविरोधादत्याग एवास्तामिति वाच्यम् । यतो न वयमर्थतो विरोधं ब्रूमः, किन्तु प्रतीतितः । नहि विशिष्टोपस्थितामेदः प्रमातुं शक्यते, अतिप्रसङ्गादित्युक्तम् । एतेनैक्यं यदि स्वरूपमात्रं न विशेषणान्वयविरोधः । तस्यानेकविशेषान्वयदर्शनात् । अथातिरिच्येत, न वाक्यमखण्डार्थमिति प्रत्युक्तम् । विशेषणविच्छेदेन स्वरूपमात्रैक्यबोधासम्भवात् ॥

---

### अखण्डार्थत्वानुमानम् ।

तस्मात् सिद्धं सत्यादिवाक्यं तत्त्वमादिवाक्यं वा अखण्डार्थं, स्वपदस्मारितविशेषणसंसर्गानवगाहिस्वपदार्थप्रमितिपरं वा, तादृशप्रमितिपर्यवसायीति वा, संसर्गागोचरप्रमितिपर्यवसाय्येव वा । तेन न विशिष्टार्थप्रमितिपरत्वेनार्थान्तरता । तत्राप्यर्थाक्षिप्तविशेषणसम्बन्धावगाहनं, यावद्वाक्यस्यापर्यवसानात् । लक्षणवाक्यत्वादभेदपरवाक्यत्वात् समानाधिकरणवाक्यत्वाद् वा, *प्रकृष्टादिवत्, सोऽयमित्यादिवद् नीलमुत्पलमित्यादिवच्च । यदि समभिव्याहृतैकप्रातिपदिका-

---

१. 'यमादि' ख पाठ.

---

* प्रकृष्टप्रकाशश्चन्द्रः ।

र्थाधिकविषयप्रमितिजनक स्यात्, समानाधिकरणवाक्यं न स्यात्। गामानयेतिवत्। यदि व्यधिकरणपदविधुरत्वे सति स्वपदस्मारितविशिष्टार्थविषयप्रमितिजनक स्यात्, समानाधिकरणपद न स्यात्। शुक्लां गामानय, 'अरुणया पिङ्गाक्ष्या क्रीणाती'त्यादौ सत्यन्ताभावाद् न व्यभिचारः। यदि व्यधिकरणसंसर्गाद्यबोधकत्वे सति स्वपदस्मारिता[1]विशिष्टार्थप्रमितिपरं न स्याद्, वाक्यमेव न स्यात् पदमात्रवत्। यदि स्वपदस्मारितविशेषणपरिच्छिन्नार्थविषयप्रमितिपर स्यात्, स्ववृत्तिविषयाभेदप्रमितिपर न स्यात्। स चाय चाभिन्नः, स एक इत्यादौ च वाक्यार्थभूतस्वरूपतावन्मात्राभेदविषयवाक्यजन्यप्रमितेरतिरेकविकल्पितपदस्मारिताभेदपरिच्छिन्नाविषयत्वान्न व्यभिचारः। यदि स्वव्यापारनिरपेक्षविज्ञेयस्वार्थवैशिष्ट्यतात्पर्याभावविधुर स्याद्, लक्ष्यविषयकस्वार्थवैशिष्ट्यप्रमितिपरं वा स्याद्, लक्षणवाक्य न स्यात्। अज्ञातस्य लक्षणत्वायोगाद् ज्ञाते च तात्पर्यवैधुर्यादिति विपक्षे बाधकस्तर्कः॥

प्रमाणशब्दत्व च प्रत्यनुमानमप्रयोजकम्। व्यधिकरणवाक्यत्वस्य स्वार्थाभेदाप्रमापकवाक्यत्वस्य वोपाधित्वात्। उक्तयुक्त्या बाधितविषयत्वाच्च। यत्तु—एकप्रातिपदिकार्थमात्रनिष्ठत्वे समानाधिकरणवाक्य न स्यादिति, तद् विरुद्धतया निरस्तम्। विशिष्टवृत्तावेवार्थभेदे सति सामानाधिकरण्यायोगात्। यदपि स्वरूपमात्रप्रमितिपरत्वे संशयविरोधिज्ञानजनक न स्यादिति, तदप्यवधारणानवधारणविभागेनाप्रयोजकतया प्रत्युक्तम्॥

---

## सत्यादिवाक्यस्य लक्षणवाक्यत्वम्।

ननु सत्यादिवाक्यस्य लक्षणवाक्यत्वमसिद्धम्। सत्यज्ञानादिस्वभावस्यापूर्वत्वेनाधुनैव बोध्यत्वात्। अपिच नायमिहान्वयो ब्रह्म नाम सत्य ज्ञानमनन्तमिति, 'यो वेदे'ति सापेक्षत्वापत्तेः। तदित्यधिकावापप्रसङ्गाद् वा। अत एव 'यो वेदे'त्यन्विताभिधायितया न समानाधिकरणवाक्यत्वमपीति चेद्। न। यतोऽवान्तरवाक्यभङ्ग्या समानाधिकरणवाक्यत्व तावदुपपद्यते। लक्षणवाक्यत्वमपि पदवृत्त्या अतिरेकविकल्पोपस्थितसत्तादेरेव लक्षणत्वात्, तस्यैव चैकरस्येन लक्ष्यतया स्वरूपलक्षणत्वप्रवादानपवादाच्च। यत्तु जगज्जन्मादिका-

1. 'त' ख पाठः.

रणं तद् ब्रह्मेत्यत्र जगत्कारणरूपेण स्वरूपेण चानुवाद्यतया तदुपस्थापकसत्य-ज्ञानानन्दादिपदपर्यायकल्पेन यत्पदेन सत्यादिपदाना तुल्ययोगक्षेमतयादोद-शायामार्थिकस्य लक्षणवाक्यत्वस्योपपत्तेश्च । यद्यपि 'विज्ञानमानन्द ब्रह्म', 'सत्य ज्ञानमनन्त ब्रह्म' इत्यादौ ब्रह्मान्तर्भावेन तथैवात्र यदित्यनुवाद्य प्राप्नो-ति, तथापि सितमुत्पल नीलमुत्पलमित्यादावुत्पलान्तरमिवान्यदन्यद् ब्रह्म मा शङ्कीति ब्रह्मेति विभज्य निर्दिश्य यदिति सत्यज्ञानानन्दादिलक्षणमुच्यते । अत एवार्थिकस्य समानाधिकरणवाक्यत्वस्यापि नासिद्धिः । एव चास्यां द-शाया सत्यादिमात्रस्यानुवादकतापत्तावपि ब्रह्मपदान्तर्भावेन प्रमितिजनकतया बाधाप्रसङ्गः ।

यत्तु—सत्यादिवाक्यमखण्डार्थमिति प्रतिज्ञावाक्यस्याखण्डार्थत्वे न कि-ञ्चित् प्रतिज्ञातं स्यात् । विशिष्टार्थत्वे तत्रैव समानाधिकरणवाक्यत्वहेतोरनैका-न्त्यमिति । तन्मन्दम् । अखण्डार्थत्वे सत्येव बाधकाभावेन पदस्मारितविशेष-स्यापि तत्र भानोपगमात् । अत एव 'नियतात्मा महावीर्य.' इत्यादिषु प्रशं-साद्यवगतिरुपपद्यत इत्युक्तम् ।

अथापि स्यात् । नीलमुत्पल सोऽयमित्यादाविव प्रतिपन्नाभिन्नस्वरूप एव प्राप्तप्राप्तव्यस्यातिक्रान्ताध्वावमर्शन्यायप्राप्तो विशेषणसबन्धावभासः सत्यादौ तत्त्वमादौ चानुगम्येत, ततो न ब्रह्मनिर्विशेषता । न वार्थो ब्रह्मविद्यया, जीव-स्य ससारित्वादिविशेषानपायात् । न खलु प्रतिपन्नपदार्थविशेषणप्रत्याख्यानेन स्वरूपाभेदो वाक्येन बोध्यते । नीलत्वादेरप्रत्याख्येयत्वात्, सकृत्प्रयुक्तस्य वाक्यस्य युगपत् क्रमेण वा व्यापारद्वयायोगाद्, अर्थभेदे वाक्यभेदापाताद्, विरम्यव्यापारगौरवाच्च । न च नान्तरीयको विशेषणबाधः, अभिन्नस्वरूप एव कथमपि सभवात् । स्वरूपप्रत्ययस्य बाधमन्तरेणासभवदर्थाभावात् । प्र-त्यक्पराग्भावस्यापि शरीराद्याकारपरिणताशेषु भूतेष्विवाविरोधादिति ।

मैवम् । आनन्त्योपलक्षणीयनिश्शेषविशेषससर्गावभासविरोधिस्वरूप-सत्यज्ञानानन्दात्मकवाक्यार्थे सत्यत्वादिधर्मवैशिष्ट्यावभासानुपपत्ते., तस्य वा-क्यार्थस्वरूपावगमनान्तरीयक[१]बाधात् । ससा(रे[२]री)श्वरभावादिक चौपाधिकम-व्यपदेश्यस्वरूपाभेदात् । चिच्छक्तिविशिष्टकारणैकान्तिक सर्वज्ञत्वादि कि-

१. 'नान्तनान्तरी', २. 'का' ख. पाठ.,

णमकार्यमित्यर्थः । 'एष सर्वज्ञ' इति तमस्विनमुक्त्वा 'नान्तःप्रज्ञं नबहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञं नाप्रज्ञं नप्रज्ञानघनं' सर्वविषयासंस्पृष्टप्रकाशमात्रम्, अत एवातीतोपाधिपथतया नानोपाधिसंभेदविवृत्तप्रज्ञाग्रदिमसम्मूर्छनारूपप्रज्ञानघनं न भवति, न सर्वज्ञमित्यर्थः । 'अयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे'ति च निरन्तरज्ञानैकरस्यमेवोच्यते । अन्यथा 'न प्रज्ञानघनमि'ति निषेधविरोधात् । 'अतिच्छन्दा अपहतपाप्मा', 'अकामरूपं', 'साक्षी चेता केवलो निर्गुणश्च', 'उपशान्तोऽयमात्मा'. 'प्रपञ्चोपशमं शिवोऽद्वैत आत्मैव', 'स एष नेति नेत्यात्मा', 'अथात आदेशो नेति नेती'ति, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह', 'तमेवैकं जानथ आत्मानमि'त्यादिषु निर्विशेषस्वरूपावगमात् । स्मृतिषु च

"अनादिमत् परं ब्रह्म न सत् तन्नासदुच्यते"
"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसाम्"

इत्यादिषु निर्विशेषं प्रतीयते । तथारूपं च ब्रह्मोपसंहर्तव्यम् । 'तत्त्वमसी'त्यादिषु सर्वशाखाप्रत्ययन्यायात् । तस्मिंश्च प्रतिषिद्धाशेषविशेषेऽपरोक्षसत्तासंविदानन्दैकरसस्वरूपाभेदं बोध्यमाने पदवृत्त्युपजीव्यमपि यत् किमपि विशेषणजातं तत् स्वरूपाविद्याविलसितमिति सर्वशो नान्तरीयकबाधविषयतामापद्यते । अबाधिते तस्मिंस्तद्रूपब्रह्मात्माभेदानुभवप्रतिष्ठायोगात् ॥

---

## विषयव्यवस्थायां परोक्तन्यायद्वयम् ।

ननु च

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥"

तच्चेदं 'सदेवे'त्यादिषु सविशेषविषयमुपलक्ष्यते न तु तत्र विरुद्धं किञ्चिदित्युक्तम् । तच्च सविशेषमेव सर्वत्रोपसंहर्तव्यमिति विपरीतः सर्वशाखाप्रत्ययन्यायः । ननु दर्शितानि निर्विशेषविषयाणि वचनानि । न च तदेव निर्विशेषं सविशेषं वा वस्तु विकल्प्यते, विरोधात् । वक्तव्या तावद् व्यवस्थेति । उक्तैव व्यवस्था । गुणसामान्यनिषेधाश्छागपशुन्यायेन पाप्मादिप्राकृतहेय-

गुणनिषेधविषया उपसंह्रियन्ते। अथवा पाश्वलम्भविधौ सति हिंसासामान्यनिषेधवत् सर्वज्ञत्वादिगुणविधौ सत्युत्सर्गापवादन्यायेन विहितेतरविषये सङ्कोच्यन्ते, उभयाबाधोपपत्तेरिति। सति चोपक्रमादिलिङ्गेन सर्वज्ञसत्यकामादिगुणमयजगत्कारणैदम्पर्ये वेदान्तानां 'स कारणं करणाधिपाधिपः', 'तत् कारणं सांख्ययोगाभिपन्नमि'त्याद्याम्रेडने च 'न तस्य कार्यं करणं च विद्यते', 'अपूर्वमनपरमि'त्यादि न कारणत्वनिषेधपरं युक्तम्। किन्तु जगदात्मना करणीयमुपादानमन्यच्च सहकारि तस्य न विद्यते कुविन्दस्य तन्तुवेमादिवत्, तस्यैव सङ्कल्पमात्रेण जगदुपपत्तेः। देशादिकृतपरत्वापरत्वमस्य सदा सर्वात्मनो न विद्यत इत्येवपरमेव। अत एव कारणरूपभेदसर्वज्ञत्वादिनिषेधासम्भवाद् 'नान्तःप्रज्ञम्', 'अतिच्छन्दाः' इत्यादि कथञ्चिदस्मदादिवैलक्षण्यपरं व्याख्येयं बाधकल्पनानौचित्यादिति॥

---

## कारणनिर्विशेषयोस्तात्पर्यातात्पर्ये।

नैवम्। कारणरूपस्य शास्त्रतात्पर्याविषयत्वात्, प्रतिपिपादयिषितब्रह्मलक्षणत्वेन यज् जगत्कारणं तद् ब्रह्मेति प्रसिद्धवन्निर्देशात्, प्रतिपाद्ये च 'य आत्मा अपहतपाप्मे'त्यादावपूर्वत्वेन 'यदाग्नेयोऽष्टाकपाल' इत्यादाविव प्रसिद्धवृत्तित्वबाधात्, 'य एषोऽन्तरादित्ये हिरण्मयः पुरुष' इत्यादाविव शास्त्रदृष्ट्यपेक्षया प्रसिद्धवन्निर्देशोपपत्तेर्वा, 'एष आत्मा अपहतपाप्मे'त्यादिदहरविद्याधिगतस्य सन्निहितस्य प्रत्यगात्मानन्यत्वविधानाय प्रत्यवमर्शाद्वा। प्रतिपाद्यत्वे च कारणरूपस्यानधिगतस्य ब्रह्मलक्षणत्वायोगात्। आगमाधिगतमेव तल्लक्षणं भविष्यतीति चेत्। कस्य नु भोः। कारणात्मकं हि ब्रह्माधिगतमेव, निर्विशेषं तु तव नेष्यते। अपिच लाघवानुगृहीतकार्यत्वाद्यनुमानेनानिर्धारितस्वभावविशेषनियन्त्रुपादानसिद्धौ यत् तदुपादानं यश्च स नियन्ता तत् सत्ताद्येकरसं ब्रह्मेत्येतावत्येव शास्त्रतात्पर्ये लाघवादन्यथासिध्यति कारणत्वसर्वज्ञत्वादौ तत्कल्पना गौरवहता। न च कारणत्वादि तस्य स्वभावः प्रकाशानन्दादिवत्। नहि परोपाधिकं च तत् स्वाभाविकं चेति युक्तम्। न खलु स्त्रैणपौंस्नादि वा बाल्ययौवनादि वात्मनः स्वभावः। किं कारणं, देहोपाधिनिबन्धनत्वात्, तादृ-

गेतत् । न च नित्यानपायिम्वात्मविवेकासहशक्तिभूनतमश्शरीरकस्वभावमेव ब्रह्म, येन तस्य कारणत्वादि स्वभाव स्यात् । 'तमस· परस्तात्', 'क इत्था वेद यत्र सः', 'अक्षरात् परतः पर'' इत्यादिकारणोपाधिविवेकाम्नानात् ॥

---

## प्रियशिरस्त्वाद्यप्राप्तिरिति न्यायः ।

अपिच कार्यविषयोपचयापचयोपाधौ उपचितापचितरूप कारणत्व-सर्वज्ञत्वादि न ब्रह्मण· स्वभाव इति शक्यमुपगन्तुम् । यत. प्रियमोदा-दीनामुपचितापचितरूपाणामभिन्नैकरूपब्रह्मस्वभावबहिर्भावाद् मा भूदानन्दा-दिवत् सर्वविद्यासूपसहार इत्याह सूत्रकारः—'प्रियशिरस्त्वाद्यप्राप्तिरुपचयाप-चयौ हि भेदे' (ब्र० ३ ३ १२) इति । न च प्रियादयो ब्रह्मणो निरति-शया एव, विषयोपाधिमनपेक्ष्य तद्भेदानिरूपणात् । विषयाणा चोपचिता-पचितरूपत्वे तदुपधेयभेदाना तेषामपि तन्नियमात् ।

योऽप्याह — प्रियशिरस्त्वादीनामाध्यानाय ब्रह्मणः पुरुषविधत्वरूपणा-न्तर्गतत्वादप्राप्ति. । अन्यथा शिर पक्षाद्यवयवभेदे सति ब्रह्मणो ह्युपचयापचयौ प्रसज्येयाताम् । नात्र वृद्धिह्रासौ प्रसञ्जनीयौ । विग्रहविशेषनित्यत्वोपगमविरो-धात् । नाप्यवयवोपगमापगमौ, भगवन्नित्यविग्रहे व्यूहविभवाद्युपगमापगमयोः प्रामाणिकत्वात् । अत एव तत्रैच्छिकपरिमाणतारतम्यमिष्टमेव । तदंशविग्रहेषु बाल्ययौवनादिदर्शनात् । किन्तु कालभेदानपेक्षौ प्रकोष्ठाङ्गुल्योरिव स्थूलकृशा-भावौ ब्रह्मस्वरूपे अस्थूलादिश्रुतिनिषिद्धाविति ।

तस्यापि प्रियमोदादय. कारणत्वसर्वज्ञत्वादयोऽन्ये च सर्वत्र कि नो-पसह्रियेरन्, जगत्कारणत्वोपलक्ष्यब्रह्मस्वरूपप्रतिपत्त्यनुबन्धिन आनन्दादय उपसंह्रियन्ते नान्य इति चेद् । न । ब्रह्मसामानाधिकरण्याम्नानाविशेषे विशेष-जातस्य तदनुबन्धित्वाननुबन्धित्वव्यवस्थाहेत्वभावात् । 'यतो वा इमानी'त्या-दिनिर्देशात् कारणत्वस्येव ज्ञाप्यस्वरूपानन्तर्गतत्वमपहतपाप्मत्वादेरपि 'य आत्मापहतपाप्मे'त्यादिनिर्देशात् स्यात्, क्वचिज् ज्ञापककोटिनिवेशाविशेषात् । तस्मात् प्रियादयः कारणत्वादयोऽन्ये वा परोपाधिका उपचयापचयरूपकाश्च

न स्वाभाविका इत्येव सर्वत्रानुपमहार्या इति युक्तमुत्पश्यामः । एव च ब्रह्मणो नित्यविग्रहो व्यूहोपगमादिरैच्छिकपरिमाण इत्यादि वेदबाह्योत्प्रेक्षैवेति ॥

---

### आत्मनो मायामयोपाधि ।

तच्चेदमात्मनो जगत्कारणत्वादिकमन्यसव्यपेक्षमनन्तविचित्रस्थिरत्रसरूपावभासक्षममायोपाधिकमेषितव्यम् । 'इन्द्रो मायाभि· पुरुरूप ईयते', 'मायी सृजते विश्वमेतत्', 'सभवाम्यात्ममायये'त्यादिश्रुतिस्मृतिदर्शनात् । सैषानादिसिद्धाचिच्छक्तिरात्मन कारणत्वसर्वज्ञत्वादिकमावहन्ती माया योनिः प्रकृतिरित्यादिभिरभिलप्यते । सैव तस्य स्वरूपावरणेन देवतिर्यगादिभूतसङ्घाततादात्म्याभिमानससारविभ्रममापादयन्ती तमोऽज्ञानमाविद्येत्यादिभिरभिधीयते । अत एव माया चाविद्या च स्वयमेव भवति ।

"तरत्यविद्या वितता हृदि यस्मिन् निवेशिते ।
योगी मायाममेयाय तस्मै विद्यात्मने नमः ॥
नासद्रूपा न सद्रूपा माया नैवोभयात्मिका ।
अनिर्वाच्या ततो ज्ञेया भेदबुद्धिप्रदायिनी ॥
मायैवाज्ञानशब्देन शब्द्यते मुनिसत्तमाः[1] ।"

इत्यादौ मायाविद्यासामानाधिकरण्यमुपपन्नम् । सोऽयमात्मा मायोपाधेरारभ्यान्त्यात् कार्यात् कारणात्मा तादात्म्यापत्त्यानुप्रवेशेन मृदिव घटमणिकमालिकाद्यात्मत्वमशेषजगद्रूपत्वमापद्यते । तदेतदाम्नायते — 'तत् सृष्ट्वा', 'तदनुप्रविश्य सच्च त्यच्चाभवत्' 'सर्वं खल्विद ब्रह्मे'त्यादि । स एष सङ्घातविशेषाकारपरिणतेपु तादात्म्यमात्मनश्चेतयमानोऽनादिप्रवृत्ताविद्याकामकर्माशयमयलिङ्गात्मा जीवः ससारीत्युच्यते । यत्रेदमाम्नायते 'तस्मिश्चान्यो मायया सन्निरुद्धः',

"समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमान."

'तस्य त्रय आवसथास्त्रय स्वप्ना' इत्यादि । अन्यः पुनः चिदचिदात्मकसकलजगत्प्रसवबीजमायोपाधिनिमित्तसर्वज्ञत्वादिगुणवत्तया स्रष्टा सकलजगतो

मायोपाधिप्रमुखस्य तच्छरीरतया नियन्ता चेतनानां कर्मज्ञानफलाभ्युदयापवर्गहेतुरीश्वर इत्युच्यते । यद्विषये 'मायी सृजते विश्वमेतत्', 'स कारणं करणाधिपाधिपः', 'प्रधानक्षेत्रज्ञपतिर्गुणेशः', 'य पृथिवीमन्तरो यमयति', 'भीषास्माद् वातः पवते', 'चेतनानामेको बहूनां यो विदधाति कामान्' इत्याद्याः श्रुतयस्ताविमावधिकृत्य 'ज्ञाज्ञौ द्वावजावीशानीशा'वित्याद्या प्रवर्तन्ते । एवमियमनादिरेषा कल्पना । कल्पनात्वेऽप्यनादित्वमग्रे वक्ष्यते ॥

---

## परोक्तोपक्रमादिभङ्गः ।

न च सविशेषे ब्रह्मण्युपक्रमादिलिङ्ग, येन कारणत्वादिनिषेधः कथञ्चिद् नीयेत । यत् तावद् 'उत तमादेशमप्राक्ष्यः' इति प्रथमतरमेव प्रशासितोपक्रान्त इति । तत तुच्छम् । आदेशशब्दस्य घञन्तस्य कर्तरि वृत्त्यनुपपत्तेः । 'अकर्तरि च कारके सञ्ज्ञायाम्' (३. ३ १९) इति स्मरणात् । न च कर्तर्येव करणत्वोपचारकल्पना । हेत्वभावात् । नहि प्रकृत्यर्थः प्रधानं, येन तत्स्वारस्यमनुरुध्येत । 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत' इति हि शाब्दाः । उपचारे चासिश्छिनत्तीत्यादौ कर्तुरिवात्र प्रशासनकरणस्यैव प्रत्यये कर्तुरधिकस्याक्षेपप्रसङ्गाद्, उपदेश्यत्वस्य फलसाधनसाधारण्येऽपि व्यपदेशस्य प्रधानविषयत्वोपपत्तेः । ससाधनफलस्य विधेयत्वेऽपि कर्मणो विधेयत्वव्यपदेशवत् । अनूचानमानिन उपायान्तरविज्ञेयतयान्यथासिद्धिपरिहारेणोपदेश्यत्ववचनस्य प्रष्टव्यत्वोक्त्यपेक्षितत्वेन तदर्थासिद्ध्यनुपपत्तेश्च । प्रशासितृत्व पुनरनपेक्षितमवक्तव्यम् । न खलु तदुक्तावप्युपादानान्यत्वे सत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा समर्थ्येत । 'बहु स्यां प्रजायेये'ति तस्योपादानत्वमग्रे वक्ष्यत इति चेद्, निमित्तत्वमपि तस्य 'तदैक्षतेति' वक्ष्यते । तत्र च नादेशशब्दस्योपचारो युक्तः । यत्पुनरादेशशब्दस्य प्रशासने प्रसिद्धिरिति । सत्यमेवम् । किन्तु ब्रह्मणः शास्यत्वानुपपत्तेः कर्तरि च शब्दासाधुत्वाद् विधिरुपदेशो वा प्रकृते विवक्षितव्यः । न चाप्रसिद्धिः । 'एष आदेशः', 'आदेश आत्मा', 'गुह्या आदेशा मधुकृत', 'तदादिष्टेन वर्त्मने'त्यादिवेदलोकयोरप्रशासनेऽपि बहुल प्रयोगदर्शनात् । एव चाङ्पूर्वो दिशिर्नियोक्तृप्रयोजनवचन इति शासनेऽपि प्रयोगदर्शनाभिप्राय व्याख्येयम् ।

उपसंहारश्च 'ऐतदात्म्यमिदं सर्वं', 'तत्त्वमसी'ति नान्तर्याम्यभिप्रायः, सामानाधिकरण्यानुपपत्तेरुक्तत्वात् । 'तदैक्षते'ति च न सविशेषाभ्यासः । तद्धि मृषोपाधिविकल्पमात्रमिति वक्ष्यते । न चापूर्वता, कारणरूपस्यानुमानाद्यवसेयत्वात् । फलं च स्वरूपप्रतिष्ठा कैवल्यं निर्विशेषज्ञानादेवेत्युक्तम् । सविशेषोपपत्तिर्नास्त्येव । अत्रैवोपक्रमादिलिङ्गेन निर्विशेषतात्पर्यावगमात् । न्यायगम्ये कारणात्मन्युपदेश्यत्वोपक्रमविरोधात् । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि'ति स्वरूपावधारणाविरोधाच्च । यत्तु—अत्र न्यायिसम्प्रतिपन्नासत्त्वव्युदासेन कार्यप्रपञ्चस्य कारणावस्थाया सत्त्वमवधार्यते इदं सदेवासीदिति । न त्वन्द्यमत्त्वेन निर्विशेषं ब्रह्म । इदमग्रादिशब्दसमभिव्याहारविरोधादित्याद्युक्तम् । तदयुक्तम् । यदि हि ह्यो घट. सन्नेवासीदित्यादाविव इदं सदेवासीदिति सत्पदमिदमर्थवृत्त स्याद्, न ब्रह्मप्रत्यय स्यात् । ब्रह्मपरत्वे चास्य न कार्यसत्त्वावधारणपरत्वप्रतीति । 'आत्मा वा इदमेक एवाग्र आसीदि'त्यादिना चैकार्थ्यं युक्तम् । न च तत्राप्यात्मशब्दस्तमश्शरीराविभक्तकारणावस्थात्मविषयः, इहैव तु निष्कृष्टात्मविषयत्वप्रसिद्धिहानौ हेत्वभावाद् । मोक्षफलाय हि विज्ञेयवस्तुस्वरूप प्रस्तुत्य तदुपलक्षणतया कारणरूपं परत उपक्षिप्यते 'तदैक्षते'ति । अत एव तत्र तत्रेदप्रथम इव जीवभावो व्यपदिश्यते 'अनेन जीवेनात्मनानुप्रविश्य', 'स एतया द्वारा प्रापद्यत', 'तस्य त्रय आवसथा.', 'तदनुप्रविश्य सच्च त्यच्चाभवदि'त्यादिना । 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमि'त्यादौ च निर्विशेषमुपक्षिप्य 'यद् भूतयोनि परिपश्यन्ति धीरा.' इत्यादिना तस्य लक्षणमुच्यते । नहि तस्य नित्यत्वविभुत्वादयो गुणा विवक्ष्यन्ते, अदृश्यत्वाग्राह्यत्वविरोधात् ॥

---

### तद्धेद तर्हीत्यादेर्निर्विशेषविषयता ।

'तद्धेदं तर्ह्यव्याकृतमासीदि'त्यत्र तु मृत्युनैवेदमावृतमासीदिति कार्यावारकप्रागवस्थारूपमृत्युशब्दिततमस्संभिन्नात्मप्रक्रमात् तद्विषयत्वमुपेयताम् । यद्वा नात्र तस्याव्याकृतत्व विधीयते तदव्याकृतमासीदिति, इदम्पदानन्वयात् । नापि तस्याव्याकृतस्य सत इदम्भावः, विरोधात् । नाप्यस्याव्याकृततद्भावः

तस्यैव प्राधान्यात्, प्रकरणस्य च तत्परत्वात् । अस्मिंस्तद्भावस्य तस्मिन्नव्याकृतभावस्य च युगपदेकवाक्येन प्रतिपत्तुमशक्यत्वाच्च । तदयमर्थः — 'ओं तत् सदिति निर्देशो ब्रह्मण' इति स्मृतेस्तद् ब्रह्मेदमात्मना प्राङ् न व्याकृतमासीत् । किन्तु स्वरूपकैवल्य एव स्थितमासीदिति । तद् निर्विशेषात्मविषय एव तत्रापि प्रक्रमः । अत एव 'स एष इह प्रविष्ट आ नखाग्रेभ्य.' 'प्राणन्नेव प्राणो नाम भवती'ति तस्येदप्रथममिव जीवभावं व्यपदिशति ॥

---

## सदेवेत्यादिश्रुत्यर्थः ।

तस्यैव त्वेवमवस्थत्वादिदंसामानाधिकरण्येन सत् तद्रूपापवादेन केवलस्वरूपमवधार्यते सदेवेदमासीद् नेदमासीदिति । अन्यथा एवकारवैयर्थ्यात् सत्त्वोक्त्यैव कार्यसत्त्वसिद्धेः तदसत्त्वस्य पृथङ्निरस्तत्वाच्च । न चात्र 'अग्र आसीदि'ति कालसंबन्धोऽपि विवक्षितः । 'नैत सेतुमहोरात्रे तरत.', 'यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तते', 'अन्यत्र भूताच्च भव्याच्चे'ति तस्य कालातीतत्वश्रवणात् । किन्तु सत एवेदमिति सन्निहितकालजगद्रूपनिर्देशापेक्षया विकल्प एवाग्र आसीदिति । अथवा 'ज्ञः कालकाल.', 'काल. कलयतामहम्' इत्यादिशास्त्रादात्मानमेव कालं जगद् वर्तमानत्वोपाधिना भूतरूपमुपचर्य 'स्वे महिम्नि प्रतिष्ठित' इत्यादाविव भेदोपचारेणाग्र आसीदिति बुद्धिसौकर्यायोपदिश्यत इति युक्तम् ।

परमते तु यद्यग्र इदमासीदिति संबन्धः, प्रलयविरोधः । इदं कार्यावस्थं ब्रह्म सदेव कारणावस्थमेवासीदिति संबन्धस्तु स्यादुपपन्नः । कारणात्मनि कार्यप्रागवस्थारूपभेदस्य भूतत्वात् । किन्तु तद्रूपविशिष्टस्य सत ऐतदात्म्यमिदं सर्वमि'ति प्रकृतालम्बनेनैतदावमृश्य सार्वात्म्योपदेशविरोधः, कार्यकाले तदवस्थाभावात् । तथाच कारणात्ममात्रमेव सदिति तस्य भूतत्वावगमाविरोध इति ॥

---

## एकमेवाद्वितीयम्।

तस्यैतस्य सतः स्वरूपमभिधीयते 'एकमेवाद्वितीयमि'ति। तत्र सजातीयादिभेदव्युदासपरत्वं युक्तम्। यद्यपि प्रागपि सृष्टेरस्ति जीवादि। तथापि निष्कृष्टात्मतत्त्वनिरूपणेन पुरुषार्थलम्भनायेदम्प्रथममिव सर्गं कृत्वा ब्रवीति—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि'ति। अथवा सत एव जगन्निमित्तोपादानत्वं वक्तव्यम्। अन्यथा विकारमृषात्वेन प्रतिज्ञातनिर्विशेषपरिच्छेदायोगात्। तत्र परमाणुवाद इव न सजातीयसंयोगेनारम्भः। नापि प्रधानवाद इव गुणवैषम्यविमर्देन परिणामः। न वा निमित्तान्तरापेक्षा, सजातीयाभावादेकरसत्वाद् द्वितीयाभावाच्चेत्येतद् विवक्षित'मेकमेवाद्वितीयमि'ति। परस्य तु सदेवेत्यवधारणादेवाव्यक्तनामरूपत्वाकाशाद्युपसंहारसिद्धा'वेकमेवे'त्यादिवैयर्थ्यम्। मध्येऽपि च 'एतदात्म्यमिदं सर्वं तत् सत्यमि'ति च। 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमे'ति च प्रतिज्ञातं निर्विशेषमेव परामृश्य 'आत्मैवेदं सर्वमि'त्युपसंहरति। न च विशिष्टविषये सामानाधिकरण्यम्, अन्यरूपनिषेधपरैवकारविरोधात्। बाधपर्यवसायि चोपादानोपादेयभावनिबन्धनं सामानाधिकरण्यं निर्विशेषमेवोपसंहरति। जगद्रूपविवृत्तात्मवृत्तजगद्वाचिपदस्यात्मपदसामानाधिकरण्येन स्वरूपाभेदे बोध्यमाने 'आत्मैवेदं,' 'नेदमि'ति स्वशब्दाद् 'नेह नानास्ती'त्यादेश्चावगतबाधस्य नान्तरीयकतया च न बाधलक्षणादोषः। अत एवाचेतनवर्गस्योपादेयतया सन्मात्रकैवल्येऽपि नित्ये जीवे पृथग्भूते सति विवक्षितनिष्कैवल्यं मा भूदनुपपन्नमिति 'तत्त्वमसी'ति तावन्मात्रतामुपदिशति। पदवृत्तिनिमित्तभेदस्य नान्तरीयकत्वाद्योपपत्तेः॥

---

## वाचारम्भणवाक्यार्थः।

मृदादिदृष्टान्तेनापि हि निर्विशेषमेवोपपाद्यते। 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमि'ति प्रतिपिपादयिषितब्रह्मविज्ञानेन सर्वविज्ञाने प्रतिज्ञातेऽन्यविज्ञानेनान्यविज्ञानासम्भवशङ्कायां मृदादौ दृष्टान्तिते तत्रापि कथम्भावे दृष्टान्तसिद्धये विकारमृषात्वेन कारणस्वरूपसत्यत्वमवधार्यते 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि'ति। वाचा वागिन्द्रियेणारभ्यते। रला-

भेदः। स्पृश्यत इत्यारम्भणम्। नामधेयापेक्षया क्लीबता। अथवा वाचाया आरम्भणमालम्बनमित्यर्थः। किं तद् विकारो घटशरावोदञ्चनादिः। ननु वागालम्बन नाम, नार्थः। सत्यम्। विकारोऽपि नामधेयमेव। किमेवं रूपधेयनामधेयैकत्वम्। अथवा रूपधेयस्यात्यन्तासत्त्वमेव। नामयथापि, तयोर्ग्राहकरूपकार्याणामत्यन्तवैलक्षण्यात्। नैव, मृत्तिकेत्येव सत्य न विकारः। नहि वयमत्यन्तासत्त्व विकारस्य नामधेयैक्य वाचक्ष्महे. किन्त्वनृतत्वम्। विकारो हि न पुरस्ताद्, न परस्ताच्च। मध्ये कथमसदुत्पद्यताम्। सद्वा कथमभावमापद्यतामिति विचारविशरारुतया मृषात्वेन नामधेयमित्युच्यते। सुत इति नामधेयमित्यकार्यक्षमत्वादिनिबन्धनव्यवहारदर्शनात्। नचैव नामधेयमित्यस्यानृतत्वे लक्षणाप्रसङ्गो दोषः, विकारो नामधेयमिति शक्यमात्रसामानाधिकरण्यासम्भवेन लक्षणाया अवश्यवाच्यत्वात्। तत्र च 'मृत्तिकेत्येव सत्यमि'ति वाक्यशेषानुरोधेनानृतत्वस्यैव लक्ष्यत्वात्। न चैव मृत्तिकैव सत्येति स्याद्, न त्वित्येव सत्यमितीति वाच्यम्। इतिना हि मृत्स्वरूपावमर्शिनानृतकार्यसव्यपेक्ष कारणत्वमपि मृषेत्यवबोध्यते। अपरे तु वाचा व्यवहार आरभ्यतेऽस्मिन्निति वाचारम्भण विकारो घटादिः। नामधेय विकल्पमात्र मृत्तिकेत्येव सत्यमित्यत्रेतिशब्दो वाक्यार्थपरामर्शीत्याहु ।

दार्ष्टान्तिके च 'एव सोम्य स आदेशो भवती'त्यत्र विवक्षितविशेषमुपसहरति 'एतदात्म्यमिद सर्वम्'। कथ पुनरन्यस्यान्यात्मत्वम्। 'तत् सत्यम्'। अनृतमितरत्। स च तस्याधिष्ठानमात्मा सर्पस्येव रज्जुरिति। यत्त्वेवमपि मृत्तद्विकारयोस्तुल्यसत्ताकत्वे[1] न मृत्सत्यत्वावधारणासभव इति। तन्न। तुल्यसत्त्वेऽपि स्वप्ने शुक्तिकादि सद् रूप्यादि मृषेति तादात्विकसत्यासत्यविभागदर्शनात्। विकारो हि न पुरस्ताद्, न परस्ताच्च। मध्ये च वागालम्बन नामधेयमात्रमसत्कल्पमनिर्वचनीय मिथ्यैव ॥

---

## नासतो विद्यते भाव इतिस्मृत्यर्थः।

स्मर्यते चायमर्थः—

"नासतो विद्यते भावो नाभावो विद्यते सतः"

---

१ 'त्वेन न' ख पाठः.

इति । यदसत् तत् सर्वदा असदेव । सच्च सदा सदेव । मात्रास्पर्शास्त्विन्द्रियविषया. कादाचित्कत्वादुभयविलक्षणा इत्यनिर्वाच्या मृषेत्यर्थः । य 'असत. कादाचित्कस्य देहस्य न विद्यते भावः सतो नित्यस्यात्मनो नाभावो विद्यत' इति व्याख्यानम् । तदसत् । 'अविनाशि तु तद् विद्धि', 'अन्तवन्त इमे देहाः' इति पुनरुक्तिप्रसङ्गात् । न चोक्तोपव्याख्यान तुना प्रकृतविच्छेदात् । यदप्यसतो भाव उत्पत्तिः सतश्चाभावो नाश इत्युभयमात्मनो नेत्युच्यते नासत इत्यादिनेति । तदपि न । सदसदुपादानवैयर्थ्यात् । न च प्रतियोग्यनुपादाने सत्त्वासत्त्वनिषेध इति स्यात्, तच्च विरुद्धम्, आत्मनः सत्त्वादिति वाच्यम् । अत एव विरोधेन भावाभावशब्दयोरुत्पत्तिविनाशार्थकत्वापत्ते[1], आत्मन इत्यकस्मादध्याहारगौरवाच्चेत्यास्तां तावत् । मृत्तिका पुनः पुरस्तात् परस्ताच्च सती मध्येऽपि तथैवेति घटाद्यपेक्षया सत्येत्युच्यते 'मृत्तिकेत्येव सत्यमि'ति ॥

---

मृदि घटादिबाधः ।

नन्वेवं मृदि घटादिबाध स्यात् । आम् । तथाहि—

यदा यद्रूपनिर्भासे यस्य भावोऽवभासते ।
तदा तद्रूपनिर्भासे बाधस्तत्प्रतिषेधधीः ॥
मृद् घटो मृच्छरावोऽयमिति बुद्धी परस्परम् ।
व्यावृत्तवस्तुविषयनिर्भासे सर्वसाक्षिके ॥
नायं घट. शरावोऽयं न शरावो घटोऽसकौ ।
इति व्यावृत्तिबुद्धिश्च मृदालम्बैव जायते ॥
तेन तद्रूपनिर्भासे मृद्वस्तुनि निषेधधीः ।
तथैव[2] न कथं बाधो घटादेरुपगम्यते ॥
नन्ववच्छेदभेदेन न बाधः प्रतिषेधधीः ।
न हि देशान्तरे भूमौ बाधो घटनिषेधधीः ॥

---

१. 'र्थत्वा', २. 'दै' ख पाठ.

नैवं यतो न बाधः स्यान्नेदं[1] रजतमित्यपि ।
इद रूपेऽनवच्छिन्ने भात हि रजतं पुरा ॥
रूपान्तरपरिच्छिन्ने परतः प्रतिषिध्यते ।
इदं रूप च मृद्रूप द्वयोस्तुल्यवदन्वयि ॥
इद रूप्यामियं शुक्तिर्मृद् घटो मृच्छरावकः ।
इति प्रत्ययतुल्यत्वे विशेषो न तयोर्मयो. ॥

तथाच,

अवच्छेदकताटस्थ्ये निषेधमतिगोचरे ।
न बाधस्तदताटस्थ्ये[2] बाध इत्यवतिष्ठते ॥
तन्न देशान्तरे भूमौ बाधो घटनिषेधधीः ।
शुक्त्यात्मनीदमर्थे च बाधो रूप्यनिषेधधी ॥
एवमन्यात्मनि मृदि बाधोऽन्यप्रतिषेधधीः ।
बाधबुद्धेरभावस्तु मृदन्यान्यत्वविभ्रमात् ॥
इद रजतमित्येकमिय शुक्तिरितीतरत् ।
इति विश्रान्तचित्तस्य यथा सत्ख्यातिवादिनः ॥
रजतव्यवहारस्य कुण्ठितत्वेन बाधधीः ।
नेदं रजतमित्येवमिष्टा सत्ख्यातिवादिना ॥
घटबुद्ध्युपपाद्यस्य व्यवहारस्य सिद्धिनः ।
न बाधधीर्घटो नायमिति बुद्धावपीष्यते ॥

न च मृदि घटादौ प्रतियोगिनि सति कथं तदभावः, प्रतियोगितदभावयोरेकदैकत्र विरोधात् । अविरोधे वा घटवति घटो नास्तीति ब्रुवन् प्रतारकोऽप्याप्त इति तदीयवाक्य प्रमाणं स्यात् । नेद रजतमिति ज्ञानं चेद रजतमिति भ्रमबाधकं न स्याद्, अविरोधादिति वाच्यम् । प्रतीतिबलेनैव प्रतियोगितदभावयोरेकदैकाश्रयत्वरूपाविरोधस्याप्रत्याख्येयत्वात् । न च प्रतारकवाक्यस्य प्रामाण्यापत्तिः, असद्विषयत्वात् । नेद रजतमिति ज्ञानं तु तद्भ्रमबाधकमेव । इयदेव हि तस्य बाधकत्व यदुत, प्रतिपन्नोपाधौ प्रतियोगिका-

१. 'न', २. 'स्थ्य' ख. पाठ..

लीनतया तदभावावभासनेन तद्रजतबुद्धावनाश्वासमूलकस्वकार्याक्षमत्वापादनं, तद्रजतस्य विधिनिषेधप्रत्ययानर्हत्वापादनं वा । तत्र च निषेधनिरूपकरूपावच्छिन्नस्वविषयविरोध एव मूलं, न तु तत्रैव तद्विषयविरोधः । तत्रैव सदसत्त्वाध्यक्षनिर्विषयत्वायोगात् । दोषमूलतयान्यथासिद्धिसम्भावना च विशेषः । एव प्रपञ्चस्य निषेधनिरूपकविवदादिरूपावच्छिन्नस्य व्यवहारदशायामेव विरोधावगमेन तज्ज्ञानस्य ब्रह्मणि 'स एष नेति नेत्यात्मे'त्यादिनिषेधज्ञानबाध्यताप्युपपादिता भवति । नाय घटः शराव इति च मृदि घटकालीनतया तदभावावभासेऽपि घटादिबुद्धावनादिप्रवृत्ततथारूपव्यवहाराविसवादेन बाधाभावविभ्रम । न च मृदि घटादिज्ञानविभ्रमत्व तस्य चाबाधज्ञानविभ्रमत्वमित्यादिकल्पनागौरवम्, प्रतिपत्त्युपायौ तत्कालनिषेधप्रतियोगिरूपावच्छिन्नविषयत्वलक्षणभ्रमत्वस्याकल्पनीयत्वात् । यथादृष्टव्यवहारिणां च तत्राबाधज्ञानस्य शुक्तिरजतादिज्ञानवैलक्षण्यमात्रविषयत्वाच्च । न चैतावता सर्वभावाभावाविरोधः प्रसज्यते । सर्वत्रैव परस्परानात्मत्वविरोधोपगमात् । प्रतीतितो बाध्यबाधकभावविरोधस्य भावाभावसहभावेऽप्युपपत्तेः । एकत्रासहभावनियमो भिन्नाश्रयतानियमो वा विरोधस्तु न, भावाभावमात्रस्य बाध्यभावाभावसहभावोपपादनात् । किन्तु समसत्ताकयोरेव तयोः, विरोधितावच्छेदकगौरवस्य प्रामाणिकत्वात् । अग्रे चेदं वक्ष्यते । एतेन विश्वस्यापि सत्ताया बाधो व्याख्यातः । नहि मृत्तिकादिसत्यत्वमनवधिकमवधार्यते, विवक्षितार्थविरोधात् । किन्तु स्वविकारावधिकमेव । तद्दृष्टान्तेन तु निरवधिसत्य ब्रह्मैव विवक्षति 'ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मे'ति ॥

---

### घटादेर्मृदज्ञानकार्यत्वतज्ज्ञानबाध्यत्वे ।

यद्येव घटादेर्मृदज्ञानकार्यत्वप्रसङ्गः । को दोषः । मृद् घट इति मा प्रतिभासिष्ट । नन्विदं रजतमिति प्रतिभासते इति चेत् । किं पुनरिदमिति । शुक्तित्वं न प्रतिभासते इति चेत् । किमतः । नहि शुक्तित्वालम्बनं रजतज्ञानं, शुक्तिकालम्बनं तु तत्तदज्ञानोपाधिकमेव । भ्रमस्याज्ञातालम्बनविपरीताकारावभासित्वनियमात् । सा च भासते इदं रजतमिति । तत्र विपर्ययगृही-

तत्वेनाज्ञातत्वाविशेषे मृद्धटादावपि तुल्यम् । एतेन 'मृत्तत्त्वज्ञानाद् घटादि बाध्येते'ति निरस्तम्, इष्टत्वात् ॥

## घटादिसत्यत्वमृज्ज्ञानानिवर्त्यत्ववादिमिश्राभिप्रायः ।

यत्तु घटादीनां वस्तुत्वं मृज्ज्ञानानिवर्त्यत्वं च मिश्रैरुक्तं वाक्यान्वयाधिकरणे—'न हि मृद्विकारः शरावादिः शतशोऽपि मृद् मृदिति चिन्त्यमानस्तज्जन्मना मृद्भावसाक्षात्कारेण शक्यो निवर्तयितुम् । तत् कस्य हेतोः । तस्यापि मृदो भिन्नस्य¶ तात्त्विकत्वात् । वस्तुनश्च ज्ञानेनोच्छेत्तुमशक्यत्वादि'ति । तत्तु लौकिकदृष्ट्या व्यवहाराविसंवादेन, मृत्तुल्यसत्ताकत्वात् । इदन्त्वेनेव रजतस्य मृत्त्वेनैव घटादिविकारस्य गृहीतत्वाच्च । नहि भ्रमग्राह्यतावन्मात्रसाक्षात्कारेण तन्निवृत्तिः । स्वस्यैव स्वविरोधेन भ्रमाभावप्रसङ्गात् । किन्त्वसद्विशेषावभासविरोधिस्वरूपसाक्षात्कारेण । स च निर्वितर्कसमापत्त्या रचनाभेदसंस्थितमृदतिरिक्तावयविदुर्निरूपत्वोपपत्तिसङ्घटितया यदि कस्यचिज्जायेत, बाध्यत एव तस्य मृत्तत्त्वसाक्षात्कारेण विकारप्रतिभासः । यदि च वस्तुवृत्त्यैव मृदो भिन्नत्वं तात्त्विकत्वं वा विकारस्याभिप्रेयात्, स युक्त्या न सङ्गच्छेत । नहि मृदो विविच्यमानो विकार आत्मानं लभते, तादात्म्योपगमात् । 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्यापागादग्नेरग्नित्वमि'त्यादिश्रुतेः ।

"शिविकादारुसङ्घातरचनास्थितिसंस्थितिः ।
अन्विष्यता नृपश्रेष्ठ! तद्भेदे शिबिका त्वया ॥"

इत्यादिस्मृतेश्च । अन्यथा ब्रह्मात्मसाक्षात्कारादपि तदनिवृत्तिप्रसङ्गे कृत्स्नं च शास्त्रं विप्लवेत ॥

## एकविज्ञानेन सर्वविज्ञानम् ।

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं चैवमवकल्पते नान्यथा । यदि हि सर्वात्मतया सर्वप्रकारके ब्रह्मणि विज्ञाते सर्वं विज्ञातं भवतीत्युच्येत, सर्वस्मिन्

¶ 'भिन्नाभिन्नस्य' इति मुद्रितभामतीग्रन्थे दृश्यते ।

विज्ञाते सर्वं विज्ञानमिति व्यर्थं वचनम्। अथ प्राधान्यविवक्षाभेदः प्रयोजनं सर्वप्रकारके ब्रह्मणि विज्ञाते सर्वं विज्ञातं भवतीति, एवं हि स्वरूपान्वाख्यानमात्रमिदं स्याद्, न प्रकृतोपयोग। अयथादृष्टान्तं च स्यात्। मृत्तद्विकारादेस्तादात्म्यभावासम्प्रत्ययात्। अथ कारणात्मनि तस्मिन् विज्ञाते तदनन्यत्वादन्यदवगतं भवतीति विवक्ष्येत। कथं पुनरकार्यभूता जीवा विज्ञाते तस्मिन् विज्ञायेरन्। न खलु जीवा ब्रह्मैवेति भवतेष्यते। न चाविभक्तनामरूपचिदचित्समष्टिमयातिसूक्ष्माव्यक्तशरीरस्य कारणात्मनः प्रविभक्तनामरूपचिदचिद्विकासावस्थैव कार्यमिति प्रतिसञ्चरे प्रलीनोपाधिवृत्तितया शक्तिमात्रस्य निकामसङ्कुचितस्ववृत्तिविज्ञानस्य जीवस्य ज्ञानविकासोपाधिना ब्रह्मकार्यत्वसम्भवेन तस्मिन् विज्ञाते विज्ञातत्वं युक्तम्। स्नेहदशाधीनप्रभासङ्कोचविकासवतो दीपस्य तज्ज्ञानेऽप्यज्ञानात्। अनन्तगरुडादिषु नित्यमुक्तेषूक्तगत्यसम्भवाच्च। तत्र यदि कथञ्चिद् ब्रह्मणि विज्ञाते तज्ज्ञानमुपपाद्येत, आकाशनित्यत्वेऽपि तथैव तदुपपाद्येतेति 'प्रतिज्ञाहानिरव्यतिरेकात्' (ब्र० २ ३. ६) इति तदुत्पत्तिहेतुः सौत्रोऽसङ्गतः स्यात्। मृदादिदृष्टान्तवशात् कार्यतया हि तत्राव्यतिरेको विवक्षितः। अपि च कारणरूपे विज्ञाते किं तदवस्थाभेदाः स्वप्रकारभेदैर्विज्ञायेरन्। तथा सति ब्रह्मविदो मेरुगुहान्तरितार्थसंशयाभावप्रसङ्गः। अथ कारणात्मनैव तत्र यदि कारणमेव विज्ञायत इत्यभिप्रायः, येन विज्ञातेन विज्ञातमित्यनर्थकं विज्ञातान्तराभावात्। एतेन प्रागेवायं मया ज्ञात इत्यादिवदनुगतस्वरूपविज्ञानमेव सर्वविज्ञानमिति निरस्तम्। पृथग्विवक्षावैफल्यात्। अथायमभिप्रायः — कारणात्मना विज्ञातेन तन्निरूपकतया तदन्तर्गतं सर्वमेव विज्ञातं भवतीति। तर्हि तस्मिन् विज्ञाते विज्ञातमेव विज्ञातमिति 'अविज्ञातं विज्ञातं भवती'ति न सङ्गच्छेत। अथैषोऽभिप्रायः — येन विज्ञातेनाविज्ञातं विज्ञातं भवति न विज्ञातव्यमवशिष्यत इति। कुतः पुनरिदमविज्ञातव्यम्। यदि परमविज्ञातमवतिष्ठेत संशयनिवृत्त्यादि च प्रयोजनं सम्भवति। अपवर्गाय तु नापरमवशिष्यते विज्ञातव्यम्। तथापि श्रुतहानिरश्रुतकल्पना चापद्येत। अपि चैवं 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (ब्र० १. ४. २३) इति विरुध्येत। उक्तविवक्षायामेकविज्ञानेन सर्वविज्ञानप्रतिज्ञया ब्रह्मणो जगत्प्रकृतित्वासिद्धेः। एष तु भवेदभिप्रायः — यदविज्ञातं विज्ञायते तद् येन विज्ञाते विज्ञातं भवति नान्यथेति। तत्पुनरुपपादयितव्यम्। अविज्ञातेऽपि तस्मिन्

भूमिरुदकं तेज इत्यादि विज्ञायते । अथेदं सदिदं सदिति सदनुविद्धमेव सर्व-मवभासते । सच्च ब्रह्मेति तस्मिन् विज्ञात एव सर्वमन्यद् विज्ञानमित्युच्येत । 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः', 'सहैव सन्तं न विजानन्ति देवा', 'न सन्दृशे तिष्ठति रूपमस्य' इत्यादिश्रुतेर्ब्रह्मणो मानान्तराविषयत्वोपगमविरोधः । अपिच व्यञ्जकालोके विज्ञात एव रूपादि विज्ञातं भवति न चासौ तस्य प्रकृतिरिति । नैषापि प्रतिज्ञातमनः प्रकृतिभावं प्रयोजयति । एतेन प्रागा-त्मवत्तया अविज्ञाते परमात्मनि विज्ञाने सर्वं तेनैवात्मवत्तया विज्ञातं भव-तीत्यभिप्रायः प्रत्युक्तः । अविकारापत्तेः । प्रकृतिभावाप्रयोजकत्वाच्च । न हि जीवेनात्मवत्तया शरीरं गम्यत इति तस्य प्रकृतिरात्मा भवति । अत एव निवृत्तकर्माविद्यावरणेन निरङ्कुशविकासेन नित्यविज्ञानेनात्मनि विज्ञाते तेनैव सर्वं विज्ञातं भवतीत्यप्ययुक्तम् । 'येनाश्रुतं श्रुतं भवत्यमतं मतमि'त्य-नन्वयाच्च । अथ तस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतीत्यनया वचन-भङ्ग्या रसाले विदिते स्कन्धशाखोपशाखादि सर्वं विदितमित्यादाविव तदे-वेदं नान्यदिति विवक्षितमित्युच्येत, ब्रह्मणः सर्वमानवेद्यत्वमनिष्टमापद्येत । चक्षुरादिग्राह्यस्य तावन्मात्रत्वोपगमात् । स्वेन रूपेण ब्रह्म न माना-न्तरगम्यमिति चेत् । किमिदं जगदस्वरूपम् । तथा सति तदेवेदमिति व्या-हन्येत । कारणावस्थस्य मानान्तरागोचरत्वेऽपि कार्यावस्थस्य तद्गोचरत्वमिष्ट-मिति चेत् । कार्यावस्थाभेदस्य ततोऽतिरेके तदनन्यत्वविरोधः । अनतिरेके च तदेव मानान्तरगम्यत्वमापन्नम् । न च भेदाभेदस्तत्रापि सम्प्रतिपन्न उप-पन्नो वा । इदमिदं भवतीदमिदं न भवतीत्यादिविरोधात् । मृद् घट इत्यादि-सामानाधिकरण्यप्रत्ययस्यानेकविशेषानुगतवस्त्वभेदालम्बनत्वेन भेदाभेदासम-र्पकत्वात् । भेदे सति तदेकोपलम्भनियमस्यापि परमते प्रकारप्रकारिभावोपपा-द्यत्वात् । सिद्धान्ते च विषयारोप्यभावनिबन्धनत्वात् ॥

---

## ब्रह्मणोऽपरिणामित्वम् ।

तस्माद् ब्रह्मणः स्वरूपेण मानान्तराविषयत्वं प्रपञ्चस्य तदनन्यत्वं चा-भिलषता तस्यैवा(न)न्यतया विकारभावापत्तिरेषितव्या । तस्यैवावस्थाविशेषो विकार इत्यनिरूप्यार्थवचनायोगात् । न च तस्यायं स्वभावपरिणामः, विका-रापत्तेः । 'अविकार्योऽयमुच्यते' इत्यादिविरोधात् ।

अविभक्तनामरूपादिसूक्ष्मैकीभूततमोव्यक्तशरीरेण ब्रह्म विभक्तनामरूपप्रपञ्चाकारेण परिणमत इति हि परस्यापि प्रक्रिया । न च तमसोऽपि स्वभावान्यथाभाव सुनिरूपः, कृत्स्नप्रसक्त्यादिदोषप्रसङ्गात् । न च शक्तिभेदैस्तम. सावयवमेवेति वाच्यम् । यतो येनैकदेशेन पर्यणस्न तदन्यदेशशरीर ब्रह्माकारणमवतिष्ठेत । तथाच तव जगत्कारणत्वलक्षणाव्याप्ति· । न चावयवोपाधि परिणाम , अवयव्युपाधि च लक्षणमिति युक्तम्, असिद्ध्यापत्तेः परिणाम्युपाधिकस्यैव कारणत्वात् । 'पादोऽस्य विश्वा भूतानि'

"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगद्"

इति चात्मन एवास्पृष्टविकारस्वरूपाभिप्रायम् । अनशस्य ब्रह्मण कार्षापणादेरिवाशकल्पनामात्रत्वात् । मृज्यविकल्पानामल्पतया तादात्म्येन स्वरूपविच्छेदकल्पनात् । न खलु तमश्शरीर प्रकृत पुरुष , येन 'पादोऽस्य विश्वा भूतानी'ति विशिष्टैकदेशविषयं कल्प्येत । न वा पुरुषशब्दो विशिष्टवृत्तिरेव विज्ञायते । 'अव्यक्तात् पुरुषः पर ', 'अव्यक्तात् तु पर. पुरुष ' इत्यादिव्यतिरेकाम्नानात् । तस्माद् ब्रह्मण एव यथावस्थितस्वरूपावरणेनान्यथाभावो विकारभावापत्ति. । सोऽय विवर्त इत्युच्यते रज्ज्वा इव सर्पभावः ॥

---

## विवर्तकार्यक्रमाविरोधः ।

हन्तैव'माकाशाद् वायुरि'त्यादिविरोधः । न च तत् क्रमपरमिति युक्तम् । अनन्तरमित्यध्याहारगौरवात् । 'आत्मन आकाश. सम्भूत.', 'पृथिव्या ओषधय ' इति प्रकृतिपञ्चमीसन्दंशाच्च । न च श्रुतसम्भवे ब्रह्माणि लाक्षणिकमाकाशादिपद युक्तम् । अन्यथा 'तेजोऽतस्तथा ह्याह' (ब्र० २. ३. १०) इति न्यायविरोधात् । ननु स्यादाकाशादिभावापन्नाद् ब्रह्मणो वाय्वादिरिति । न स्यात्, परिणामो हि नेष्यते । विवर्तश्च न विवर्तान्तरोपादानम् । न ह्यहिभावापन्नायाः स्रजो धारादिर्विवर्तः । न चाकाश वायुर्वायुस्तेज इत्यभातमधिष्ठानम् । अतिप्रसङ्गात् । अपिच कस्यायमारोप· । न जीवस्य, तदा शक्तिमात्रसत्त्वेनासामर्थ्यात् । नेशस्य, अविद्याभ्रान्तिमलातीतत्वात् । तस्मात् 'तत्तेज ऐक्षत' इत्यादितदभिध्यानाल्लिङ्गाद् ब्रह्मात्मकादाकाशादेः परिणामो वाय्वादि-

रिति युक्तम्। न च मृद् घट इत्यादिवदाकाशं वायुरित्येवमभातं कथं परिणामि स्यादिति शङ्क्यम्। सत्तया हि परिणामः, यथा गोमयादेर्वृश्चिकादिः। भानेन तु विवर्तः, यथा शुक्त्यादे रूप्यादिः। दर्शनस्य नियामकत्वादिति।

उच्यते—विवर्तो हि नामाज्ञानविषयतयान्यथाभावः। स च कश्चिन्मानसबन्धार्हः, यः प्रमातृकरणविषयदोषानधीनसम्भवः। यथा अगृहीतः सन् गगनादि। कश्चिन्न, यः प्रमात्रादिदोषाधीनसम्भवः। यथा प्रातिभः स्रगह्यादिः। तद्भावापन्ना च स्रगुल्फणनादिविवर्तोपादानं स्याद् न धारादिविवर्तोपादानं, हेतुताग्राहकस्य नियामकत्वात्। एवमाकाशादिभावापन्नं ब्रह्म वाय्वादिविवर्तोपादानमिति श्लिष्टम्। किमुक्तं भवति। आकाशाद्युपगृहीतसत्त्वैव वाय्वाद्यधिष्ठानमिति। अत एव क्रमनियमोऽपि स्यात्। ब्रह्मजत्वं च 'तज्जलानि'ति। एवमाकाशादिक्रमलाक्षणिकं च स्यात्, सामान्यविशेषात्मवस्त्वभिधानोपगमात्। यत् तु नाभातमधिष्ठानमिति। तत्र वदामः—नाभातमुपादानमेवेति वक्तव्यम्। मृद् घट इत्यादिवदभातस्योपादानत्वेऽतिप्रसङ्गात्। न हि गोमयबीजादि तद्रूपमेव वृश्चिकाङ्कुराद्युपादानम्। किन्तु तदनुगतस्वावयवभेदमेव। ते चावयवा वृश्चिकोऽङ्कुर इत्येव भासन्ते। यस्य हि हेतुताग्रहे रूपभेद उपलभ्यते यथा मृत् पिण्ड इति, तस्य रूपभेदेन पृथग्ग्रहणमुपादेये स्याद् मृद् घट इति। नान्यस्य तरुकरकादाविव भूजलादेः। एवमाकाशादेर्वाय्वादावभानमित्यवश्यं वाच्यम्। सोऽयं न्यायो विवर्तेऽपि स्यात्। न च विवर्ते पृथग् रूपभाननियमः, परस्योदाहरणाभावात्। अहङ्कारकेशोण्ड्रकम्वप्नगन्धादिविवर्तेषु व्यभिचाराच्च। इदं रजतमित्यादावपि न पृथग्रूपभानं, रजतादिविवर्तस्यैव परागक्त्वेन विशेषकाभावात्। अथवा सामान्यात्मना सत्तारूपभेदेनाकाशादि वाय्वादौ भासमाने भासत एवेति नाधिष्ठानत्वविरोधः। ननु मृद्भावापन्नसदात्मोपादानो मृद् घटः सन् इत्यवभासते। एवमाकाशं वायुः सन्निति भासेत। परिणामेऽपि भासेत। अन्यथातिप्रसङ्गाद्, गोमयादिनिदर्शनं च निरस्तम्। यत्तु कस्यायमारोप इति। तत्र वदामः—येनाज्ञातमात्मतत्त्वं तस्येति। ननु तदा जीवोऽज्ञोऽव्यक्तवृत्तिरसमर्थ इत्युक्तम्। दुरुक्तं तत्। न ह्यारोपैकसम्भवत्वमाकाशादेः। अगृहीतसत्त्वोपगमात्। किन्तु जीवस्य परतोऽव्यक्तव्यक्तवृत्तेस्तद्विषयविज्ञानमात्मतत्त्वदर्शनापेक्षयारोप इत्यु-

च्यते । तस्मादाकाशादिस्मिन्नन्यथोदादात्मनो विवर्तो वाय्वादिः । अत एव तदुपहितमर्यादात्मालम्बन 'तत्तेज ऐक्षते'त्यादिलिङ्गदर्शनमप्युपपन्नम् । न तु ब्रह्मशरीरादाकाशाद्. परिणामो वाय्वादिः । ब्रह्मजत्वश्रुतिविरोधादित्यनन्तरमेव स्फुटयिष्यते ।

एवमेव मृदादिदृष्टान्तोऽप्यनुगुणो भवति, तद्विकारमृषात्वव्यवस्थानात् । अनादिरविद्या तमोवरणमात्मनोऽतात्त्विकान्यथाभावोपाधिराक्षिप्यते । न च तस्यैवाय परिणाम । सावयवत्वादिभिरनिरूप्यत्वात् । न चास्मिन् परिणममानेऽपि तच्छरीरस्यापि ब्रह्मण. परिणामः प्रकृतिभावो वावकल्पते । शरीरविकारस्य बाल्यादेरपि शरीरासस्पर्शोपगमात् । अन्यथा ब्रह्मण. सकलहेयसम्बन्धप्रसङ्गात् । परिणामप्रकृतित्ववदन्यस्यापि दौवारिकसम्बन्धोपपत्तेः । जगत्कारणत्वाम्नानेष्वपि ब्रह्मात्मादिशब्दस्य केवलवृत्तितया दौवारिकविकारभावासम्प्रत्ययाच्च । न चैव ब्रह्मणोऽपहतपाप्मत्वादिविरोध., अविद्याप्रमुखानर्थस्य ब्रह्मण्येवोपगमादिति वाच्यम् । सर्वस्यैवाविद्यामात्रतया स्वभावाप्रच्यवात् । तस्य चास्य विकारस्य ब्रह्मणो निष्कृष्यमाणस्य नि स्वरूपत्वाद् 'ऐतदात्म्यमिद सर्व तत् सत्य स आत्मे'ति तद्विज्ञानेन प्रागविज्ञातयाथात्म्य स्वात्मना विज्ञात भवतीत्येकविज्ञानेन सर्वविज्ञानमुच्यते । नन्वेवमपि तस्मिन् विज्ञाते तदेव विज्ञातमित्युक्त स्यात् । सत्यम् । येन विज्ञातेनाविज्ञात विज्ञात भवतीत्यादि तु विज्ञेयानतिरेकेऽपि वैकल्पिकविषयभेदव्यपदेशापेक्षो निर्देशभेद एव । अनया वचनभङ्ग्या प्रपञ्चमृषाभावः सेत्स्यतीति । एवमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा सर्वविकारविकल्पाधिष्ठानतया ब्रह्मण. प्रकृतिभावमुपपादयितुं क्षमते ।

यद्यपि सर्वज्ञत्वादिगुणमयस्यैवोपादनत्व युक्तम् । निमित्तोपादानाभेदोपगमात् । तथाप्यविद्यातमोमाया निसर्गादेव ब्रह्मसत्तामात्रमनुबध्नती जीवेशविभाग सर्वज्ञत्वादिकमनन्तविचित्रजगद्रचनां च पर्यायेण शक्तिवृत्तिसस्थानामुद्भावयन्त्येवानुबध्नाति । तथाच सर्वज्ञत्वादिजगद्रचनयोरितरेतरैकान्तिकतया तदालम्बनं ब्रह्म ज्ञानादिमत्तया निमित्त जगद्रचनाश्रयतयोपादान च गीयते । न तु सर्वज्ञानादिमदेव सद् ब्रह्म जगदात्मनात्मान रचयति, निर्विषयसर्वज्ञानाद्यसम्भवात् । यद्यपि जगद्रचना शक्त्या वृत्त्या वा सन्तन्यमानानादिरेव । तथापि विज्ञ इव निष्कृष्यात्मानमुपदिशन्ती श्रुतिरद्यतनीमिव तां कृत्वोपदिशति ।

अन्यथा 'सदेव सोम्येदमग्र आसीद्', 'आत्मा वा इदमेक एवाग्र आसीदि'त्यादिनिरङ्कुशावधारणायोगात् ।

एवं च 'तदैक्षत बहु स्यां प्रजायेयेति, तत् तेजोऽसृजते'त्यादिव्यपदेशा लोकदृष्ट्या बोध्यबुद्ध्यवतारफला एव । मा भूदद्वितीयात्मतत्त्वोपदेशाग्रहणम् उपदेश्यस्य लोकदृष्ट्या निमित्तान्तरवितर्केणेति निमित्तान्तरव्यवच्छेदफला वा । अथवा सदेवेति निष्कृष्यात्मतत्त्वं प्रतिज्ञाय तल्लक्षणाय जगत्कारणत्वे वक्तव्ये निसर्गसिद्धाविद्यामायोपसर्गेण सृष्टेव नामरूपविवृत्त्या व्याक्रियमाणस्य तस्यैव प्रागपि शक्तिवृत्तनामरूपसम्बन्धात् सर्वविषयविज्ञाने सति तद्रूपोपादानेन 'तदैक्षत', 'तत्तेजोऽसृजते'ति व्यपदिश्यते । प्रकृतावमर्शिन्यपि तत्पदे श्रुत्यन्तरावगतापेक्षितदेवात्मशक्तेरविद्याया उपक्षेपात् 'स ईक्षत लोकान्नु सृजा इति, स इमान् लोकानसृजत', 'सोऽकामयत', 'इदं सर्वमसृजत',

"यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः ।
तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते ॥"

इत्याद्याश्च तथैवोपपद्यन्ते । तद्रूपापेक्षयैव च 'तत्तेजोऽसृजत', 'तदात्मानं स्वयमकुरुते'त्यादिस्वातन्त्र्यव्यपदेश उपासनोपयोगात् ।

अथवा इयदेव तस्य सर्गे स्वातन्त्र्यं, यत सृज्यशक्त्युपधानात्मकं सन्निधानं, कुविन्दादेरिव ब्रह्मणोऽविक्रियस्यातिरिक्तकारकप्रयोजनव्यापारासम्भवात् । विशिष्टस्यापि स्वात्मनि वृत्तिविरोधात् । अत एव जगत्सर्गे सन्निधानातिरिक्तव्यापाराभावं ब्रह्मणः स्मरति पराशरः —

"यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते ।
मनसो नोपकर्तृत्वात् तथासौ पुरुषोत्तमः ॥"

इति । तच्च विवर्तपक्षेऽप्यक्षतमेव । 'परिणामात्' (ब्र० १. ४. २६) इति सूत्रं चान्यथाभावमात्राभिप्रायम् । तावतैव साधनीयप्रकृतिभावसाधनात्, प्राग्रूपोपमर्देनान्यथाभावानुपपत्तेरुक्तत्वाच्च । एवमविशेषात्मन्यमतिमूलायामपि जगद्रचनायाम् *इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिचोद्यं सौत्रं सर्वज्ञेशव्यपाश्रयमुपपन्नम् । तदुपाधौ बुद्धिपूर्वकारित्वोपगमात् । न चैवं तदनन्यत्वानु-

* (ब्र० २. १. २१.)

पद्यते । न खल्वात्यन्तिकमसत्त्वं मिथ्यात्व, येन ब्रह्मणो विकाराणामन्यत्वमनन्यत्व वा न सङ्गच्छेत । नापि विकाररूपेणैव तदनन्यत्वमुच्यते, येन विरुध्येत । किन्तु मृषाविकाराणामधिष्ठानात्मैव तत्त्वमिति याथात्म्येन । परस्यैव तु तद्नन्यत्वानुपपत्तिः । कार्यकारणावस्थाविशिष्टभेदावश्यम्भावाद्, वस्तुस्वरूपानुगतिमात्रस्य कार्ये कारणानन्यत्वानुपपादकत्वाच्च ॥

---

## निरधिष्ठानभ्रमायोगः ।

यत्त्वेवमनृतस्य प्रतिभैकशरीरतया पूर्वसत्त्वायोगादसत्कार्यवादापत्तिरिति । तन्न । अधिष्ठानरूपस्यैव विकारात्मावभासित्वेन तदात्मना प्रागपि सत्त्वाविरोधात् । न हि निरधिष्ठानविभ्रम सम्भवति । इद रजतमयं सर्प. अह मनुष्योऽह गौर इत्यादिसाधिष्ठानत्वानुभवात् । स्वप्नकेशोण्डूकादिविभ्रमस्यात्मतेजोवयवाद्यधिष्ठानत्वात् । सर्वस्यैव सदनुविद्धप्रत्ययस्य तदधिष्ठानत्वोपपत्तेश्च । अपिच स्वविषयाज्ञाननिबन्धनो भ्रमो न निरधिष्ठानो भवितुमर्हति, अज्ञातस्यैवाधिष्ठानत्वात् । अपिच विषयबाधे विभ्रमो विपरीतप्रमा च बाधो न निरधिष्ठानविभ्रमवादे स्यात् । निर्विषयप्रमासम्भवात् । न चाभावविषयैव सा, प्रतियोगिनिरूप्यभावान्तरानात्मनस्तस्य तुच्छत्वात् । यच्च तत्र किञ्चिद्विभ्रमनिषेधात्मना प्रतीयते, तदेव तस्याधिष्ठानम् । एतदुक्त भवति — कार्यबीजशक्तिमदज्ञानविषयतया यदधिष्ठानसत्त्व, तदेव कार्यस्य प्रागुत्पत्तेः सत्त्वमिति । 'आत्मैवेदं सर्वमि'ति च बाधाया सामानाधिकरण्यमुक्तम् । न हि बाधायां सामानाधिकरण्यमिति निषेधबोधकमित्यर्थ., लक्षणापातात् । किन्तु प्रतिपादनीयाभेदोपपत्तये पदोपस्थितबाधविमर्शापेक्षतया तथा व्यवहार । तेन न 'बहु स्या प्रजायेये'त्यादिसृष्टिप्रतिपत्तिर्विरुध्यते । विवक्षिताद्वितीयवस्तुसिद्धये ब्रह्मणो जगद्रूपविवर्तोपदेशतयाहत्यात्र भेदस्याप्रतिपादनीयत्वात् । तदेवं विकार. मृषाभावात् तदात्मभूतब्रह्मात्मतत्त्वविज्ञानमेव सर्वविज्ञानमिति,

"न पश्यो मृत्यु पश्यति न रोगं नोत दु खताम् ।
सर्वं ह सर्वः पश्यति सर्वमाप्नोति सर्वशः ॥"

---

१. 'ह पश्य. पश्यति' मुद्रितच्छान्दोग्योपनिषत्पाठः ।

इत्यादिव्यपदेशाः । न वस्तुवृत्त्या विकारविषयमेव सर्वविज्ञानमिति, 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्', 'यत्र नान्यत्पश्यती'त्यादिविरोधादिति ।

यत्पुनरेवमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञासम्भावनाय 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादि'ति सिद्धवदुपन्यासो न स्यात् । यथादृष्टव्यवहारिणः श्वेतकेतो प्रागस्मादुपदेशाद् विकारानृतत्वबुद्ध्यभावादिति । तन्न । प्रसाध्याङ्गत्वेन युक्त्यैव विकारासत्यत्वमापाद्य निदर्शनोपपत्तेः । सैषा युक्तिरुच्यते वाचारम्भणमित्याद्या । परस्यार्षीयमेव शैली समाश्रयणीया । अन्यथा प्रसिद्धवदुपन्यासायोगाद्, मृद एवावस्थाभेदो घटादिविकार इत्यलोकसिद्धत्वात् । प्रत्युत मृदो घट उत्पद्यते, एरकाभिः कटं करोतीत्युपादानविकारान्यभावस्यैव लोकसिद्धत्वात् । अतो दृष्टान्तोपपादनायैव वाचारम्भणमित्यादि । परन्तु परस्य वाचेति व्यवहारोपलक्षणत्वकल्पनं स्वरभावगतस्वरूपहेतुत्वातिलङ्घनेनोद्देश्यतया हेतुत्वकल्पनं, मृत्पिण्डेनेत्यनुषङ्गकल्पनं, विकारो नामधेयं चेत्यश्रुतसमुच्चयकल्पनं, मृत्तिकेत्येवेति मृदभेदप्रमाणपरत्वकल्पनमित्यादिदोषा अधिका इति । तदेवमुपक्रमोपसंहारादिभिः 'तरति शोकमात्मवित्', 'भूमैव सुखम्' इत्यादिफलार्थवादेन च प्रकरणस्य निर्विशेषाद्वितीयवस्तुमात्रैदम्पर्ये[1] पर्यवसिते तत्त्वमसीति तच्छब्देन प्राकरणिकनिर्विशेषवस्तुपरामर्शे सम्भवेऽपि कारणत्वमुखेन तस्य प्रतिपिपादयिषितत्वात् । पदवृत्तेश्च प्रवृत्तिनिमित्तविशिष्टविषयत्वात्, तत्र भागत्यागलक्षणावाचोयुक्तिराचार्याणामविरुद्धा, नान्तरीयकबाधविवक्षा च । मृषार्थनिरूप्यकारणत्वादेरपि मृषाभावात् ॥

---

ब्रह्मवल्ल्या निर्विशेषपरत्वम् ।

तथा 'ब्रह्मविदाप्नोति परम्' इत्यनुपसृष्टब्रह्मपदेन सर्वविधाल्पत्वविरोधिभावमात्रोपक्रमादानन्त्याम्नानात्, सविशेषे च वस्तुपरिच्छेदेन निरुपचरितानन्त्यानुपपत्तेः । यत्तु स्वरूपतो गुणतश्चानन्त्यमिह विवक्षितं,

---

1. 'विषयाद्वि' ख. पाठ.

"नान्तं गुणानां गच्छन्ति तेनानन्तो हि स स्मृत "

इत्यादिस्मृतेरिति । तन्न । तस्यानियन्तर्यनन्तपदभक्तिपरत्वोपपत्तेः । न चैव-मिहानन्त्यस्यापि निषेधे पुनरन्तवत्त्वप्रसङ्ग, दग्धेन्धनाग्नेरिव निषिद्धान्त-वत्त्वस्यैवानन्त्यस्याभावेऽपीन्धनस्येव पुनरन्तवत्त्वस्योज्जीवनानुपपत्ते । उपसहारे च 'आनन्दो ब्रह्मेति व्यजानात्' इति निर्णयानन्दरूपस्य 'को ह्येवान्यात् क. प्राण्याद्, यदेष आकाश आनन्दो न स्यादि'त्याम्नातस्य 'सैषानन्दस्य मीमांसा' इति मीमामामवतार्य 'स यश्चाय पुरुषे यश्चासावादित्ये स एक ' इति परिहृताशेषविशेषमभेदेनोपसहारात् । तद्विषये च श्लोके

"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"

इति निर्विशेषावबोधनात् । अन्यथा विशेषनिमित्तेन वागादिविषयत्वोपपत्ते. । अप्राप्य निवर्तन्ते इति वचनव्यक्त्या हि ब्रह्मणि तावत् प्रवृत्तिरवगम्यते । वाङ्-मनसयो' प्रवृत्तिश्चाभिधान प्रत्यायन च । न च तस्मिन् प्रवृत्तस्य तत एव निव-र्तन सम्भवति । न च विदूरपातिनि पतत्रिणि प्रवृत्तस्य नयनस्य तमप्राप्य निवृ-त्तिवदिह स्यादिति शङ्क्यम् । नयनगतिवद् विषयप्राप्त्यतिरिक्तप्रवृत्तेरिहासम्भ-वात् । तत्र ब्रह्मानन्दमभिदधाना एव वाचस्तदियत्तामप्राप्य निवर्तन्ते इति तवा-ध्याह्रियेत । प्रवृत्तिनिवृत्त्योरेकार्थनिरूप्यत्वस्वारस्यमुल्लङ्घ्य भिन्ननिरूप्यता च कल्प्येत । ततश्च ब्रह्मण्येव मृषाविशेषनिमित्तप्रवृत्ते एव वाङ्मनसे तदेवाप्रा-प्य निवर्तेते । सर्वप्रवृत्तिनिमित्तमृषात्वादेवेति युक्ततरम् ।

यत्तु 'भीषास्माद् वात पवते' इतीश्वरमुपक्रम्य मानुषानन्दादारभ्य क्षेत्र-ज्ञानन्दोत्तरोत्तरोत्कर्षक्रमेण परमोत्कर्षे 'ते ये शत प्रजापतेरानन्दाः स एको ब्र-ह्मण आनन्द ' इत्युपसहृते सङ्कुचानप्रसञ्जितमियत्तापरिच्छेदानुशय भगवदप-रिमितानन्दगुणस्य समुच्छिन्दद् 'यतो वाचो निवर्तन्ते' इत्यादि तदानन्त्यप-रमेव । अपिच 'युवा स्यात् साधु युवाध्यायक.' इत्यादिगुणगण, 'तस्येय पृथिवी सर्वा वित्तस्य पूर्णा स्याद्' इत्यादिविभूतिपौष्कल्य चोक्त्वा, 'स एको मानुष आनन्द.' इति तत्समुदायमेवानन्द निर्दिश्य, तस्यैव परमोत्कर्षो-पसहारे परमेश्वरगुणविभूतीनामेव परमोत्कर्ष प्रतिपादयति 'स एको ब्रह्मण आनन्द' इति । न चाय कार्यब्रह्मण आनन्द उच्यते । तत्रैतदवसान वैषयिका-नन्दातिशयमुपन्यस्य 'स यश्चाय पुरुषे', 'यतो वाचो निवर्तन्ते' इति सर्वा-नुगतस्वरूपमशेषविशेषशून्यतया वाङ्मनसाविषय मुक्तप्राप्य परमानन्द गुणै-

श्वर्यविविक्तमेव ब्रवीतीति युक्तम् । ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वात् । अस्मिन् प्रकरणे च तस्य 'ब्रह्मविदाप्नोति परम्' इत्यादौ सर्वत्र परविषयत्वात् । श्लोके च 'आनन्द ब्रह्मणो विद्वान्' इति विभक्तिभेदेऽपि ब्रह्मण आनन्द इत्येतावतः प्रत्यभिज्ञानाच्च ॥

---

## ब्रह्मण आनन्दगुणकत्वशङ्का ।

तत्र च भेदनिर्देशादानन्दगुणकं ब्रह्म । न च 'आनन्दो ब्रह्मे'ति श्रुतेरानन्दात्मिकस्यानन्दगुणत्वासम्भव. । श्रुतिबलेनैवानन्दस्य स्वातन्त्र्यवदानन्दित्वस्यापि लौकिकव्याप्तिबाधेन स्वीकार्यत्वात् । 'ब्रह्मण आनन्द' इति निर्देशागौणत्वात् । अन्यथा निर्विशेषविवक्षायामानन्दगुणस्योत्तरोत्तरापकर्षेणाभावावसानैव श्रुतिवृत्तिः स्याद्, न तु तस्य परमोत्कर्षावसाना । प्रक्रमेऽपि हि, 'सोऽश्नुते सर्वान् कामान् सह, ब्रह्मणा विपश्चिते'ति ब्रह्मणा सह मुक्तप्राप्या. कामाः काम्यमाना गुणा ब्रह्मसमभिव्याहाराद् योग्यत्वाच्च ब्रह्मसम्बन्धिन आम्नायन्ते । तच्च निर्विशेषपरत्वे विरुध्येत । अत्र फले गुणप्राधान्यमिष्टम्, उपासने गुणप्राधान्यस्य विवक्षितत्वात् । तथाच लिङ्गम्—'आनन्द ब्रह्मणो विद्वान् न बिभेति' इति । 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्', 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति दहरविद्याया दर्शनाद्, 'यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेत. प्रेत्य भवती'ति फलोपासनयोरेकप्रकारत्वाम्नानाच्च । तेन 'सहयुक्तेऽप्रधाने' (२. ३. १९) इति ब्रह्मणोऽप्राधान्यमविरुद्धमिति ॥

---

## ब्रह्मण आनन्दगुणत्वनिरासः ।

अत्र वदामः—प्रकरणिविषया तावदानन्दमीमांसा, न तु सन्निहितेश्वराविषया तद्गुणविषया वा । न हि 'स एको मानुष आनन्द' इति गुणविभूतिविषयं तदुपाधिकानन्दविषय वा । 'युवा स्याद्' इति गुणविभूतिमत एव प्रकृतस्य तदा परामर्शात् । स तु स्वरूपानन्दोऽविद्यापिहितः क्षेत्रज्ञस्य गुणविभूतिसम्पदायत्ताभिव्यक्तिक इति तदुपन्यास' । न हि मानुषानन्दादिरति-

रिच्यते 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रा (विषयवृत्तिपरिच्छेदम्) उपजीवन्ति' इति श्रुते । तमिम गुणविभूत्युत्कर्षाधीनपरमोत्कर्ष स एको ब्रह्मणो भगवतोऽप्रतिघज्ञानवैराग्यैश्वर्यादिगुणस्य हिरण्यगर्भस्यानन्द इत्याम्नाय गुणैश्वर्यविषयोत्तीर्ण निकर्षोत्कर्षादिविशेषानाघ्रात समस्वभावं परमानन्दतावन्मात्रमुपसंहरति 'स यश्चाय पुरुषे' इत्यादीति युक्तम् । ब्रह्मण आनन्द इत्येव मुक्तप्राप्यपरमानन्दविवक्षाया तत्पर्यायश्रुतश्रोत्रियाकाम्यत्वविरोधात् । न च पूर्वपूर्वाकामहतस्योत्तरोत्तरानन्दः, अत एव मानुषानन्दपर्याये 'श्रोत्रियस्य चाकामहतस्ये'ति नाम्नायत इति वाच्यम् । साधनक्लेशाद्यभावसुखवृत्तिभ्यां तुल्यायव्ययन्यायेन तत्तद्विषयविरक्तस्यैव तत्तदानन्द इत्यौचित्यात् । प्रथमपर्याये तदनाम्नानस्यापकर्षेणोपेक्षयार्थसिद्ध्या वान्यथासिद्धेः । अत एव वाजसेनयके मनुष्यापितृगन्धर्वकर्मदेवानन्दपर्यायेषु बहुषु 'यश्च श्रोत्रियोऽवृजिनोऽकामहतश्चे'ति नाम्नायतेऽर्थसिद्धेरेव। भाष्यकृतस्तु वैराग्योपयोगितया साधनक्लेशाद्यभाव[1]मुपगच्छन्तो ब्राह्मपदविरक्तस्य परमानन्दभागिनोऽर्थसिद्धि च मन्वानाः पूर्वपदविरक्तस्योत्तरानन्द इति व्याचख्युः । वय तु पूर्वपदसिद्धिनिबन्धनक्लेशाभावस्य तदानन्दवृत्तिशेषतयोत्तरानन्दवृत्त्यपेक्षया स्वभावफल्गुतया चातुल्यतामाश्रित्य तत्पदसिद्धिनिबन्धनक्लेशस्याधिकतया ततो विरक्तस्य तत्क्लेशाभावस्तदानन्दवृत्तितुल्यकक्ष्यः स्यादपीति, तत्तदकामहतस्य तत्तदानन्द इति व्याचक्ष्महे । ब्राह्मपदविरक्तस्य तु समस्तसासारिककामातिवृत्त्या परमानन्दोऽपीत्युपपद्यते । यदि च ब्रह्मविदः सर्वकामाप्त्युपपादनमाश्रित्य सर्वत्रैव समस्तसासारिककामानुपहतत्व विवक्ष्येत, तथापि तव मुक्तस्य ब्राह्मलौकिकस्य परमानन्दभागिनः प्राकृतघजन्यमानुषानन्दादिभागित्वमयुक्तम् । अन्तर्भावविवक्षायामपि 'ते ये शतं प्रजापतेरानन्दा', स एको ब्रह्मण आनन्दः' इति परिच्छेदाम्नाते पर्यवसानायोगात् । 'यतो वाचो निवर्तन्ते' इत्यादेरन्यथोपपादितार्थत्वात् ।

यत्तु

"अण्डाना तु सहस्राणा सहस्राण्ययुतानि च ।
ईदृशाना तथा तत्र कोटिकोटिशतानि च ॥
रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति ते ।"

---

१. 'वं मयन्तो' ख पाठः.

इत्यादिवचनात् तेषु च प्रकृतप्रजापतिशब्दितचतुर्मुखानन्त्येन तत्तद्विषयशतगुणितसर्वानन्दोपादानेन 'स एको ब्रह्मण आनन्द' इति निरतिशयानन्दविवक्षैवेति । तन्न । प्रजापतेरेकवचनानुपपत्ते । मनुष्यगन्धर्वाणां देवगन्धर्वाणामित्यादौ बहुत्वे बहुवचनप्रक्रमानुरोधेन प्रजापतीनामिति बहुवचनप्रसङ्गात् । ब्रह्मशब्दस्य च 'एतद् वै सत्यकाम! परं चापरं च ब्रह्मे'त्यादावपरेऽपि दर्शनात् । प्रकरणे च तस्य परमात्मविषयत्वेऽपि बहुविरोधात् 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन ब्रह्मण आनन्द इति ब्रह्मशब्दस्यैकस्यापरविषयत्वोपपत्तेः । 'तस्माद् विराडजायत, विराजो अधिपुरुषः' इत्यादौ प्रजापतिहिरण्यगर्भभेदप्रसिद्धेः

"ततश्चापि प्रजापतिः ।
"हिरण्यगर्भोऽपि ततः पुंसः शक्त्युपलक्षितः"

इति प्रजापतेरतिरिक्तस्य ब्रह्मणो ज्ञानानन्दाद्यतिशयस्मरणाच्च 'स एको ब्रह्मण आनन्दः' इति हिरण्यगर्भविषयं युक्तम् । एवं च प्राकरणिकब्रह्मतावन्मात्रनिर्विशेषपरमानन्दविषयस्य 'आनन्दं ब्रह्मणः' इत्यस्य ब्रह्मण आनन्द इत्यैकार्थ्यप्रत्यभिज्ञानं शब्दसादृश्यमात्रनिबन्धनो विभ्रम एव । भेदनिर्देशश्च शिलापुत्रकस्य शरीरमित्यादिवद् व्याख्येयः । अन्यथा 'ब्रह्मविदाप्नोति परमि'ति वेदने ब्रह्मप्राधान्यप्रक्रमविरोधात् । ब्रह्मगुणानामनन्तानामानन्दत्वोपगमेन तव 'अश्नुते सर्वान् कामानि'ति ब्रह्मगुणविषयं व्याकुर्वत आनन्दमित्येकवचनासामञ्जस्यात् । आनन्दो ब्रह्मेत्यभेदोपसंहाराच्च । प्रक्रमानुगुणे च भेदनिर्देशगौणत्वे ब्रह्म नानन्दि, आनन्दत्वाद् विषयानन्दवदित्यनुमानाबाधाच्च । अत एव निर्विशेषविवक्षायामानन्दस्योत्तरोत्तरापकर्षेणाभावावसानैव श्रुतिवृत्तिः स्यादिति निरस्तम् । ब्रह्मण एव तावन्मात्रतया तदभावावसान उपदेशे शून्यवादप्रसङ्गात् ॥

---

## सोऽश्नुत इतिश्रुत्यर्थः ।

न च 'सोऽश्नुते सर्वान् कामान्' इति काम्यमाना ब्रह्मगुणा उच्यन्ते, तेषां पृथङ्मुक्तप्राप्यत्वे 'ब्रह्मविदाप्नोति परमि'ति मन्त्रवृत्तिविषयसूत्रविरोधात् । किन्तु सर्वेषामपि हिरण्यगर्भावसानानन्दानां विषयवृत्तिपरिच्छेदोपाधिकब्रह्मानन्दलेशरूपत्वाद्, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति

श्रुतेः, वैजात्यादेरयोग्निवदुपाधिभेदोपपाद्यत्वात्, अतिरेके मानाभावाच्च, ब्रह्मानन्दमश्नुवानस्तदविभक्तस्वभावान् सर्वानेव कामान् युगपदश्नुत इत्युच्यते, सर्वनदीनदसम्भेदमये सरस्वति स्नात इव सर्वत्र स्नात. । आहिरण्यगर्भानन्दादात्मविदकामहतश्रोत्रियसम्बन्धबोधनस्य ब्रह्मविदः सर्वकामाप्तिवाक्यार्थप्रपञ्चनपरत्वोपपत्ते । 'तस्माद्वा' इत्यादिकृत्स्नप्रकरणस्यापि 'सत्यं ज्ञानमि'त्यादिऋगर्थप्रपञ्चमात्रपर्यवसायित्वात् । निरस्तसमस्तविशेषानन्दप्रकाशसत्तामात्रकैवस्येऽपि मोक्षे सह सर्वान् कामानश्नुत इत्युपन्यासस्तु मोक्षे सर्वानन्दराशिरूपं परमानन्दसामान्य लभ्यते । मा कामेषु मनः कार्षीः, मोक्षविरोधादित्येवमर्थम् । एव च मुक्तावपि गुणप्राप्त्यभिधानात् सगुण ब्रह्मेति निरस्तम् ॥

---

### अदृश्येऽनात्म्ये इतिश्रुत्यर्थः ।

'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने' इति च सर्वविशेषनिषेधात् । न चात्र दृश्यादचेतनादात्मीयवत· शरीरिणो बद्धादन्यदपि देवादिनिरुक्तिमतो मुक्तात् परमात्माश्रयाद् नित्यमुक्ताच्च व्यावृत्तिरुच्यते । विशेषग्रहणहेत्वभावात् । अनिलयन इत्येव परमात्माश्रयसर्वव्यावृत्तिसिद्धौ शेषवैयर्थ्यात् । अतोऽदृश्य इति दृश्यत्वनिषेधप्राप्तं द्रष्टृत्व निषेधति । अनात्म्य इति आप्नोति विषयानादत्ते वात्मा । आत्मैवात्म्यं, तद्भावो वा । न आत्म्यं ना(त्म्यम)स्येति वा(ना)त्म्यम् तस्मिन्, अद्रष्टरीत्यर्थः । किं तर्हि विषयविच्छिन्नं दर्शनम् । न । इदं तदित्यनिरुक्ते । तर्ह्यभावः प्राप्त· । न । अनिलयने नितरा लयो निलयन ह्यभावः इति । अथवा 'इद सर्वमसृजत', 'तद(नु)प्रविश्य सच्च त्यच्चाभवदि'ति विकारयोगितया शरीरितया सदादिनिरुक्तवत्तया चोक्तस्य कारणात्मनस्तदपवादेनाविशेषस्वरूपमभिधीयते । आत्म्यमात्मीय शरीरम् । निर्लीयते तस्मिन्नन्ते विकारजातमिति निलयन कारणम् । अनात्म्ये अनिलयन इति तदपवाद इति ।

वार्तिककृतस्तु —

"स्याद्वा जाग्रदवस्थेयं
विराडात्मान्नमयकोशः ।
दृश्यत्वेन प्रसिद्धितः ।

कोशत्रयमिहात्म्यं स्याद्

प्राणमयादि ।

आत्मार्हत्वसमन्वयात् ।

पञ्चमोऽत्र निरुक्त स्यात् पारिशेष्यात् फलात्मक' ।

आनन्दमयः । अयं त्वम्पदवाच्योऽर्थ ।

अथ लक्ष्य —

अत्यानन्दमयं ब्रह्म त्वनिरुक्त पर पदम् ।

तत्पदार्थस्तु—

निलीयते जगद् यस्मिन् निलीनं जायते यत ।
निलयनं तत् पर ब्रह्म कोशपञ्चककारणम् ॥
सच्चत्यच्चादिनापेक्ष्यनिषेधोऽयमिहोच्यते ।
सामानाधिकरण्याच्चाभेदो गम्यत (इत्या [?] इत्यत.) ॥"

इत्याहुः ॥

---

## उदरमन्तर कुरुते इतिश्रुत्यर्थः ।

'यदा ह्येवैष एतस्मिन्नुदरमन्तर कुरुते । अथ तस्य भय भवती'ति गुणतोऽपि भेददर्शनापवादाच्च ।

यत्तु — नात्र भेददर्शन भयहेतुरुच्यते, 'सर्वं खल्विद ब्रह्म तज्जलानिति शान्त उपासीते'ति सामानाधिकरण्येन देवमनुष्यतिर्यगादिनानारूपजगदात्मत्वानुसन्धानस्यैव शान्तिहेतुत्वाभिधानाद् ब्रह्मणो नानारूपत्वानुसन्धानस्य चाभयहेतोर्भयहेतुत्वायोगात् । किन्तु 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठा विन्दते । अथ सोऽभय गतो भवती'त्यभयहेतुतयोदिताया. समस्तचिदचिद्विसजातीये ब्रह्मण्युपास्ये प्रतिष्ठाया उपासितुर्दृढसम्बन्धरूपाया उपासनाया उपास्योपासकसम्बन्धस्योपासनारूपपर्यवसानाद्, 'ब्रह्मविदाप्नोति परम्', 'यो वेद निहित गुहाया', 'सोऽश्नुते सर्वान् कामान्', 'यदैतस्मिन् प्रतिष्ठा विन्दते अथ सोऽभयं गतो भवति', 'आनन्द ब्रह्मणो विद्वान् न बिभेती'ति वाक्यानामैकार्थ्यादिह विधित्सितवेदनस्य तदर्थ-

तोपमर्दाराच्च, तस्या अन्तरमवकाश छिद्रं विच्छेद यः कुरुते तस्य भयं भवतीत्युच्यते । तथा चार्षं दर्शन —

"यन्मुहूर्तं क्षण वापि वासुदेवो न चिन्त्यते ।
सा हानिस्त(दह ? न्मह)च्छिद्र सा भ्रान्तिः सा च विक्रिया ॥"

इत्यादिभयहेतोरभयहेतुप्रतियोगित्वौचित्याच्च । न खल्वेकत्व प्रतिष्ठाशब्दार्थ । 'राजा राज्ये प्रतिष्ठित' इत्यादौ दृढसम्बन्धरूढत्वात् । ऐकात्म्यस्य स्वरूपत्वे यदा विन्दत इति कादाचित्कशुभवचनायोगाद्, विन्दतेर्ज्ञानार्थस्वारस्याच्च । तेन तत्प्रतियोगितया अन्तर कुरुते इति भेददर्शनमुच्यत इत्ययुक्तम । न च कुरुन इति दर्शने समञ्जसम्, मनसि कुरुते इत्यध्याहारश्चायुक्त इत्यादि ।

तन्न । सर्वं ब्रह्मेत्यादिसामानाधिकरण्यस्य विवर्तबाधेन वस्तुस्वरूपाभेदपरत्वाद्. ब्रह्मण. स्वरूपेणापरिणामित्वात्, कार्यकारणावस्थाविशिष्टाभेदायोगाच्च, कार्यकारणरूपभेदाभावे च तावन्मात्रे सर्वमिदं ब्रह्मेति सहप्रयोगायोगात्, तद्रूपबाधेन वस्तुस्वरूपाभेदपरे च सामानाधिकरण्येऽभेददर्शनेनैव शान्तिविधिस्येत । न चैव 'स क्रतु कुर्वीत मनोमय.' इत्युपासनाविधिविरोध' । विमृष्टमात्रेऽपि विशेषबाधे यावन्निर्विचिकित्सनिर्विशेषापरोक्ष प्रतीतविशेषोपादानेन विध्युपपत्ते. । न चान्तरवाक्ये प्रतिष्ठाविच्छेदो भयहेतुरुच्यते, लब्धोपासनाफलपदस्य पुनस्तद्विधिवैयर्थ्यात् । उपास्ये ब्रह्मण्युपासितुर्दृढसम्बन्धो हि साक्षात्कारावधिरुपासनैव प्रतिष्ठोच्यत इति ते मतम् । न च सत्यामभयप्राप्तौ तद्विच्छेदाशङ्कात्मान लभते, येनान्तरवाक्य विधित्सितप्रतिष्ठाविशेषणपर स्यात् । किञ्चैवं मुक्तस्यापि तदुपासनविच्छेदाद् भयापत्ति. । न च सोऽप्युपासीत, लब्धफलत्वात् । उपासीनस्यापि सुप्तादाववश्यं तदन्तरकारितया नियतभयत्वेन तदुपासनाविधिवैफल्यात् । अथ निरुक्तोपासनस्यैवाभावे भयमुच्यते यदान्तरं कुरुते अथ भयं भवतीति ।

"इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः"

इत्यादिवदिति चेद्, न । अन्तरशब्दस्यावकाशावधिभेदादिवृत्तेरभावार्थत्वाभावात् । एतस्मिन्नन्तर कुरुत इत्येव सामर्थ्ये प्रतिष्ठाय इत्यध्याहारस्य वि-

भक्तिविपरिणामेनानुषङ्गस्य वा असङ्गतत्वाच्च । 'यन्मुहूर्तमि'त्यादि च श्रौतार्थाप्रत्यभिज्ञानादनुदाहार्यम् । तत्रैवं सत्यदृश्य इत्यादिनिरस्तनिखिलविशेषेऽखण्डैकरसे साक्षादपरोक्षे वेदनीये ब्रह्मण्यभय यथा तथा प्रतिष्ठा वेदितुरभेदस्वरूपसाक्षात्कार एव उपासनाया आहत्याभयहेतुत्वाभावव्यवस्थापनात्, तां यदैष विन्दते लभते अथ सोऽभय गतो भवतीत्युक्त्वा अभयहेत्वभेदस्वरूपसाक्षात्कारप्रतियोगिभेददर्शन भयहेतुरुच्यते 'एतस्मिन्नुदरमन्तर कुरुते अथ तस्य भय भवति' इति युक्तम्, 'द्वितीयाद् वै भय भवति'

"मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति"

इति श्रुत्यन्तरात् । एवं प्रतिष्ठाशब्दस्याभेदार्थालम्बना दोषा निरवकाशाः । ब्रह्मण्यभिन्नस्वभावे विषये गृहीते सामर्थ्यादन्तरस्य भेदस्य प्रतिभामात्रत्वलाभेऽन्तरं कुरुत इति तावदुक्त स्याद् यावद्विभ्रमं कुरुते इतीति करोतेरिहादर्शनार्थत्वाद् नासमञ्जसं किञ्चित् ।

अन्ये तु—

"यदा ह्येवैष एतस्मिन्नल्पमप्यन्तरं नरः ।
विजानाति तदा तस्य भयं स्यान्नात्र संशय. ॥"

इति स्कान्दमनुरुन्धानाः करोतेरिहात्मनेपदिनः प्रकथनार्थत्वे कथनस्य प्रकर्षो ज्ञानपूर्वकत्वमिति कथनहानेन करोतिरिह ज्ञानपर एवेत्यप्याहुः ।

परस्यैव त्वन्तरस्य प्रतिष्ठाविच्छेदस्याभावात्मनः करोतिकर्मत्वानुपपत्तेः स्वा(पौ ? पे) च स्वभावभाविन्युपासनाविच्छेदे पुरुषस्वातन्त्र्यानुपपत्तेश्च विषयान्तरसञ्चारादिरन्तरपदार्थः कल्प्येतेत्यसमञ्जसमिति । तदेव मध्ये निर्विशेषपरामर्शात् 'तस्माद्वा' इत्यादिना 'सोऽकामयते'त्यादिना च तदुपपादनात् तद्विदः साध्वसाधुकर्मोपतापाभावाद्यर्थवादाच्च निर्विशेषपर प्रकरणमवसीयते । न च 'ब्रह्मविदाप्नोति परमि'त्यादिभेदव्यपदेशविरोध', जीवभावसन्निवेशसापे(क्षा?क्षत्वा)दुपदेशस्य । 'सोऽश्नुते सर्वान् कामान् सह, ब्रह्मणा विपश्चिते'त्यत्र तु वक्ष्यामः ॥

---

केनोपनिषद्वाक्यार्थः ।

एवमशेषोपनिषत्सु

"अन्यदेव तद्विदितादथो अविदितादधि"

इति विदिताविदितत्वनिषेधो ब्रह्म निर्विशेषप्रकाशमात्रमभिप्रैति। सविशेषत्वे हि विशेषभेदेन कथञ्चिद् विदितमविदितं च भवेत्। तथा

"यस्यामत तस्य मतं मत यस्य न वेद स"

इत्यादिव्यापकज्ञेयत्वनिषेधो व्याप्यसगुणत्वाभावमर्थादवगमयति । मतत्वामतत्वे हि विरुध्येते इति कर्तव्यो यत्न. । न च 'ब्रह्मविदाप्नोति परमि'त्याद्यपवर्गोपयज्ञानविषयत्वाम्नानाविरोधा(म्म ?दम)तत्वादिवचनमनन्तस्यानन्तगुणस्येयत्तापरिच्छेद्यत्वाभिप्रायं,

"सङ्ख्यातु नैव शक्यन्ते गुणा दोषाश्च शार्ङ्गिणः।
आनन्त्यात् प्रथमो राशिरभावादेव पश्चिम. ॥
यथा रत्नानि जलधेरसङ्ख्येयानि पुत्रक!।
तथा गुणा ह्यनन्तस्य ह्यसङ्ख्येया महात्मनः ॥"

इत्यादिदर्शनादिति युक्तम्। इयत्तया अमतमित्याद्यधिकावापदोषात्। तस्मान्मनन विज्ञान वा क्रियमाण प्रकाशसत्तामात्रे मतेर्मन्तरि विज्ञातेर्विज्ञातरि वा न प्रवर्तत इत्येतदवसान क्रियते। तदिदमुच्यते 'यस्यामत तस्य मतम्' इति । वेदनस्यापि वेदितृ ब्रह्मेत्यादिशास्त्रीयविकल्पविज्ञानस्यावभासकतया स्वयमेव निर्विशेषस्वरूपावभासाद् 'ब्रह्मविदाप्नोति परमि'त्यादिव्यपदेशः। स्वप्रकाशानुभवात्मनोऽविषयत्वमग्रे विस्तरेण वक्ष्यते।

एव

"तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते"

इत्युपास्यत्वनिषेधोऽपि, सविशेषस्योपास्यत्वोपगमात्। यत्तु — नायमर्थः यदुपासते तन्न ब्रह्म विद्धि, किन्तूपास्त्यविषयमिति । यदिदमुपासत इतीदंशब्दानर्थक्यात्। यदिदमित्युपासते इतीतरध्याहारप्रसङ्गाद्वा। 'यः पुनरेत त्रिमा(त्रे)णोङ्कारेण पर पुरुषमभिध्यायीते'ति शास्त्रान्तरविरोधाच्च। कि तर्हि, यदिद प्रतीकमुपासते इद न तत्, पर ब्रह्मैव त्वमुपास्स्वेतीति। तन्न। यदुपासते

तदिद न ब्रह्म विद्धीति कुत इत्यपेक्षिते इदमिति हेतुगर्भत्वाद्, उपास्यस्य पराग्भावेन दृष्टतया भयहेतुत्वादित्यर्थः। यद्वा करणकलेबरमिदमा निर्दिशति। सर्वस्यैव नैसर्गिकात्मारोपविषयतया प्रत्यक्षत्वात्। एव च यदिदमुपासते करणकलेबर प्राकृतास्तदिद न विद्धि। किन्तु तदेव ब्रह्म विद्धि यद् वाक्प्राणादिप्रणेतृप्रत्यगात्मभूत प्रकृतम्। प्रत्यगात्मन एव करणाधिपतया प्रथमतर तत्प्रणेतृत्वप्रत्ययात्। उज्झित्वा देहादिबहिर्दृष्टि प्रत्यगात्मभूत ब्रह्म जानीहीत्यर्थ। 'ओङ्कारेण पर पुरुषमभिध्यायीते'ति च तत्प्रतीकोपासन विवक्षितम्। इत्थम्भूतलक्षणे तृतीया, 'प्रायणान्तमोङ्कारमभिध्यायीते'ति प्रक्रमात्। तत्प्रतीकतैव च तत्र विशेषः॥

---

## नेह नानास्ति किञ्चनेतिश्रुत्यर्थ।

एव 'नेह नानास्ति किञ्चने'त्यादयोऽपि सकलभेदनिषेधेन स्वरसतो निर्विशेषमुपसहरन्ति। यत्तु नेह नानाभेदनिषेधो विवक्षितः। प्रत्यक्षादिसकलप्रमाणविरोधात्। अपिचैव सर्वज्ञ ब्रह्म 'बहु स्यामि'ति सङ्कल्पेन कथमात्मनि यत्ननिवर्तनीयहेयसम्बन्धमुपाददीत। असार्वज्ञ्ये वा 'यः सर्वज्ञ' इत्यादिविरोधः। अपि(च) निरसनीयत्वेनात्मनि हेयसम्बन्ध जानत् सर्वशक्ति तदैव किमि(ति) न निरस्येत्। अशक्तत्वे वा 'परास्य शक्ति'रित्यादिविरोधः। न च सर्वज्ञस्य कल्पनयापि हेयसम्बन्धः, तत्त्वज्ञानविरोधात्। नाना किञ्चनेत्युभयोद्देशेन निषेधसम्बन्धबोधे वाक्यभेदप्रसङ्गाच्च। तस्मादिह किञ्चन नाना नेति प्रपञ्चे नानात्वनिषेध एवायम्। स्वरूपेण नानाभूते च तदसम्भवाद्, आगमिकोपादानोपादेयभावादिनिबन्धनतदनन्यत्वादिविरोधिपृथग्भावो निषिध्यत इति युक्तमिति। तन्न। सप्तमीवृत्तेहशब्दपरामृष्टब्रह्मणो नानात्व प्रति सम्बन्धितयान्वयानुपपत्तेः। अस्मादिति विपरिणामाध्याहारादिकल्पनायां च गौरवात्। उपादानोपादेयादिस्वरूपभेदे सति तन्निषेधे बाधाच्च। न चावस्थाद्वयापन्नचिदचिद्विशिष्टवस्त्वभेदे शब्दगतिरुपपद्यते। न च 'मनसैवेदमाप्तव्यमि'ति ब्रह्मणि प्रकृते इहेति प्रपञ्चविषय युक्तम्। तथापि प्रपञ्चे नानात्वनिषेधे बाधाच्च। तत्र स्वातन्त्र्येणेत्यधिकावापे स एव दोषः। न च नानाशब्दस्याप्रयुक्तस्य स्वातन्त्र्ये शक्तिः शक्या कल्पयितु, येनात्र स्वातन्त्र्यमेव प्रपञ्चे निषिध्येत। पृथग्भूतस्य स्वतन्त्रतया

यथा हि कदली नाना त्वक्पत्रान्नानुदृश्यते"

इत्यादौ पृथगर्थे नानाशब्देन तल्लक्षणाया च स एव दोष. । न च पृथक्सत्त्वैव स्वातन्त्र्यमित्यतो नानास्तीति पृथक्सत्तामनूद्य तन्निषेधाददोष इति वाच्यम् । तथापि प्रतिसम्बन्ध्यनिरूपणात् । अत एव 'विनञ्भ्यां नानाञौ नसह' (५ २ २७) इत्यसहार्थे नानाशब्दानुशासनाद् 'नानानेकविनार्थयोः' इति नामकोशादिह विनार्थे नानाशब्द इति निरस्तम्, इहेत्यसामर्थ्यात् । द्वितीया तृतीया पञ्चमी वा स्यात् 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' (२. ३. ३२) इति । 'मनसैवेदमाप्तव्यमि'त्यतोऽर्थभेदेन मनसा विना नास्तीत्यनुषङ्गकल्पने च गौरवात् । मनोवत् प्रपञ्चस्यापि ब्रह्मणि सत. स्वरूपनिषेधायोगाद्, आप्तिसाधन नास्तीत्यध्याहारे गौरवाच्च । मनसैवेत्येव तदतिरिक्तब्रह्माप्तिसाधनप्रत्याख्यानाच्च । तस्मान्मनसैवेदमाप्तव्यम् । कथ चक्षुरादिभिराप्तव्यनानाजगदात्मक हि तदित्यपेक्षिते तत्त्वपरिशेषाय 'नानात्ययाना वृक्षाणाम्', 'नानाशब्दादिभेदात्' (ब्र० ३. ३. ५८) 'नानात्मानो व्यवस्थातः' 'नानावीर्याः पृथग्भूता ' 'नानाशकुनिनादितमि'त्यादौ नानाशब्दस्य भिन्नत्ववृत्तिदर्शनादिह ब्रह्मणि रूपप्रकारभेदभिन्न जगदेव निषिध्यते 'नेह नानास्ति किञ्चने'ति । न च प्रत्यक्षादिविरोध , विषयभेदादिति वक्ष्यते । सर्वज्ञस्य कल्पनानुपपत्त्यादौ च वक्ष्यामः । न च वाक्यभेदप्रसङ्गः । विशेष(ण)विशेष्याभ्यामन्यत्वेन विशिष्टस्य सकृदभावबोधनात् । अनन्यत्वेऽपि वानेकगुणविशिष्टैकक्रयवदनेकप्रतियोगिविशिष्टैकाभावबोधनात् । अभावस्य भावान्तरानतिरेकेण प्रतियोगिभेदेऽपि स्वरूपाभेदोपपत्ते । आरुण्यादिवदवच्छेदकतया नानात्वस्य क्रयवदभावेऽपि भेदाप्रयोजकत्वाच्च । तथा च प्रसक्तयावद्विशेषनिषेधसिद्धिः । अथवा नेह किञ्चनास्तीति सामान्यनिषेधबुद्ध्यपर्यवसान मा भूदिति नानेति विशेषणात् । अत एवा'र्तिमाच्छैदि'त्यादौ सामान्यबुद्धिपर्यवसानाय 'मृष्यामहे हविषा विशेषणमि'त्युक्तम् । न चैवमभिन्न सर्वमस्तीत्यर्थपर्यवसानमापद्येत । जडाजडस्वरूपाभेदबाधात् । सन्मात्रतोक्तौ सिद्धान्ताविरोधात् । अथवा नाना नास्तीत्येव निषेधे किञ्चनेति स्वरूपव्यञ्जनमात्रमसङ्कोचाय निषेधबुद्धेरिति श्लिष्टम् । यत्तु मनसैवानुद्रष्टव्यम् । ब्रह्म । किं जडजीवभेदेन, नेत्याह 'नेह नानास्ति किञ्चने'ति । इह दर्शनविषये किञ्चन नाना कश्चिदपि भेदो नास्ति ।

दर्शनविषयमध्यप्रविष्टभेदो न द्रष्टव्य इत्युक्त भवतीति । तन्न । भेदस्वरूप स्यैव स्वरसतो निषेधावगमात् । अपिच यदि भेददर्शनमिह पुरुषार्थतया निषिध्येत, अपगोरणादिवदेकवाक्यता भज्येत । अथ ब्रह्मदर्शनाङ्गतया, भेददर्शनेऽनिष्टफलवचनशेष उपरुध्येत

"मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति"

इति । तस्माद् भेदस्य वस्तुसत्त्वे तद्दर्शनापवादोऽदृष्टार्थो मा भूदिति तदविद्यात्वोपहारेणापोदिताशेषभेदवस्तुस्वरूपप्रतिपादनपरो युक्त. ।

'एकधैवानुद्रष्टव्यमि'ति च नानेकात्मकस्यैकप्रकारेण दर्शन विधीयते, येन 'नेह नाने'त्यादिभेदादर्शनपर कल्प्येत । किन्तु अविद्ययैव वियदादिभेदविपर्यासगृहीतमपि वस्तुस्वरूपमेकधैवैकप्रकारमेकरूपमेव प्रकाशसत्तामात्रमनुद्रष्टव्यमुच्यते शब्दवृत्तिलाघवात् । 'एकधैवानुद्रष्टव्यामि'ति विधेयदर्शनानुवादेन विशेषणविधानापेक्षया मनसैवानुद्रष्टव्यमित्यवगतसामान्यापेक्षितविशेषोपहरणेऽतिलाघवाद्, 'नेह नानास्ती'ति प्रथमावगतभेदस्वरूपनिषेधानुगुण्याच्च ॥

---

## निर्गुणश्रुतिविचार. ।

'साक्षी चेता केवलो निर्गुणश्चे'ति सर्वनिषेधाच्च । यद्यपि 'निर्गुणश्चे'ति सत्त्वादिगुणा एव प्रतिषिध्येरन्, गुणशब्दस्याध्यात्मशास्त्रे

"सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः"

'गुणानेतानतीत्य त्रीन्', 'विना हेयैर्गुणादिभिः', 'गुणादिदोषाश्च मुने! व्यतीतः', 'गुणकलुषस्य सनातनेन तेन' इत्यादौ 'गुणाः सत्त्व रजस्तम.' इति नामानुशासने च स(त्या?त्त्वा)दिगुणेषु बहुल प्रयोगात् । तथापि कैवल्यसमभिव्याहारात् सर्वविशेषनिषेधोऽवगम्यते । न च शास्त्रे गुणविधिरस्ति ब्रह्मण', येन तन्निषेधो विरुध्येत । सत्यज्ञानादेरखण्डार्थत्वव्यवस्थापनात्, सर्वस्यैव सर्वज्ञत्वादिगुणगणस्य कारणरूपानतिरेकात् । तस्य च ब्रह्मलक्षणस्याविधेयत्वात् । तदेव सर्वस्यैवाम्नायस्य निर्विशेषतात्पर्ये सति कारणत्वस्य गुणसमष्टिमयस्य तद्व्यष्टिगुणानां च प्रति-

पत्रोपाधावेव ब्रह्मणि प्रतिषेधात्, कारणत्वोपाधिप्रमुखं सर्वमेव विकल्पजात कल्पनामात्रमिति युक्तम्। 'स कारण करणाधिपाधिपः' इत्यादावपि कारणत्वविधानानुपपत्त्या निर्विशेषस्वरूपोपलक्षणार्थत्वात्। न चातात्पर्यविषयगुणवचनमात्रेण गुणमात्रनिषेधा† छागपशुन्यायेन वा, हिंसाविधिनिषेधन्यायेन वा, अन्यावगतपाप्मजरादिहेयगुणविशेषविषया उपसंहर्तव्याः। तात्पर्यवन्निषेधवचनस्वारस्यहानानुपपत्ते। न हि 'पशुना यजेते'त्यादाविव विशेषमनालम्ब्य गुणसामान्यनिषेधबुद्धेरपर्यवसानं, निर्विशेषात्मनि तदवसानोपपत्तेः। 'स एष नेति नेती'ति वीप्सया प्राप्तयावद्विशेषनिषेधेन निषेधव्यवस्थानुपपत्तेश्च।

ननु चैवमपि विशेषनिषेधैरव विशेषैर्ब्रह्मणो नात्यन्तिकी निर्विशेषतेत्यवश्यसङ्कोच्यो विशेषनिषेधो गुणवचनानुरोधेन हेयगुणविषये सङ्कोच्यतामिति चेद्। न। 'निर्विकल्पमनन्तं च', 'नेति नेत्यात्मे'त्यादिनिषेधस्यैव विकल्पसामान्यरूपेण स्वरूपेण च निषेध्यनिषेधकभावेन स्वात्मन्यपि वृत्त्युपपत्तेः। न च निषेधनिषेधे भावससर्गपरिशेषापत्तिर्निषेधानवस्थापत्तिर्वेति वाच्यम्। एकप्रसरेण विकल्प इत्येव सर्वनिषेधे वस्तुस्वरूपपरिशेषोपपत्तेः। जातौ व्यावर्तकधर्मनिषेधे तावन्मात्रपरिशेषदर्शनात्। भावाभावसर्वधर्मनिषेधे चाभावे निर्विशेषाभावदर्शनात्

"त्यज धर्ममधर्मं च उभे सत्यानृते त्यज।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत् त्यज॥"

इति त्यागयत्नस्यापि त्यक्तव्यत्वविधौ हि केवलमौदासीन्यमेव लभ्यते, न यत्नान्तरपरिशेषः। तद्वदेष विकल्पनिषेधः प्रतिपत्तव्यः॥

---

## निर्गुणत्वे शारीरकविरोधपरिहारः।

न चैवं परविद्यायाम् 'आनन्दादयः प्रधानस्य' (ब्र० ३. ३. ११) 'अक्षरधियां त्ववरोधः' (ब्र० ३. ३. ३३) इति च गुणोपसहारन्यायः पीड्येतेति वाच्यम्। 'शब्दप्रवृत्तिनिमित्तापेक्षत्वात् तत्तद्विपर्यासविरोधिस्वरूपोपल-

---

† 'छागो वा मन्त्रवर्णात्' (जै० ६ ८. सू. ३१)

क्षणाय तेषामुपसंहार' इत्युक्तं वाक्यार्थविवेके । ननु पुरुषार्थोपासनाविधिपरिगृहीतानां सत्यकामत्वादिगुणानामप्रतिषेधो युक्तः । न युक्तः । निर्विशेषब्रह्मप्रतिपत्त्युपयोगिकारणरूपोपाश्रयणेन हि तत्तत्फलाय, क्रममुक्तये वा, तत्तदुपाधिवृत्तनानागुणकब्रह्मोपासनमन्यार्थाप्प्रणयनाद्याश्रयणेन फलाय गोदोहनादिकमिव विधीयते । तत्पुनरन्यशेषोपाश्रयणमेकत्र स्वरूपलाभाय, निर्विषयोपासनायोगात् । अन्यत्र फलसाधनभावाय, क्रियान्यत्वे सति निष्क्रियस्य साधनत्वायोगादित्येतावानेव विशेष. । एव चोपासनाविधिर्न सगुणत्व प्रयोजयति, गोदोहनविधिरिवाप्प्रणयनम् । न खलूपासनाविधिषु गुणाः प्रतिपाद्यतयोपादीयन्ते, विधिपरत्वे सति वाक्यस्य विषयप्रतिपत्तितात्पर्यायोगात् । किन्तूपासनाविषयतया विधीयन्ते । विषयस(र्व?)त्त्वमनपेक्ष्याधेनोरिव धेनुत्वेनानणीयस इव चाणीयस्त्वेन निर्गुणस्यैव सगुणत्वेनोपासनाविधेरुपपत्तेः । 'निचाय्यत्वादेवम्' (ब्र० १. २. ७) इति न्यायात् । अत एव 'त यथा यथोपासते' इत्यनियतप्रकारमुपासनमुच्यते । अन्यथा गुणविशेषाधीनोपासनाभेदाभेदनिरूपणासम्भवात् ।

हन्तैवं 'अनुपपत्तेस्तु न शारीर'' (ब्र० १. २. ३) इति प्रत्युद्धृत स्यात्, शारीरस्यापि वस्तुसत्त्वमनपेक्ष्य सत्यसङ्कल्पत्वादिनोपासनासम्भवादिति चेत् । सत्यमेवम् । किन्तु यथोपन्यासं वस्तुस्वरूपे सम्प्रत्ययो भवन् सम्भवेऽव्यतिरेके च तथाविषयो युक्त उपगन्तुमित्यभ्युच्चीयते । अत एवाणीयस्त्वादौ 'निचाय्यत्वादेवमि'त्युक्तम् । यत्तु स्वरूपपरेऽपि वाक्ये सत्यकामत्वादि विज्ञायते 'य आत्मापहतपाप्मा सत्यकामः सत्यसङ्क(ल्पादि ? ल्पः इ) ति । तन्न । तस्य स्वरूपोपलक्षणतया 'अतिच्छन्दा' इत्यादिनिषेधापरिबन्धित्वात् । अत एव 'सर्वस्य वशी सर्वस्येशानः' इत्युपलक्षित आत्मा मा भूद् वशित्वादिगुणोपसृष्ट इत्यपमृष्टविशेषः पुनरुपदिश्यते 'स एष नेति नेत्यात्मे'ति ।

कथं तर्हि, 'कामादीतरत्र तत्र चायतनादिभ्य.' (ब्र० ३. ३, ३९) इति सत्यकामत्वादिसर्ववशित्वादिगुणानामुपसहारः सूत्रितः । यदि स्यादेषापि सगुणविद्येति कृत्वाचिन्तया । अत एव दहरविद्यायाम् 'एताश्च सत्यान् कामानि'त्युपासनाविधौ पृथग्गुणविवक्षा दर्शिता । मा भूदविवक्षा सर्ववशित्वादिवादिति । अथवा

"का(मे[^]मादे)रुपसंहार' सगुणागुणविद्ययोः ।
वि(धे[^]य)ये स्तुत(या[^]ये) चापि यथायोगं प्रतीयताम् ॥"

यद्यपि कामादयो वशित्वादयश्च विधेयतया स्तावकतया च व्यवस्थिताः । तथापि सत्यकामत्वादिव्यष्टयो वशित्वादय इति कथञ्चिदुभयरूपोपस्थिता इतरत्रेतरत्र चोपसह्रियमाणास्तत्तदात्मतामापद्यन्त इत्यविरोध इति । तस्मात् कारणरूपेण सर्वज्ञत्वाद्यनन्तकल्याणगुणात्मकत्वेऽपि न स्वरूपेण शास्त्रतात्पर्यविषयेण सगुणत्वं शक्यमुपपादयितुम् । तथाचैव गुणविधिनिषेधविषयभेदे सति नोत्सर्गापवादन्यायः ॥

---

हिंसाविधिनिषेधयोर्भिन्नविषयत्वम् ।

हिंसाविधिनिषेधयोरपि भिन्नविषयत्वेन तदुदाहरणमप्ययुक्तम् । प्रतिषेधस्य प्रवृत्त्यैव पुरुषार्थहिंसाविषयत्वात् । 'न हिंस्यादि'त्यनारभ्याधीते हि हिंस्यादिति विध्यभिहितव्यापारस्यापेक्षितो भाव्यः पुरुषार्थ एव । आख्यातानभिधेयस्यापि तदभिहितव्यापाराश्रयस्योपस्थितस्य कर्तुः क्रतुप्रकरणादिबाधकाभावेन व्यापारकैमर्थ्याकाङ्क्षया शेषित्वप्रत्ययात् । तथाच यो यदर्थं प्रवृत्तः सन् निवार्यते स तदर्थमेवेति पुरुषार्थहिंसानिषेधोऽपि पुरुषार्थो न(क्र)त्वर्थहिंसामास्कन्दति । रागप्राप्तहिंसाविषयत्वेन चरितार्थत्वेऽधिकारान्तरनिविष्टक्रतुशेषहिंसानुवादं कथञ्चिदाधाय तद्विषयत्वकल्पनागौरवात् । व्यवस्थितोभयार्थहिंसानिषेधस्यापि क्रत्वर्थत्वपुरुषार्थत्वे खादिरत्वस्येव * संयोगपृथक्त्वापेक्षया वाक्यभेदप्रसङ्गाच्चेति केचित् ।

अन्ये मन्यन्ते — आक्षिप्यमाणे कर्तरि शेषभूते शेषित्वमार्थिकमिष्यते । 'अग्निहोत्रं जुहोती'त्यादौ विधिनैवावसितत्वात् । निषेधे तु प्राप्तानुवादेन केवलमनर्थसाधनभावो नञुपसङ्क्रान्तविधिना बोध्यते । 'न सर्पायाङ्गुलिं दद्यादि'त्यादौ तथैव व्युत्पत्तेः । तथाचार्षमपि दर्शनं 'योऽवगुरेत् त शतेन यातयेत् तस्माद् ब्राह्मणाय नावगुरेते'त्यादि । तत्र शतयातनादिविशेषोपसंहारेण नञ्विधिबोध्योपगोरणानर्थसाधनभाव इति व्युत्पादनात् । न तु नञ्पदमनपेक्षितपुरुषार्थत्वपर्यवसानं यावद्विलम्बते । यथाहुः —

---

* 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' (जै० ४. ३. ५)

"प्रतिषेधोपसंहारिमहावाक्यतिरस्कृता ।
नावान्तरविधेः शक्तिराविरस्ति कथञ्चन ॥"

तत्र तु बाधकाभावेनाख्याताभिधेयव्यापाराश्रयः कर्ता शेषित्वेन विपरिणम्यते मा निषेधकैमर्थ्याकांक्षा सन्तानीति । तथाच विध्यंशस्य निषेधेषु नञुपगृहीतस्वभावतया क्रत्वर्थत्वपुरुषार्थत्वभेदमनपेक्ष्य सामान्यतः प्रवृत्तोऽत एव पुरुषार्थो निषेधो न क्रत्वर्थहिंसातोऽवस्कन्दितुमर्हति । क्रत्वर्थपुरुषानर्थहेतुभावबोधिविधिनिषेधसमावेशाविरोधेन यावत्प्राप्तविषयत्वसम्भवे सावकाशस्यापि निषेधस्य विषयसङ्कोचायोगात् । प्राप्तिश्च निषेध्यस्य हिंसामात्रस्य विधितोऽन्यतो वेत्यन्यदेतत् । यदि हि निषेधो विधिमन्तरा निषेध्यतावच्छेदकावच्छिन्नस्य प्राप्तिमात्रमलभमानो वैधीमेव प्राप्तिमपेक्षेत, यथानूयाजेषु येयजामहनिषेधः, यथा वातिरात्रे षोडशिग्रहणनिषेधः, स नात्मानमेव लभेत विकल्प्येत वा । अय तु हिंसानिषेधो लौकिकीमेव प्राप्तिमपेक्ष्य सामान्यालम्बनः प्रवर्तत इति न स दोषः ।

यत्तु अग्नीषोमीयादिसंज्ञपनं न हिंसा, पशोः स्वर्गलोकप्राप्तिहेतुत्वात् । आमनन्ति हि 'हिरण्यशरीर ऊर्ध्वं स्वर्ग लोकमेती'ति । अतिशयिताभ्युदयसाधनं हि व्यापारोऽल्पदु.खदोऽपि न हिंसा, किन्तु रक्षणमेव । तथाच मन्त्रवर्णः

"न वा उ वेतन्म्रियसे न रिष्यसि । देवाँ इदेषि पथिभि. सुगेभिः ।
यत्र यन्ति सुकृतो नापि दुष्कृतः । तत्र त्वा देव सविता दधातु ॥"

इति । चिकित्सकं च तादात्विकाल्पदु.खकारिणमपि रक्षकमेवाचक्षते । तस्मादस्यानिषेध इति ।

तदसारम् । मरणोद्देश्यकव्यापारो हि प्राणवियोजनलक्षणो हिसा, प्रसिद्धेः । न त्वतिशयिताभ्युदयासाधनत्वविशेषितो गौरवात् । न चाग्नीषोमीयालम्भन पशोः स्वर्गफलोद्देश्यक, येन सा हिसा न स्यात् । क्रत्वर्थं हि तत् । नान्तरीयकाभ्युदयसिद्धिमात्रेणाहिसात्वे ज्योगामयाविमहापुरुषवधो हिसा न स्यात् । तस्यापि प्रस्तुतारब्धफलगुरुतरदु खानिवृत्त्या निरतिशयाभ्युदयसिद्धेः । 'न वा उ वेतन्म्रियसे' इति च प्रत्यक्षविरुद्धार्थतया गुणवादः । तस्मादग्नीषोमीयहिसापि हिसेत्येव निषिध्येत । ननु चा'ग्नीषोमीय पशुमालभेते'ति पुरुषार्थसाधनतामेव विदधीत, विधीना पुरुषार्थावसायित्वात् । किन्तु सा प्रकरणवि-

धानात् क्रतूपकारद्वारेति कल्प्यते । तथाच तत्रैव तदनर्थसाधनत्वविधानमसम्भवे । यथाहुः—

"विधीनां चापि सर्वेषां साक्षाद् व्यवहितोऽपि वा ।
पुरुषार्थः फलं तेन नानर्थोऽतः प्रतीयते ॥"

इति ; न । आलभेत स्वर्गकाम इति विधाने हिंसाया अनङ्गत्वापत्तेः । न चास्या दशाया परम्परावगमहेतुरस्ति । प्रकरणिविशेषावगमहेत्वभावात् । कल्प्यफलेषु फलसमभिव्याहाराभावेन ततोऽङ्गित्वनियमानुपपत्तेश्च । अन्यतो वा तन्नियमे तेनैकाधिकारसिद्धेरङ्गेषु पुरुषार्थसाधनताविधानानर्थक्याच्च । तस्मात् पुरुषार्थभूतक्रतूपकाररूपार्थसाधनतामात्रं प्राकरणिकालम्भविधिना बोध्यत इति न निषेधविरोध ॥

---

### तत्तन्निषेधानां क्रत्वर्थत्वपुरुषार्थत्वविमर्शः ।

न चायमस्ति नियमो यदर्था प्राप्तिस्तदर्थ एव प्रतिषेध इत्येकार्थावच्छेदनीयौ प्राप्तिपरिहाराविति । पुरुषार्थानामपि दानहोममासाशनस्त्र्युपगमादीना, 'दीक्षितो न ददाति' 'न जुहोति', 'न मासमश्नीयात्', 'न स्त्रियमुपेयादि'त्यादिप्रकरणाम्नातनिषेधस्य क्रत्वर्थत्वोपगमात् । एव क्रत्वर्थाया अपि हिसाया निषेधस्य पुरुषार्थत्वाविरोधात् । अन्यथा अप्रतिबन्धाद्युपकारेण क्रत्वर्थप्रातावैधहिसाया अपि पुरुषार्थप्राप्तहिसामात्रनिषेधविषयत्वप्रसङ्गात् । वैधत्वेऽवैधत्वे वा क्रत्वर्थप्राप्त्यविशेषाद्, निषेधान्तराभावाच्च । अत एवापगोरणादिनिषेधः प्राकरणिकोऽपि यथातथाप्राप्ततद्विषयः प्रकरणादुत्कृष्य पुरुषार्थो व्यवस्थापित. शयुनये‡ । न पुनरन्वाहार्यमात्रेण नानमत्स्वृत्विक्षु क्रत्वनिवृत्तेः तदर्थप्राप्तविषयः क्रत्वर्थ एव । न वा पुरुषार्थप्राप्तविषय एव तदर्थः । उभयार्थसाधारणरूपोपात्तनिषेध्यवृत्तिश्च हिसानिषेधस्यापि समाना । कुतः पुनरेवं सत्येष विशेष., कश्चिन्निषेधः पुरुषार्थः कश्चित् क्रत्वर्थ इति । उच्यते । य(द)र्थावच्छिन्नप्राप्तविषयो यः स बाधकाभावे 'आत्मार्थं न पचेदन्नमि'त्यादिस्तदर्थ. । यथात्मन एकस्यार्थे एको न हन्तव्य'. यथा वा प्रकरणे 'नानृतं

---

‡ 'शयौ च सर्वपरिदानात्' (जै० ३. ४. २३)

वदेदि'ति । अर्थविशेषावच्छेदमनादृत्य कथञ्चित्प्राप्तसामान्यनिषेधस्तु पुरुषार्थ एव । यथायमेव हिंसानिषेधः, अनारभ्यानृतवदननिषेधो वा । अर्थविशेषावच्छेदश्च निषेध्यस्य सामान्योपाधावेव निषेधसम्भवे सत्ययुक्त आश्रयितुम् । न च सामान्यनिषेधः क्रत्वर्थ एव किं न स्याद्, उभयार्थविषयत्वाविशेषादिति वाच्यम् । क्रत्वर्थहिंसाविधिविरोधात्, प्राकरणिकानृतवदननिषेधानर्थक्यप्रसङ्गाच्च । अनारभ्यनिषेधस्य क्रतौ श्रुत्यादिविनियोजकाभावाच्च । हिंसाया अनृतवदनस्य वा क्रियात्मतया स्वत एव निषेधबोधनीयानिष्टसाधनत्वबोधोपपत्तौ पर्णताया इवाश्रयानपेक्षतया क्रतुसम्बन्धाप्रतीतेः । प्राणवियोजनस्यैव हिंसाशब्दत्वेऽपि यत्किञ्चित्क्रियाश्रयत्वेनापि तदुपपत्तौ क्रतुसम्बन्धनियमाभावात् । प्रकरणे चापगोरणादिसामान्यनिषेधस्य स्ववाक्योपात्तशतयातनादिविशेषोपसंहारेण पुरुषार्थत्वेऽवगते क्रत्वर्थत्वकल्पनायोगात् । *मलवद्वासःसंवादादिनिषेधस्यापि 'यस्य व्रत्येऽहन् पत्न्यनालम्भुका स्यात् तामपरुध्य यजेते'ति क्रत्वर्थनिषेधान्तरे सति तादर्थ्ये वैयर्थ्यात् । दानहोमादिनिषेधस्तु न सामान्यविषयः, क्रत्वर्थे वा तस्मिन् पुरुषार्थे वा तत्तदर्थविहितविषये विकल्पापत्तेः । किन्तु पुरुषार्थावच्छिन्नविषय एव । तथापि स क्रत्वर्थ इष्यते, प्रकरणानुरोधाद् गत्यन्तराभावाच्च । अत एव मांसाशनादिनिषेधोऽपि न पुरुषार्थः, 'ऋतौ भार्यामुपेयात्', 'न मांसभक्षणे दोषः' इत्यादिशास्त्रादेव पुरुषार्थतयादुष्टतया चावगतस्य स्त्र्युपायादेः पुरुषं प्रत्येवानिष्टसाधनत्वबोधने विरोधात्, प्रकरणादुत्कर्षकल्पनाहेत्वभावाच्च । किन्तु क्रत्वर्थ एव । यथाहुः—

"स्त्र्युपायमांसभक्षादिपुरुषार्थमपि श्रितः ।
प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ॥"

इति । अपिचानुवादस्य यथाप्राप्त्युपजीवितया वैधहिंसाया अपि 'तद्युक्ते तु फलश्रुतिस्तस्मात् सर्वचिकीर्षा स्यात्' (जै० ३. ७. ८) इति न्यायेन परम्परयापि पुरुषार्थत्वात् तद्रूपानुवादेऽपि निषेधस्योभयहिंसाविषयत्वोपपत्तिः ॥

---

* 'प्रागपरोधान्मलवद्वाससः' (जै० ३. ४. २४.)

### प्रसङ्गात् प्राप्तबहुविधिनिषेधवचनव्यवस्था ।

नन्वेव पुरुषार्थे हिंसासामान्यनिषेधे "स्तेनः प्रकीर्णकेशोंऽसे मुसलमादाय राजान गत्वा कर्माचक्षीत । तेनैन हन्याद् वधे मोक्षः । अनुज्ञातेऽनुज्ञातारमेनः स्पृशति" (आप० १. ९. २५. ४९) इत्यादिपुरुषार्थहिंसाविधिवैशसापत्तिः । यथा—

"आततायिनमायान्तमपि वेदान्तपारगम् ।
निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत् ॥"

'नाततायिवधे दोष.' 'न दोषो हिंसायामाहवे' इत्याहत्य निर्दोषत्वाभिधानादेवंरूपानेकहिंसाव्यवच्छेदावश्यम्भावे, प्रतिस्व व्यवच्छेदे गौरवाद् विहितत्व(नि ?)रूपसंग्रहेण तदितरहिंसाविषये निषेधपर्यवसान युक्तम् । अत एव क्रत्वर्थावैधहिंसापि प्रतिषिद्धा सिध्यतीति चेद् , न । 'अनुज्ञातारमेनः स्पृशति', 'अहत्वा भ्रूणहा भवेदि'ति विपर्ययोपादानसामर्थ्येन सत्येव 'न हिंस्यादि'ति हिंसामात्रानिष्टहेतुत्वे, स्तेनानुज्ञादेराधिकतरानिष्टसाधनतया दोषाभाववचनस्य हिंसाया तदूनतरदुरितफलाभिप्रायत्वात् । भवन्ति खल्वल्पत्वाभिप्रायाण्यप्यभाववचनानि—'अलवणा यवागूर(नु)दरा कन्ये'त्येवमादीनि । अत एव हिंसामात्रे दोषानुषङ्गादाहवहिंसादोषनिर्हरणाय 'युधिष्ठिरस्याश्वमेध' इत्याश्वमेधिक उपाख्यायते । एव च

"एकस्मिन् यत्र निधनं प्रापिते दुष्टचारिणि ।
बहूनां भवति क्षेमं तस्य पुण्यो वधः स्मृतः ॥"

इति,

"सुखमेधन्ति बहवो यस्मिंस्तु निहतेऽशुभे ।
तस्मिन् हते नास्ति हन्तुः पातक चोपपातकम् ॥"

इति च परोपकारकृतपुण्यबाहुल्याभिप्रायम् । अत एव परोपकाराबाहुल्ये 'जिघांसन्तं जिघांसीयादि'त्यनुमताप्यात्मार्थहिंसा निन्द्यते—

"एकस्यार्थाय यो हन्यादात्मनो वा परस्य वा ।
बहूनि सत्त्वान्येकं वा भवेत् तस्य तु पातकम् ॥"

इति । एतेन पुरुषार्थत्वेन सामान्यानृतवदनप्रतिषेधो व्याख्यातः ।

"अनृतं नानृत स्त्रीषु परिहासविवाहयोः ।
आत्मप्राणार्थघातेषु तदेवोत्तमता व्रजेत् ॥"

इत्यादेरप्यल्पपापाभिप्रायत्वात् । अत एव

"वर्णिनां हि वधो यत्र तत्र सा(क्ष्या ? क्ष्य)नृत वदेत् ।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥"

इति विहितानृतेऽपि प्रायश्चित्तविधानमुपपद्यते । अत एव

"अनृत नोक्तपूर्वं मे स्वैरेष्वपि कदाचन"

इत्यादि नर्मस्वप्यनृतवदने सामान्यनिषेधमूलदोषानुषङ्गाभिप्रायमुपपन्नम् । अत एव चात्मार्थघातप्रसक्तौ छलानृतवदनमात्रेणापि नरकानुभवो युधिष्ठिरस्य स्वर्गारोहणपर्वण्युपाख्यायते ।

अथैव 'न सुरा पिबेदि'ति सुरापानसामान्यनिषेधे 'सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः सुरामास्ये मृतः शुध्यति', 'सुरापोऽग्निस्पर्शां (सुरां) पिबेत्' (आप० १. ९. २५. ३) इति सुरापानप्रायश्चित्तमुष्णसुरापान न स्यात् । प्रतिषिद्धावृत्त्या पापोपचयप्रसङ्गादिति चेद्, न । निषेधविषयतया दुरितहेतुत्वेऽपि तप्तसुरापानस्य प्रायश्चित्तत्वविधिसामर्थ्यादेव गुरुतरदुरितफलकामिकसुरापानादूनतरदुरितफलत्वमर्पितमरणान्तदुःखतया चावसीयते । न पुनरविशेषप्रवृत्तनिषेधसङ्कोचो युक्तः । अत एव सौत्रामण्यां सुराग्रहशेषभक्षे चोदकप्राप्तेऽपि तेन ब्राह्मणा ऋत्विजो मा पत्तन्निति परस्य परिक्रय(णा ? ण)माम्नायते 'ब्राह्मणं परिक्रीणीयादुच्छेषणस्य दातारं यदि ब्राह्मण न विन्देत् । वल्मीकवपायामवनयेत् सैव ततः प्रायश्चित्तिरि'ति । न च पापेन पापनि(र्ण ? र्ह)रणायोगः । रजसैव रजोन्तरनिवृत्त्यादिवदुपपत्तेः । (प ? त)प्तसुरापानार्पणीयमरणान्तदुःखस्यैवोभयफलत्वेन फलान्ततया दुरितद्वयापवर्गोपपत्तेश्च । दृश्यते हि दारुनिघर्षजन्मना ज्वलनेन दारुद्वयविनाश इति । एवं सर्वत्रैव सामान्यनिषेधेषु योजयितव्यम् । तस्मात् प्राप्तिमात्रापेक्षसामान्यनिषेधो न वैधहिंसायाः संत्रस्यत इति ।

किमेवमग्नीषोमीयहिसा अधर्मः निषेधविषयत्वात् । किं पुरुषस्यानिष्ट-सा‍धनमिति यदि प्रश्न., ओमिति ब्रूमः । न तु क्रतुवैगुण्यसाधन, तादर्थ्येना-निषेधात् । अत एव हि 'नानृत वदेदि'ति सत्येव पुरुषार्थनिषेधे पुनरन्वयव्य-तिरेकाद्यवगतक्रतुसिद्ध्युपकारकतया तदर्थप्राप्तिमपेक्ष्य तादर्थ्येन प्रतिषेध इष्य-ते । यद्येव श्येनादितुल्यो ज्योतिष्टोमादिः स्यात्, फलत साधनतो वानर्थानुब-न्धाविशेषात् । ततश्च हिसादुरितभीरुणा नानुष्ठीयेत । हिसासाध्यक्रतुफलस्यापि परोक्षतया प्रत्यक्षसुखे कलञ्जभक्षणादाविव निषेधोल्लङ्घं प्रवृत्तिकल्पनायोगात् । धर्मश्च स न स्यात् ।

"फलतोऽपि च यत् कर्म नानर्थेनानुबध्यते ।
केवल प्रीतिहेतुत्वात् तद् धर्मत्वेन कीर्त्यते ॥"

इति भट्टोक्तेः कथमप्यनर्थानुबन्धे धर्मत्वाभावाभिप्रा(या ? यत्वा)त् । तस्मादनि-ष्टाननुबन्धीष्टसाधनताबोधिविधिविरोधाद् निषेधविधेर्वैधहिंसायामनर्थहेतुभाव-बोधाक्षमतया तदितरविषये व्यवस्थितिरिति । नैवम् । विधेयस्य हि शेषिण प्रति तत्साध्यफलाधिकतरानिष्टाननुबन्धित्व विधिना बोध्यमपि बोध्येत । न तु सर्वं प्रति हिस्यमानानिष्टानुबन्धितया । हिसायां तदभावविध्यनुपपत्तेः । नापि सर्व-(धै ? थै)वानिष्टाननुबन्धित्व विधेयम् । शेषिणोऽपि वित्तव्ययायासाद्यनिष्टानु-बन्धस्यावर्जनीयत्वात् । तदेवं सति हिंसायां क्रतु शेषिणं प्रत्यनिष्टाननुबन्धि-त्व पुरुष प्रत्यनर्थहेतुत्व च बोधयन्तौ विधिनिषेधौ न विरुध्येते । नापि क्रतु-विधिना पुरुषार्थपरेण विरोधः । तादर्थ्येन हिंसाविधिबलादेव गुणाधीनदुरितस्य प्रधानसाध्यफलादल्पतरत्वावगमात् । अत एव धर्मश्च स न स्यादिति निर-स्तम् । बलवदनर्थाननुबन्धस्यैव विधिबोध्यत्वात् । न त्वलौकिकानर्थानुबन्धमात्रं वारयितु शक्य, हिसासामान्यनिषेधात् । अत एव क्रियायज्ञे पशुहिसाद्वारक-दुरितानुबन्धानुशयेन हिसाविधुरो जपयज्ञः प्रशस्यते

"अहिंसया च भूतानां जपयज्ञः प्रवर्तते"

इति । अत एव चोपरिचरोपाख्याने भारते अजेन पशुना यष्टव्यमिति वदतो देवान् प्रति यज्ञियायामपि हिसाया दोषं पश्यतामृषीणामिदं वचनं पठ्यते ।

"अजसंज्ञानि बीजानि भागस्तं हर्तुमर्हथ ।
नैष धर्मः सतां देवा यत्र वध्येत वै पशुः ॥"

इति । न चैवं कर्मण्यप्रवृत्तिः,

"समाप्तिं न समायाति प्रधानं यदसम्भवे ।
निषिद्धमपि तत् कार्यं तत्समाप्तिप्रयुक्तित· ॥"

इति न्यायेनाल्पदुरितानुबन्धसहनेन महाफलाभिलाषेण प्रवृत्त्युपपत्तेः । अङ्गहिंसादुरितादपि गुरुतरदुरितोदयप्रसङ्गेन नित्यकर्माप्रवृत्त्यनुपपत्तेश्च । अन्यथा वृश्चिकशूकभीतस्याशीविषमुखनिपातन्यायापातात् । श्येनादौ च विधेयक्रियासाध्यारिमरणफलाधिकतरदुरितानुसन्धानादतुल्यता ॥

---

## श्येनादिविधिविचारः ।

नन्वे(दं ? व) श्येनादेरविधेयत्वापत्तिः । बलवदनिष्टाननुबन्धीष्टसाधनत्वाभावात् । ततः श्येनविधिवाक्यानर्थक्य विधेयान्तराभावात् । न च फलस्य हिंसाया बलवदनिष्टसाधनत्वेऽपि न श्येनस्य तत्साधनतेति विधेयता स्यात् । यथाहुः —

"श्येनस्वरूप नानर्थस्तत्फलस्य त्वनर्थता "

इति,

"निराकांक्षस्य चैकेन श्येनस्य न फलद्वयम् ।
तस्मात् क्रियान्तरादेव हिंसातोऽनर्थ उच्यते ॥"

इति चेति वाच्यम् । फलतोऽपि बलवदनिष्टोपयोगविज्ञाने प्रवृत्त्ययोगात्, प्रवर्तकविधिना फलतोऽपि बलवदनिष्टाननुबन्धस्य बोधनीयत्वात् । अपिच न श्येनेन क्रियात्मा हिंसा नाम फल जायते, शस्त्रपातेनेव शत्रुप्राणवियोगस्यैव जननात् । न च स्वाव्यापारात्मना परकीयप्राणवियोगेन स्वस्य दुरितं जायत इति युक्तिमत् । अतस्तत्फलकस्वव्यापारात्मना पुरुषस्यानर्थः श्येनेनैव जायमानो जायेतेति केवल निषिध्येत । तद्विधौ वा हिंसानिषेधस्तदतिरिक्तविषये सङ्कोच्येत । स एव तस्य नानर्थोऽनर्थश्चेति बोधनानुपपत्तेः । अथोच्येत —

श्येनो हि फलनिष्पत्त्या सह सङ्घटिताकृतिः ।
अनर्थभावनात्मा न हिंस्यादिति निषिध्यते ॥

फलपर्यन्तभावा(त्म ? त्मा) श्येनादेः प्रतिषिध्यताम् ।
ऊचे हिंसा हि सा सा च प्रति(षि ? षे)ध्येति भाष्यकृत् ॥
फलव्यावृत्तभावात्मा पुमर्थस्यैव साधनम् ।
विधीयते स तद्रूपो यन्नानर्थानुबन्धनः ॥
निषेधेनानवष्टब्धे नादृष्टानर्थहेतुता ।
शक्याधिगन्तु न श्येनस्तद्रूपेण निषिध्यते ॥
अतो हिंसामनुद्दिश्य श्येनादिः क्रियते यदि ।
धर्म एवाखिल कर्म ज्ञाने हि विनियुज्यते ॥
निषेधमवधूयापि श्येने हिंसाविधौ पुमान् ।
रागौत्कव्यादिवान्यत्र द्वेषौत्कव्या(त्) प्रवर्तते ॥
तन्निषेध्यविधेयात्मभेदादुभयसङ्गतिः ।
श्येनादिष्विति चेन्नैवमपि तस्य विधेयता ॥

'भूतेभ्यो न द्रुह्येदि'ति हिंसोद्देश्यकव्यापारसामान्यनिरे(ध ? धाव)ष्टब्धत्वादिति।

उच्यते — अस्तु श्येनादेरविधेयत्वमेव । धर्मस्यैव विधेयत्वात् । श्येनादिश्च न धर्मः, फलतोऽपि बलवदनर्थानुबन्धित्वात् । न च वाक्यानर्थक्यम्, इष्टोपायत्वबोधित्वात् । यथाह शबरस्वामी — "कथं पुनरनर्थः कर्तव्यतयोपदिश्यते । नैव श्येनादयः कर्तव्या विज्ञायन्ते । यो हि हिंसितुमिच्छेत् तस्यायमभ्युपाय इति हि तेषामुपदेशः" इति । प्रत्यक्षादिनेव सुरापानादौ निषेधगृहीते श्येनादौ वचनेनालौकिकेष्टसाधनतामात्रमवबोध्यत इत्यर्थः । अत एव 'अतिरात्रे षोडशिन गृह्णाती'ति विधिगृहीते 'नातिरात्रे षोडशिन गृह्णाती'ति निषेधेनानर्थहेतुत्वबोधनासम्भवादकरणमात्रमवबोध्यत इति षोडशिग्रहणाग्रहणविकल्प उपेयते । यद्येव चोदनालक्षणत्वाभावादेव श्येनादिव्यावृत्तौ 'चोदनालक्षणोऽर्थो धर्मः' (जै० १ १. २) इत्यत्रार्थपदवैयर्थ्यम् । अत्र केचित् — पुंप्रवृत्तिनिवृत्तिप्रयोजकौ विधिनिषेधौ चोदनेति विवक्षित्वा निषेध्यवारणार्थमर्थपदमित्याहुः । अपरे तु — अर्थपदानुपादाने हि चोदनालक्षणो नाम धर्म इति वा धर्मो नाम चोदनालक्षण इति वोद्देशविधानवचनव्यक्तिसन्देहापत्तिः । तदुपादाने च तदर्थस्याद्यवचनव्यक्तावुद्देश्यतया वा विधेयतया वान्वयासम्भवादन्त्यैव वचनव्यक्तिर्निश्चीयतेऽनर्थभिन्नं श्रेयःसाधनं

धर्म इति, लोकसिद्धमनूद्य चोदनालक्षणत्व तस्य विधीयत इत्यवगमोपपत्ते-रिति वदन्ति । यदि पुनरलौकिकेष्टसाधनमात्रं विध्यर्थो धर्मश्च, तदा श्येना-दिर्निषे(ध्या?ध्यो)ऽपि तथा स्यात् । उक्तं हि श्लोकवार्त्तिककृता —

"यदि येनेष्टसिद्धि' स्यादनिष्टाननुबन्धिनी ।
तस्य धर्मत्वमिष्येत ततः श्येनादिवर्जनम् ॥
यदा तु चोदनागम्य' कार्याकार्यानपेक्षया ।
धर्म. प्रीतिनिमित्तं स्यात् तदा श्येनेऽपि धर्मता ॥"

इति । तस्माद् 'न हिंस्यादि'त्यसङ्कुचितविषयत्वाद् गुणनिषेधविषयसङ्कोचे न दृष्टान्तः ।

अथ 'यजतिषु येयजामह करोति नानूयाजेष्वि'ति वाक्यभेदादिदोषो मा भूदिति पर्युदासवृत्त्यनूयाजव्यतिरिक्तयागेषु येयजामहविधिवद् 'अहिंसन् ‡ सर्वा भूता(न्य)न्यत्र तीर्थेभ्य ' इति प्रवृत्त्यैव विहितहिंसातिरिक्तहिंसाविषयो नि-षेधो गम्येत । न हिंस्यादिति चानिश्चितार्थम् । तेन निश्चितार्थेनैकार्थं नीयेत, एव सति 'अशुद्धमिति चेन्न शब्दात्' (ब्र० ३ १ २५) इति न्यायस्याप्युपपत्ते. । तदा नतरामेव स तत्र दृष्टान्तः । प्रवृत्यैव परिच्छिन्नविषयत्वेनानुत्सृष्टतया निषेधस्य विध्यपवादविषयत्वाभावात् । परमते च वैधसंज्ञपनस्याहिंसात्वोपग-मादेव हिंसानिषेधासंस्पर्शादिति । एव विषयभेदेन गुणविधिनिषेधयोरविरो-धाद् *विरोधनयविषयत्वं तान्त्रिकोक्तमपास्तम् । अपिच सत्यपि विरोधेऽप-च्छेदन्यायेन गुणविधि तन्निषेधो बाधेत, परत्वात् । विरोधे सति परबलीयस्त्व-स्येद रजत नेद रजतमित्यादौ दर्शनाच्च ॥

---

## परोक्तापच्छेदन्यायाप्रवृत्तिनिरासः ।

यत्तु — अनियतविरोधपौर्वापर्यविषयोऽपच्छेदन्यायो न नियतविरोध-पौर्वापर्यगुणविधिनिषेधविषयो युक्त इति । तदयुक्तम् । एव हि तान्त्रिकमतेन विरोधनयोऽपि तद्विषयो न स्यात्, सापेक्षनिरपेक्षप्रमाणविषयो हि स' । गुण-

---

‡ 'सर्वभूतानी'ति मुद्रितच्छान्दोग्यपाठ * 'विरोधे त्वनपेक्ष स्यादसति ह्यनुमानम्' (जै० १. ३. ३)

दिविःनिषेधौ च स्वविषये निरपेक्षावेवेति वैषम्यस्यात्रापि सुवचत्वात्। ननु च नियतविरोधपौर्वापर्ये सत्येवैकतरविषयापहारपर्यवसायी बाध्यबाधकभावो भवति। यथेदं रजत नेद रजतमिति। नैवमुद्गातृप्रतिहर्त्रपच्छेदशास्त्रयोः। अन्य-(त ?तर)शास्त्राप्रामाण्यप्रसङ्गात्। एव च यथा प्रकृत एव ज्योतिष्टोमे 'यद्युद्गातापच्छिन्द्यादि'त्यादिनैमित्तिकविकारविधिरेव, न बाधः। अन्यथाभावनिमित्तासन्निपात एव कर्तव्यमित्येव तद्विधिप्रवृत्तिकल्पनात्। तथा पूर्वनिमित्तविकृत एव परनिमित्तायत्तविकारान्तरविधिरेव स्यात्। न परेण पूर्वबाध·। तत्र पूर्वकर्तव्यनैव किं न स्यादित्यपेक्षायामुत्तरप्राबल्यमपच्छेदन्यायेनोपपाद्यते 'पौर्वापर्ये पूर्वदौर्बल्य प्रकृतिवत्' (जै० ६ ५ ९, ४) इति। बाध्यताहेतुस्तु नियतविरोधे सत्यर्थविप्रकर्ष. सर्ववेष्टनस्मृत्या तुल्यो गुणनिषेधस्य। इयांस्तु विशेषः, यदेकत्र स्वार्थप्रमाया मूलप्रमाणापेक्षया विलम्बः। अन्यत्र गुणविधिसमर्पणीयप्रतियोगिज्ञानापेक्षयेति। अतो विरोधनयविषय एवायं नापच्छेदनयविषय इति चेत्। नैवम्। पौर्वापर्ये हि दौर्बल्योपपादन पूर्वस्य बाध्यत्वाय। अन्यथा अबाधितपूर्वकर्तव्यताबुद्धावनुवर्तमानायामुत्तरकर्तव्यताबुद्ध्यनुदयप्रसङ्गात्। यथाहु —

"पूर्वं परमजातत्वादबाधित्वैव जायते।
परस्यानन्यथोत्पादान्न त्वबाधेन सम्भव· ॥"

इति। न चैवं प्राकृतकर्तव्यताबुद्धिरपि बाध्येत, नैमित्तिककर्तव्यताबुद्धेः परत्वादिति वाच्यम्। इष्टत्वात्। उक्तं ह्यपच्छेदाधिकरणे—'यथा नित्यं द्वादशशतं पाश्चात्येन नैमित्तिकेन सर्ववेदसादिना बाध्यते, तथा नैमित्तिकमपि पूर्वमुत्तरेणे'ति। अथवा बदरश्यामरक्तप्रत्ययन्यायेन एवमिद कर्तव्य, निमित्ते तु सत्येवमिति प्रवृत्त्यैव भिन्नविषयत्वेनाविरोधात्। न च नैमित्तिककर्तव्यताबुद्ध्योरेषा गतिः सम्भवति। न खलु निमित्तविकृते प्रयोगे निमित्तान्तरविकारो विधीयते, येन तत्रापि निमित्ते सत्येव कर्तव्यमिति भिन्नविषयतया बाध्यबाधकता न स्यात्। किन्तु यथा प्रकृत एव प्राप्तनिमित्तोपजीविनैमित्तिकद्वयसमावेश.। यदि हि निमित्तविकृते नैमित्तिकान्तरसमावेश·, 'यदि प्रतिहर्तापच्छिन्द्यात् सर्ववेदसं दद्यादि'त्यतो द्वादशशतस्येव 'यद्युद्गाता अदक्षिण त यज्ञमिष्ट्वे'त्यतः सर्ववेदसस्यापि निवृत्तत्वेन 'तेन पुनर्यजेत तत्र

तद् दद्याद् यत् पूर्वस्मिन् दास्यन् स्यादि’ति विरुध्येत । न किञ्चित् पूर्वस्मिन् दास्यन्नासीदिति । ततश्च ‘यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञेन सर्ववेदस दद्याद् यथेतरस्मिन्’ (जै० ६. ५ ५५) इत्यधिकरणविरोध.। तत्र निमित्तशास्त्रयोरेकविषयत्वेन परस्परस्य विरोधे सति निरपेक्षतया परबलीयस्त्वेन पूर्वबाध एवापच्छेदन्यायेन विषयोऽभ्युपेय. । एवमेकविषये गुणविधिनिषेधसमावेशे परबलीयस्त्वेन पूर्वबाधो युक्त· ।

यत्तु विरोधनियमः पौर्वापर्यनियमो वा नापच्छेदयोरित्युक्तम् । किं तव तेन स्यात् । उभयत्र न्यायविषयतौल्ये विषयस्वभाववैलक्षण्यस्याकिञ्चित्करत्वात्, तत्प्रयोगावच्छेदेन विरोधनियमाच्च । अन्यथा तत्र विकल्पो बाध्यबाधकता वा न स्याद्, विषयभेदेन च बाध्यमनियतमेव शुक्तिरजतयोरिव रजतशुक्तित्वे । नन्वेवमपि गुणनिषेधस्य गुणविधिसापेक्षतया विरोधे सत्यर्थविप्रकर्षाद् विरोधनयविषयतैव किं न स्यादिति चेत् । न । स्वविषये निरपेक्षत्वात् तुल्य हि तयोर्बोधकत्व मानान्तराविसवादः सवादकानपेक्षेति त्रिरूपमपि प्रामाण्यम् । तुल्यबलविरोधे च षोडशिग्रहणविधिनिषेधवद् विकल्पो वा स्यात् । न स वस्तुनि सम्भवति । आहवनीयपदहोमविधिवदुत्सर्गोपवादो वा स्यात् । सोऽपि न सम्भवति । ‘अस्थूलमनणु’, ‘अशब्दमस्पर्श’, ‘स एष नेति नेत्यात्मे’त्येवमादिनिषेधस्यापि विशेषविषयत्वात् । अत एव न सामान्यविशेषन्यायोऽपि । तस्मात् परेण गुणनिषेधेन पूर्व गुणविधानं बाध्यत इत्येव युक्तम् । औदुम्बरीसर्ववेष्टनस्मृत्या तु परयापि न तत्स्पर्शविधाय्याम्नायो बाध्यते । तस्याः पौरुषेय्याः स्वविषये सवादापेक्षया प्रामाण्यस्यैवापर्यवसानात् । ततः प्राथमिकागमिकस्पर्शनविज्ञानेनावसितप्रामाण्येन स्मार्त सर्ववेष्टनविज्ञानमेव व्युत्पत्तिबलप्रसूतमपि बाध्यते । तदिदमुक्तं—‘विरोधे त्वनपेक्ष स्याद्—’ (जै० १. ३. ३) इति । अन्यथा षोडशिग्रहणविधिसापेक्षस्य तन्निषेधस्यापि विरोधनयाम्रातत्वे (विशिष्टत्वात्[१] ‘शिष्टा) तु प्रतिषेधः स्यात्’ (जै० १०. ८. ६) इति न्यायविरोधः । अपिच नेदं रजतमित्यादावपि पूर्वबाधो न स्यात् ।

यत्तु—अज्ञातकरणजन्ये शुक्तित्वज्ञानेऽपेक्षणीयाभावात् परत्वाच्च रजतज्ञानाद् बलीयस्त्वेऽपि शाब्दगुणनिषेधज्ञा(ने) योग्यतादिज्ञानापेक्षा निषेध्यप्राप्त्यपेक्षा च विद्यत इति न बलीयस्त्वमित्यादि । तन्न । तव मते शुक्ति-

त्वस्यैव रजननिषेधनया तत्प्रत्यक्षस्य प्रतियोगिज्ञानाद्यनपेक्षत्वेऽपि शाब्दनिषेधज्ञानस्य तदपेक्षानियमाद् नेदं रजतमिति शाब्दबोधो न स्यात् । सर्वत्रैव वा शाब्दनिषेधप्रत्ययो न स्याद्, अपेक्षितप्राथमिकनिषेध्यप्राप्तिनिरोधनीयत्वात् । न च शुक्तित्वज्ञानादेव तत्रापि निरपेक्षात् पूर्वबाध इति वाच्यम् । नेदं रजतमित्येव तद्बाधानुभवविरोधात् । नायमाशीविषो मा भै(क्षी? षी)रित्येव सर्पबुद्धिबाधेन भयकम्पादिनिवृत्तौ पश्चात्तनी धर्मिस्वरूपजिज्ञासा निरसितुं परं रज्जुरेषेत्युपसंह्रियते । तस्मात् सर्वत्रैव विधितो निषेधबलीय(स्त्व? स्त्वं) निषेध्यप्राप्त्यपेक्षमेव दृष्टमिति गुणनिषेधबलीयस्त्वेन गुणविधिबाधमपच्छेदन्याय उपोद्बलयति ॥

---

परबलीयस्त्वे विषयविवेचनम् ।

ननु च

"पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम् ।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥"

इति निरपेक्षस्यैव परस्य बलीयस्त्वं ब्रुवतः सापेक्षस्य दौर्बल्यमावेदितमिति चेत् । सत्यमावेदितम् । निषेधादन्यस्य स्वप्रामाण्यांशे सापेक्षस्यापेक्षितप्रामाण्यजातीयात् परस्य दौर्बल्यं, यथा सर्ववेष्टनस्मृतिनरास्थिशुद्ध्यनुमानादेः । न च निषेधः स्वप्रामाण्ये विधिप्रामाण्यमपेक्षते, प्राप्तिमात्रापेक्षत्वात् ।

अथवा यत्र विधिप्रापितस्वरूपमुपजीव्यैव तद्रूपविरोधेन परस्यावतारः, यथा चरुविध्युपजीविनः पेषणादिचोदकस्य, यथा वाग्रयणे 'प्रथमजो वत्सो दक्षिणे'त्यन्वाहार्यस्थानीयं वत्समपेक्ष्यावतरतः परस्य पाकचोदकस्य, यथा वेश्वरप्राप्तिसापेक्षस्य स न सर्वज्ञ इत्यादेरुपजीव्यविरोधेन दौर्बल्यम् । विरुद्धश्रुतिलिङ्गादौ तु प्रा(थि? थमि)कश्रुतिविनियोगनिरपेक्षत्वेऽपि परस्य न बलीयस्त्वम्, अध्ययनविधिपरिग्रहादर्थवत्त्वाय मन्त्रस्य विनियोगापेक्षायां प्रथमतः श्रुत्यैव शान्ताया तद्विरोधिविनियोगबोधिश्रुतिकल्पनापर्यन्तात्मलाभस्यैवान्तारितत्वात् । यथाहुः—

"यावदज्ञातसम्बन्धं ज्ञेयं तावत् प्रमित्सति ।
प्रमिते तु प्रमातॄणां प्रमौत्सुक्यं विहन्यते ॥"

इति । न तु विरोधे सापेक्षत्वमेव सर्वत्र बाध्यताहेतुः । अन्यथा विरोधनयादेव तत्सिद्धौ 'पारदौर्बल्यमर्थविप्रकर्षात्' (जै० ३ ३. १४) इत्यादि न सूत्र्येत । निषेधस्तु प्राप्तबाधेन (प्र)वर्तत इति न तादृशोऽर्थविप्रकर्षः, यो (दौ)र्बल्यमावहेत् । यद्येवमग्निरनुष्ण· पदार्थत्वादित्यादि कथ न प्रत्यक्ष बाधेत । शृणु । उष्णत्वनिषेधापेक्षितनिषेध्यप्राप्तिर्यदि कथमप्यन्यथा नेतु शक्येत, तदा ज्वालाभेदप्रत्यक्षस्य तद्बेदानुमानेनेव परेणैव पूर्वबाध । यदि न, तदा पूर्वेणैव परबाध उपेयते । न चोष्णप्रत्य(यो) भ्रम इति नेतु शक्यम् । तेजसोऽन्यत्र तदनुपलम्भात्, तेन सह सत्तोपलम्भनियमे सति तेजसस्तत्स्वभावत्वोपपत्तेरभ्रान्तत्वसम्भावनाच्च । तत् पूर्वेणैव प्रत्यक्षेण परमप्यनुमान बाध्यते ॥

---

## सगुणनिर्गुणवचनाना ान्यथासिद्धितदभावौ ।

तदेव पौर्वापर्ये परोक्षापरोक्षभावे वा बाध्यबाध(का?क)भावाव्यवस्थितौ यदेव तुल्यविषयविरोधे सति सम्भावितान्यथासिद्धि तद् बाध्यम् । अतथाभूत तु बाधकमित्यनुगम्यते । अन्यथासिद्धिसम्भावनाहेतवस्तु तत्र तत्र व्युत्पाद्यन्ते 'विरोधे त्वनपेक्ष स्यादि'ति स्मृते सापेक्षत्व, 'पौर्वापर्ये पूर्वदौर्बल्यमि'त्यपच्छेदस्य पूर्वत्वमित्याद्याः । अत एव षोडशिग्रहणविधिनिषेधयोरबाध्यबाधकता, अन्यतरान्यथासिद्धिसम्भावनाहेत्वभावात् । न चात्र गुणनिषेधस्यान्यथासिद्धिसम्भावनाहेतुस्तादृश सापेक्षत्व पूर्वत्व वा । एतेनोपक्रमनयेन गुणनिषेधस्यान्यथासिद्धिसम्भावना निरस्ता । विधिविषयोपप्लवेनैव निषेधावतारात् । अथैवमपि गुणविधेर्विकल्पविषयतया तन्निषेधस्य हेयविषयतया वान्यथासिद्धिसम्भावनाविशेषे कि विनिगमक, येन विधिरेव निषेधानुरोधेन व्यवस्थाप्यते । उच्यते । कारणशरीरसन्निवेशा एव हि परमात्मनो गुणाः सर्वज्ञत्वादय· श्रूयन्ते 'य. सर्वज्ञ.' 'स ईक्षत' 'सोऽकामयते'त्यादिषु । तथाच तव सम्प्रतिपन्नम् । तच्च गुणसन्निवेशात्मक कारणत्वं 'यतो वा इमानि भूतानि जायन्ते' 'जन्माद्यस्य यतः' (ब्र० १ १. २) इति श्रुतिसूत्रैककण्ठ्यात् परमात्मोपलक्षणमित्यविप्रतिपन्नम् । न च लक्षणमेव लक्ष्यमपि, ज्ञातत्वाज्ञातत्वविरोधादित्युक्तम् । तथाच गुणविधेरन्यार्थ(विषय?)विषयत्वात्, तन्निषेधस्य च निर्विशेषात्मप्रतिपत्तिपरतयानन्यार्थत्वाद् 'अङ्गगुणविरोधे च तादर्थ्यात्' (जै० १२.

२. २५) इति न्यायेनान्यथासिद्धया सम्भावनीयो गुणविधिरेवापच्छेदनयात् तन्निषेधेन बाध्यते। एवमपि व्यवहारविषये वस्तुविषये च न विधिनिषेधयोर्यथोचित प्रामाण्य, स्वारस्याप्रहाणात्। यत् तु एव सति हिंसानिषेधेन परेण पश्वालम्भविधिविरोधादनुष्ठानबाध इति। तत् तान्त्रिकस्यानीतिवित्तामाधत्ते। विषयभेदेन हिंसाविधिनिषेधसमावेशाविरोधादित्युक्तम्॥

---

### सगुणवचनानामर्थकथनम्।

यदपि गुणबाधे सगुणज्ञानस्याविद्यामात्रतया मोक्षहेतुत्वानुपपत्तिरिति। तदपि न दूषणम्। निर्विशेषज्ञानस्यैव मोक्षहेतुत्वोपगमात्। 'आनन्द ब्रह्मणो विद्वानि'ति तावदगुणविषय व्याख्यातम्।

"वेदाहमेत पुरुष महान्तम् आदित्यवर्ण तमसः परस्तात्।"

'तमेव विद्वानमृत इह भवति', 'सर्वे निमेषा जज्ञिरे (वि?)विद्युत पुरुषादधि', 'न तस्येशे कश्चन' 'तस्य नाम महद् यश', 'य एन विदुरमृतास्ते भवन्ति',

"यदा पश्य. पश्यते रुक्मवर्ण कर्तारमीश पुरुष ब्रह्मयोनिम्।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परम साम्यमुपैति॥"

इत्यादि च न सगुणज्ञानस्य मोक्षहेतुत्वपर, येन 'यत्तदद्रेश्यमग्राह्यम्', 'अशब्दमस्पर्शमरूपमि'त्यादिनिरङ्कुशनिषेधस्वारस्यमवभज्येत। न खल्वादित्यस्येव विद्युत इव रुक्मस्येव च वर्णोऽलिङ्गस्य ब्रह्मणः स्वाभाविको युक्तः। न च मायामयलिङ्गविशिष्टमिह विवक्षितं, 'तमसः परस्तादि'ति विशेषणात्।

"न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्"

इत्यादिनिषेधाच्च। रूपोपादान हि चाक्षुष दर्शनम्। न च सन्द्रष्टुं रूपमस्यास्तीति लोकप्रसि(द्धा? द्धि)मनूद्य निषिध्यते, न सन्दृश इति विशेषणादसन्दृश्यं रूपमस्तीत्यपि विधत्ते। शब्दवृत्तिगौरवात्। तस्मात् सुवर्णज्योतिरादित्यवर्णमित्यादिना तमो संस्पृष्ट स्वयंज्योतिःस्वरूपमेव लक्ष्यते। 'वेदाहमेतं पुरुषम्' एवमहमिव त विद्वानमृतो भवतीति सम्बन्धोपपत्तेः, एवपदस्य च वेदनीयप्रकारपरत्वाभावात्। एवं सति गुणसामान्यनिषेधस्वारस्याहानात्।

अत एव 'य एन विदुरि'ति न यशस्वि(त्या ? त्वा)दिविशिष्टान्वादेशः, दर्श-नीयोऽयमेन पश्येदित्यादाविव विधेयामृतत्वहेतुवेदनसिद्धावुपयोगानवक्लृप्ते-र्विशेष्यस्वरूपमात्रविषयत्वोपपत्तेः । 'यदा पश्य' इत्यादौ च न वेदितुरत्य-न्तान्यः सगुणो वेदनीय उपदिश्यते, पुरुषशब्दसमभिव्याहारात् । पुरुषशब्दो हि जीवं (प्रतिपादयति ।) 'स वा एष पुरुषोऽन्नरसमयः', 'स वा अयं पुरुषो जायमानः', 'समाने वृक्षे पुरुषो निमग्नः' इत्यादिबहुप्रयोगात् । असाधारण्येन च व्यपदेशः । जीवो हि पुर्येव शेते । न परमात्मा, सर्वगतत्वात् । क्वचित् तत्र पुरुषशब्दप्रयोगश्च पूर्वमेव सत्त्वात्,

"पूर्वमेवाहमिहासमिति, तत् पुरुषस्य पुरुषत्वम्"

इत्यादिश्रवणात् । तस्यैव जीवरूपावस्थानाद्वा, 'अनेन जीवेनात्मने'त्यादि-श्रुतेः । 'अवस्थितेरिति काशकृत्स्नः' (ब्र० १ ४. २२) इति न्या-याच्च । न चात्मात्मतयावस्थानादिति तदर्थः, पतिजायादिशेषिजीववृत्तेरात्म-शब्दस्य 'आत्मा वा अरे द्रष्टव्यः' इति द्रष्टव्यब्रह्मोपस्थापकत्वानुपपत्तेः । न च 'आत्मनस्तु कामाये'त्यादौ जीव आत्मा, अन्यत्र तु ब्रह्मेति युक्तम् । द्रष्ट-व्यादन्यस्य 'तदेतत् प्रेय पुत्रादि'त्याद्यैकार्थ्येनात्मनोऽनन्यशेषप्रियत्वोपपादन-वैयर्थ्यात् । न चोभयत्राप्यात्मशब्दः परमात्मपरः । पत्यादिशेषित्वानुपपत्तेः । ननु नात्र पत्यादिशेषित्वमात्मन उच्यते 'न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवती'ति । किन्तु परमात्मनो जीवं प्रति पत्यादिप्रियत्वप्रयोजकत्वम् । न वा अरे पत्युः कामायाहमस्य प्रियः स्यामितीष्टनिर्वृत्तये भोक्तुः पतिः प्रियो भवति । परमात्मनस्तु कामाय प्रियो-ऽयमस्त्विति स्वाराधकस्य प्रियप्रतिलम्भनरूपेष्टनिर्वृत्तये पतिः प्रियो भवतीति । परमात्मा हि कर्मभिराराधितस्तत्त(त्कामा ? त्कर्मा)नुगुणमाराधकानां तत्तद्वस्तुगतं प्रियत्वमापादयति । न तु वस्तु स्वतः प्रियमप्रियं वा, व्यभिचारात् ।

"तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ।
तस्माद् दुःखात्मकं नास्ति न च किञ्चित् सुखात्मकम् ॥"

इति स्मरणादिति चेत् । न । कामप्रियसम्बन्धवैयधिकरण्यकल्पनागौरवात् । परमात्मनः कामाय पत्यादि सर्वं तदाराधकस्य प्रिय भवतीत्यध्याहारगौरवाच्च । न च *वाक्यान्वयन्यायादेवात्मनस्तु कामायेति परमात्मविषयमङ्गसितम् । अन्यथोपक्रमान्वयासिद्धेरिति वाच्यम् । 'प्रतिज्ञासिद्धेर्लिङ्गम्—' (ब्र० १. ४. २०) इत्यादित्रिसूत्रीवैयर्थ्यप्रसङ्गात् । तस्मादमृतत्वसाधनोपक्रमोपसंहारादिलिङ्गेनानपेक्ष्यैव पदवृत्तिविषयाध्यवसाय वाक्य(स्ये?स्यै)व तात्पर्येणान्वयाद् ब्रह्मविषयत्वे सिद्धे सत्यात्मनस्तु कामायेत्यात्मशब्दस्यापरित्यज्यैव जीववृत्तिं ब्रह्मपरत्वमुपपाद्यते अवस्थितेरिति । तत्राक्षिप्तप्रतिज्ञाविपरिणामेन ब्रह्मण इति कर्तृलाभे तस्य 'स भगवः कस्मिन् प्रतिष्ठित इति स्वे †महिम्नीत्यथवा न महिम्नी'त्यादिनिराधारत्वश्रुते सर्वात्मनः स्थित्यधिकरणाकाङ्क्षानुपपत्तेः कथमित्याकाङ्क्षायां जीवभा(वे)नेति पूर्यते । अतो जीवभूते परमात्मनि युक्तः पुरुषशब्द ।

एवं चेशं ब्रह्मयोनि कर्तार पुरुषं यदा पश्यतीति विरोधिविशेषानपेक्षयैव स्वरूपाभेदो विवक्षितो मुक्त्युपायज्ञानविषयो न विशेषः । न चात्र पुरुषाभेदेन सविशेषब्रह्मोपासन विधित्सित, पश्यतीति दृशिकर्मण साक्षात्कारस्य फलत्वेनाविधेयत्वात्, यदा तदेत्युपबन्धाद् दृशितुल्यकालफलाभिधानात् । पराभिम(ता? त)मानसवृत्तिसाक्षात्कारस्य कर्माविद्यावरणविलयानन्तरभावित्वेन यदा पश्यति तदा विद्वान् पुण्यपापे विधूयेत्यसम्बन्धाच्च । तस्माद् विषयोपदेशलभ्यनिर्विशेषाभेदविज्ञानानुवादेन तत्समकालफलार्थवाद एवायमिति ।

यत् तु 'सत्यकाम सत्यसङ्कल्प', 'स्वाभाविकी ज्ञानबलक्रिया चे'त्यादिसत्यत्वाद्याम्नानाद् गुणानामप्रतिषेध इति । तन्न । न हि कामादेः स्वरूपतो विषयतो वा तव क्वचिदसत्यतापि, येन विशेष्येत सत्यकाम इति । अथ नाबाध्यत्वं सत्यत्वमिह कामादे , अनन्तराव्यभिचरितफलत्व (त्वि?तदि)ति चेत् । इद तु युक्तम् । सत्यकाम इति प्रक्रमावगतसत्यत्वस्य 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती'त्यादिना 'य काम कामयते त तमाप्नोती'त्यन्तेन समभिव्याहाराद्व्यभिचरितानन्तरितफलत्वपर-

---

* 'वाक्यान्वयात्' (ब्र० १ ४ १९) । † 'महिम्नि यदि वा' इति मुद्रितच्छान्दोग्यपाठः ।

त्वावगमात् । किन्तु न तावता यावत्कारणरूपानुगतस्य तस्य तदुपलक्ष्यस्वरूपे निषेधो विरुध्यते । प्रजापतिविद्यायामपि न विधूताविद्यामलभाविकस्वरूपप्रतिष्ठस्य जीवस्य सत्यकामत्वादि शक्यमवगन्तु, कामादीनां मनोधर्मत्वात् । 'कामः सङ्कल्प इत्याद्येतत् सर्वं मन एव', 'कामा येऽस्य हृदि श्रिताः' इत्याद्यविशेषश्रवणात् । हृदि श्रिता इति विशेषणादात्मधर्मा अपि कामा विज्ञायन्त इति चेत् । न । यथासिद्धानुवादमात्रत्वेन विवक्षान्तराभावात् । कामसामान्यस्य मनस्त्वाम्नायविरोधाच्च । दहरमुपासीनस्य तु पितृलोकादिकामाः सत्या इति सलिङ्ग एव सत्यकाम उच्यते । अथवा न जीवविषयं 'य आत्मापहतपाप्मा सत्यकाम' इत्यादि । प्रागनवगतस्य य आत्मेत्याद्यनुवादकोटिनिवेशायोगात् । किन्त्वेष आत्मापहतपाप्मेत्याद्यवगतदहरब्रह्मानुवादः तदुपलक्षितस्वरूप जीवस्यात्मेति विवक्षयेति ।

'स्वाभाविकी ज्ञानबलक्रिया चे'ति च जगत्कर्तुरीशस्य सतो न जीवस्येव साधनान्तरायत्त ज्ञानादिकमित्येवम्परम् । अपिच 'परास्य शक्तिर्विविधैव श्रूयते' इति या गुणमयी माया देवात्मशक्तिराम्नाता, सोच्यते । न त्वग्नेरिव दाहादिशक्तिरीशस्य स्वभावान्तर्गता यावदात्मसत्त्वमनपायिनी कार्यसामर्थ्यरूपा शक्तिः । शक्यवैजात्यानन्त्येन तन्निरूपितशक्त्यानन्त्यावश्यम्भावे शक्तिरित्येकवचनास्वारस्यात् । न खल्वग्नेर्दाहे च प्रकाशे च शक्तिर्न भिद्यते । सा च शक्तिरेकैव सती विविधा, विविधजगद्भासनामयत्वात् । सत्त्वादिगुणमयत्वाद्वा, 'स्वगुणैर्निरूढामि'ति विशेषणात् । सैव च स्वाभाविकी, स्वात्मसत्त्वानुबन्धित्वात् । अनेन स्वातन्त्र्यनिरासेन शक्तित्वमुपष्टब्धम् । ज्ञानबलक्रिया च, सा हीश्वरस्य ज्ञान सर्वविषयं बल सर्वधारणशक्तिं क्रिया जगद्रचनात्मिकां च निर्वहतीत्यभेदोपचारात् । अपरे तु ज्ञानबलेनेश्वरेक्षणावष्टम्भेन जगत्क्रिया यस्या इति व्याचक्षते, न त्वीशस्यैवेद विशेषण, शक्तिश्च ज्ञानबलक्रिया चास्य स्वाभाविकीति, असामर्थ्यात् । न तावत् समानाधिकरणसमास , ज्ञानादेः स्वातन्त्र्यात् । द्वन्द्वे च वचनविरोधो लिङ्गविरोधो वा । ज्ञानबलयुक्ता च सा क्रिया चेति मध्यमपदलोपकल्पना च निर्बीजेति । एतेन 'नान्यो हेतुर्विद्यते ईशनाये'ति व्याख्यातम् । मायासङ्घटितावस्थस्येश्वरस्य सतः स्वाभाविकेशनोपगमात् । 'न तस्येशे कश्चन', 'पति विश्व-

स्यात्मेश्वरमि'त्यादिश्रुतेरमात्यादेरिवेशनमीशस्य नान्योपाश्रयनिमित्तमित्युपगमाच्च। तस्मादशेषनिषेधोपपत्तेरविशेषस्वभावं ब्रह्म शास्त्रतात्पर्यविषय इति कारणत्वादि सर्वमेव कल्पनामात्रमिति ॥

---

## सर्वज्ञत्वकारणत्वादीनां कल्पितत्वसमर्थनम्।

यत्तु सर्वज्ञस्य वा निर्विशेषचिदात्मनो वा कल्पनानुपपत्तिरिति, तत् तथैव। अन्यथा तयोः स्वभावविरोधात्। किन्तु कल्पनयैव मायाविद्योपाधिसम्बन्धकारणत्वादिविशेषाः सम्पद्यन्ते। नन्वेवमपि कस्यैषा कल्पना, कारणत्वादिकं वा कस्य। नहि कारणत्वादिविशेषहीनस्य तत् सम्भवति, विरोधात्। नापि तद्वत एव, द्विस्तत्प्रसङ्गात्। यस्य प्रत्याख्यते तस्येति तुल्यम्। कारणत्वादिमत एव हि तत् प्रत्याख्यते। एवं कल्पनावत एव सा प्रत्याख्यते इत्यादौ कल्पनाविधुरस्याग्रे कथं तद्योग इति चेद्, आदौ कारणत्वादिविधुरस्य वाग्रे कथं तद्योगः। कारणत्वादियोगोऽनादिरिति चेत्, कल्पनायोगोऽपि तथैवेति सन्तुष्यत्वायुष्मान्। कल्पनामात्रत्वाच्च मायोपाधिसम्बन्धादेरनादित्वेऽपि निर्विशेषतत्त्वावबोधबाध्यतोपपन्ना। यत्तु — एवमीश्वरस्य तन्मायिकत्वादिज्ञाने कारणत्वसर्वज्ञत्वाद्यसम्भवः, तत्त्वज्ञानस्य मायाविरोधित्वात्। तदज्ञाने च सर्वज्ञतैव न स्यादिति। तन्न। सर्वकल्पनाधिष्ठानात्मस्वरूपावरणानादिसिद्धाविद्यानिबन्धनभेदस्य जडजीवविविक्तरूपस्यैव सतः सर्वज्ञत्वाद्युपगमात्। तत्रैवं सति मायाविद्योपाधौ जडजीवविभागं सर्वज्ञत्वादिकं चात्मनो मायिकं जानतोऽपि न तन्निवर्तते, सति दर्पणाद्युपाधौ तत्त्वज्ञानेऽपि बिम्बत्ववक्रिमाद्यनुवृत्तेः। ननु ईश्वरस्य सर्वज्ञतयैव स्वरूपतत्त्वज्ञाने सति मायोपाधिरेव बाध्येत। तस्यापि तत्र कल्पितत्वोपगमात्। दर्पणाद्युपाधिस्तु मुखतत्त्वज्ञानेऽपि न निवर्तेत, तत्राकल्पितत्वादिति चेत्। न। अनाद्यनिर्वचनीयाविद्या ह्यात्मस्वरूपमावृत्य जीवेश्वरविभागमादधाना जीवविभागपक्षमनुपतति, उपाधेः प्रतिविम्बपक्षपातिस्वभावत्वाद् अहमज्ञ इति प्रतीतेश्चेश्वरस्य सर्वज्ञत्वश्रवणेनाज्ञानानुपपत्तेश्च। सैव चाविद्यादेरान्त्यात् कार्यात् तत्तन्नामरूपतादात्म्याभिनिविष्टजीवरूपादर्थान्तरभूतानुगतरूपेण सर्वज्ञत्वादिहेतुतया मायेत्युच्यत इत्यभ्यधाम। एष एव तु विभागः प्राचीनैरावरणशक्त्या तमःप्रधानाविद्येत्यु-

च्यते, विक्षेपशक्त्या सत्त्वप्रधाना मायेति गीयते । तत्र व्यधिकरणेन सर्वज्ञतत्त्वज्ञानेन नाविद्या निवर्तते, किन्तु समानाधिकरणेनेति जीवस्यात्मतत्त्वज्ञान यावन्मायाविद्योपाध्यनुवृत्तेः कल्पितमपि कारणत्वसर्वज्ञत्वादिकमीश्वरस्याविरुद्धम् । एतेन सर्वज्ञो निरसनीयत्वेनात्मनि हेयसम्बन्ध जानन् किमिति सङ्कल्पयेत्, सर्वशक्तिर्वा तदैव किमिति न निरस्येदिति निरस्तम् । कारणत्वप्रमुखस्य सर्वस्यैव मायिकत्वोपगमात् सर्वज्ञस्य सतस्तद्भावविरोधिहेयसम्बन्धसङ्कल्पानुपगमात् । 'तदैक्षत बहु स्यामि'त्यादेश्च गतिरुक्ता । मायाविद्यायाश्च कल्पनाहेतोः सम्यग्ज्ञाननिवर्तनीयत्वात्, सर्वशक्तेरपि वस्तुस्वभावानतिलङ्घित्वाच्चेति ॥

---

## भेदतन्निषेधवचनगतिः ।

एतेन भेदनिषेधेनाभेदपरं शास्त्र व्याख्यातम् । यद्यपि विशिष्टविषयो भेदो न स्वरूपाभेदबोधविरोधी, भिन्नविषयत्वात् । तथापि भेदोपादानं तत्त्वमसीत्याद्यभेदबोधनमिति विरोधः सम्भाव्यते । न च भेदाभेदशास्त्रयोः सत्प्रतिशब्दता । पूर्वस्य सम्भावितान्यथासिद्धितयापच्छेदन्यायादेव परेण बाधोपपत्तेः । यत् तु स्वरूपमभेद प्रतीत्य भेदबुद्धिश्चरमेति विपरीतोऽपच्छेदन्यायो भेदाभेदयोरिति । तत् तुच्छ, परमते सस्थानरूपभेदोपस्थितेः संस्थानिस्वरूपबुद्ध्यव्यतिरेकात् । अस्मन्मते चाशेषविशेषकलुषातीतसत्तामात्रप्रत्यगात्मस्वरूपाभेदबोधानन्तरस्य भेदमानस्यैवाभावाद्, 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदि'त्यादिश्रुतेः । न च विशिष्टजीवेश्वरादिभेदेऽपि तात्पर्यमागमस्य । मानान्तरसिद्धेः । यत्तु प्रख्यातादपरस्तु शास्त्रविषयो नियाम्यनियामकादिभेद स्वदद्वैतवदिति । तन्न । तत्रापि सनियन्तृक सोपादान च भावकार्यम् । स चैक उपपत्तिलाघवात् । सातिशयं च ज्ञानक्रियाशक्त्यादि क्वचिन्निरतिशयम् । जीवश्च परचेतनाधीनक्रियाफल, अस्वतन्त्रकर्तृकत्वाद्, दासवदित्यादिलौकिकनिदर्शनमूलन्यायोपपत्तेः । न्यायमात्र न व्यवतिष्ठत इति चेत् । कथं तर्हि वेदार्थोऽपि न्यायतः प्रतिपत्तव्यो लौकिको वा शतशो विपरीतन्यायसम्भवात् । कथञ्चित् तत्र बलाबलविज्ञान च प्रकृतेऽपि शक्यमाश्रयितुमिति । यत्तु नागमोऽनुवादो भेदस्य, मानान्तरासिद्धिमपेक्ष्य तदप्रवृत्तेरि-

त्यादि । तन्न । अभेदतात्पर्ये सति निषेध्यभेदानुवादित्वावश्यम्भावाद्, भेदतात्पर्यलिङ्गाभावाच्च ॥

---

अन्तर्यामिब्राह्मणस्य भेदतात्पर्यकत्वाभावः ।

न चान्तर्यामिणा जीवान्यरूपेण 'यः पृथिव्यां तिष्ठन्नि'त्युपक्रम्य 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे'ति जीवान्यरूपेणैवोपसंहाराद्, 'एष त आत्मान्तर्याम्यमृतः' इत्यभ्यासाद्, व्याप्त्या जीवादिनियन्तृभावस्यानन्यवेद्यत्वाद्, 'य एतदक्षरं गार्गि! विदित्वास्माल्लोकात् प्रैति स ब्राह्मण' इति फलाभिधानाद् 'यो वैतत् काप्य! सूत्रं विद्यात् तं चान्तर्यामि*ण स ब्रह्मवित् स लोकवित् स वेदविदि'त्यादिप्रशंसनाद्, 'अतोऽन्यदार्तमि'त्यन्यस्य नियमनशक्त्यभाववचनेनातथाभूतं ब्रह्म नियन्त्रित्युपपादनाच्च जीवभेदे तात्पर्यमिति वाच्यम् । न खल्वन्तर्बहिर्भावशून्यादन्यः सन् स्वयमप्यनन्तराबाह्यस्तदन्तरात्मा भवति । नहि निरवयवयोरन्तरं बहिर्वा सम्भवति । अभेदे तु जीवस्य सन् घटादेरिव मृद्घटाकाशस्येव वाकाशमात्मेति युक्तम् । 'नान्योऽतोऽस्ति द्रष्टे'ति तत्रैव भेदनिषेधविरोधाच्च ।

यत्तु नात्र जीवस्यान्तर्यामिभेदो निषिध्यते, किन्तु 'अदृष्टो द्रष्टाश्रुतः श्रोते'त्यादिश्रुतजीवादृष्टादिरूपान्तर्यामीव नान्योऽतोऽन्तर्याम्यदृष्टादिरूपो द्रष्ट्रादिरित्युच्यत इति । नैतत् सारम् । अदृष्ट इत्यादेरध्याहारानुषङ्गान्यतरापत्तिगौरवात् । अपिच जीवे द्रष्ट्रन्तरेऽन्तर्याम्यद्रष्टृत्वं न निषेद्धव्यम् । 'अदृष्टो द्रष्टे'ति द्रष्टृत्वाभिधाने द्रष्टव्यापेक्षाया स्वाद्रष्टृतया सन्निहिते जीवे तद्द्रष्टृत्वनिषेधस्यार्थसिद्धत्वात् । न चान्तर्यामिणा किञ्चिददृष्टमस्ति, येन तस्यान्यस्य द्रष्टृत्वमेव निषिध्येत । सर्वज्ञो हि सः । न चाप्रसिद्धे किञ्चिन्निषेद्धुं शक्यम् । अत एव तददृष्टत्वविशिष्टो द्रष्टान्यो निषिध्यत इति निरस्तं, विशिष्टाप्रसिद्धेरेव । न च स एव तददृष्टो द्रष्टेति तत्रैव तदन्यत्वनिषेध इति शङ्क्यम् । आत्मा(न)मप्यपश्यतस्तान्त्रिकान्तर्यामिणो मूढत्वप्रसङ्गात् । तत्रैवतद्भेदनिषेधानर्थक्याच्च । अपिचैव 'नान्योऽतोऽस्ति द्रष्टे'त्यादि नोच्येत । 'नान्योऽतोऽस्ती'त्येव, अतःशब्दा-

---

* 'णमिति स' इति मुद्रितबृहदारण्यकपाठः ।

वमृष्टाद्दृष्टत्वविशिष्टद्रष्ट्रन्तरनिषेधसिद्धेः । उच्यते च । तेन ज्ञायते द्रष्टृरूपावमृष्टादन्यो द्रष्टा नास्तीति द्रष्ट्रन्तरमात्रनिषेध इति । एतेन सत्स्वेवान्येषु विद्वत्सु नात्र यज्ञदत्तादन्यो विद्वानिति तमतिशयानोऽन्यो निषिध्यते । एव 'नान्योऽतोऽस्ति द्रष्टे'त्यादीति निरस्तम् । लौकिकव्यवहारस्य पुमभिप्रायानुपातित्वाद्, यथा गच्छ त्वं यदि गन्तव्यमिति, मा गम इति गम्यते । वैदिके चापूर्वार्थे शब्दगतेरनुसरणीयत्वात् । न चेह जीवान्तर्याम्यभेदविषयमतिहाय द्रष्ट्रन्तरातिशयादिनिषेधविषया शब्दगतिरुपपद्यते । तस्माद् 'एष त आत्मान्तर्याम्यमृतः' इत्युदिते प्रसक्तभेदभ्रमनिरासाय 'नान्योऽतोऽस्ति द्रष्टे'त्यादि वर्तते । यद्यप्यस्तिभवत्योरैकार्थ्येऽपि भेदनिषेधे भवति. प्रयोक्तव्यो लौकिकव्यवहारानुरोधात्, तथापि विशिष्टनिषेधादस्तिः प्रयुज्यते द्रष्टरि मानसिद्धे भेदनिषेधः पर्यवसास्यतीति । एव सति तद्वेदने 'स वेदविदि'त्यादि सर्ववेदनवचनमुपपन्नम् । तेन तेशब्दपरामृष्टस्याविद्यादिदेहान्ततादात्म्यविवृत्तस्य स्वात्मतत्त्वमन्तर्याम्येव । न कर्तृत्वभोक्तृत्वादिसंसारमयमित्यावेदितं भवति । न चान्तर्यामित्वमेवात्मनो विधित्सितं, नियाम्योपाधिकस्य तस्यास्वभावत्वात् । न च पर्यायवृत्तस्थूलसूक्ष्मावस्थेन नित्यानुयायिना नियाम्येन नित्यसम्बन्धान्नियन्तृत्व ब्रह्मणः स्वभाव इति वाच्यम् । 'अतोऽन्यदार्तमि'त्यन्यस्य बाध्यत्वाभिधानात् । न च नियमनाशक्तिरेवार्तिरिति वाच्यम् । 'एष त आत्मा सर्वान्तरोऽतोऽन्यदार्तमि'त्यन्यत्रात्मस्वरूपमात्रप्रतियोगितयार्तत्वाभिधानात् । आत्मस्वरूप च सर्वमित्यार्तत्व बाध्यत्वमेव युक्तम् । 'यत्र हि द्वैतमिव भवती'तीवकारेण द्वैतमृषात्वावगमाच्च । न चार्थवत्त्वे सम्भवति कथमिवेत्यादिवदिवकारो वाक्यभङ्गिरेवेति युक्तम् । अग्रे च भेदमिथ्यात्व समर्थयिष्यते । तस्माद् मृषानियाम्यापेक्षनियन्तृत्वास्वाभाव्येन शास्त्रस्य तादर्थ्यानुपपत्तेर्भेदनिषेधेन जीवस्य तत्स्वरूपाभेदपरं 'नान्योऽतोऽस्ति द्रष्टे'त्यादीति युक्तम् ।

अपिचोषस्तप्रश्ने 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः' इति प्राणनादिव्यापारोपलक्षितः सर्वान्तर आ(त्म ? त्मा) दर्शितः । इह चान्तर्यामी सर्वान्तर आत्मा निर्दिश्यते पृथिव्या अन्तरोऽब्भ्योऽन्तर इति । न च द्वौ सर्वान्तरौ शक्यौ प्रतिपादयितुम् । न च प्राणितापानिता वा परमेश्वरः, अप्राणो हि सः । तथा स एव 'न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया' इत्यदृ-

ष्टाश्रुतादिरूप उक्त इह प्रत्यभिज्ञायते 'अदृष्टो द्रष्टाश्रुतः श्रोते'ति । यत्तु 'य प्राणेन प्राणिती'त्यादिव्यपदेशमात्रप्रसक्तस्य जीवस्य विज्ञानं प्रतिषिध्य 'न दृष्टेर्द्रष्टार पश्येरि'ति सर्वान्तरः परमात्मा द्रष्टव्यो विधित्सित इति । तन्न । तद्विधानाश्रुतेरध्याहारगौरवात् । 'न विज्ञातेर्विज्ञातार विजानीया., एष त आत्मा सर्वान्तर' इत्यविज्ञेयतयोक्तस्यैव सर्वान्तरात्मत्वावमर्शात् । प्रक्रमे च यः प्राणिति योऽपानितीति प्राणनादिहेतुकर्ता परमात्मैव सर्वान्तर आत्मोपदिश्यत इत्यौत्प्रेक्षिकसमयाचाराजीवस्यैव सुवचं, न प्रमाणवृत्तानुसारिणामिति । तस्माच्चक्षुरादिजन्यदृष्ट्यादिसाक्षितया द्रष्ट्रादिरूपम् अत एव च दृष्ट्याद्यविषयमदृष्टादिरूपं सर्वान्तर प्रत्यगात्मानमन्तर्याम्यभिन्नमदृष्टो द्रष्टाश्रुतः श्रोतेत्यभिप्रेत्य भेद प्रतिषेधति, 'नान्योऽतोऽस्ति द्रष्टे'त्यादीत्यनन्यथासिद्धानेकविरोधाद् । उपक्रमादिदर्शनमाभास ।

यत्तु 'य आत्मनि तिष्ठन् य आत्मानमन्तरो यमयती'ति मुक्तात्मनोऽपि विविक्तोऽन्तर्यामी निर्दिश्यते, यः पृथिव्यां तिष्ठन्नित्यादिना बद्धात्मविवेकस्य पृथगभिधानात्, पृथिव्यादिशब्दाना तत्तदभिमानिजीवपर्यन्तत्वात् । यं पृथिवी न वेदेत्यादिलिङ्गात् । अतो विशुद्धादपि प्रत्यगात्मनोऽन्तर्यामी भिन्न एवेति । तन्न । श्रुत्यन्तर आत्मपर्याये 'यो विज्ञाने तिष्ठन्नि'ति निर्देशाद्, बुद्ध्युपाधेरेवात्मनो विवक्षितत्वात्, 'प्राणन्नेव प्राणो नाम भवति वदन्वागि'त्यादौ तत्तदुपाधिके तत्तत्प्रयोगदर्शनाद्, न विज्ञानपर्याय एव 'य आत्मनि तिष्ठन्नि'ति निर्देशात् तान्त्रिकमत्या विशुद्धात्मैव विज्ञानमिति युक्तम् । 'विज्ञानं यज्ञं तनुत' इति कर्त्रुपाधौ कोशे प्रयोगेण विज्ञानपदस्य विशुद्धात्मवृत्त्यसम्भवात् । 'यः प्राणे तिष्ठन्' 'यो वाचि तिष्ठन्नि'त्यादिके 'यो रेतसि तिष्ठन्नि'त्यन्ते करणात्मप्रवाहपाठे सत्यकस्मादन्तराले विशुद्धात्मपरिग्रहायोगाद्, 'य आत्मनि तिष्ठन्नि'त्यपि विज्ञानोपाधिक एव निर्दिश्यते । विज्ञानं हि बुद्धिमनश्शब्दितमात्मनः परम उपाधि. । तस्य 'मनसा ह्येष पश्यति मनसा शृणोति तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति येन वा पश्यती'त्यादिश्रुत्या

"इन्द्रियाण्यपि सर्वाणि स्वान्तस्यैव तु वृत्तयः ।
यतः स्वकार्यनिर्देशः स्वान्तस्य स्पर्शनेन्द्रिये ॥

जिघ्रन्ती भवति घ्राणं पश्यन्ती चक्षुरुच्यते ।
शृण्वती भवति श्रोत्रमिति व्यासोऽप्यभाषत ॥"

इति वार्त्तिकेन च सर्वकरणसम्पिण्डरूपतया तत्तत्करणतादात्म्याभिमानस्य बुद्धिरश्म्यधीनतया च 'प्रज्ञया वाच समारुह्य सर्वाणि नामान्याप्नोती'त्यादिश्रुतेरात्मनस्तद्गुणसारत्वात्। तमेव चेममात्मनोऽहम्प्रत्ययकारितयाहङ्कारमाचक्षते। अत एवात्मनो विज्ञानोपाधिसारत्वाद् 'योऽयं विज्ञानमयः' इत्यादिव्यपदेशः। अन्यथा विशुद्धात्मन एव विज्ञानशब्दत्वे मयट्प्रयोगायोगात् ॥

---

## आनन्दमयस्य जीवत्वप्रतिज्ञा।

हन्तै(व ? वं) विज्ञानमयादन्योऽन्तर आत्मानन्दमयः परमात्मैव स्यादिति सिद्धान्तविरोधः। नन्वन्नरसमयः प्राणमयो मनोमयश्च जीव एवोक्त इति ततस्ततोऽन्योऽन्तर आत्मा परमात्मान्यश्चेत्यतिरेकोऽपि चोदनीयः। न चान्नरसमयादिषु जीवो न विवक्ष्यते, प्रत्यगात्मव्युत्पन्नपुरुषात्मशब्दसामानाधिकरण्यात्। गुहानिहितात्मवेदनार्थाय बोध्यबुद्ध्यनुरोधेन तत्तदुपाध्यविविक्तवृत्तितया तत्तन्मयस्यापि तस्यैवात्मनोऽपरित्यागेनोपदेश्यत्वौचित्याच्च, प्रजापतिविद्यायाम् 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामी'तिवत्। एव च 'स वा एष पुरुषः' इति प्रक्रान्तपरामर्शी तच्छब्दः 'अन्योऽन्तर आत्मे'त्यात्मशब्दश्च समञ्जसौ स्याताम्। पूर्वपूर्वापेक्षया चोत्तरोत्तरमन्यत्वव्यपदेशः, विविक्तस्य विशिष्टादन्यत्वात्। एवमन्नरसमयादारभ्य प्रत्यगात्मविषयत्वेऽपि न प्राणमयादिः परमात्मा। 'ब्रह्मविदाप्नोति परमि'ति प्रक्रान्तवेदनीयब्रह्मोपदेशस्यानन्दमये पर्यवसानात्। स एव तु परमात्मेति यद्युच्येत, हन्त तर्हि सर्वाधिष्ठानतया सर्वात्मन्यनन्तराबाह्येऽन्योऽन्तर आत्मेत्युपदेशानर्हे सर्वावस्थजीवोत्तीर्णस्वरूपे 'ब्रह्म पुच्छं प्रतिष्ठे'त्युपदेशपर्यवसानात् प्रक्रान्तब्रह्मणः स्वशब्दोपादानाद् 'असन्नेव स भवति, असद् ब्रह्मेति वेद चेदि'त्यादितदभ्यासाच्च नानन्दमयोऽपि परमात्मेति भविष्यति। किन्तु स मोक्षवस्थो वा, 'सुषुप्तस्थान एकीभूत प्रज्ञानघन एवानन्दमयो ह्यानन्दभुगि'ति श्रुतिसमधिगतविचित्रविषयवृत्तिसंस्काराञ्जनबुद्धिवासनावासितकारणात्मावस्थो वा जीव एवेत्यानन्दमयाधिकरणे वक्ष्यामः। तस्माद् विज्ञानोपाधिकादेवात्मनो विवेकेनान्तर्यामी निर्दिश्यते। न विशुद्धादिति। तदेवं

तात्पर्यलिङ्गाभावादन्यथासिद्धो जीवेश्वरभेदः। क्वचिदुपासनाविधिशेषतया क्वचिदभेदविधिशेषतया चानूद्यत इति साम्प्रतम् ॥

---

## पृथगात्मानमितिश्रुत्यर्थः ।

यत्तु 'पृथगात्मानमि'त्यादिमोक्षहेतुज्ञानविषयत्वाम्नानाद् भेदतात्त्विकतेति। तन्न। न ह्यत्र प्रेरितुरीश्वरस्यात्मनश्च पृथग्भावो मन्तव्यत्वेन चोद्यते, ईश्वरस्य ज्ञाने पृथगेव विज्ञानाद्, अज्ञाने च तज्ज्ञानस्यैव विधेयत्वापत्तेः। पृथक्त्वस्याधिकत्वात्। तदयमर्थः—

"सर्वाजीवे सर्वसस्थे बृहन्ते तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे"

इति 'देवात्मशक्ति', 'पञ्च पर्वामधीमः' इति प्रकृतमायाविद्यानिबन्धनदेहोपादानपरित्यागात्मकसंसारभ्रमणस्य प्रकृतत्वात्, तदविवेकादभेदविभ्रमगृहीतमात्मान प्रकृत्यादिभ्य· पृथग् गृहीत्वा तं चान्तर्यामिणम् 'एष त आत्मान्तर्याम्यमृत.', 'नान्योऽतोऽस्ति द्रष्टे'त्यादिश्रुत्यवष्टम्भेन मत्वा, जुष्टः। 'आशंसायां भूतवच्च' (३. ३. १३२) इति कर्तरि क्तः। सेवामाशसमानः तात्पर्येण ध्यायन्नित्यर्थ.। ततः तेनेत्यम्भूतलक्षणे तृतीया। साक्षात्कृतब्रह्मात्मना विस्तृत.। यदि व्यवहितान्वय· सह्येत, पृथगित्यपेक्षितप्रतियोगिसमर्पक तत इति स्यात्। न चात्मान प्रेरितार च पृथगिति सम्बध्यते, 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' (२ ३. ३२) इति हि पाणिनिः। अन्योन्यस्मादिति चाध्याहारो दोष.। 'पृथग्विनानानाभिर्योगविभागो द्वितीयार्थ.' इति वृत्तौ च हरदत्तमिश्रैः 'असत्यपि मुनित्रयवचने प्रयोगबाहुल्यादित्थ व्याख्यातमि'त्यप्रामाण्यसूचनाद्, उभयोपादानवैयर्थ्यादनुपपत्तेश्च। अमृतत्वमेति, सह भेदविभ्रमविलासेनाविद्याया मृत्योर्विद्यया निबर्हणादिति। अथवा ससरन्नेव 'पृथगात्मान प्रेरितार च मत्वे'ति सिद्धार्थानुवादः। जुष्ट·, तमेव प्रेरितारमीश्वर सेवमान उपासीन.। तत·, उपासनापरिपाकाद्धेतोः। तेनेश्वरेण हेतुनामृतत्वमेति। परमेश्वरप्रसादायत्तो हि मोक्ष·। 'यमेवैष वृणुते तेन लभ्य.' इत्यादिश्रुतेः। अनन्तर च मोक्षहेतुज्ञानविषय सर्वान्तरमात्मतत्त्वं दर्शयति —

"उद्गीतमेतत् परमं तु ब्रह्म तस्मिस्त्रय सुप्रतिष्ठाक्षरं च ।
अत्रान्तर वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः ॥ "

इति या 'पञ्चपर्वाभिधीम.' इत्यविद्योक्ता । यच्च 'सर्वा जीवे' इति कारणरूप, यश्च 'हंसो भ्राम्यते' इति जीव., तदेतत् त्रयं तस्मिन् ब्रह्मणीति । तत्त्रयस्य सुप्रतिष्ठा अधिष्ठानं च तदक्षर च तदत्र त्रयमान्तरमात्मभूत विदित्वा । तत्परा लीना ब्रह्मणि तद्भूता योनिमुक्ता भवन्तीत्यर्थ. । यद्वा सुप्रतिष्ठाक्षरमस्येति त्रयस्यैव विशेषणम् ॥

---

## जुष्ट यदा पश्यत्यन्यमीशमितिश्रुत्यर्थ ।

'जुष्ट यदापश्यत्यन्यमीशमि'ति न तावदीश पश्यति त चान्यमिति विवक्ष्येत, वाक्यभेदप्रसङ्गात् । नापीश सन्तमन्य पश्यतीति । ईश्वरस्य ज्ञानेऽन्यत्वेनैव ज्ञानादविधेयत्वाद्, अज्ञाने च तदनुवादेनान्यत्वज्ञानविधानायोगात् । नाप्यन्य सन्तमीश पश्यतीति । एव हि प्रसिद्धभेदे भूतभौतिकादावीश्वरदर्शनं प्रतीकालम्बनमुपासनं विहितं स्याद्, 'मनो ब्रह्मेत्युपासीते'त्यादिवत् । ततश्च,

'अस्य महिमानमिति वीतशोक.',
'निरञ्जन. परम साम्यमुपैति'

इत्यादिफलवचनविरोध' । नाप्यन्यमीशं पश्यतीति साक्षात्कारविधिरेवायमिति शङ्क्यम् । अन्यस्यान्यात्मसाक्षात्कारायोगेनाशक्यविधानापत्ते. । अन्यत्वस्य दर्शनस्याविधेयत्वे, मोक्षोपायज्ञानविषयत्वासिद्ध्या भेदतात्त्विकत्वकल्पनानुपपत्तेश्च । तस्य विधेयत्वे च 'तत्त्वमसि' 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (ब्र० ४ १. ३) इति श्रुतिन्यायविरोध. । 'आत्मेत्येव तु गृह्णीयादि'ति त्वदभियुक्तवा(क्या ? क्य)कारवचनविरोधश्च । तदयमर्थ — जुष्ट, 'समाने वृक्षे पुरुषो निमग्नः' इति प्रकृतवृक्षशब्दितकार्यकरणसङ्घातेन तादात्म्यगृहीतम् । अथवा 'सेवित योगमार्गैः' अन्य तत एव सङ्घातविविक्तमात्मानमीशं पश्यति । अहं ब्रह्मास्मीति साक्षात्करोति यदा, तदास्यैवात्मनो महिमानमश-

---

* ब्रह्मविदो विदित्वा इति श्वेताश्वतरपाठ

नायाद्यतीतनिरतिशयानन्दसत्ताप्रकाशैकरस्यलक्षण स्वभावम् । 'एष नित्यो महिमा ब्राह्मणस्ये'ति श्रुत्यन्तरात् । ब्रह्मात्मसाक्षात्कारनिह्नुताविद्यापरिच्छेद । इति एति । मज्ञापूर्वकविधेरनित्यत्वाद् गुणाभा(वतच्छा ? व., छा)न्दसो वा । अथवा जगदवमर्शी इतिशब्द । जगच्चास्य महिमान विभूतिं पश्यति । 'एतावानस्य महिमे'ति श्रुत्यन्तरात् । तदा वीतशोको भवतीति । अथवा

"तमक्रतु. पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः"

इति श्रुत्यन्तरादस्यात्मनो महिमानमीश पश्यति यदा, इति अथ तदैव वीतशोको भवतीति । 'अस्तिर्भवन्तीपर. प्रथमपुरुषोऽप्रयुज्यमानोऽपी'ति हि शाब्दा । न हि शोकमोहादिरात्मन. स्वभावः ।

"समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः"

इति कार्यकरणसङ्घातनिमग्नस्य तादात्म्यापन्नस्यैव शोकाद्यभिधानात् । अन्यथा स्वभावहानानुपपत्ते. ॥

---

## द्वासुपर्णेतिश्रुत्यर्थ ।

अत एव 'द्वा सुपर्णा सयुजे'ति मन्त्रे सत्त्वादितादात्म्याभिनिवेशिनोऽन्यस्य कर्मफलात्तृत्व, विविक्तस्य चान्यस्य परमात्मनः सत औदासीन्येनावस्थान दर्शयति

"तयोरन्य. पिप्पल स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति "

इत्याविद्यकोपाधिसम्बन्धपरिच्छेदेन परमात्मैक एव द्वैधमिवापद्यते घटाद्युपाधिपरिच्छेदादिव नभ, जलादर्शाद्युपाधिपरिच्छेदादिव वा प्रकाशः, इत्यतो यौगपद्येन द्वौ सुपर्णौ समान वृक्ष परिषस्वजाते इत्युच्यते । न पुनः स्वाभाविकभेदौ पृथक्सन्तौ द्वौ परिषस्वजाते, जीवस्येव परस्य तादात्म्याभिमानलक्षणसङ्घातपरिष्वङ्गासङ्गते । तत्परिष्वङ्गेन तु द्वौ संपद्यते । अत एव पैङ्गिरहस्ये भोक्तृत्वापत्तिनिमित्तसत्त्वादिविवेकेन तमेवात्मानमश्नन्त ·दर्शयति 'तयोरन्यः पिप्पल स्वाद्वत्ती'ति सत्त्वम् अनश्नन्नन्यो अभिचाकशीतीत्यनश्नन्नन्योऽभिपश्यति ज्ञः, तावेतौ सत्त्वक्षेत्रज्ञौ । तदेतत् सत्त्वं येन स्वप्न पश्यत्यथ योऽय शारीर उपद्रष्टा स क्षेत्रज्ञ ' इति । नात्र सत्त्वशब्दितान्तःकरणस्यात्तृत्व विवक्ष्यते, अचेतनस्य तदयोगात् । आत्मन एव ह्यविकल्पस्याप्यविद्यासत्त्वाद्युपाधिनिबन्ध-

नमत्तृत्वमन्यद् वा । न च सत्त्वात्मविवेके नैकस्याप्यत्तृत्वमिति कथमौपाधिकमपि तदात्मनः स्यादिति शङ्क्यम् । आगमिकस्यासङ्गाविकल्पस्यैवात्मनोऽत्तृत्वादिदर्शनादविद्यायाश्चौचित्यानपेक्षत्वात्, हारिद्रपङ्के चूर्णोपाधिनिबन्धनरक्तिमवदुपपत्तेश्च । एवं चोदासीनस्यैव यथा कामनिमित्त कर्तृत्वमिति कामे तन्निवेश्यते 'का(मा?)मः करोती'ति । यथावा मदनिबन्धन उल्लापयति स मदे निवेश्यते मद उल्लपतीति । एवमसङ्गाविकल्पात्मस्वरूपविवेकविवक्षाया दृश्यमानमत्तृत्वादि(क) मुपाधौ निवेश्यते केवल सत्त्वमत्तीति । स्वरूपविवेके च सति परमात्मैव भूतगत्या क्षेत्रज्ञ उच्यते, मन्त्रेऽनश्नन्नन्यः क्षेत्रज्ञादत्यन्ताभिन्नः परमात्मेति मा भूद् विभ्रम इति। एव सति 'शोचति मुह्यमान' इति सत्त्वमिति व्याख्यात भवतीति॥

---

## परमते पैङ्गिरहस्यार्थः ।

यत्त्वत्र कश्चिदाह—पैङ्गिरहस्येऽपि न सत्त्वक्षेत्रज्ञशब्दाभ्यां बुद्धिसत्त्व जीवभावोत्तीर्ण' प्रत्यगात्मा च विवक्ष्यते, कि तु जीवपरावेव । 'गुहाचरन्नामे'त्युपास्यस्य गुहाचरत्वोक्तिप्राप्तजीवत्वशङ्कापरिहाराय मन्त्रे जीवपरभेदस्य विवक्षितत्वात् । 'समान वृक्ष परिषस्वजाते', 'समाने वृक्षे पुरुषो निमग्न'' इत्युभयत्र प्रवृत्तिसाम्येन तौ द्वौ सुपर्णावीशपुरुषाविति विशेषविज्ञा(न? नात् । ) पुरुषशब्दो हि न बुद्धिवाची, न हि बुद्धौ 'पिप्पल स्वाद्वत्ती'ति च 'शोचति मुह्यमान ' इति 'वीतशोक' इति च समञ्जस, सर्वस्यैवात्तृत्वादेश्चेतनधर्मत्वात् । अन्तःकरणस्य करणत्वादेवात्तृत्वाद्यनुपपत्तेश्च । न च जीवस्य देहपरिष्वङ्गदशायामेवाभोक्तृत्वं, 'आत्मेन्द्रियमनोयुक्त भोक्तेत्याहुरि'ति श्रवणात् । ब्रवीति च 'समानं वृक्ष परिषस्वजाते' । 'अनश्नन्नन्यो अभिचाकशीति' इति । न च सत्त्वक्षेत्रज्ञशब्दौ जीवपरविषयावप्रसिद्धौ । सत्त्वशब्दस्य तावत्

'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' ।

इति नामानुशिष्टौ चेतनजन्तुपर्यायत्वावगमाद्, 'वन्यान् विनेष्यन्निव दुष्टसत्त्वान्' (रघु० २. ८) इति महाकविप्रयोगात् । शब्दाधिकरणे प्राण्यन्तरपरत्वेन 'सत्त्वान्तरे च यौगपद्यात्' (जै० १ १ ८) इति जैमिनिदर्शनात्,

"सत्त्व प्रकृतिजैर्मुक्त यदेभिः स्यात् त्रिभिर्गुणैः"

इति भगवद्दर्शनाच्च जीवे प्रसिद्धेः। क्षेत्रज्ञशब्दो यद्यपि जीवे निरूढ, तथाप्याकाशप्राणादिशब्दवदर्थानुपपत्त्या परमात्मपर इहाश्रीयते, क्षेत्र जा(ना)तीति परमात्मन्यवयवार्थपौष्कल्योपपत्तेश्च, तत्र प्रयोगबाहुल्याच्च। विष्णुनामसहस्रे 'क्षेत्रज्ञोऽक्षर एव चे'ति, मोक्षधर्मे

"ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा।
प्रविशन्ति द्विजश्रेष्ठाः क्षेत्रज्ञ निर्गुणात्मकम्॥
सर्वावासं वासुदेवं क्षेत्रज्ञ विद्धि तत्त्वत।
विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिक॰॥
एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम्।
क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे॥
तानि वेत्ति स धर्मात्मा तत॰ क्षेत्रज्ञ उच्यते।"

इति, तत्रैव कपिलासुरिसवादे 'ज्ञातानामासुरे क्षेत्रज्ञो द्रष्टा शुचिरुपेक्षक॰ ज्ञातृको बुध्यमानाप्रतिबुद्धयो॰ परममृत विदित्वा निरवयवमनामय तस्माद् दु॰खाद् विमुच्यते' इति प्रतिबुध्यमानाप्रतिबुद्धशब्दितचिदचित्परस्य क्षेत्रज्ञशब्दो दृश्यते। तथा 'एतस्माद् वर्गादपवृत्तोऽपवर्गः क्षेत्रज्ञ॰ शुचिरुपेक्षको बुध्यमानाप्रतिबुद्धयोः परस्तादिति। तथा 'अन्यदुदकमन्यत् पुष्करपर्ण तथान्य(त्) क्षेत्रमन्यः पुरुषः पञ्चविंशक अन्यश्चास्मात् क्षेत्रज्ञ इति', तथा 'अन्यद् द्रव्यमन्यः पुरुषः पञ्चविंश तत्त्वमन्योऽस्मात् क्षेत्रज्ञ इति। सनत्कुमारसवादे च

"पश्य॰ पश्यति पश्यन्तमपश्यन्त च पश्यति।
पश्यन्त पश्य पश्यत्त्वात् पश्या पश्येन पश्यतः॥"

प्रकृतिं क्षेत्रज्ञ च परः क्षेत्रज्ञः षड्विंशकोऽनुपश्यति। न तु पञ्चविंशकः क्षेत्रज्ञ॰। प्रकृतिर्वा पर क्षेत्रज्ञमिति सर्वत्रैव जीवजडातिरिक्ते परमात्मनि क्षेत्रज्ञशब्द॰ प्रयुज्यते। मानवेऽपि

"योऽस्यात्मन॰ कारयिता त क्षेत्रज्ञ प्रचक्षते।
य॰ करोति तु कर्माणि स भूतात्मेति चोच्यते॥"

इति। तदेव सति 'येन स्वप्न पश्यति तत् सत्त्वमि'ति जीवद्वारकमात्मन॰ स्वप्नद्रष्टृत्वमुच्यते। काठिन्यवान् यो बिभर्तीत्यादिवत्। शारीरशब्दश्च जग-

च्छरीरे परमात्मन्युपपद्यते । 'तस्यैष एव शारीर आत्मे'त्यानन्दमये दर्शनात् । तस्माज् जीवपरावेव सत्त्वक्षेत्रज्ञौ द्वासुपर्णामन्त्रार्थ इति ॥

---

## श्रुतीनां जीवपरभेदाविवक्षा ।

तदिदमनालम्बनमम्बरमधिरुरुक्षोरस्पर्शसहलूतातन्तुनिश्रेणीपर्वपदन्यास-साहसिक्यमविस्रम्भणीयम् । यत् तावदुपास्यस्य गु(ह ? हाच)रत्वोक्त्या जीवत्व मा शङ्कीति जीवपरभेदविवक्षा मन्त्र इति । तदसारम् 'गुहाचरन्नाम महत् पदमत्रैतत् समर्पितम्', *'तस्मिल्लोका निहिता लोकिनश्चे'त्यादिविशेषणात् । न ह्यणोरनुपादानस्य जीवस्य स्वरसतो महत्त्वसर्वाधारत्वादिसम्भवः । अपि च कथमिह जीवपरभेदाभिधानमात्रेण जीवत्व न शङ्क्येत । इहाप्युभयोर्गुहाहितत्वाभिधानात् 'समान वृक्ष परिषस्वजाते' इति । न च न जीव एव गुहाचरः, किं तु परमात्मापीति जीवत्वैकाशङ्कामुच्चाल्य, गुहाचर महत् पद जीवः परमात्मा वोपास्य इति विशये 'जुष्ट यदा पश्यत्यन्यमीशमि'ति परमात्मैवेति निर्धार्यत इति वाच्यम् । इयतैव तन्निर्धारणोपपत्तावुक्तपद(क ? )क्रमवैयर्थ्यात् । न च गुहाचरस्योक्तस्य प्रत्यभिज्ञान प्रयोजन, प्रकरणैकवाक्यतयैव तदन्यथासिद्धेः ।

तस्मात् 'कस्मिन् नु भगवो विज्ञाते सर्वमिद विज्ञात भवतीति' निर्भेदमद्वितीय ब्रह्मतत्त्व प्रक्रम्य तदुपपादनाय जगदधिष्ठानतया 'ब्रह्मैवेद विश्वमि'त्युपसहृते जीवस्य भोक्तृत्वेनातिरेकादैकात्म्यासम्भवमन्यथा 'ब्रह्मणोऽपि सम्भोगप्राप्तिं वाशङ्क्यौपाधिकतया भोगस्यावास्तवत्वप्रदर्शनार्थोऽयं मन्त्र इति युक्तम् । एव चास्य मन्त्रस्य पैङ्गिश्रुत्याविद्यकसत्त्वादितादात्म्यतद्विवेकाभ्यामात्मन एव भोक्तृत्वमौदासीन्य चेत्येवम्परतया व्याख्यातत्वात्, 'स्थित्यदनाभ्या च (ब्र० १. ३. ७) इति द्युभ्वाद्यायतन ब्रह्म प्राणभृद्व्यावृत्त विशेष्यत इत्युपपन्नम् । यत् पुनर्द्वा सुपर्णेति सत्त्वपरमात्मविवक्षायामुत्तरमन्त्रे पुरुषेशशब्दाद्यनुपपत्तिरिति तन्न । न ह्यनाविष्टचेतन केवल स(त्त्व)मत्ति(चो ? शो)चति मुह्यति च, अन्यश्चात्मोदासीनोऽभिचाकशीतीति मन्त्रार्थः पैङ्गिश्रुत्या विवक्ष्यते । किं तु यदात्मनोऽत्तृत्वादि तत् सत्त्वाद्युपाधिकम्, औदासीन्यं तु स्वभाव

---

* 'यस्मिल्लोका' इति मुद्रितमुण्डकश्रुतिपाठ. ।

इत्येव । एव हि मन्त्रे 'अनश्नन्नन्यो अभिचाकशीती'ति स्यादर्थवत् । अन्यथा 'तयोरन्यः पिप्पलं स्वाद्वत्ती'ति निर्धारणादेवान्यस्यानश्नत्त्वसिद्धेरानर्थक्यात् । समभिव्याहृतविधिप्रतिषेधयोरेकविषयस्वरसतया निषेध्यभेदोपहरणेन तदर्थवत्त्वकल्पनायोगाच्च । न चेह परिष्वङ्गदशायामेवानश्नत्त्वमुच्यते, 'परिषस्वजाते', 'परिष्वजमान एवानश्नन्नि'ति देहादितादात्म्याभिमानस्य भोक्तृत्ववदभोक्तृत्वेऽनपेक्ष्यत्वात् । आकाङ्क्षा चान्वये हेतुः । न च परमात्मनो भोक्तुरङ्गपरिष्वङ्ग. सङ्गत. । असङ्गत्वहानप्रसङ्गात् । नन्वेक परिष्वजते अन्य. परिष्वञ्जयतीति चेद् । न । परिषस्वजाते इति गौणमुख्यवृत्तिद्वययौगपद्यप्रसङ्गात् । न च स्वतन्त्र. प्रयोजकहेतुश्च कर्तेत्येव लार्थ· । गच्छतीत्यादौ सर्वदैव गमयित्रादेरप्रत्ययेन व्युत्पत्तिविरोधाद् । 'ऋत पिबन्तौ सुकृतस्य लोक' इति च । अत एव(सू ? य)ष्टीरुपदधातीत्यादिवदजहल्लक्षणया पिबदपिबन्तौ जीवपरौ गृह्येते । न चेहागतिका तथा लक्षणा युक्ता । तस्मादाविद्यकतादात्म्यापत्त्या सङ्घातपरिष्वङ्गेनैकस्यैवोपाधिकभेदात् द्वौ परिषस्वजाते इत्युच्यते, द्वे शकले सम्पद्येते इति वत् । तत्र तयोरन्यो विशिष्टात्मा कर्मफल भुङ्क्ते अविद्ययैव सत्त्वादितादात्म्येन कर्तृत्वादिकमात्मनि मन्यमानः । अन्यः पुनरविशिष्टः सत्तामात्रात्मा (स)त्त्वादितादात्म्याभिमानशून्यः केवलोऽभिचाकशीतीतीममर्थमुपदर्श्य मन्त्रव्यपदेशापातदर्शनप्रसञ्जितजीवपरस्वभावभेदभ्रम निरस्यति पैङ्गिश्रुति· 'तयोरन्य· पिप्पल स्वाद्वत्ती'त्यादिका । अन्यथान्वेषणीयजीवपरवृत्तिकसत्त्वक्षेत्रज्ञशब्दाभ्यामनन्तरमन्त्रसमभिव्याहारावगमनीयस्वार्थकमन्त्र-व्याख्यानेन किमस्याः प्रयोजन स्यात् । अपिच सत्त्वपदस्य जीवे परत्र प्रयोगेऽपि नात्र तज् जीवपर, 'तदेतत् सत्त्व येन स्वप्न पश्यती'ति जीवस्य स्वप्नदर्शनोपाधित्वाभिधानात् । न च सम्भवे प्रथमार्थे तृतीया, व्यत्ययबाहुल्यात् *'सुपा सुप' इतिच्छान्दसीति युक्तम् । न चेशस्येह जीवद्वारकस्वप्नदर्शनसम्बन्धविवक्षा शक्या कल्पयितु, हेत्वभावाद्, अभिचाकशीतीति च परस्याकर्मकप्रकाशमात्रत्वाभिधानात् । द्रष्टृत्वविवक्षायामपि साक्षादेव तद् वक्तुमुचित, सर्वज्ञत्वोपपत्तेः । दौवारिकत्वे च काठिन्यादेरिवास्वगतत्वेन स्वप्नदर्शनस्य

* 'सुपा सुपो भवन्तीति वक्तव्यम्' (७. १ ३९) इति वार्त्तिकात् प्रथमाया तृतीयैकवचनादेश इति परस्य तात्पर्यम् ।

तदनुपपादनात् । तदिह जीवस्य स्वप्नदर्शनसाधनमेव सत्त्व विवक्षित न जीव इति साम्प्रतम् । 'स समान सन्नुभौ लोकावनुसञ्चरति, 'ध्यायतीवे'त्यादिश्रुते । तद्गुणसारत्वेन जीवस्य बुद्धिसत्त्वाविभागवृत्तितया कर्मणि कालवृत्तदर्शादिवद् बुद्धिवृत्तसत्त्वपदप्रयोगोपपत्तौ तद्व्यवहारमात्रेण सत्त्वपदस्य बुद्धिविविक्तजीवविषयशक्त्यकल्पनाद्, अन्यायो ह्यनेकार्थत्वमिति ।

---

### क्षेत्रज्ञशब्दस्य जीवे रूढत्वम् ।

नापि क्षेत्रज्ञशब्दः परमात्मा, तत्पदस्य जीवे रूढत्वात् । क्षेत्रज्ञो भूत्वानुप्रविश्यान्नमत्ति । 'प्रधानक्षेत्रज्ञपतिर्गुणेश'

"भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञान विशोधनम् ।
क्षेत्रज्ञस्येश्वरज्ञानाद् विशुद्धि परमा मता ॥"
"परमात्मना क्षेत्रज्ञ संयोज्य ध्यायन्त्येव"
"क्षेत्रज्ञा समवर्तन्त गात्रेभ्यस्तस्य धीमतः"

'क्षेत्रज्ञ चापि मा विद्धि', क्षेत्रज्ञ करणी ज्ञानं करण तस्ये'त्यादिप्रचुरतरप्रयोगात् । यद्यपि च

"अव्यक्त क्षेत्रमुद्दिष्ट गुणाना प्रभवाप्ययम् ।
पुरुषस्तद्विजानीते तस्मात् क्षेत्रज्ञ उच्यते ॥"

इति जीवेऽप्यवयववृत्तिर्दर्शिता, तथापि न सा जीवप्रत्यायनोपायतया, रूढ्यैव तदुपपत्ते. । किन्तु सम्भवमात्रेण । अथापि योगेनैवोपपत्तौ रूढिर्न कल्प्येत, तथापि स प्रचुरतरप्रयोगानुगृहीतोऽसर्वज्ञे जीवे वर्तितुमर्हति, असाधारण्यात् । न सर्वज्ञे परमात्मनि, शारीरत्वविशेषणाच्च । न हि परमात्मा शारीर.,शरीर एव भावे हि शारीरो भवति । 'असाधारण्येन हि व्यपदेशा भवन्ती'ति न्यायात् । आनन्दमयश्च न परमात्मेति वक्ष्यते । जीवस्तु शारीर स्यात् । 'शारीर आत्मा', 'प्राज्ञेनात्मनान्वारूढ", 'अनुपपत्तेस्तु न शारीरः' (ब्र० १. २ ३), 'प्रतिषेधादिति चेन्न शारीरात्' (ब्र० ४. २ १२), 'शारीरश्चोभयेऽपि हि—' (ब्र० १. २. २०) इत्यादिश्रुतिसूत्रप्रयोगाच्च । यद्यपि चात्र विवेकविषये जीवोऽपि न शारीर., तथापि भूतगत्यापि तस्य तद्व्यपदेशो युज्यते । न परमात्मन., सर्वदैवाशरीरत्वात् । न च जगच्छरीरः परमात्मेत्यभिधाम । ननु 'उपोऽधिके च' (१. ४. ८७)

'यस्मादाधिकम्—' (२ ३ ९) तत्र कर्मप्रवचनीययुक्ते सप्तमीत्युप शारीरे द्रष्टा शारीरादधिकः परमात्मेति स्यात् । नैव स्यात्, प्रथमान्तप्रवाहसन्दष्टस्य शारीरशब्दस्याकस्मादेव सप्तम्यन्तत्वप्रत्यययायोगात् । उत्तरमन्त्रेऽपि जीवेशाभिधानस्य विशिष्टाविशिष्टात्मविषयत्वव्यवस्थापनात् । एव पैङ्गिव्याख्यानार्थवत्त्वोपपत्तेः, उपद्रष्टेति समस्तेन साक्षिप्रत्ययस्य स्वारसिकत्वाच्च । न च सत्त्वशब्दस्य बुद्धिपरत्वे स्थिते क्षेत्रज्ञ इति जीवपरामर्शानुपपत्तिः, येन परमात्मवृत्तिता बलादपि कल्प्येत ॥

---

## परमात्मनि क्षेत्रज्ञशब्दोपपत्तिः ।

यत् तु परमात्मनि तत्प्रयोगदर्शन, तत्र नामसहस्रे विश्वादिनामवत् तद्भावावस्थित्यपेक्षया क्षेत्रज्ञनामापि स्यात् । मोक्षधर्मे च जीवपराभेदविवक्षा भविष्यति, 'परमात्मान क्षेत्रज्ञमि'त्यर्थतः सामानाधिकरण्यात् । अत एव तदुपपत्तये निर्गुणात्मकमिति विशेष्यते । आम्नायनिरपेक्षसाख्यदर्शनेन हि पञ्चविंशादपि तत्त्वात् प्रत्यगात्मनो विविक्ते परमात्मनि क्षेत्रज्ञशब्दो दर्शितः । तत्र जीवे रूढिमनपबाध्य कथञ्चिदवयववृत्ति दर्शयति क्षेत्राणि च शरीराणीत्यादि । एवमन्याय्यानेकार्थता न कल्पिता भवति । इह पुनर्जीवविविक्ते परमात्मनि क्षेत्रज्ञशब्दाश्रवणाद्, रूढिमपरित्यज्य जीव एव सत्त्वादिविविक्तः परमात्मा क्षेत्रज्ञतोत्तीर्णोऽपि क्षेत्रज्ञ उच्यते भूतगत्यैव । अत एवान्यत्र 'आत्मान रथिन विद्धी'ति रथित्वरूपितस्य 'आत्मेन्द्रियमनोयुक्त भोक्तेत्याहुरि'ति कार्यकरणतादात्म्येन भोक्तेत्युक्तस्य यतो मनोबुद्धेरध्वपार विष्णोः परम पदमाप्यमभिधाय, कि तदित्यपेक्षिते रथित्वरूपितं तमेवात्मानम् 'इन्द्रियेभ्यः परा ह्यर्था.' इत्यादिना भोक्तृतोपाधिनिष्कृष्टस्वरूपेण परमात्मानमुपदिशति ।

"पुरुषान्न पर किञ्चित् सा काष्ठा सा परा गतिः"

इति । यदि चाप्तव्ये विष्णुपदसंज्ञिते परमात्मनि स्थित एवान्यस्मिन्नाप्तृपुरुषविवेचनमात्रमिदमित्युच्येत, 'सा काष्ठा सा परा गतिरि'ति निगदविरोध इति । तस्मादभेदतात्पर्यावगमान्न विशुद्धात्मपरभेदविज्ञान मोक्षोपाय इति शक्य कचिद् दर्शयितुम् । अन्यथाभेदप्रतिपादनविरोधाच्च । एकत्र भेदाभेदा-

योगात्। न च विशिष्टाभेदे सामानाधिकरण्यं, किन्तु बाधायां स्वरूपाभेदे वेत्युपपादितम्। अत एवापृथक्सिद्धया तदन्तर्गतत्वलक्षणाभेदविषयं सामानाधिकरण्यमिति निरस्तं, स्वरूपाभेदे तद्व्युत्पत्तिविरोधात्॥

---

## भेदनिषेधवाक्यानां विचार।

"मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति"

'ब्रह्म त परादाद् योऽन्यत्रात्मनो ब्रह्म वेदे'त्या(पि?दि)भेददर्शना(द?)पवादाच्च। न चात एवाभेददर्शनविधिशेषोऽयं, न तु भेदापह्नव इति वाच्यम्। 'नेह नाने'त्यादिस्वरूपनिषेधात्। नानेवेतीवकारेण भेदमिथ्यात्वेनाभेदतात्पर्योपदर्शनात्। अन्यथा वस्तुभेदे सत्यभेददर्शन(मिथ्या?मध्या)सादि स्यात्। न च तत्त्वदर्शनेन स द्रष्टु शक्येत, न च भेदविषय तत्त्वदर्शनमपोद्येत। यत् तु 'एकधैवानुद्रष्टव्यमि'त्यादिविशिष्टाभेदविधिशेषतया तद्विरोधिकुतर्कसिद्धकार्यकारणभेदः स्वतन्त्रभेदो वा प्रतिषिध्यते, न भेदमात्रमिति। तन्न, एकधेति हि न विधेयविशेषण, विधिगौरवात्। किन्तु वस्तुविशेषणम्। तच्चैकरस्यपर व्याख्यातामिति तच्छेषतया भेदमात्रं प्रतिषिध्यते 'नेह नाने'त्यादिनेति युक्तम्। न च

"अहमात्मा गुडाकेश! सर्वभूताशयस्थित."

इति प्रकृत्य

"न तदस्ति विना यत् स्यान्मया भूत चराचरम्"

इत्याहत्य स्वनिष्ठभेदनिषेध स्मर्यत इति वाच्यम्। अहमात्मेत्यादि परमात्मनो जीवादिरूपविवृत्त्या स्वरूपाभेदपर तत्सामानाधिकरण्य वस्तुभेदधिया मा विरोधीति 'न तदस्ती'त्यादेरतिरिक्तवस्त्वभावपरत्वोपपत्ते। एवमपि सर्वस्य सर्वात्मना तदात्मत्वलाभेन भगवद्विभूत्युपसहारात्यन्तानुगुण्याच्च। नन्वसहार्थे विनाशब्दे तन्निषेधात् सहभावः प्रतीयेत सर्वमेव मया सात्मकमिति। न त्वन्याभावः। न,

"यथा हि कदली नाना त्वक्पत्रान्नानुदृश्यते"

इत्यादौ त्वक्पत्रमात्र कदलीतिवदिहापि ब्रह्मैव सर्वं नान्यदिति पर्यवसानोपपत्तेः ।

"तमृते परमात्मान तात! कः केन शास्यते"

'तमृते का गतिर्मम'त्यादावपि स एव शासिता, स एव गतिरिति प्रतीतेः । अन्यथा 'आदित्यानामह विष्णुरि'त्यादिसामानाधिकरण्यानिर्वाहात् । अस्मन्मते च पदवृत्तिदशाया प्रवृत्तिनिमित्ताबाधेन सामानाधिकरण्याविरोधात् । यद्यपि चाचार्यैरुक्त *वाक्यान्वयाधिकरणे—

**"यो हि ब्रह्मक्षत्रादिकं जगदात्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भाव पश्यति, तं मिथ्यादर्शिनं तदेव मिथ्यादृष्टं† जगत् पराकरोतीति भेददर्शनमपोद्य"**

इत्यादि, तथापि न परमात्मशरीरतया परतन्त्रं पश्येदित्येवमर्थपर्यवसानाय तथा वचनम् । न हि स्वातन्त्र्येणेति दर्शनविशेषणम् । किन्तु स्वातन्त्र्येण लब्धसद्भावमिति विशिष्टमेवेद ब्रह्मेद क्षत्रमित्यादि 'इद सर्वं यदयमात्मे'त्यभेदेनैवोपसहारात् । अन्यथा सामानाधिकरण्यानिर्वाहात् । तदयमर्थः—ब्रह्मसत्तातो विविच्यमान हि जगदनुपाख्यम्, एवम्भूतमपि ब्रह्मसत्तामनपेक्ष्य स्वरूपमद् भूत ब्रह्मक्षत्रादि यः पश्यतीति । आनन्दगिरीये तु 'स्वातन्त्र्यपदं जगति प्रातीतिकमन्यत्वमनुज्ञातुमि'त्युक्तम् ।

'यत्र त्वस्य सर्वमात्मैवाभूदि'ति तत्त्वदर्शनविषये सर्वाभाववचनाच्च । न खलु तद्रूपेणैवानात्मात्मैव भवितुमर्हति, विरोधात् । तद्रूपबाधे तु सर्वमात्मैव रजतरूपबाधे रजतमिव शुक्तिकेति । न च स्वार्थवृत्तिसम्भवे 'आत्मैवाभूत्' परमात्मसामानाधिकरण्येन साक्षात्कृतमित्यधिकावापकल्पना घटते । तत् केन क. क पश्येदित्यादिसाधनादिस्वरूपाक्षेपविरोधाच्च । न च प्रमितनिषेधायोगाल्लौकिकप्रतीतिसिद्धसाधनादिस्वनिष्ठत्वमेव निषिध्यते केन स्वनिष्ठेन साधनेन क स्वनिष्ठः क स्वनिष्ठ पश्येज्ज्ञातृज्ञेयादिषु न किञ्चित् स्वनिष्ठ-

---

* ब्र० १ ४ १९ † 'मिथ्यादृष्ट ब्रह्मक्षत्रादिक जगदि'ति मुद्रितशारीरकशाङ्करभाष्यपाठः.

मितीति वाच्यम् । अधिकावापदोषात् । स्वातन्त्र्यस्य स्वरूपस्य भेदस्य च मानान्तरगृहीतत्वाविशेषात् । आगमेन तु स्वरूपमपि बाध्यताम् । दोषमूलतया प्रत्यक्षादेरतात्त्विकप्रमाणता च वक्ष्यते ।

यत् तु द्रष्ट्रादिमात्रनिषेधे वामदेवस्य तत्त्वदर्शनद(शा)याम् 'अहं मनुरभवमि'त्यादिद्रष्ट्रादिस्वरूपपरामर्शो विरुध्येतेति । तन्न । तत्त्वदृशोऽपि जीवन्मुक(स्य ? स्या)शरीरपातादारब्धभोगाय मात्रया भेदप्रतिभासोपगमेन रजतबाधदशायामपि शुक्तिका रजतमभवदितिवद् 'अहं मनुरभवमि'ति भेदप्रतिभासानुकर्षणेन विवक्षितब्रह्मविद्याफलसर्वात्मभावस्य दिदर्शयिषितत्वात् ।

एतेन 'अहमेकः प्रथममास वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः', 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्', 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्', 'परमार्थस्त्वमेवैको नान्योऽस्ती'त्यादिवस्त्वैकात्म्यविधिशेषा भेदनिषेधा व्याख्याताः । एवं च 'न चास्य कश्चिज्जनिता न चाधिपः' इत्यादिस्वतन्त्ररूपवस्तुविशेषविषयनिषेधदर्शनमात्रेण भेदसामान्यनिषेधः सामान्यविशेषन्यायेन न विशेषविषयो नियन्तव्यः । गोबलीवर्दन्यायेनापि भेदमात्रनिषेधोपपत्तेः । नापि 'अजायमानो बहुधा विजायते', 'सोऽकामयत बहु स्यामि'ति, 'एकः सन् बहुधा विचचार' इत्यादिकार्यनानात्वस्य प्रकारनानात्वस्य च दर्शनाद् उत्सर्गापवादन्यायेन कार्यकारणभेदविषये स्वनिष्ठभेदविषये वा सङ्कोचनीयः । कार्यकारणभावाद्युपपादनस्य निर्भेदब्रह्मप्रतिपत्त्यर्थताभिधानात् । कार्यात्मना कारणनानाभावस्य प्रकारितन्त्रतया प्रकारनानाभावस्य चान्यथासिद्धेरप्रतिपाद्यतया बाधायैवानुवाद्यत्वात् । अपि च 'जर्तिलयवाग्वा वा जुहुयादि'त्यादि न प्रसिद्धार्थम् । अथ च 'अनाहुतिर्वै जर्तिलाश्चे'त्यादि निषेधायैव प्रतिपाद्यते, एवमिहापि स्यात् । 'अजक्षीरेण जुहोती'ति विध्येकवाक्यतया जर्तिलादितात्पर्याभावो गम्यत इति चेत्, तर्ह्यभेदविध्येकवाक्यतया भेदतात्पर्याभावोऽपि गम्यताम् । विषयबाधेन च प्रामाण्यचोद्यं तात्पर्यविषयाबाधेन समाधानं च तुल्यमुभयत्रापि ॥

साहश्यस्य भेदघटितत्वशङ्का ।

यदपि 'निरञ्जनः परमं साम्यमुपैती'ति मुक्तस्याप्यात्मनो भेदावगमादनिषेध्यो भेदः, साम्य हि साहश्य तद्भिन्नत्वे सति तद्धर्मकत्वम् । न च तद्धर्मकत्वमेव साहश्य लाघवादिति वाच्य, तस्मिन्नेव तत्साहश्यव्यवहारप्रसङ्गात् ।

"गगन गगनाकार सागर सागरोपमः ।
रामरावणयोर्युद्ध रामरावणयोरिव ॥"

इत्यादौ सदृशसमादिपर्यायोपमादिशब्दप्रयोगोऽभेदेऽपि दृश्यत इति चेत् । न । अनन्वयेन सदृशान्तरनिषेधपरतया लाक्षणिकत्वात् । यदि च व्यञ्जनावृत्तिरतिरिच्येत, भेदकल्पनया साहश्य वाक्यार्थः प्रमीयताम् । सदृशान्तरनिषेधस्तदनुषङ्गाद् व्यङ्ग्यते ।

*"उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम् ।
स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥"

इत्यत्र चोत्प्रेक्षैव, नोपमा । पतद्गङ्गसमासस्य प्रकृतविषयत्वेऽभेदात् । † 'साधर्म्यमुपमा भेदे' इति च काव्यप्रकाशिकाकारः । अप्रकृतविषयत्वे तु भेदादुपमापि स्यात् । यदि वा प्रकृतविषयेऽपि धर्मभेदेन भेदकल्पनयापि स्यात् । अनन्वये तु न भेदकधर्मग्रह इति विशेषः । एवं कल्पितभेदसाधर्म्यव्यवच्छेदाय 'साधर्म्यमुपमा भेदे' इत्युक्तमिति युक्तम् । अत एव ह्यभेदप्रतिद्वन्द्वितया साहश्य व्यपदिश्यते न स एवायं किन्तु तत्सदृश इति । तत्र च प्रथम भेद. प्राधान्येन व्यपदिश्यते, परतस्तु साहश्यघटकतयेति विवक्षाभेदेनापौनरुक्त्यात् । अत एव 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इत्युपमानोपमेयभेदाद् दहराकाशो न भूताकाश इति सिद्धान्तितम् । तथा 'यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्त भ्रातृव्य निपत्यादत्ते' इति सामान्यविशेषभिन्नतया कथञ्चिदुपमानोपमेयभावसम्भवेऽपि श्येनस्य श्येनोपमेयत्वं न स्वरसमिति श्येनपदं कर्मनामधेय निरधारि जैमिनिना 'तद्व्यपदेशं च' (जै० १. ४. ५) इति । तस्यैव तत्सदृशत्वे चायं ‡ दहराधिकरणसिद्धा-

* कुमारसम्भवे (स० ७. श्लो० ४१) । † (उल्लास० १. श्लो० १) ।
‡ (ब्र० १. ३. १४) ।

न्तस्तद्व्यपदेशन्यायश्च प्रत्युद्धृतः स्यात् । अपि च तेनासौ समः सदृश इति सप्रतियोगिकतया भेदगर्भव्यवहारस्य विना हेतु घटो घटाद् भिन्न इत्यादाविव वैकल्पिकत्व नावकल्पते । न च साम्यशब्देन स्वप्रधाने भेदगर्भे सादृश्येऽभिहिते विशेषण पारम्य तदभेदे नियन्तुमर्हति, विशेषणानामुपस्थितविशेष्यरूपपरिच्छेदकमात्रत्वात्, तत्रैव भेदाशाविभाव्यत्वमात्रे पारम्यपर्यवसानोपपत्तेः । अत एव 'मासमग्निहोत्र जुहोती'त्यादावपूर्वकर्मविधौ सत्यग्निहोत्रनाम्नो नित्याग्निहोत्रवृत्तस्यापि विधिपरतन्त्रतया तत्परिच्छेदकतयैव कथमपि वृत्तिरिष्यते न पुन. स्ववृत्तिमानर्थ्यादपूर्वकर्मविधिभङ्ग । एव चेशपद विभक्तिविपरिणामेनानुषञ्जनीयमीशेन परम साम्यमुपैतीति । वर हि साम्यपदश्रुत्यर्थभङ्गेनानुषङ्ग. । प्रतीतोपपत्त्यर्थस्यानुषङ्गगौरवस्यादोषत्वात् ।

"यथोदक शुद्धे शुद्धमासिक्त तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम ! ॥"

इति च मुक्तस्य ब्रह्मसाम्यश्रवणात् 'सोऽश्नुते सर्वान् कामान् सहे'ति मुक्तस्य ब्रह्मसाहित्यश्रवणाच्च । न हि स्वरूपाभेदे साहित्यमाञ्जसम् ।

"तथा विद्वान् नामरूपाद् विमुक्त परात्पर पुरुषमुपैति दिव्यम् ।"

इति मुक्तोपेयत्वव्यपदेशाच्च । न हि ब्रह्मैव मुक्तो ब्रह्मोपैतीति युक्तम् । तस्माद् भेदनिषेध एव कथञ्चिन्नेय इति ॥

---

## सिद्धान्ते परमसाम्यश्रुत्यर्थ ।

तदपि हताशस्याशामात्रम् । 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिफलवचनविरोधात् । 'यो वेदाह ब्रह्मास्मीति, स इद सर्वं भवती'ति सर्वात्मत्ववचन च विज्ञस्य ब्रह्मभूयमतिहाय न शक्यमनर्थ(कम ? क) कर्तुम् । न च स्मृतिराञ्जसी स्याद् 'मद्भाव सोऽधिगच्छती'ति । न च साम्यश्रुतिविरोध., पारम्यविशेषित हि साम्यमभेद एव । न हि कियताप्यंशेन रूपभेदेऽसति साम्यपारम्यमसङ्कुचद्वृत्ति भवति । उक्त च ब्रह्मगीतायां —

"सर्वाकारतया साम्य परमाद्वैतलक्षणम् ।
अतः साम्य तयोः साक्षादैक्यमेव न चेतरत् ॥"

इति । यत्तूपस्थितविशेष्यपरिच्छेदकतया विशेषणस्य साम्यपदार्थान्तर्गतभेदाविभाव्य(त्व)मात्रपर पारम्यमिति । तन्न । साम्यपदस्यानेकार्थतया विवक्षितार्थनिर्णयस्य विशेषणाधीनत्वात् । 'यजेते'ति कालसंयुक्तासयुक्तसाधारण्ये सति 'दर्शपूर्णमासाभ्यामि'ति विशेषणेन कालयुक्तयजिपरत्वावधारणाद्, लोके च गावो भान्ति भानोरिति विशेषणेनाशुपरत्वावधारणाच्चेति । अपि च ज्ञानसमकालमुक्त, समसमयवर्तीत्यादौ, 'समान वृक्ष परिषस्वजाते' समानग्राम इत्यादौ च समशब्दस्य तत्पर्यायसमानशब्दस्य चैक्ये प्रयोगदर्शनात् साम्यमिहैकत्वमस्तु । न चैक्ये पारम्यानन्वय. । सौप्तिकसदैक्यव्यावृत्त्यर्थत्वात् । ननु च प्रचुरतरप्रयोगात् साम्यमिति सादृश्यमेव प्रथममुपतिष्ठते, न त्वैक्य तदर्थोऽपि । अन्यायो ह्यनेकार्थत्वम् । न चैको गौरिति वक्तव्ये समो गौरित्युच्यते । नन्वैक्येऽपि दर्शित. प्रयोग. । न । तत्रानेकप्रतिसम्बन्धिकैकरूपसम्बन्धनिरूपकत्वलक्षणसाधारण्यविषये लाक्षणिकत्वोपपत्तेः । वर ह्यनेक शक्तिकल्पनातो लक्षणापि । तदेव मुख्ये सादृश्ये साम्यार्थे सम्भवति न लाक्षणिकमैक्य प्रतिपत्त युक्तमिति । मैव, समकाल इत्यादौ समशब्दस्य शक्तिलाघवेनैक्यार्थत्वात् । तत्रैक्ये सतोः प्रयोगप्रत्यययोस्तस्य साधारण्यलक्षणायोगात् । न वा शक्यसादृश्यासम्बन्धिनि साधारण्ये समशब्दस्य लक्षणा शक्यास्थातुम् । शक्यसम्बन्धो हि लक्षणा नाम । न च भेदगर्भं सादृश्यमभेदालम्बिसाधारणत्वैकार्थसम्बन्धमर्हति । न चैककालसम्बन्धितयोभयोः सादृश्यात् सदृशप्र(ती?)तिसम्बन्धितया कालस्य स्यात्, तद्गतसाधारण्यस्य सादृश्यसम्बन्धादिति वाच्यम् । एव पारम्पर्यमविदुषोऽपि समकाल इत्यादावेककालत्वस्यैव प्रतीते. । समकालशब्देनैवोभयोरेककालसम्बन्धरूप सादृश्यमवेत्य पुन साधारण्यलक्षणायामर्थाभावात् । शक्यार्थानुपस्थितौ च तत्सम्बन्धिनि लक्षणानुपपत्ते । उभयैककालसम्बन्धवित्तिवेद्यतया तदुभयसम्बन्धनिरूपकत्वलक्षणसाधारण्यस्यालक्षणीयत्वाच्च । एतेनैकत्वेऽपि लक्षणा प्रत्युक्ता । उक्तस्थलेषु शक्यसादृश्योपस्थानायैव प्रथममेकत्वस्य समशब्देनावश्याभिधेयत्वात् । न चागतिकमनेकार्थत्व दोषः, गवाक्षादिष्वपि प्रसङ्गात् । अर्थभेदेन शब्दानेकत्वाच्च । अर्थभेदनिरूपणीयभेदतया च शब्दस्य स्वतो भेदानवगमेन तदनेकार्थत्वव्यवहारोपपत्तेः तदन्याय्यत्वन्या(य्यत्व ? य)स्य च तद्विषय-

त्वात् । न चैव गवैकत्वे समो गौरिति प्रसङ्गः । समशब्दस्यानेकार्थतया मा भूदर्थसंशय इति तदप्रयोगोपपत्तेः । विनिगमके च तत्प्रयोगे बाधकाभावात् । एककाल इति वाच्ये समकाल इति दर्शनाच्च । अपि च 'समे यजेत', 'समं कायशिरोग्रीवं', 'समं चक्रे महीतलमि'(त्या?त्य)दन्तुरविकारे प्रयोगादिह साम्यं रागद्वेषशुभाशुभादिवैषम्यहानेन स्वरूपप्रतिष्ठा विवक्ष्यताम् । तत्र सुप्तावप्यविकृतस्वरूपापत्तिरस्तीति विशेष्यते पर(म)मिति । जीवो हि प्राक् कैवल्याद् रागद्वेषादिभिर्विषमो दन्तुरित इव भवति । तत्त्वज्ञ(स्य?स्यै)व सविलासाविद्यानिवृत्तौ निश्शेषवैषम्योपशमोपपत्तेः । 'भिद्यते हृदयग्रन्थिरि-' त्यादिश्रुतेः । अपि च 'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेणे'ति न प्राणात्मनः प्लुष्यादिना परिमाणतो वान्यतो वा सादृश्यमुच्यते, असम्भवात् । किन्तु तत्तदात्मना समाप्यवृत्त्या सम्पूर्णत्वम् । एवमिह 'परमं साम्यमुपैती'ति सर्वात्मना पूर्णत्वमुच्यताम् । अपि च —

"विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥"

'निर्दोषं हि समं ब्रह्मे'त्यादौ न ब्रह्मणः कथञ्चित् केनचित् सादृश्यमुच्यते । 'न तस्य प्रतिमास्ती'त्यादिनिषेधाच्च । तदेकत्वं पूर्णत्वं वा साम्यमिहापि विवक्ष्यताम् । प्राणात्मन इव पूर्णत्वमापेक्षिकं मा भूदिति परममिति विशेष्यते । अथवा समशब्दस्य सर्वपर्यायत्वोपगमात्, साम्यमिह सर्वत्वमेवोच्यताम् । 'यो वेदाहं ब्रह्मास्मीति स इदं सर्वं भवतीत्या'दिश्रुतेः । राजापि हि राष्ट्रवर्धनः सर्वोऽहमिति केवलमभिमन्यते । तथेह मा भूदिति परममिति विशेषणे सर्वात्मभावमुपैतीति लभ्यते । अत्रायमगुणवचनोऽपि समशब्दो ब्राह्मणादिषु भविष्यति आकृतिगणत्वात् । तेन 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (५. १. १२४) इति समशब्दादेकशब्दादिव भावे ष्यञ् स्यात् । स्यात् *स(त्व ? र्व)वेदादित्वात् स्वार्थिको वा । 'वर्तमानसामीप्ये —' (३. ३. १३१) इति ज्ञापकात् ।

---

* 'सर्ववेदादिभ्यः स्वार्थे' इति वार्त्तिकात् (५. १. १२४)

"ब्राह्मण सर्वमेतत् त्वा ब्रह्मण्यमनुगच्छति"

इत्यादिदर्शनाच्च। न हीह समूहे ब्राह्मणमाणवबाडबाद् यत् स्यात् । सामान्यनिर्देशादेव सर्वसिद्धौ सर्वशब्दानर्थक्यात् । स्वारसिकविशेष्यान्वयसम्भवे तस्य तत्परिकरविषयत्वकल्पनायोगात् । स्वार्थिके ष्यञि मा कतिपये वोज्झि(षि?ष्- तेति तदर्थवत्त्वोपपत्तेश्च। तेन साम्य सम सर्वमुपैतीत्यर्थ.। 'सर्वमाप्नोति सर्वशः', 'युक्तात्मानः सर्वमेवापियन्ती'त्यादिश्रुतेः । सर्वातिरापेक्षिकी सूत्रात्मादेरपीति परममिति विशेषणम् । नात्र सर्वमिति जगदुच्यते, जगदाप्तेरविद्याफलत्वात् । न च यत्र कामावसायितानेन विवक्ष्यते, 'सर्वेषु लोकेषु कामचारो भवती'त्यादिश्रुतेरिति वाच्यम्। 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिविरोधात् । कामचारादेर्ब्राह्मलौकिकविषयत्वात् । अत परम सर्वमिति सूत्रादिव्यवच्छेदेन तस्याप्यविष्ठानमशेषसत्तात्मक ब्रह्मेति पर्यवस्यति। अथवा परममिति क्रियाविशेषणम् । अधुनापि जीव. साम्यमुपेत एव तादात्म्याद्, न तु परम यथा तथा । ससारदोषाविलतया विपर्यासगृहीतत्वात् । विद्वान् पुनः परम यथा तथोपैति, विद्यया विधूतदोषो ब्रह्मैव सम्पद्यत इति। तथा च भगवान् सूत्रकारः—'सम्पद्याविर्भाव स्वेन शब्दात्' (ब्र० ४.४ १) इति । अविद्यया प्रागनुपेत इवेति तदपेक्षयोपैतीति निर्देशमात्रम् । न तूपेयोपैतृभेदो विद्याविषयेऽपि, 'ब्रह्मैव सन् ब्रह्माप्येती'त्यादिविरोधात् । एव सति

"इद ज्ञानमुपाश्रित्य मम साधर्म्यमागताः"

इति गुणवृत्त्या व्याख्येयम् । प्रागविद्यया विधर्मस्यैव सतः स्वरूपाभिव्यक्तौ तन्निवृत्त्या साधर्म्यमिव भवति, 'मद्भाव सोऽधिगच्छती'त्यग्रे दर्शनात् । न च मद्भावमिव मद्भावमित्युपचारकल्पनाञ्जसी । ममेव भाव इत्युपक्षेपे गौरवादसामर्थ्याच्च ।

"स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते"

इत्यन्ते दर्शनाच्च ॥

---

### यथोदकं शुद्धे शुद्धमितिश्रुत्यर्थ ।

'यथोदकमि'त्यादौ च दृष्टान्ते तादृगिति न शुद्ध्यादिना सादृश्यमुच्यते, प्रागप्यासेकतस्तत्सत्त्वात् । किं तु यादृक् प्रागासीत् तादृगेवासिक्तमपि

नाधिकमागन्तु(क)रूपान्तरमापद्यत इति। उदकद्वयसम्भेदे हि प्रागवस्था-विच्छेदविलयेन जलैकात्मकमेव भवतीति। यद्वा आसेचनाविधेरुदक यादृक् स्वात्मनाविभक्तस्वभावम्, आसिक्तमपि तादृगेव भवति भेदकोपाधिभेदापायात्। एव ब्रह्म विजानत आत्मा तादृगेव, न रूपान्तरमागन्तुकमापद्यते। ब्रह्मात्माभेदावगमादाविद्यकजीवेश्वरावस्थाविच्छेदविलयेन ब्रह्मैकात्मको भवतीति तद्विज्ञाने तद्विभागावभासोपाधिविलये तदविभक्तात्मा भवतीति वोच्यते —

"एव मुनेर्विजानत आत्मा भवति गौतम!"

इति। अन्यथा दृष्टान्तासामञ्जस्यात्। सत्येव भेदे नीरक्षीरसम्भेद इव दुर्विवेचभेदत्वमेव सम्भिन्नोदकदृष्टान्तेनाभिधित्सितमिति चेत्। तर्हि तादृगिवेति स्यात्। न तादृगेवेति। यादृक् प्राग्भिन्नमासीत् तादृगेवासिक्तमपि भिन्नमेवेत्यभेदो वार्यत इति न शक्यशङ्कम्। उपाधिभेदमनपेक्ष्योदकस्वभावभेदाविभावनाद्, भेददुर्विवेचत्वमात्रविवक्षाया च दार्ष्टान्तिकानुपपत्तेः। सति सार्वज्ञ्ये जीवेश्वरयो सतो विभेदस्य दुर्विवेचत्वासम्भवात्। अज्ञैरविवेचनीयत्व वक्तव्य, तदप्रसक्तेः विजानतश्चैवं भवतीत्युच्यते। तवापि तादात्म्ये वस्तुविभिन्नसम्भिन्नोदकदृष्टान्तानुपपत्तिः। न। उदकावयवविभेदेऽपि सम्भेदे प्रागवस्थाविलयेन पुनः समुदितावयवैरेकावयविद्रव्यान्तरात्मना परिणामात्। पृथगवयवितोपाधिकभेदनिवृत्ते प्राग्रूपविलयेनैकतापत्तिमात्रे चाय दृष्टान्तः। तत क्वचिदभेद क्रियया जायते। परत्र सन्नेव ज्ञानेन व्यज्यत इत्यकिञ्चित्करो विशेषः॥

---

## सह ब्रह्मणा विपश्चितेतिश्रुत्यर्थः।

'एवं सोऽश्नुत' इत्यादावपि न ब्रह्मणा सहेति सम्बन्धः। तत्राश्नुवानेन साहित्यविवक्षाया ब्रह्मण पुत्रेण सहागतः पितेत्यादाविवाप्राधान्यप्रसङ्गात्। कामानश्नुत इति विवक्षितब्रह्मगुणानुभवे तस्य स्वातन्त्र्योपपत्तेः। अथ कामाप्तिरिह जैवगुणैश्वर्यानुभवो विवक्ष्येत। तत्र च स्वप्रयत्नाधीने जीवस्य प्राधान्यमिति चेत्, तत्र ब्रह्मणः सहत्ववचनमनर्थकं, तदनुभवो हि जीवस्यैव

ब्रह्मणो न प्रयोजनम् । अथ कामाप्तिसम्बन्धो न ब्रह्मण, येन तत्राप्राधान्यमाशङ्क्येत । न हि सहभावप्रतियोगिनोऽपि क्रियासम्बन्धनियमः ।

"सहैव दशभि पुत्रैर्भार वहति गर्दभी"

इत्यादौ व्यभिचारात् । अत एव 'अग्ना इ पत्नी वाः सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहे'त्यत्र त्वष्टु सहभावमात्र, न पानसम्बन्ध इत्युक्तमन्यत्रेति चेत् । न । सर्वस्यैव ब्रह्मणा सहभावे मुक्तस्य विशिष्य तदभिधानवैयर्थ्यात् । न च मुक्तावभेदभ्रमनिरासाय तदभिधानम्, अनागमेन तदप्राप्ते । 'ब्रह्म वेद ब्रह्मैव भवती'त्याद्यागमस्य च तुल्यप्रमाणत्वात् । एतदविरोधेन सहत्वान्वयस्वारस्यसम्भवाच्च । एतेन 'पत्न्या सह प्राणानायम्ये'त्यादाविव मुक्तस्य कामव्याप्तावनुमन्त्रनया ब्रह्मणः सहत्ववचनमिति प्रत्युक्तम् । तस्य सर्वदा सर्वानुमन्त्रतया विशिष्याभिधानस्यानतिप्रयोजनत्वात् । न च राज्ञा सह भुङ्क्ते भोगानमात्य इत्यादाविव मुक्तस्य तुल्यभोगत्वे ब्रह्मणा सहत्ववचनम् । तथा च सूत्रम् 'भोगमात्रसाम्यलिङ्गाच्च' (ब्र० ४ ४. २१) इतीति वाच्यम् । साहित्यवृत्तेः सहशब्दस्य तुल्यत्वलक्षणापत्तेः । लोके च वक्तृतात्पर्याधीनवृत्त्यविरोधात् । अपि च योऽयं मुक्तस्य कामचारकामान्नकामरूपकामिकपित्रादिभोगः, न स ब्रह्मण, जैवकामचारादेस्तदकाम्यत्वात् । काम्यमानविषयानुभवो हि भोग इति । न च जगन्नियमनाद्यैश्वरभोगो मुक्तस्य राजगुणविभवाद्यनुभव इव सेवकस्य । मुक्तस्य ब्रह्मगुणविभवाद्यनुभवो भोग इति चेत् । भृत्यगुणविभवानुभव इव राज्ञो ब्रह्मणोऽपि जीवगुणविभवानुभवो भोग स्यात्, शेषस्य शेषिप्रयोजनार्थत्वात् । न चानुकूलतया विषयानुभवो भोगः । न च ब्रह्मणोऽनुकूल प्रतिकूलं वेति वाच्यम् । एवं हि मुक्तस्य तेन तुल्यभोगत्वानुपपत्तेः । आनन्दातिरिक्तस्यानुकूलतयानुभवायोगाच्च । न च सर्व एव ब्रह्मगुणा आनन्दा., 'ब्रह्मण आनन्द' 'आनन्द ब्रह्मणो विद्वानि'त्येकवचनविरोधात् । आनन्दहेतुतयानुकूलवेदनीयत्वं च ब्रह्मण आनन्दनित्यतया न सम्भवति । जीवस्यापि मुक्तस्याविर्भूतगुणनित्यतोपगमात् तदसम्भव एव । भोगमात्रसाम्यं चोपासनामुक्तविषय न परममुक्तविषयमिति । अथाश्यमानकामसाहित्यं ब्रह्मणो विवक्ष्येत ब्रह्मणा सह कामानिति । एवमन्नेन सह सूपमत्तीत्यादाविप्राधान्याविघातात् । अपि चानुकूलवेदनीयत्वेन काम्यतया ब्रह्मणोऽपि सर्वान्

कामानित्येव ग्रहणे ब्रह्मणा सहेति पृथगुपादानं प्राधान्यविवक्षामवगमयति। अथवा तत्क्रतुन्यायेनोपासनानुगुणं फलमिति तद्गुणाम्नानाद्गुणप्राधान्यविवक्षाया ब्रह्मगुणात्मककामानामेव प्राधान्यं फलवचने विवक्ष्यता, न कश्चिद् दोष इति। नैव, 'ब्रह्मविदाप्नोति परमि'त्युपक्रमे तस्यैव स्वप्रधानतयाप्यत्वाभिधानात्। परशब्दस्योपस्थितब्रह्मविषयत्वात् परमिति कामानिति च वचनभेदेनैकार्थ्यायोगात्। अस्मन्मते चानन्दो ब्रह्मैव बहुविधविषयोपाधिभेदावच्छेदेन कामा इत्यैकार्थ्यमविरुद्धम्। अत एवैतदपास्तं ब्रह्मणेति हेतौ तृतीया। तथा च सह युगपत् कामानश्नुते ब्रह्मणेति सम्बध्यते। तस्य कामेश्वरत्वात्। 'एको बहूनां यो विदधाति कामानि'त्यादिश्रुतेः। एवं च न सहशब्दस्य तुल्यत्वलक्षणा। न वा ब्रह्मणोऽप्राधान्यम्। नापि तस्य भिन्नवाक्यपाठोऽदृष्टार्थोऽध्ययनधर्मं एवान्विताभिधानादिति। उपक्रमे ब्रह्मण एवाप्यत्वाभिधानात्। तस्माद् ब्रह्मणेतीत्थम्भूतलक्षणे तृतीया। तथा चोपबृंहितं —

"सोऽश्नुते सकलान् कामानक्रमेण सुरर्षभाः।
विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः॥"

इति। मुक्तावपि सर्वकामावाप्तिव्यपदेशफलं चोपपादितमधस्तात्। आप्नोति परमिति च भेदव्यपदेशो बोध्यबुद्ध्यपेक्षया ब्रह्मवित् प्रागनाप्तमिवाप्नोतीत्युपचारेण प्राचीनभेदव्यपाश्रयो नेयः। परस्यापि विशुद्धं स्वस्वरूपमपि प्राप्यमिति तदनुसन्धेयमिति वदतः प्रत्यगात्मनि प्राप्यप्राप्तृभावस्योक्तगतिनेयत्वात्॥

---

**नामरूपाद् विमुक्त इतिश्रुत्यर्थः।**

'तथा विद्वान् नामरूपाद्विमुक्तः' इत्यादि चात एव व्याख्यातम्। अपि च नात्र नामरूपे विमुच्य स्वरूपेण पृथग्भूत आत्मा परं पुरुषमुपैतीति विवक्षा युक्ता।

"यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय"

इति दृष्टान्तविरोधात्। न हि हीननामरूपा नद्यः स्वरूपेण पृथग्भूताः समुद्रमुपयन्ति। किं तूपयन्त्य एव जहति। एवमिहापि स्यात्, परं पुरुषमुपयन्नेव

नामरूपे मुञ्चतीति । प्रागभावापेक्षया तु पूर्वकालवद् व्यपदेशः । तमसो मुक्त उदेति सवितेतिवत् । एवं च नामरूपोपाधिविच्छिन्नरूपापेक्षया विद्वानुपैतीति व्यवहारमात्रम् । दृष्टान्ते च दार्ष्टान्तिनिर्देशसारूप्याय नद्य. समुद्रमुपयन्तीति वक्तव्ये समुद्रेऽस्त गच्छन्तीति निर्देश' स्वरूपपृथग्भावप्रत्याख्यानेन तद्भूयविवक्षामवगमयति । तस्मादाविद्यकरूपभेदापेक्षयैव सर्वत्र भेदव्यपदेशः ॥

---

### अक्षरात् परत. पर इतिश्रुत्यर्थः ।

न च 'अक्षरात् परत. परः' इत्यव्याकृतात् परो विविक्तः प्रत्यगात्मा पुरुष., ततोऽपि परः परमात्मा भेदेन निर्दिश्यत इति वाच्यम् । 'अक्षरात् परत' इति वैयधिकरण्ये गौरवात् । नन्वेवमपि प्रकृतादक्षरसशब्दिताद् ब्रह्मणः परः प्रत्यगात्मा पुरुषः प्राणाद्युपाधिविविक्तः प्रतीयताम्,

"अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः"

इति । नैवम् । स बाह्याभ्यन्तर इति विशेषणविरोधात्, 'येनाक्षरं पुरुष वेद सत्यमि'ति प्रक्रमे समानाधिकरणनिर्देशात्, 'पुरुष एवेद विश्वमि'ति सार्वात्म्योपदेशाच्च । यद्यप्यव्याकृतमक्षरमिह मुखतो न प्रकृत, तथापि न ब्रह्मणः स्वरूपेण भूतयोनित्व, विक्रियापत्तेः । अतो 'यद्भूतयोनिमि'त्याक्षिप्तमव्याकृतमक्षर देवात्मशक्तिरूप विकारेभ्य. परमित्यस्मात् पर. पुरुषशब्दितः प्रत्यगेकरस. परमात्मैव गृह्यत । किमर्थं पुनः 'अक्षरात् परत' इति विशेषणम् । मा तन्मात्रापञ्चक ग्राहीति । तदपि हि स्वविकारेषु क्षरत्सु न क्षरति । तानश्नुते वा । परत्वविशेषणे त्वव्याकृतमक्षरमतिक्रान्तः कारणरूपोत्तीर्णः परमात्मा केवल आवेदितो भवति ॥

---

### श्रुतीनां निर्विशेषब्रह्मैदम्पर्यनिगमनम् ।

तस्माद् गुणशरीरविकारभेदादिविधिप्रतिषेधवचसा सविशेषाविशेषात्मविषयतया परस्परमविरोधेऽपि, पौर्वापर्यपर्यालोचनयाम्नायस्यापह्नुताशेषवि-

शेषो विगलिताखिलभेद. प्रत्यगेकरसः परमात्मा तात्पर्यतः प्रतिपाद्योऽर्थ इत्यतः कारणत्वप्रमुखस्य सर्वस्य कल्पनामात्रतया बाध्यबाधकभावोऽवस्थाप्यते। वस्तुनिर्विशेषत्वे मानवृत्तविरोधादौ तु वक्ष्यामः। तदेवमाम्नायस्य निर्विशेषाद्वितीयपरमार्थैदम्पर्ये तद्विरुद्धाः स्मृतयो न प्रमाणम् ॥

कणधयधिया कारागारादपेतमनात्मनः
 कपिलमुनिना निर्णिक्तात्मानमञ्चितविग्रहम्।
निगमशिरसा स्वाराज्ये स्वे चिरादभिषेचित
 जयति समवन् देवं दास्याद् गुरुर्मम तान्त्रिकात् ॥

द्वितीयो भाग।

---

शुभ भूयात्।

# पाठभेदः ।

| पृष्ठे | पङ्क्तौ | क ख ग्रन्थपाठः | ग. ग्रन्थपाठः. |
|---|---|---|---|
| ६ | २२ | र्वापित | र्वापितारोपित |
| २६ | २ | प्रत्यय | प्रत्यक्ष |
| ८८ | १० | त्राभेद | प्यभेद |
| ,, | १२ | स्येवोप | स्योप |
| १०१ | २२, २३ | नचापेक्ष्य | नापेक्ष्य |
| ११० | २० | न । धी | न । तादृशधी |
| ,, | २६ | चान्यान्य | चान्योन्य |
| ११४ | १९ | च्छेदे | च्छेदे |
| १५० | १३ | त्मीयव | त्मव |
| १५२ | २४ | त्यात् | ल्य स्यात् |
| १८५ | १० | मिति | मिति च |
| १९० | १५ | ले स | ले भिद्येते भेदेन स |
| २०० | ५ | वोज्झिषत | बोधिषत |

# शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १९ | च्येत , नि | न्येत, न नि |
| ३४ | १८ | वषर | वषार |
| ४१ | २० | मर्थ्यभा | मर्थ्याभा |
| ४३ | ८ | नाहुति | अनाहुति |
| ४८ | १६ | त्यादिवि | त्यादिविशिष्टवि |
| ६६ | ७ | योगोपपत्ते | योगापत्ते |
| ९४ | २८ | हो तदुपस्यत | होतादुवस्य त |
| १०७ | १५ | स्वर्ग | सर्ग |
| ११० | २२ | सिद्धानु | सिद्धयनु |
| ११६ | १३ | त्याद | त्यादा |
| १२० | १२ | लणा | लक्षणा |
| १२१ | २० | षण | षणा |
| १९२ | ११ | ज्ञाना | ज्ञना |
| २०० | २ | ण | ण्य |

# Ready for sale.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H H Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | | | |
|---|---|---|---|
| No 1 — दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2 — अभिनवकौस्तुभमाला - दक्षिणामूर्तिस्तवौ by Krishna-lîlâsukamuni. | 0 | 2 | 0 |
| No 3 — नलाभ्युदय (Kâvya) by Vâmana Bhatta Bâna. | 0 | 4 | 0 |
| No. 4 — शिवलीलार्णव. (Kâvya) by Nîlakantha Dîkshita. | 2 | 0 | 0 |
| No 5 — व्यक्तिविवेक (Alankâra) by Mahima Bhatta with commentary | 2 | 12 | 0 |
| No. 6 — दुर्घटवृत्ति (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No 7 — ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî | 2 | 4 | 0 |
| No 8 — प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No 9 — विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin | 0 | 8 | 0 |
| No. 10 — मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 | 0 |
| No. 11 — तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 4 | 0 |
| No 12 — परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13 — सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Siva- | | | |

| | | | |
|---|---|---|---|
| No. 14 — नीतिसार. (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15 — स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second edition) | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् (Do ) Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदय (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No 20—अविमारकम् (Nâtaka) by Bhâsa | 1 | 8 | 0 |
| No. 21—बालचारितम् (Do.) Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेप (Kosa) by Kesavaswâmin (Part I 1 & 2 Kândas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणय (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa | 0 | 12 | 0 |
| No 27—कुमारसम्भव (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I 1 & 2 Sargas) | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्न (Dharmasûtra) by Vikhanas | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेप. (Kosa) by Kesavaswâmin (Part II 3rd Kânda) | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेप (Kosa) by Kesavaswâmin (Part III 4th, 5th & 6th Kândas) | 1 | 0 | 0 |

No 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III. 3rd, 4th & 5th Sargas) 2 8 0

No. 33—वाररुचसग्रह (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana 0 8 0

No 34—मणिदर्पण (शब्दपरिच्छेद) (Nyâya) by Râjachûdâmanimakhin 1 4 0

No. 35—मणिसारः (अनुमानखण्ड.) (Nyâya) by Gopînâtha 1 8 0

No.*36—कुमारसम्भव. (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Panditah (Part III 6th, 7th & 8th sargas) 3 0 0

No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary 0 4 0

No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatîya Sarvânanda (Part I. 1st Kânda) 2 0 0

No. 39—चारुदत्तम् (Nâtaka) by Bhâsa 0 12 0

No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Srî Ruyyaka with the Alankârasarvaswa of Srî Mankhuka and its commentary by Samudrabandha 2 8 0

No 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Srî Sankara Bhagavat Pada 0 4 0

No. 42—प्रतिमानाटकम् (Nataka) by Bhâsa 1 8 0

No 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshiraswamin and Tikasarvaswa of Vandyaghatiya-Sarvananda (Part II 2nd Kanda 1—6 Vargas) 2 8 0

| | | | | |
|---|---|---|---|---|
| No 44—तन्त्रशुद्धम (Tantra) by Bhattâraka Srî Vedottama | 0 | 4 | 0 |
| No 45—प्रपञ्चहृदयम् (Prapanchahridaya) | 1 | 0 | 0 |
| No 46—परिभाषावृत्ति (Vyâkarana) by Nîlakantha Dîkshita | 0 | 8 | 0 |
| No 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Sarasvati (Part I) | 1 | 12 | 0 |
| No 48— Do Do (Part II) | 2 | 0 | 0 |

***Apply to —***

*The Agent for the sale of*

*Government Sanskrit Publications,*

*Trivandrum*

TRIVANDRUM SANSKRIT SERIES
No LVIII

श्रीकृष्णानन्दसरस्वतीप्रणीतं

# सिद्धान्तसिद्धाञ्जनम् ।

---

THE

# SIDDHÂNTASIDDHÂNJANA

BY

SRÎ KRISHNÂNANDA SARASVATÎ

EDITED BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts, Trivandrum*

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE

---

**Part III.**





TRIVANDRUM
PRINTED BY THE SUPERINTENDENT GOVERNMENT PRESS

TRIVANDRUM SANSKRIT SERIES
No LVIII.

# THE SIDDHÁNTASIDDHÂNJANA

BY

SRÎ KRISHNÂNANDA SARASVATÎ

EDITED BY

T GAṆAPÂTI SÂSTRI

*Curator of the Department for the publication of Sanskrit manuscripts, Trivandrum*

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE

---

**Part III.**



TRIVANDRUM
PRINTED BY THE SUPERINTENDENT GOVERNMENT PRESS.
1917

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५८.

# सिद्धान्तसिद्धाञ्जनं

श्रीकृष्णानन्दसरस्वतीप्रणीतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितम् ।

## तृतीयो भागः ।

तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

कोलम्बाब्दाः १०९३, क्रैस्ताब्दाः १९१७

## विषयानुक्रमणी ।

# पाठभेदः ।

| पृष्ठे | पङ्क्तौ | क ख ग्रन्थपाठ | ग ग्रन्थपाठ |
|---|---|---|---|
| ३ | १६ | आन्न | आन्ति |
| ७ | १८ | त वि | त पि वि |
| २७ | ३ | गत भत्ता | गत निष्कर्षे सत्ता |
| ३९ | ८ | विभ्रम | वि द |
| ४१ | १२ | न भेद | न । भेद |
| ४२ | १० | तो हि जी | त र्ती |
| ८० | २० | न्मादना | न्म तन |
| ९० | १४ | रणानि | रणनि |
| १०२ | १३ | मते भा | मते तु भा |
| १०३ | १२ | गतव्य | वृत्तव्य |
| १०६ | १३ | नरिम | अमि |
| ११२ | २ | अदृष्ट | अदृष्टाविदित |
| ११४ | ६ | दान | दाढे |
| ,, | २० | अथवा | अन्यथा वा |
| ११५ | ,, | येऽपि | ये ऽपि |
| १२१ | ३ | स्मिद्धविषयस्व | स्मि विषयताया निर्वाह इत्यु चयत स्व |
| १२६ | १० | तत्रात्रत्य | तत्रत्य |
| १२९ | २३ | यज्ञा | यविज्ञा |
| १३२ | १५ | काशस्य | काशत्वस्य |
| १३७ | ७ | प्रमेव | प्रमेव |
| १५१ | २३ | स्यात्म | स्याआत्म |
| १५३ | ३–४ | स्वावभासा | स्वानुभवा |
| १६० | ११ | स इद | य इद |
| ६१ | १४ | शन्वा | शन्दा |
| २०० | ५ | त्यगा | त्यागा |

# शुद्धिपत्रम् ।

| पृष्ठ | पङ्क्तौ | अशुद्धम | शुद्धम् . |
|---|---|---|---|
| २२ | १३ | अतो वि | अता न वि |
| ५२ | ७ | चिदभेद | चिद्भेद |
| ५६ | १० | खाय | खाया |
| ६२ | २२ | णान्तग | णान्यतरा |
| १०३ | १७ | गति क्रि | गतीक्रि |
| १०८ | २२ | परार्या | परमार्थी |
| ११५ | २० | त्यर्थ | त्यर्थ । |
| ,, | २५ | रित्व | रित्व । न, |
| ११६ | १८ | न परे | नवा परो |
| १४७ | २४ | श्रुते | श्रुते |
| १४८ | १४ | चान्यश्च | चैतन्याश्च |
| १६५ | ७ | नत्वा | नवत्वा |

॥ श्रीः ॥

# सिद्धान्तसिद्धाञ्जनं

## श्रीकृष्णानन्दसरस्वतीप्रणीतम् ।

---

### तृतीयो भागः ।

---

#### ब्रह्मणो निर्विशेषाद्वितीयत्वे गीतावचनानि ।

अपिचैवं स्मृत्यादयोऽपि निर्विशेषं ब्रह्माद्वितीयं च प्रतिपादयन्ति । यथा—

"ज्ञेयं यत् तत् प्रवक्ष्यामि यज् ज्ञात्वामृतमश्नुते ।
अनादिमत् परं ब्रह्म न सत् तन्नासदुच्यते ॥"

नात्र ब्रह्मविलक्षणः प्रत्यगात्मा अमृताय ज्ञेयमुच्यते । 'नारायणं महाज्ञेयं', 'तमेव विदित्वातिमृत्युमेति',

"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥"

इत्यादिविरोधात्, परं ब्रह्मेति विशेषणाच्च । न च अहं वासुदेवः परो यस्य तन्मत्परमितिच्छेदः, अन्यथा मतुबानर्थक्यादिति वाच्यम् ।

"कर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तः",

'परमात्मायमव्ययः', 'तिष्ठन्त परमेश्वरम्' इत्याद्यनाञ्जस्यप्रसङ्गात् । 'क्षेत्रज्ञं चापि मां विद्धि' इत्यभेदोपक्रमाच्च । न चेह क्षेत्रज्ञं चापीति क्षेत्रसमुच्चयादुभयशरीरत्वं ब्रह्मणो विवक्षितम् । लक्षणापातात् । क्षेत्रज्ञ चापीति च

C G P. T 1112, 500 26 4 92 B

"एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः"

इत्युक्तानुस्मरणार्थत्वेन समुच्चयासिद्धेः। तथापि सामानाधिकरण्येन स्वरूपाभेदप्रत्ययोपपत्तेश्च। अतो न मत्परमिति च्छेदः। न चैवं मतुबानर्थक्यम्। 'न सत् तन्नासदुच्यत' इति प्रागुत्तरावस्थवृत्तसदसत्पदावाच्यत्वे वृत्तिभेदेन हेतुलाभार्थत्वात्। आदिरस्यास्तीत्यादिमत् कार्यं यस्य नास्ति यच्च न भवति तदकारणमकार्यं च तन्त्रेणानादिमदित्यतो 'न सत् तन्नासदुच्यत' इति ब्रह्मातिरिक्तप्रत्यगात्मनि चाप्रसक्तप्रतिषेधानाञ्जस्यात्। सूक्ष्मस्थूलचिदचिद्वस्तुसंहृतस्य ब्रह्मण. प्रागुत्तरावस्थस्य 'असद् वा इदमग्र आसीत्। ततो वै सदजायत' इति सदसन्निर्देश्यत्वेऽपि तदेकदेशे जीवे तत्प्रसङ्गनिषेधयोराञ्जस्यायोगात्। अपिच कथं 'ज्योतिषामपि तज्ज्योतिः'। स्वव्यतिरिक्तसर्वजडाजडज्योतिरवभासकत्वात्। ब्रह्मापि तथा 'ज्योतिषां ज्योतिरि'ति पर ज्योतिर्न व्यवतिष्ठेत, 'तमेव भान्तमनुभाति सर्वमि'ति च नावाध्रियेतेत्यादिबहुसामञ्जस्याच्च।

नहि 'यो मामजमि'त्यचितोऽचिद्विशिष्टाद् बद्धजीवादजमनादिमिति विशेषणे महोदार इत्यादावौदार्यमहत्त्वस्येवाजत्वानादित्वलाभेन ज्ञानाधीनाजन्मवतो मुक्ता(लो'ल्लो)कमहेश्वरमिति नित्यमुक्ताच्च ब्रह्मणो वैलक्षण्यमुच्यते, लोकमहेश्वरमित्येव तत्सिद्धौ शेषवैयर्थ्यात्। 'गुणानां च परार्थत्वादन्योन्यमसम्बन्ध' इत्यतोऽजमनादिमिति तुल्यवदन्यविशेषणत्वात्। उदारशब्दस्य मत्सरादिवद् गुणगुणिवृत्त्या भावपरत्वेन वा महोदार इत्यादौ बहुव्रीह्युपपत्तेः, अप्रामाणिकानपेक्षितमुक्तवैलक्षण्यपरत्वकल्पनायोगाच्च। 'अहमादिर्हि देवानाम्' इत्युक्तोपपादनेनाजमनादिं लोकमहेश्वरमित्युपादाननिमित्तपरतयार्थवत्त्वोपपत्तेः। तद्विदोऽसम्मूढत्ववचनस्य तत्प्रसादलभ्यप्रत्यगेकरसब्रह्मज्ञानान्तरितविषयत्वात्।

"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोग त येन मामुपयान्ति ते ॥"

इत्यनन्तरमभिधानात्। अन्यत्र च

"ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते।"
"ते प्राप्नुवन्ति मामेव"

इति विशेषणात् । यत्तु अत्राक्षरशब्द केवल प्रत्यगा(त्मन उ ? त्मानमु)पासीना मां मत्समानाकारमात्मानं प्राप्नुवन्त्येवेति व्याख्यायते, तत्र दुर्मेधसोऽक्षरानानुगुण्य व्यवहितान्वयश्चापराध्यति ।

"क्षर सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥"

इत्यादावपि न विशुद्धात् प्रत्यगात्मनोऽन्यत्वं ब्रह्मणो गम्यत इति प्राप्तावसरं वक्ष्यामः ॥

---

**निष्प्रपञ्चनिर्विशेषवस्तुपरविष्णुपुराणवचनानि ।**

"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थत. ।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥"

(विष्णुपु० अ० १. अ० २. श्लो० ६)

"परमार्थस्त्वमेवैको नान्योऽस्ति जगत. पते ! ।
तवैष महिमा येन व्याप्तमेतच्चराचरम् ॥
यदेतद् दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तज्ञानेन पश्यन्ति जगद्रूपमयोगिन ॥
ज्ञानस्वरूपमखिल जगदेतदबुद्धय ।
अर्थस्वरूप पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥
ये तु ज्ञानविद. शुद्धचेतसस्तेऽखिल जगत् ।
ज्ञानात्मक प्रपश्यन्ति त्वद्रूप परमेश्वर ! ॥"

(विष्णुपु० अं० १. अ० ४. श्लो० ३८–४१)

"सर्गस्थित्यन्तकालेषु त्रिधैवं सम्प्रवर्तते ।
गुणप्रवृत्त्या" (विष्णुपु० अ० १. अ० २२. श्लो० ४०)

इति ब्रह्मादिरूपेण सर्गादिहेतुत्वं गुणोपाधिकमभिधाय,

"परम पद तस्यागुण महत् ।
तच्च ज्ञानमयं व्यापि स्वसंवेद्यमनूपमम् ॥"

(विष्णुपु० अ० १. अ० २२. श्लो० ४१)

इति निर्विशेषप्रकाशज्ञानमात्र ब्रह्मरूपमुक्त्वा,

"चतुःप्रकार तदपि स्वरूप परमात्मनः"

इति प्रतिज्ञाय,

"साधनालम्बनज्ञान मुक्तये योगिनां हि यत् ।
स भेदः प्रथमस्तस्य ज्ञानभूतस्य वै मुने! ॥
युञ्जतः क्लेशमुक्त्यर्थं साध्य यद् ब्रह्म योगिनः ।
तदालम्बनविज्ञानं द्वितीयोंऽशो महामुने! ॥
उभयोस्त्वविभागेन साध्यसाधनयोर्हि यत् ।
विज्ञानमद्वैतमय तद्भागोऽन्यो मयोदितः ॥"

(विष्णुपु० अ० १. अ० २२. श्लो० ४५—४७)

इति साध्यसाधनगोचरवृत्तिद्वयोपधाननिमित्तव्यावृत्तानुवृत्तरूपत्रयमुक्त्वा, त्रि-रूपातीतमनुपाधिकमविशेष तुरीय रूपमुच्यते 'ज्ञानत्रयस्ये'त्यादिना। अन्ये तु साध्यसाधनगोचरे तत्त्वम्पदार्थविज्ञाने तयोरविभागेन ज्ञान वाक्यार्थज्ञानम्। नत्र च विशेषाः पारोक्ष्यपरिच्छेदतदुभयपरामर्शा इति व्याचक्षते।

"ज्ञानत्रयस्य चैतस्य विशेषो यो महामुने! ।
तन्निराकरणद्वारं दर्शितात्मस्वरूपवत् ॥
निर्व्यापारमनाख्येयं व्याप्तिमात्रमनूपमम् ।
आत्मसम्बोधविषयं सत्तामात्रमलक्षणम् ॥
प्रशान्तमभयं शुद्ध दुर्विभाव्यमसश्रयम् ।
विष्णोर्ज्ञानमयस्योक्त तज्ज्ञान परम पदम् ॥"

(विष्णुपु० अ० १. अ० २२. श्लो० ४८—५०)

तन्निराकरणद्वार व्यावृत्त्यनुवृत्तिरूपविशेषनिराकरणेन लक्षणीयमव्यावृत्तानुगतम्। तत् तर्हि शून्यम्। न। दर्शितात्मस्वरूपवत्। नात्रोपलब्धुः स्वप्रकाशगुणेन स्वात्मान दर्शयति संविदिति विवक्षितम्। परमपदशब्दितब्रह्मात्मसामानाधिकरण्यात्। न च स्वात्मन एव स्वात्मदर्शन, तस्यैव तद्विषयत्वविरोधात्। तद् यदि णिजर्थोऽवश्यं विवक्षणीय', तदौपाधिकजीवरूप बोद्धारमपेक्ष्यैव। न च

दर्शनमपि स्वगुणेन, किन्तु प्रकाशात्मनैव, संविदस्तावन्मात्रत्वात् । तदाह— निर्व्यापारमिति । प्रकाशगुणद्वारा चात्मनोऽन्यस्य वा भाने निर्व्यापारत्वविरोधात् । हन्त तर्हि प्रकाशमानमिद तदित्युच्यताम् । न । अनाख्येय, सर्वविधशब्दप्रवृत्तिनिमित्तविशेषाभावात् । अथ ज्ञातृज्ञेयसम्बन्धेन ख्यायेत मधुमाधुर्यादिवत् । न । व्याप्तिमात्रम् । अविद्याविषये हि ज्ञातृज्ञानज्ञेयभेदाध्यासाज्ज्ञाता ज्ञेय ज्ञानेन व्याप्नोतीव । 'प्रज्ञया चक्षु' समारुह्य सर्वाणि रूपाण्याप्नोती'ति श्रुतेः । विद्याविषये च भेदविलयाद् व्याप्तिमात्रम् । 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदि'ति श्रुतेः । तर्हि गुणादिभिराख्यायेत । न । अनूपमम् । गुणादिसामान्यं ह्युपमा,

"सामान्यान्येव भूयांसि गुणावयवकर्मणाम् ।
भिन्नप्रधानसामान्यवर्ति सादृश्यमुच्यते ॥"

इत्यभियुक्तोक्तेः । तर्हि जात्या । न । सत्तामात्रम् । तर्हि सतोऽस्य धर्मः । न । (अ)लक्षण, न कस्यचिद् धर्म. । कुत , प्रशान्तं, प्रपञ्चोपशमात्मकम् । अत एव अभयम् । 'द्वितीयाद् वै भय भवति' । ननु 'प्रपञ्चोपशमः शिवोऽद्वैतः' आत्मा अभयः श्रूयते । सत्यम् । इदमेव तद् आत्मसम्बोधविषयम् । पाठक्रमाग्रहे तु नन्वनूपम आत्मा 'न तस्य प्रतिमास्ति', 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति । सत्यम् । इदमेव तदात्मसम्बोधविषयमिति व्याख्येयम् । कथ विषयाश्रयरूषितस्वभावप्रकाशमात्रमुत्पादविनाशदूषित ज्ञानमात्मा । न । शुद्धमसंश्रयम् । प्रकाशैकरसस्यैव ज्ञानस्य निर्विषयाश्रयभावोपपत्तिरग्रे वक्ष्यते । एव तर्ह्युपदेशानर्थक्यम् । न । दुर्विभाव्य, सर्वप्रकारासस्पर्शात् । असंशयमिति पाठे तर्हि प्राप्तसंशयविरोधि(व ? वि)शेषवदुपदेश्यम् । न । असंशय, प्रकाशमात्रे हि न संशयः । तदेव च सर्वविशेषबाधेनोपदिश्यत इति ज्ञानमयस्य ज्ञानमिति पुरुषस्य चैतन्यमितिवद् व्यपदेशमात्रम् ।

अथ ज्ञानमयस्य परमात्मन' शरीरतया सम्बन्धिज्ञान प्रत्यगात्मतत्त्वमुच्यताम् । अनन्तरमेव

"एवम्प्रकारममलं नित्यं व्यापकमक्षयम् ।
समस्तहेयरहितं विष्ण्वाख्य परम पदम् ॥"



(विष्णुपु० अं० १. अ० २२. श्लो० ५२)

इति मुक्तात्मप्रकारातिदेशात्। 'विष्णो' परम पद', 'विष्णवाख्य परम पदम्,' इति निर्देशभेदाच्च । मैवम् । प्रक्रमभङ्गप्रसङ्गात् । अब्रह्मात्मकत्वज्ञानेन च

"तत्रान्यज्ञानरोधेन योगिनो यान्ति ये लयम् ।
ससारकर्षणोप्तौ ते यान्ति नि(र्बी)जता द्विज! ॥"
(विष्णुपु० अ० १. अ० २२. श्लो० ९१)

इति क्लेशकर्माशयरूपससारबीजात्ययवचनायोगात् । 'तमेव विदित्वातिमृत्यु-मेति' ,

"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"

इत्यादिश्रुते' । अनुपमत्वशुद्धत्वाभयत्वादिविशेषणानाञ्जस्यप्रसङ्गाच्च । न व एवम्प्रकारमिति जीवसाम्यमतिदिश्यते । निरङ्कुशसाम्यनिषेधश्रुत्यादि-विरोधात् । 'परम साम्यमुपैती'त्यादि च व्याख्यातम् । तस्मान्निर्व्यापारमि-त्यादिनिर्देशभेदापेक्षया एवम्प्रकारमित्युक्तरूपमनुकृष्य, शुद्धमित्युपक्षिप्तमर्थम् अमलं नित्यमिति व्यक्तीकृत्य, व्यापकमक्षयमिति विषयोपाधिकोपचयापचयौ वारयति । समस्तहेयरहितमिति च न सद्गुणपरिशेषपरम् । सर्वस्यैव विशे-षस्य परिच्छेददोषावहतया हेयत्वात् । किन्तु परिगणनादन्यो विशेषो मानु-ज्ञायीत्युक्तानुक्तसर्वविशेषनिषेधसङ्ग्रहपरम् । एवं निर्विशेषप्रकाशमात्रमात्म-तत्त्वं 'विष्णवाख्य परम पदमि'ति षष्ठीनिर्देशप्रसक्तभेदशङ्कामपोह्य,

"तद् ब्रह्म परम योगी यतो नावर्तते पुनः"
(विष्णुपु० अं० १. अ० २२. श्लो० ९३)

इत्युक्तमेवार्थमुपसहरति तस्यैव ब्रह्मणो निष्पन्नयोगिध्येयरूपभेदविवक्षयेति युक्तम् । 'द्वे रूपे ब्रह्मणस्तस्ये'ति प्रक्रम्य,

"मूर्तं यद् योगिभिः पूर्वं योगारम्भेषु चिन्त्यते"
(विष्णुपु० अ० १. अ० २२. श्लो० ६०)

इति ह्यनन्तरमुच्यत इति ।

"आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः ।
प्रवृद्ध्यपचयौ नास्य एकस्याखिलजन्तुषु ॥"
(विष्णुपु० अ० २. अ० १३. श्लो० ९७)

"यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ! ।
तदैषोऽहमय चान्यो वक्तुमेवमपीष्यते ॥"

(विष्णुपु० अं० २. अ० १३. श्लो० ८६)

पर इति प्रकृत्यादिविविक्त उच्यते । अथवा अन्य इति प्रकारत', पर इति स्वरूपतश्च भेद आक्षिप्यते । अन्यथा द्वैरुक्तचात् ।

"यदा समस्तभूतेषु पुमानेको व्यवस्थितः ।
तदा हि को भवान् सोऽहमित्येतद् विफलं वचः ॥"

(विष्णुपु० अ० २. अ० १३. श्लो० ८७)

"एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः ।
जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः ॥
परज्ञानमयो(य ? ऽस)द्भिर्नामजात्यादिभिर्विभुः ।
न योगवान्न युक्तोऽभून्नैव योक्ष्यति पार्थिव ! ॥

तस्यात्मपरदेहेषु सतोऽप्येकमय हि तत् ।
विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः ॥"

(विष्णुपु० अ० २. अ० १४ श्लो० २९—३१)

आत्मपरदेहेष्विति व्यवहारदशा, ऐकात्म्यस्य प्रस्तुतत्वात् । एकमयामिति च तत्रैव, सहौपाधिकभेदेनानुगताशेषस्वरूपावभासप्राधान्यात् । सतो विज्ञान-मिति पुरुषचैतन्यवदेव, न त्व(आ?)भेदालम्बनतया । तन्मय सद्विषयमौपदेशि-कविज्ञानम् । मुक्तिसाधनस्य तस्य पारमार्थ्यायोगात् । 'परमार्थो न साधनमि'-त्युक्तम् ।

"वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः ।
अभेदव्यापिनो वायोस्तथासौ परमात्मनः ॥"

(विष्णुपु० अ ०२. अ० १४. श्लो० ३२)

"सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तिदृष्टिभिरात्मापि तथैकः सन् पृथक् पृथक् ॥"

"एकः समस्त यदिहास्ति किञ्चित् तदुच्यते नास्ति पर ततोऽन्यत् ।

सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥"
"तत्याजभेदं परमार्थदृष्टिः ॥"
(विष्णुपु० अं० २. अ० १६. श्लो० २२—२३½)

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्य तज्ज्ञानं ब्रह्मसंज्ञितम् ॥"
(विष्णुपु० अं० ६. अ० ७. श्लो० ५३)

"आत्मभावं नयत्येनं तद् ब्रह्म ध्यायिनं मुने ! ।
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥"
(विष्णुपु० अ० ६. अ० ७. श्लो० ३०)

"तद्भावभावमापन्नस्ततोऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥
विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्त कः करिष्यति ॥"
(विष्णुपु० अं० ६. अ० ७. श्लो० ९३—९४)

इत्याद्याः ॥

---

विष्णुपुराणस्य प्रकृतिपुरुषविलक्षणसविशेषवस्तुपरत्वशङ्का।

अत्राह—'यतो वा इमानि भूतानि जायन्ते', 'सदेव सोम्येदमग्र आसीत्', 'तदैक्षत', 'तत् `जोऽसृजते'त्यादिश्रुतेः जगत्कारण ब्रह्मेत्यवसिते शास्त्रार्थे, तदुपबृंहणम्

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेद्"

इति विधीयते । तदेतज्जानानो मैत्रेयो

"देवतापारमार्थ्यं च यथावद् वेत्स्यते भवान्"
(विष्णुपु० अं० १. अ० १ श्लो० ३०)

इति पुलस्त्यवसिष्ठवरप्रदानलब्धदेवतापारमार्थ्यविज्ञान पराशरं मुनिवरं कारणविषयमेव पप्रच्छ भुवनकोशादिविषय च ।

"सोऽहमिच्छामि धर्मज्ञ! श्रोतुं त्वत्तो यथा जगत् ।
बभूव भूयश्च यथा महाभाग! भविष्यति ॥

यन्मय च जगत् सर्व यतश्चैतच्चराचरम् ।
लीनमासीद् यथा यत्र लयमेष्यति यत्र च ॥"

(विष्णुपु० अ० १. अ० १. श्लो० ८, ९)

इत्यादि । उत्तरयति च पराशरः—

"विष्णोः सकाशादुद्भूत जगत् तत्रैव च स्थितम् ।
स्थितिसंयमकर्तासौ जगतोऽस्य जगच्च सः ॥"

(विष्णुपु० अं०१. अ०१. श्लो० ३१)

इत्यादि । तत्र यदि निर्विशेषमेव ब्रह्म शास्त्रार्थः स्याद्, उक्तप्रश्नप्रतिवचने न सङ्गच्छेयाताम् । तद्विवरणरूप कृत्स्न च शास्त्रम् । एव तु ते स्यातां—कि प्रपञ्चभ्रमस्याधिष्ठान निर्विशेषचैतन्यमात्रमिति । एवं सङ्ग्रहोक्तविवरणाय प्रवर्तमानः 'अविकाराये'त्यादिना स्वेन रूपेण सकलजडजीवविलक्षणं परव्यूहविभवादिसर्वावस्थासु सकलहेयप्रत्यनीककल्याणैकस्वभावं सर्वात्मानं भगवन्तं प्रणम्य, 'नमो हिरण्यगर्भाये'त्यादिना त्रिमूर्तिरूपावस्थितम्, 'एकानेकस्वरूपाये'त्यादिना कार्यकारणावस्थं, 'सर्गस्थितिविनाशानामि'त्यादिना कालात्मकमाधारभूत, 'विश्वस्ये'त्यादिना

"जीवभूतां महाबाहो! ययेद धार्यते जगद्"

इत्युक्तक्षेत्रज्ञसमष्टिरूपावस्थित च नत्वा क्षेत्रज्ञव्यष्टिविशिष्टं नमस्यति 'ज्ञानस्वरूपमि'त्यादिना । ज्ञानैकाकारस्यात्मनो देवादिभेददर्शन भ्रान्तिदर्शन, तेन तद्द्वारेण देवादिरूपेण स्थितमित्यर्थः । अन्यथा निर्विशेषब्रह्ममात्रपरत्वे

"निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ।
कथ सर्गादिकर्तृत्व ब्रह्मणोऽभ्युपगम्यते ॥"

(विष्णुपु० अं०१. अ०२. श्लो०१)

"शक्तय: सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥
भवन्ति तपता श्रेष्ठ! पावकस्य यथोष्णता।"

(विष्णुपु० अ०१. अ०३. श्लो० २, २½)

इति परिहारो न घटेत। चोद्ये निर्गुणत्वोक्त्यैवाशेषविशेषनिषेधसिद्धावप्रमेयत्वादिविशेषणवैयर्थ्यात्। उत्तरे सर्वशक्तियोगवचनायोगाच्च। एव तु प्रत्युच्येत — निर्गुणस्य ब्रह्मणो न पारमार्थिकः सर्ग, अपि तु भ्रान्तिकल्पितः। तत्र च दुर्घटत्व भूषणमिति। तथाच सत्त्वादिगुणयुक्तोऽपरिपूर्ण कर्मवश्यो हि कर्ता भवति। नैव ब्रह्मेति चोद्यार्थ.। न ह्येकरूपा भावा भवन्ति। अतः समस्तविश्वविजातीयस्य ब्रह्मणः सर्वशक्तियो(ग उ)पपद्यत इति परिहारार्थः।

'परमार्थस्त्वमि'त्याद्यपि नान्यस्य स्वरूपेण मिथ्यात्व ब्रवीति। एकशब्दोपादानाद्, जगतः पते! येन त्वयैतच्चराचरं व्याप्तम्, एष व्याप्तिलक्षणस्तव महिमेति जगतो व्याप्यस्य सतः शेषत्वाभिधानाच्च। किन्तु कृत्स्नशरीर ब्रह्मैकं स्वप्रधान परमार्थः। अतच्छरीरभूतमस्वप्रधानं चान्यन्मिथ्येति, सर्वस्यैव तदात्मकतया ब्रह्मविशेषणत्वात्। अन्यथा तवैषा भ्रान्तिरित्युच्येत। जगतः पते! इत्यधिष्ठानलक्षणा च स्यात्। किमिति तर्हि शुक्लादि द्रव्यपर्यन्तमिव जगदात्मपर्यन्तमस्वतन्त्र न प्रतियन्ति, ब्रह्मणोऽज्ञानात्। यत् कारण दृश्यमानभेतज्ज्ञानात्मनस्तव मूर्तं रूप शरीरभूतमेव सदयोगिनः सदात्मकत्वरहित केवलदेवमनुष्यादिरूपमेव भ्राम्यन्ति। तथाचान्यथासिद्धा जगतः स्वातन्त्र्यप्रतिपत्तिरपरोक्षापि शास्त्रीयपारतन्त्र्यप्रतिपत्तिबाध्येत्युच्यते — 'यदेतद् दृश्यते' इति। न तु जगदसत्यत्व न केवल त्वया सात्मके जगति स्वामजानतां स्वातन्त्र्यविभ्रमः, देहातिरिक्तमात्मानमप्यजानतां देहभेदेषु स्वातन्त्र्यविभ्रम इत्युच्यते — 'ज्ञानस्वरूपमखिलमि'ति। एवं च न पौनरुक्त्यम्। अत्र

"त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।
मोहित नाभिजानाति"

इत्यत्रैवाखिलं जगदिति चेतनपरम् । अत्र ज्ञानैकाकारस्य देवाद्यर्थरूपत्वदर्शनं भ्रम इत्युच्यते । न त्वर्थदर्शनमेव । योगलब्धज्ञानात्मविज्ञानास्तु ज्ञानात्मना त्वया सात्मकमखिल जगत् त्वच्छरीर च पश्यन्तीति निगद्यते—'ये तु ज्ञानविद' इति । अन्यथा जगतः पते! परमेश्वर! तवैष महिमा, त्वमित्यादिशब्दासामञ्जस्यप्रसङ्गात् । आदिवराहस्तुतिप्रकरणविरोधाच्च । स्तोतृणामद्वैतात्मविज्ञाने स्तुत्यनुपपत्तेः । तदभावे च नितरा, शास्त्रोपक्रमादिविरोधाच्च ।

"ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदाञ्जानीहि विज्ञानविजृम्भितानि ॥"

(विष्णुपु० अं० २. अ० १२. श्लो० ३९)

इत्यत्र च न वस्तुभूत इति न स्वरूपत एव शैलादिमिथ्यात्वपरम् । नापि विविधं विपरीत वा ज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञानशब्दस्याविद्यावाचित्वे विज्ञानविजृम्भितानीत्याविद्यकत्वमुच्यते । सर्वज्ञस्य ज्ञानात्मक(स्य?स्या)ज्ञानतद्विभ्रमसम्बन्धानुपपत्तेः । प्रकरणविरोधाच्च । भुवनकोशस्वरूपप्रपञ्चन हि प्रस्तुतम् । तन्मिथ्यात्वविवक्षायां च प्रागेव भ्रान्तस्य भ्रान्तिपरिष्कारवैयर्थ्यात् । किन्तु 'यदंबु वै(ष्ण.? ष्णव·) काय' इति निर्दिष्टसमष्टयवस्थचिदचिच्छरीरस्य परमात्मनः ससृष्टचिद(चि)द्व्यष्टिशरीरत्व

"ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।
नद्यः समुद्राश्च स एव सर्वम्" (विष्णुपु० अ० २. अ० १२. श्लो० ३८)

इति सामानाधिकरण्येनोक्त्वा, जीवं प्रति सङ्घातस्यैव शरीरत्वं नान्यथेति दर्शनाद् इहापि तथा मा भूदाशङ्केति निष्कृष्टचिदचिद्व्यष्टीनामप्यात्मशरीरत्वं वक्तुं 'यदस्ति यन्नास्ति च विप्रवर्ये'ति सदसदात्मकौ चिदचितौ विष्ण्वात्मकतया निर्दिष्टौ । तयोरस्तिनास्तिसत्यासत्यशब्दाभिधेयत्वे निमित्तं नाबाध्यत्वबाध्यत्वं, किन्तु परिणामित्वापरिणामित्वमिति 'सत्य चानृतं च सत्यमभवदि' त्यादिश्रुत्यर्थप्रतिपत्त्युपयोगाय निरूप्यते । अस्पृष्टाचिदशक्षेत्रज्ञरूपो भगवान्

ज्ञानैकाकारस्वभावो न देवादिवस्तुभूतः । ततः शैलादयो देवादयश्च विज्ञानविजृम्भितानि । क्षेत्रज्ञस्य वैविध्यज्ञान विज्ञान, तस्य विजृम्भितानि तद्धेतुकर्ममूला(स्त)द्विकासतयोपचर्यन्ते । देवाद्याकारानुसन्धानहेतुकर्ममूला इत्यर्थ । 'निजकर्मभेदविभिन्नचित्तै.', 'सर्वकर्मक्षय' इतीह, अन्यत्र च 'बाह्यकर्मावृतिप्रज.', 'भूपैते कर्मयोनयः', 'देवाद्या. कर्मयोनयः' इति कर्ममूलत्वाभिधानात् । तथाच विज्ञानात्मा सदैकरूपतया सत्यात्मक. । अन्यच्च क्षेत्रज्ञकर्मानुगुणपरिणामतयानवस्थिते. नास्त्यात्मकमित्युक्त भवति । विज्ञानविजृम्भितत्वमेव व्यतिरेकमुखेनाख्यायते —

"यदा तु शुद्धं निजरूपि सर्वं कर्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥"

(विष्णुपु० अं० २. अ० १२. श्लो० ४०)

ज्ञानैकाकार आत्मा देवादिभेदानुसन्धानमूलकर्मक्षये निर्दोषः शरीरसम्बन्धरहितः शु(द्ध)स्तत्कृतरागद्वेषादिहीन आविर्भूतस्वरूपश्च भवति यदा, तदा चिदचिदेकीकारेण देवाद्यात्मकल्पनामूलकर्मफलभूताः सुखाद्युत्पादकभोग्यदेवाद्याकारभेदा वस्तुशरीरकेषु जीवेषु न भवन्ति । एतेनात्मनित्यत्वमचित्कादाचित्कत्व चास्तिनास्तिशब्दवृत्तिनिमित्तमुक्त भवति । प्रतिक्षणमचिद्वस्तुनोऽन्यथाभावाच्चैवमित्याह —

"वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् ।
यच्चान्यथात्वं द्विज ! याति भूयो न तत् तथा तस्य कुतो हि तत्त्वम् ॥"

(विष्णुपु० अं० २. अ० १२. श्लो० ४१)

नित्य हि वस्त्वस्तिशब्दाभिधेयं, तादृश च किम् । कुत्रचिदचिद्वर्गे दृष्टचरम् । यच्च प्रतिक्षणमन्यथा भवति न तत् तथा, उत्तरोत्तरपरिणामेन पूर्वपूर्वपरिणामापायात् । कुतः प्रमाणात् तस्य तत्त्व, तदिदमित्यप्रत्यभिज्ञानात् । न प्रागवस्थत्वं हि, तस्माद् नास्तिशब्दाभिधेयमिति । तदेतदुदाहरति —

"मही घटत्व घटत. कपालिका कपालिका चूर्णरजस्ततोऽणुः ।
जनै. स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥"

(विष्णुपु० अ० २. अ० १२. श्लो० ४२)

स्वकर्मनिर्मितदेवादिदेहसम्बन्धप्रतिबद्धात्मनिश्चयैर्बहिर्दृष्टिभिरपि भोग्यत्वेनोपलभ्यमानमेव प्रतिकलमन्यथा भवति । किमेवं सति वस्त्वस्तिशब्दार्हम् । एतदुक्तमन्यत्रापि —

"यत् तु कालान्तरेणापि नान्यसञ्ज्ञामुपैति वै ।
परिणामादिसम्भूत तद् वस्तु नृप! तच्च किम् ॥"

(विष्णुपु० अ० २. अ० १३. श्लो० ९६.)

इति । यस्मादेवं,

"तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् क्वचित् कदाचिद् द्विज! वस्तुजातम्
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाप्युपेतम् ॥"

(विष्णुपु० अं० २. अ० १२. श्लो० ४३)

विज्ञानातिरिक्तं सर्वमेवाचिद्वस्तु न केवलास्तिशब्दवाच्यम् । विज्ञान पुनरनेकत्वेऽपि

"एको व्रीहिः सुनिष्पन्नः सुपुष्ट कुरुते प्रजाः"

इत्यादिवदेकप्रकारतयैकत्वव्यपदिष्टं कर्ममूलदेवादिशरीरानुप्रवेशेन देवाद्याकारविषयभेदविभिन्नबुद्धिभि. बहुप्रकार विभाव्यते । न स्वाभाविको ज्ञानात्मप्रकारभेद इत्याह —

"ज्ञान विशुद्धं विमलं विशोकमशेष*लोभादिनिरस्तसङ्गम् ।
एक सदैकं परम परेश स वासुदेवो न यतोऽन्यदस्ति ॥"

(विष्णुपु० अ० २ अ० १२. श्लो० ४४)

---

* 'शब्दादि' इति मुद्रितविष्णुपुराणपाठ. ।

कर्माविद्याहीनतया तन्मूलदेहसम्बन्धरूपमलाभावे तत्कृतशोकमलाभावो (वि)-शुद्धत्वादिनोच्यते,

"अश्व इव रोमाणि विधूय पाप चन्द्र इव राहोर्मुखात् प्रमुच्य( ते? )
धूत्वा शरीरमकृत कृतात्मा"

इति श्रवणात् । अनेकावयवत्वाभावेनात एवोपचयाद्यभावेन च द्विरेकपदम् । सवासुदेव इति च शरीरशरीरितया । न यतो वासुदेवादन्यत् स्वपर्यवसितमस्ति, सर्वस्यैव ब्रह्मणा सात्मकत्वात् । नाचिदंशस्वरूपनिषेधः,

"तदेतदक्षय नित्य जल मुनिवराखिलम्"

इति विरोधात् । परमतोक्तिशङ्कानिरासेनोक्तार्थमुपसहरति —

"सद्भाव एव भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत् तु यत् सव्यवहारभूत तत्रापि चोक्त भुवनाश्रित ते ॥"
(विष्णुपु० अ० २. अ० १२. श्लो० ४९)

यथा ज्ञानमिति चिदात्मनो ब्रह्मशरीरत्वमनुसन्धत्ते । यथा सत्यं यथा चासत्यमिति परिणामित्वापरिणामित्वेन सत्यासत्यशब्दप्रवृत्तिनिमित्ते अनुस्मरति । अत्र ह्यन्यदसत्यमिति च यन्नास्ति चेत्युपक्रान्तनास्तिशब्दार्हतामाह, न तुच्छत्वं, न वा ज्ञानबाध्यत्वम् । 'वस्त्वस्ति किं', 'मही घटत्वमि'त्यत्र परं पर परिणामान्तरमापद्यमाने वस्तुनि पूर्वपूर्वपरिणामविनाशाद् नास्तिप्रत्ययनिमित्तं विनाशार्हत्वमेव नास्तिशब्दार्थत्वनिमित्तमुच्यते । नचैवंविधस्य प्रमाणसम्बन्धानर्हत्वलक्षण तुच्छत्वम्, अस्तित्वप्रत्ययैकदेशकालनास्तित्वप्रत्ययविषयत्वलक्षण बाध्यत्व वासत्यत्व घटते । 'अनाशी परमार्थश्चे'त्यत्र च नाशित्वमेवापरमार्थत्वेऽसत्यत्वे निबन्धनमित्युक्त भवति । तस्मात् सर्वत्रैव यदनाशि नित्यं चिदात्मक, तत् सत्य सदैवास्तिशब्दार्ह परमार्थश्चेत्युच्यते । यच्चाचिदात्मक परिणामभेदेन विनाश्यनित्य, तदसत्य नास्तिशब्दार्हमपरमार्थश्चेत्युच्यते । एतत् तु ज्ञानं समस्वभावमनिर्देश्यभेदमपि भुवनाश्रित चिन्मिश्र सद् देवमनुष्यादिव(त्) स्पष्टभेदेन सम्यग्व्यवहार भूत प्राप्त यद् वर्तते, तत्रापि चोक्त कर्मैव हेतुरिति ।

'यज्ञः पशुः' (विष्णुपु० अं० २. अ० १२. श्लो० ४६) इत्यादिना तदेव कर्मरूपमुपवर्ण्य

"यच्चैतद् भुवनगतं मया तवोक्त सर्वत्र व्रजति हि[1] तत्र कर्मवश्यः"

(विष्णुपु० अ० २. अ० १२. श्लो० ४७)

इत्यग्रे निर्देशात् । तस्मान्नात्र विशेषनिषेध उपलक्ष्यते । 'यद्यन्योऽस्ती'त्यादौ च नात्मनो भेदमाक्षिप्याभेदो विवक्ष्यते। जीवबहुत्वस्य श्रुतिसिद्धत्वात्। 'सर्वे एत आत्मानो व्युच्चरन्ति' इति लिङ्गात् । अचिद्विशिष्टस्य जनिमृतिमत्त्वे सति

"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्"

इति निष्कृष्टनित्यचेतनबहुत्वाम्नानात् । विविक्तात्मभेद(स्य ? स्या)पूर्वत्वेन तात्पर्यविषयत्वोपपत्तेः । आत्मैकत्वे भिन्नशरीरावच्छे(द)वृत्तेरपि सुखादेरप्रतिबन्धे सति पादाद्यवच्छेदवृत्तेरिव स्वैकसम्बन्धानुसन्धानप्रसङ्गाद् । बद्धमुक्तव्यवस्थायोगाद्, उपदेशानुपपत्तेश्च । गुरोरज्ञत्वे तदयोगात्, तज्ज्ञत्वे चोपदेश्याद्यभावात् । किन्तु ज्ञानैकाकारतया प्रकाराद्वैतमेव । ब्रह्माद्वैत जीवाद्वैतमिति ह्यद्वैत द्विविधम् । तत्राद्य प्रकार्यद्वैतम् । द्वितीयं प्रकाराद्वैतामिति । तत्र भेदनिषेधः

"पुमान् न देवो न नरो न पशुर्न च पादप."

(विष्णुपु० अ० २. अ० १३. श्लो० ९४)

"चतुर्विधोऽपि देहोऽय मिथ्याज्ञाननिबन्धनः ।"

"देवादिभेदेऽपध्वस्ते" (विष्णुपु० अं० २. अ० १४. श्लो० ३३) इत्यादिश्रुतविशेषविषयेऽवस्थाप्यते ।

"अहं त्वं च तथान्ये च तत्र स्वमहमप्यथ"

इत्यादि(प्र ? प्रा)करणिकवचनानुरोधादेकत्वादिवचनस्य च 'एको व्रीहिः सुनिष्पन्नः' इत्यादिवदाकारैक्यविषयत्वोपपत्तेः। 'पर. कोऽपी'त्यनूद्य 'यद्यन्योऽस्ती'ति प्रकारभेद आक्षिप्यते । अतो(ऽय)मीदृशः, अयमन्यादृश इति विविच्य दुर्वचामि-

1. 'हि कर्मवश्य एक ' इति मुद्रितविष्णुपुराणपाठ ।

ति। 'समस्तभूतेषु पुमानेक' इति वैजात्यबहुत्वैकजात्याभ्यामेव बहुवचनैकवचने। 'एको व्यापी'ति सर्वशरीरानुप्रवेशाभिप्रायम्। सर्वगत्वं स्वज्ञानेनोभय व्यत्ययेन वा। नामजात्यादीनामसत्त्ववचन कादाचित्कत्वाभिप्रायम्। तदत्यन्तायोगवचन चाद्वारकतयैवोपपाद्य, देहद्वारत्वात् तद्योगस्य। एव ज्ञानैकाकारत्वेन सर्वात्मनां सर्वदेहेषु समत्वे देवादिरूपेण भेददर्शनमतथ्यमित्युच्यते 'तस्यात्मे'त्यादिना। एकमयमिति शुद्धात्मनो बाह्यान्तरभेदकाभावादैक्यप्राचुर्यमुच्यते। अन्यथा देहेषु सदेक विज्ञानमेव परमार्थ इत्युच्येत, न त्वात्मपरदेहेषु सत एकमयं विज्ञानमिति। एव प्रकारैक्ये विहिते 'द्वैतिनोऽतथ्यदर्शिनः' इति देवादिवैजात्यदर्शिन उच्यन्ते। समदर्शिनमेव हि तत्त्वदर्शिनमिति भगवतोक्त—

"शुनि चैव श्वपाके च पण्डिता· समदर्शिनः"

इति। ननु 'द्वैतिनोऽतथ्यदर्शिनः' इति सामान्यापवादः कथ देवादिद्वैतविषयं नीयेत, आत्मद्वैतविषय वा, कथ पिण्डात्मा द्वैतमपि स्यात्। 'पिण्ड· पृथग्यतः पुस' (विष्णुपु० अ० २. अ० १३. श्लो० ८५) इति पिण्डात्मभेद· प्रामाणिक इति चेद्, आत्मभेदोऽपि तथेति। एवञ्च जात्येकत्वादात्मस्वेकवचन, वैजात्यबहुत्वाद् देहेषु बहुवचन च विवक्षयैव। तेन आत्मद्वैतानिषेधे 'विज्ञानम्' 'आत्मा शुद्ध·' इत्याद्येकवचनायोगः। जातावेकवचन च देहेऽपि स्यादिति निरस्तम्। शुद्धात्मनि वैजात्यविवक्षायोगात्। 'वेणुरन्ध्रविभेदेने'त्यापि नैकात्म्यमेव विवक्षितम्, 'आत्मपरभेदेष्वि'त्यादिविरोधादेव। किन्तु ज्ञानैकाकारस्यात्मनो देहसम्बन्धनिबन्धनं देवादिसञ्ज्ञितं वैषम्यमित्येतावदेव। दृष्टान्ते नैकरन्ध्रवर्तिना वाय्वशानां स्पर्शवद्द्रव्यतया भेदोपपत्ते·, वायुत्वैकाकारत्वमतिहायैकात्म्यासम्भवात्। नभोदृष्टान्तोऽप्येकस्यैवात्मनः पर्यायेण देवादिवैषम्यदर्शनाभिप्रायः। अथवा नभसोऽपि पञ्चीकरणादशभेदोपगमात्, अन्यथाण्वाकाशसयोगे सत्युभयोरणुत्वमहत्त्वान्यतरापत्तेः। अंशाना च नभसो भिन्नानामेकाकारत्वे वैषम्यदर्शनमौपाधिकमिवात्मनामपीत्येव नभो दृष्टान्तीक्रियते।

'सोऽहं स च त्वमि' यत्र ज्ञानैकाकारतया अभेदेन प्रस्तुत आत्मा स इति परामृश्यते। अहं त्व सर्वमेतद् अचित्संसर्गोपाधिनिबन्धनभेदावभासम्। आत्मस्वरूपं ज्ञानैकाकार आत्मेत्यर्थः। अन्यथा

"पिण्ड पृथग् यत· पुंसः शिर पाण्यादिलक्षण:"

इति विविक्तात्मोपदेशेऽधिकृते अह त्वमित्यादिभेदनिर्देशायोगात् । न चाहं त्वमिति विशिष्टविषयस्यैवात्मनि लक्षणा युक्ता । मु(ग्वः?ख्य)सम्भवाद् , यथोपदेश च ज्ञानैकाकारपरमार्थदृष्टि· देवाद्याकारभेदमोहं तत्याजेति ।

'प्रत्यस्तमितभेदमि'त्यादि च न निर्विशेषाद्वितीयब्रह्मपरं, तदुपक्रमोपसहारविरोधादित्युक्तम् । 'आत्मभाव नयत्येनमि'त्यत्रापि आत्मनः स्वस्य शक्त्या

"अविद्याकर्मसञ्ज्ञान्या तृतीया शक्तिरिष्यते"

(विष्णुपु० अ० ६. अ० ७. श्लो० ६१)

इत्युक्तया विकार्यं नेयावस्थाभेद ध्यायिन तद् ब्रह्म आत्मशक्त्या स्वसामर्थ्येनेति। ब्रह्मविशेषण वा आत्मभाव स्वभाव , कर्माविद्यापनयेन निर्दोषत्व नयति । दोषानाकर्षतीत्याकर्षकोऽग्नि· पुटपक्व लोहम् इह मलापनयनेन स्वभावम् ।

"यथाग्निरुद्धतशिख· कक्ष दहति सानिलः ।
तथा चित्तस्थितो विष्णुर्योगिना सर्वकिल्बिषम् ॥"

(विष्णुपु० अ० ६. अ० ७. श्लो० ७३)

इति तत्प्रकरणेऽभिधानात् । अथवा आकर्षकोऽयस्कान्तो यथात्मनः स्वस्य भाव चलनादि लोह नयति, तच्चलनादौ लोहचलनादिदर्शनात् । तथा ब्रह्म आत्मनो भाव सर्वज्ञत्वं सत्यकामत्व सत्यसङ्कल्पत्व कामा(त्री?न्नि)त्व कामरूपित्व कामचार इत्येवमादि नयति, तुल्यभोग करोति । अथवा यथायस्कान्तो दारुनिमग्न लोहमात्मभाव दारुत· पृथगाकृष्य स्वरूप निष्कर्ष नयति , तथा ब्रह्म प्रकृतिसम्बन्धाद् निष्कृष्य शुद्धता नयति । अथवा भवते· प्राप्तिकर्मणो भावशब्द· । एव चात्मभाव स्वप्राप्ति नयति । ओदनपाक पचतीतिवदित्येवमर्थभेदोपपत्तेर्नाभेदविवक्षा गम्यते । नह्याकर्षक प्राप्तस्य लोहस्य तदभेदः सम्भाव्यते । तथा ब्रह्म प्राप्तस्यापि, दृष्टान्ताज्ञस्यात् । 'तद्भावभावमापन्नः' इति च न स्वरूपैकत्वाभिप्रायम् । अत्रैव प्रकरणे

"विज्ञान प्रापक *प्राप्ये परे ब्रह्मणि पार्थिव! ।
प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावन ॥"

(विष्णुपु० अ० ६ अ० ७. श्लो० ९१)

* 'सर्व इति मुद्रितविष्णुपुराणपाठ..

इति तथाशब्देन ब्रह्मवद् ब्रह्मकर्मोभयभावनात्रयोत्तीर्णो विशुद्धात्मापि प्राप्य इति सोऽप्यनुसन्धेय इत्यभिप्रैति। तथा च यद् ब्रह्मणः प्रक्षीणाशेषभावनत्वं स्वभाव' स तद्भाव', तस्य भाव सत्तामापन्न.। स्वयमपि ज्ञानेन प्रक्षीणाशेषभावन इत्यर्थः। अन्यथा तद्भावमापन्न इत्येव स्वरूपैक्योक्तौ परभावपदवैयर्थ्यात्। 'भवत्यभेदी'। ज्ञानैकाकारतया परमात्मैकप्रकारः स्यात्। देवादिरूपो भेदस्तु तस्य तत्सम्बन्धहेतुकर्मरूपाज्ञानमूल इति।

*"एकस्य रूपभेदस्तु बाह्यकर्मावृतिप्रजः।
देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः॥"
(विष्णुपु० अ० २. अ० १४. श्लो० ३३)

इति ह्युक्तम्। 'सितनीलादी'त्यनेनात्मनो देहादिबाह्यभेदराहित्यमुक्तम्। आन्तरसुखादिभेदराहित्यमनेनोच्यते। बाह्यमात्मनोऽस्वाभाविक कर्मैवावृतिः स्वरूपज्ञानतिरोधानं, तेन प्रजायते। एकस्वरूपस्य रूपभेद' सुखित्वदु.-खित्वादिभेदः। स च देवादिभेदेऽपध्वस्ते नास्ति। अवरणो हि सः। सुखादिहेतुदेवादिदेहसम्बन्धमूलकर्मावरणशून्यत्वादित्यर्थः। 'विभेदजनके' इति चैकप्रकारस्यैव देवादिमयभेदजनके कर्मरूपाज्ञाने ब्रह्मदर्शनेनात्यन्तनष्टे पुनर्हेत्वभावादसन्तमनित्यं हेतुज देवादिभेद कः करिष्यति। हेत्वभावात्। ब्रह्मदर्शी न पुनरावर्तत इत्यर्थः। अन्यथास्यात्यन्तास्वरसत्वात्। जनकशब्दस्तावद् नाध्यासहेतौ स्वरसः। अज्ञानशब्दस्य चानिर्वचनीयपरत्वमव्युत्पन्नम्। व्युत्पन्न तु कर्मणि, 'अविद्यया मृत्यु तीर्त्वा', 'अविद्याकर्मसंज्ञान्या' इत्यादिप्रयोगात्। नाशशब्दश्च बाधे न स्वरसः। असन्तमिति च व्यर्थ, सद्भेदानुपगमेन व्यावर्त्याभावात्। अतो नाय जीवपरस्वरूपाभेदपरः।

'द्वे रूपे ब्रह्मणस्तस्य' इत्यादौ च क्षराक्षरशब्दितबद्धमुक्तशरीरकत्ववचनेन ब्रह्मणो भेदावगमात्। गीतासु च

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षर' सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥"

इत्यत्र ज्ञानसङ्कोचादिमत्त्वतदभावाभ्यां क्षराक्षरपुरुषौ बद्धमुक्तावु(च्य ? च्ये)ते। अत एवाविकारतया मुक्ता(त्म ? त्मा) कूटस्थः। विभूतिद्वयसाधारण्याद् वा। आभ्याम्

---

* 'एकत्व रूपभेदश्च बाह्यकर्मप्रवृत्तिज.' इति मुद्रितपुस्तकपाठ,।

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत",
"तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः"

इत्यादिषु

"यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः"

'तद् विश्वमुपजीवति', 'पतिं विश्वस्यात्मेश्वर', 'सर्वं व्याप्य नारायणः स्थित' इति हि श्रूयते।

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः",

'सोऽक्षरः परमः स्वराड्' इति मुक्तात्मशरीरकतया स ब्रह्मेत्यादिवत् सामानाधिकरण्यनिर्देशः ।

"यो मामेवमसंमूढो जानाति पुरुषोत्तमम्"
"एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत!"

इति बद्धमुक्तजीववैलक्षण्यस्य तात्त्विकत्वमभिप्रेयते । न चाविद्याससारतापसम्बन्धार्हस्य जीवस्य सर्वदैव तदनर्हब्रह्माभेदः सम्भवति । निर्मुक्तस्यापि स्थितिनाशयोरन्यस्यान्यतादात्म्यायोगात् । यथोक्त —

"परमात्मात्मनोर्योगः परमार्थ इतीष्यते।
मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ॥"
(विष्णुपु० अं० २. अ० १४. श्लो० २७)

इति।

न च स ब्रह्मणः सायुज्यं गच्छतीत्यभेदपरम् । युज्यते गुणिनेति युग् गुणः, समानगुणकः सयुक् , तस्य भावः सायुज्यमिति व्युत्पत्तिविरोधात् । 'एतासामेव देवताना सायुज्य सार्ष्टिता समानलोकतामाप्नोति' इति प्रयोगविरोधाच्च । नह्येकस्यान्यस्य सतो युगपदनेकाभेद सम्भवति । नापि क्रमेण, उपासनापरिपाकेन स्वोपाधिपरिच्छेदप्रहाण्याग्न्येकोपाधितया तद्भेदापत्तौ तद्विरोधिकर्मणोऽपि हानावश्यम्भावेन पुनरहेतुकस्वोपाधिकृतविभागायोगादग्न्युपाधिप्रहाण्यैवान्याभेदापत्तावग्न्यभावप्रसङ्गात् । पृथिव्येकीभूतपृथग्भूतघटादिवदग्न्येकीभूतपृथग्भूतजीवस्यानित्यत्वप्रसङ्गाच्च । तत्र यदि समानगुणकत्वमेव सायुज्यार्थः स एवान्यत्रापि युक्तः । अर्थभेदे गौरवात् । 'लीना ब्रह्मणि तत्परा योनिमुक्ताः' ।

"आत्यन्तिको विमुक्तिर्या लयो ब्रह्मणि शाश्वते"

(विष्णुपु० अ० ६. अ० ८. श्लो० १)

इत्यादौ लयशब्दोऽपि नाभेदार्थः। प्रतिसञ्चरभेदेषु लयशब्दस्यातदर्थत्वात्।

"प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी।
पुरुषश्चाप्युभावेतौ लीयते परमात्मनि ॥"

(विष्णुपु० अ० ६. अ० ४. श्लो० ३८)

इत्यादौ स्वरूपाभेदविवक्षाया

"हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते।
यद्भाविताः प्रपद्यन्ते तस्मात् तत् तस्य रोचते ॥"

(विष्णुपु० अ० १. अ० ५. श्लो० ६०)

'तेषां यो यानि कर्माणि' इत्यादिविरोधात्। तत्रोपाकृतनामरूपावस्थाविनाशेन कारणद्रव्यसश्लेषार्थत्वेऽत्रैवार्थान्तरकल्पने गौरवात्। 'ब्रह्म वेद ब्रह्मैव भवती'-त्यादि तु वेदितुर्ब्रह्मपर्यन्तस्वरूपाविर्भावाभिप्रायम्।

"तथा विद्वान् नामरूपाद् विमुक्तः परात् परं पुरुषमुपैति दिव्यम्"

इति श्रुतेः प्राकृतनामरूपविमुक्तस्य प्राप्यब्रह्मसमानाकारतया प्रकाराभेदपरोऽय व्यपदेशः। प्रकारैक्येऽपि सोऽयं व्रीहिः,

"यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥"

इत्यभेदव्यपदेशदर्शनात्। अत एव

"एकः शुद्धोऽक्षरो नित्यः सर्वव्यापी तथा पुमान्।
सोऽप्यंशः सर्वभूतस्य मैत्रेय! परमात्मनः ॥"

(विष्णुपु० अ० ६. अ० ४. श्लो०३५)

इति विशुद्धमेव प्रत्यगात्मानं परमात्मभेदेन व्यपदिशति। तस्मान्नात्मनिर्विशेषत्वं विशेषमृषात्वम् ऐकात्म्यं वा कचित् प्रतिपद्यामहे इति ॥

## सिद्धान्तः - उपबृंहणस्वरूपम्।

अत्रेदं वक्तव्यम्। किमित्येव सर्वत्र शब्दस्वरसलभ्यमर्थमुल्लङ्घ्य क्लिष्टार्थकल्पना नान्त्रिकस्येति। न। आगमो हि कारणात्मावसायीत्युक्तम्। न चानधीतशाखान्तरार्थैः सहाधीतशाखार्थनिष्कर्ष उपबृंहण, येनोपबृंहणविधिसामर्थ्येन सविशेष ब्रह्म शास्त्रार्थ इति. 'अपिच स्मर्यते' (ब्र० १. ३. २३) 'स्मृतेश्च' (ब्र० १. २. ६) इत्यादावागमाधिगतानतिरिक्तविषयस्मरणोदाहरणात्। किन्तु पुरुषदोषापनयेनाधिगतार्थावधारणमेव. अखिलागमवेदिमुनिवचनसंवादेनावगतिदार्ढ्योपपत्तेः॥

---

## विष्णुपुराणोपक्रमप्रश्नप्रतिवचनस्वारस्यविमर्शः।

यत्तु इह सविशेषपरत्व एव प्रश्नप्रतिवचनाद्यानुगुण्यमिति, तदिद परीक्षका विदाङ्कुर्वन्तु। प्रष्टव्यो हि मुनिर्देवतापारमार्थ्यविदुच्यते। पृष्टार्थनिर्णयसामर्थ्योपपादनाय तत्र यद्यपि देवताशब्देन कर्मज्ञानाराध्य सविशेष ब्रह्मोच्येत। तथापि तस्या पारमार्थ्यमतिक्रान्तविशेष भावमात्रम्। यथावद् अबाधितं वेत्स्यते इति विशेषणेन निर्विशेषवेदनमेवाभिप्रेयते। अन्यथा देवतां वेत्स्यत इत्येवोच्येत। देवताशब्देनैवोभयलिङ्गतयाराध्यत्वेऽभिधेये शेषवैयर्थ्यात्। त चानु मुनि 'त्वत्तो हि वेदाध्ययनमधीतम्' इत्यारभ्य

*"मामन्ये नाकृतश्रमम्।

वक्ष्यन्ति सर्वशास्त्रेषु" (विष्णुपु० अ० १. अ० १. श्लो० ७)

इति स्वस्य सर्वशास्त्रज्ञतामुक्त्वा मैत्रेयः प्रश्नमवातीतरत् 'सोऽहमिच्छामी'त्यादिना। तस्य च प्रश्नमूलपरीक्षायां निर्विशेषस्याद्वितीयस्य निरञ्जनस्य कारणत्वादिविशेषायोगानुसन्धानमेवानुसर्तव्यम्, एवमनुद्घाटिताभिसन्धिके प्रश्ने 'विष्णो. सकाशादि'त्यादिना यथाशास्त्रमुत्तरिते, 'निर्गुणस्ये'त्यादिनाभिमहितप्रश्नबीजोद्घाटनात्। अत एव ब्रह्मरुद्रादिषु विशेषानवधारणात् प्रश्न इति निरस्तम्, प्रश्नबीजस्यान्यथोद्घाटितत्वात्। अन्यथा त्रिभ्योऽन्यस्मादित्येव प्रत्युच्येत। त्रिमूर्त्युत्तीर्णस्यैवेह शास्त्रे कारणत्वेन विवक्षितत्वात्।

"शक्तयो यस्य चैकस्य ब्रह्मविष्णुशिवात्मिका."
"ब्रह्मविष्णुशिवा ब्रह्मन्! प्रधाना ब्रह्मशक्तयः"
(विष्णुपु० अ. १. अ० २२. श्लो० ५७)

---

* 'मयाधीत श्रमः कृत' इति मुद्रितविष्णुपुराणपाठः

इत्याद्यभिधानात् । प्रश्नबीजाज्ञान वा प्रतिवक्तुः कल्प्येत । 'निर्गुणस्ये'त्यादि च प्रश्नान्तर प्रसज्येत । 'जुषन् रजोगुणमि'त्यादिना प्रागेव गुणान्वये गदिते 'निर्गुणस्ये'त्यादिप्रश्नश्च न सङ्गच्छेत । सद्वारकेऽपि गुणान्वये सर्गादिकर्तृत्वाविरोधात् । न खल्ववद्यत्वेऽपि गुणत्रयवश्यत्व, सापेक्षत्व कर्माधीनफलभाक्त्वमन्यद्वा सदपि कर्तृत्वे प्रयोजकं, येन ब्रह्मणि तदयोगादकर्तृत्वमाशङ्क्येत। विदुषि विहारिणि (परो?) परोपकारि(णि) च व्यभिचारात् । न च क्वचित् सहचारमात्रेणाप्रयोजकाभावादप्रयोज्यायोगाशङ्का सङ्कलिताशेषशास्त्रस्यात्रस्यता मैत्रेयस्य यस्यकस्यचिदिव शक्यते कल्पयितुम् । तदयमर्थः—गुणवैषम्यविमर्दमूलः सर्गादिः । आत्मा च तमस. परस्तात् केवलो निर्गुणो निरवद्यो निरञ्जनः । सृज्य चाचेतनम् । आत्मा पुनरप्रमेयः स्वयञ्ज्योतिस्स्वभावविसजातीयः । निर्गुणत्वमप्रमेयत्व चानुपादानत्वे हेतुः, शुद्धत्वममलात्मत्वं च कर्तृत्वाभावे । अतो विशेषणवैयर्थ्यम् । कार्यकरणवानशुद्धः कामसङ्कल्पादिमलानुगत' कर्ता । ब्रह्म चाकायमव्रणमस्नाविर शुद्धमपापविद्धमात्मकाममाप्तकाममकाममिति कथ सर्गादिकर्तृ उपादानं वोपगम्यत इति । एव प्रश्ने 'शक्तयः सर्वभावानामि'त्याद्युत्तरम् । तत्र यदि ब्रह्मण. स्वगतशक्तिमत्त्वेन सविशेषत्वमवस्थाप्येत मृदादिवद् विकारित्वमापद्येत । ततश्चानित्यत्वादयो दोषाः। मृदादेरपि हि विकारित्व स्वशक्त्यान्यथाभाव एव । न चाविकारित्वशक्तिरपि स्वाभाविकी परमात्मनः

"मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥"

इतीश्वरेणैवात्मनः शक्तिवैचित्र्युपवर्णनादिति वाच्यम् । वस्तुस्वभावविकल्पायोगात् । स्वभावेन कल्पनया च सर्वसम्भवेऽगतिकविरुद्धशक्तिवैचित्रीकल्पनावैयर्थ्याच्च । अन्यथा ब्रह्मणि स्वशक्त्यैव चिदचिद्भेदाभेदसम्भवे किं विशिष्टाभेदोपपादनक्लेशेन । आह च भगवान् पराशरोऽतिक्रान्तसर्वभावशक्तेरविक्रियस्यासङ्गस्यैवात्मनः सन्निधिमात्रेण भावशक्त्येकमूलसर्गादिहेतुत्व

"यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते ।
मनसो नोपकर्तृत्वात् तथासौ पुरुषोत्तमः ॥"

(विष्णुपु० अं० १. अ० २. श्लो० ३०)

"निमित्तमात्रमेवासौ सृज्यतां सर्गकर्मणि ।
प्रधानकारणीभूता यतो वै सृज्यशक्तय ॥
निमित्तमात्र मुक्त्वैव नान्यत् किञ्चिदपेक्ष्यते ।
नीयते तपता श्रेष्ठ! स्वशक्त्या वस्तु वस्तुताम् ॥"
(विष्णुपु० अ०१. अ०४ श्लो०९१, ९२)

इति । सन्निधिरत्र विषयभावः । विषयभावेन क्षोभकतामात्रे दृष्टान्तः । सदालम्बनेन हि प्रकृत्यादिक्षोभ' । अन्यथा निस्स्वभावत्वात् । न च प्रकृत्यादिविषयभावोऽपि ब्रह्मण स्वभाव , अनपवर्गप्रसङ्गात् । किन्तु प्रकृतिकृतो विकल्प एव । निमित्तमात्रमेवासाविति च कथञ्चिदपि (दपि ?) क्रियाननुप्रवेशेन केवलमधिष्ठानतया मृज्यात्मलाभौपयिकतोच्यते । न च क्रियानिष्पत्ताववश्यं निमित्तव्यापारोऽपेक्ष्यते अद्यत्वेऽपि । बीजादिशक्त्यैव कूटस्थ एव कालादावङ्कुरकुसुमादिसर्गदर्शनादित्याशयेनोक्त 'निमित्तमात्रं मुक्त्वैवे'त्यादि । इहापि च सर्वभावानां शक्तय इत्युक्त्वा तास्तु भावशक्तयो ब्रह्मण इत्युच्यते । यदि हि ब्रह्मण एव शक्तयो विवक्ष्येरन्, भावपदानर्थक्यमापद्येत । न च भावः सत्ता तत्प्रयुक्ता निरुपाधिकाः स्वाभाविक्यः शक्तय इत्यधिकोपक्षेपो युक्तः । 'शक्तयः सर्वभावानामि'ति षष्ठीनिर्दे(श)विरोधात् । प्रकृतहाने च तद्वृत्तस्य सदृशवृत्तिकल्पनागौरवाच्च । तदयमर्थ —सर्वेषां भावानामव्यक्तादिविशेषान्ताना याः काश्चिदचिन्त्यज्ञानगोचराः शक्तयः । नहि भावशक्तयस्तर्कितुं शक्यन्ते । यथाण्व्या वटधानाया महावटसस्थानशक्ति , शुक्लकणिकाया वा कायसस्थानशक्तिः । न च विज्ञातुम् । एकैकस्यैव शक्यानन्त्येन शक्त्यानन्त्यात् । ता यतो ब्रह्मण एव । 'परास्य शक्तिर्विविधैव श्रूयते' इति श्रुते. । अतस्तस्यैव सर्गादिगोचरा भावशक्तयो भवन्ति । अथवा यतोऽचिन्त्यज्ञानगोचरा', अतो ब्रह्मण एव ता भावशक्तयो भवन्ति । ब्रह्म ह्यचिन्त्यशक्ति प्रसिद्धम् । भावशक्तयो ब्रह्मण इति तस्यैव सर्वभावविवृत्तत्वादिति गम्यते । दृश्यते हि फणिशक्ति. प्रतिभयत्वादिका तद्रूपविवृत्तायाः स्रज एवेति । एव चार्थादधिष्ठानभावेन नियन्तृतयौपाधिकसङ्कल्पादिमत्तया वा कर्तृत्वमप्युपपादित भवति । न चात्र पावकस्य यथोष्णता द्रव्यत्वेऽपि गगनपवनादिविसजातीयतया, एव ब्रह्मणोऽपि समस्तवस्तुविसजातीयतया सर्गाद्याः शक्तयो भवन्तीति विवक्षा युक्ता ।

भावशक्तय इति विशेषणविरोधात् । किन्तु भावशक्तयोऽचिन्त्या इत्युक्तमुदाहरणेन दर्शयति । पावकस्यैवोष्णता, न पाथस. । तस्य स एव स्पर्शो नान्यः । तत एव दाहादिर्नान्यत. । कुत एवमिति हेतुरूपकार्यैरतर्क्यस्वभावा च सा । एवप्रकारा भावशक्तय इति ।

केचिदाहु' — शक्तयः सर्वभावानामचिन्त्य स्वप्रभं ज्ञानं ब्रह्म तद्गोचरास्तदधिष्ठाना यतः, अतः सर्गाद्याः स्रष्टृत्वसृज्यत्वादिमय्यो भावशक्तयो ब्रह्मणो भवन्ति । दीपाद्युष्णतेव तदुपादानस्याग्नेरिति ।

यत्तु, सत्यं निर्विशेषस्य न वास्तव. सर्गः । किन्तु भ्रान्तिमात्रमिति प्रत्युच्येतेति । तत् तुच्छम् । स्वतन्त्रस्य नियोगाद्यनर्हत्वात् । एवमपि तदर्थासिद्ध्युपपत्ते. । अनन्तरमेव परमार्थतो ज्ञानस्वरूपमेव 'आर्थस्वरूपेण भ्रान्तिदर्शनत. स्थितमि'त्यभिधानाच्च । एव प्रागाविद्यकत्वापरिज्ञानान्मैत्रेयस्य किं प्रपञ्चभ्रमस्याधिष्ठानमिति न प्रश्नप्रवृत्तिः । उत्तरे तु 'जगच्च स' इति सामा(ना)धिकरण्योपक्षिप्तोऽर्थोऽर्थस्वरूपेण 'भ्रान्तिदर्शनतः स्थितमि'ति हि स्फुटितः ।

ननु च 'यन्मय च जगदि'ति प्रश्नस्योत्तरं जगच्च स इति । तत्र-यदि मयड् विकारार्थ' स्याद्, उपादान पृष्ट स्यात् । तत्तु पृष्ट 'यतश्चैतदि'त्येव । न च गोबलीवर्दनय , अर्थान्तरसम्भवात् । नापि स्वार्थिक , अर्थान्तरसम्भवात् । अपिचैव प्रतीतजगद्रूपप्रश्नायोगेन तस्य सत्यासत्यत्वविषयः स (ङ्क'क)ल्प्येत । तत्र चाकारद्वयोपस्थापकसामानाधिकरण्येन जगच्च स इति प्रतिवचन विरुध्येत । न च बाधायां सामानाधिकरण्य लक्षणापातात्, पदार्थबाधे सामानाधिकरण्यव्याघाताच्च । किञ्चैव जगत्पदस्यासङ्कुचद्वृत्तितया जीवस्यापि बाधः स्यात् । अन्यथान्यस्य बाधेऽन्यस्याभेदे च बोध्ये शब्दवृत्तिवैरूप्यापातात् । ननु 'भोक्ता भोग्य प्रेरितार च मत्वा', 'सर्वं प्रोक्त त्रिविध ब्रह्ममेतदि'ति सर्वब्रह्मसामानाधिकरण्यवैरूप्य तवापि वाच्यम् । प्रेरितरि स्वरूपभेदादन्यत्र शरीरशरीरिभावादिति चेत् । नहि शरीरशरीरिभाव एव सामानाधिकरण्यार्थ. , किन्तु पदार्थभेद एव । ब्रह्मणि तत्तत्पदवृत्तिः

परं शरीरशरीरिभावेनान्यथा वोपपाद्येत्यन्यदेतत्। न च जायते गच्छति च जानातीति जगद् जीव एव, तस्य च स्वरूपाभेदे सामानाधिकरण्यावैरूप्यमिति वाच्यम्। सर्वसम्भवे शब्दवृत्तिसङ्कोचायोगात्। 'यन्मय च जगत् सर्वमि'ति प्रश्नाननुरूपत्वापत्तेश्च। एतेन 'ब्रह्मैवेदं विश्व', 'स एवेद सर्वमि'-त्यादौ विशति शरीराणीति विश्व सरति लोकाल्लोकान्तरामिति सर्वमिति कथञ्चिज्जीवोक्तौ सामानाधिकरण्यावैरूप्यमिति निरस्तम्। सर्वनामनीह विश्वादिशब्दे सम्भवति योगकल्पनायोगात्। 'ब्रह्मैवेदममृत पुरस्तादि'त्याद्युक्त जडसामानाधिकरण्यं पुनरवक्तव्यमिति योगकल्पनेति चेत्। न। तत्रापि सङ्कोचहेत्वभावात्, पृथगुक्तस्यापि समासेनानुक्तसमाहारमुपसंहारोपपत्तेः। अन्यथा पराग्वृत्तेदमैकाधिकरण्यक्लीबनिर्देशासाङ्गत्यात्। न चौपाधिकजीवस्य ब्रह्मापेक्षया पराग्भावाद् 'अनेन जीवेने'त्यादिवदिदंवृत्ति. स्यात्, क्लीबनिर्देशश्चानि-(र्दि)ष्टविशेषतया सामान्यवृत्तत्वादि(ति) वाच्यम्। 'ब्रह्मैवेदं विश्वमि'त्यादिपरोक्षोपदेशे ब्रह्मापेक्षाबुद्ध्यनवकल्पनात्। योगेन जीवमात्रवृत्तितया सामान्यवृत्तित्वाभावाच्च। तस्माद् 'जगच्च स' इति सामानाधिकरण्यमवैरूप्याय शरीरशरीरिभावनिबन्धनमेव। एवञ्च जगतोऽन्तर्बहिश्च व्या(त्तचा ? प्या)त्मना नियम्यमानस्य तत्प्राचुर्योपपत्तेः. यन्मयं यदात्मकं, स्थित्यर्थं किमात्मकं भवतीति प्रश्नोऽपि सङ्गच्छत इति।

मैवम्। यथा जगत्। (ब)भूवे'त्यादिभिर्हि जगत्स्वभावोऽनुयुज्यते। ततो 'यतश्चैतदि'त्यादिना कारणस्वभावः। एव हि यत इति विप्रकृष्टमादौ नापकृष्ट भवति। तत्र यथा बभूव भूतकाले सदसद् वा। 'सदेव सोम्येदमग्र आसीद्', 'असदेवेदमग्र आसीदि'त्युभयश्रुतेः सशयः। सदपि कि(मर्थ ? मित्थ)मन्यथा वा, 'ध्रुवा द्यौर्ध्रुवा पृथिवी', 'द्यावापृथिवी जनयन् देव एकः' इति श्रवणात्। भूयः पुनरन्ते यथा भविष्यतीति पूर्ववत्। एवमादावन्ते च जगत्स्वभावे पृष्टे मध्ये च स प्रष्टु युक्तो यन्मय इति, परिशेषात्। यथा भवतीति वक्तव्ये यन्मयमित्युक्तम्। आदावन्ते च यदात्मनो यद्भाव स एव मध्येऽपि स्वभाव इति तत्प्राचुर्योपपत्तेः। कि भूरम्बु तेज इत्येवमादिविशेषस्वभावमेवोपल(ब्ध ? ब्धि)बलाद्, अन्यस्वभावं वा 'ऐतदात्म्यमिद सर्वमि'-त्यादिश्रवणादिति। एवं त्रिभिः प्रश्नैराकस्मिक जगदनाकस्मिक वेति प्रश्न,

फलितः । अन्यथा जगदनाकस्मिकत्वकोट्यन्तरेऽनुपप्लवमाने तत्कारणस्वभावानुयोगस्याप्राप्तकालत्वात् । यत्तु यन्मयमिति स्थितिप्रश्न इति । तन्न । तस्यास्फुटतया नेयार्थत्वादोषात् । परिशेषाद् गम्यत इति चेत् । न । 'यतश्चैतदि'त्येव हेतुपञ्चम्या 'यतो वा इमानी'त्यादिश्रुतिच्छायानुपातिन्या नियन्त्रुपादान प्रश्नतन्त्रतोप मेन तत्तन्त्रसत्तानुवृत्तिलक्षणस्थितिप्रश्नस्याप्यर्थसिद्ध्युपपत्तेरिति । यथेति कारणे कार्ये लये चावृत्त्या विशेषणम् । वृश्चिकजातीये गोमयादिवदव्यवस्थयान्यथा वा, स्वरूपविकारेणान्यथा वा किमुपादान, तदतिरेकेणान्यथा वा किञ्चिन्निमित्त, यथा चराचर क्रमेणान्यथा वा जायते, एव लयेऽपि भूतभविष्योपाधिना लयाधारस्य द्विरुपादानादेव घटादिलये कपालचूर्णादिवदव्यवस्थाशङ्का ध्वनितेति न यथेति विशेषणम् ।

अत्रोत्तर 'विष्णो सकाशादि'त्यादि सूत्रभूतम् । तत्र विष्णोरिति सावधारण, 'सिद्धे शब्दार्थसम्बन्धे', 'अब्भक्षो वायुभक्ष' इत्यादिवत् । एवमुपादानाव्यवस्थ परिहृता भवति । सकाशात् सन्निधानादिति च स्वरूपविकारशङ्का, उद्भूतमिति च सत एवाविर्भाव उक्त इत्यादावसत्त्वशङ्का इत्थसत्त्वशङ्का च निरस्ता भवति । 'तत्रैवे'ति लयाधाराव्यवस्थाशङ्का, स्थितमित्यन्तेऽसत्त्वशङ्का च वारिता ।

"तदेतदक्षयं नित्य जगन्मुनिवराखिलम् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥"

(विष्णुपु० अ० १. अ० २२. श्लो० ५९)

इति हि वचनम् । 'स्थितिसयमकतासावि'त्युत्पत्तेरप्युपलक्षणम् । अनेनोत्पत्त्यादिकर्तुरुपादानातिरेकशङ्का पराकृता । असाविति हि सावधारणम् । भूतिलयक्रमाक्रमशङ्कापरिहारश्चात्राभिप्रेयते । अ(ग्रे) तद्विवरणरूपे परत्र सर्गप्रलयक्रमप्रतिपादनात् । एव पारिशेष्याद् यन्मयमिति प्रश्नस्योत्तरं 'जगच्च स' इति । तन्मयमित्युक्ते विशेषात्मतापि जगतः स्वभावान्तर मा प्रसाङ्क्षीदिति 'जगच्च स' इत्युक्तम् । न च सत्तामात्रसंविदात्मनो विष्णोर्विशेषसंवेद्यजगद्रूपाभेदालम्बनमिह सामानाधिकरण्य, विरोधात् । न च विशिष्टाभेद , जगत्पदस्य तद्विशिष्टे विष्णावप्रसिद्धे. । प्रकारान्यत्वे च तच्छब्दस्य प्रकारिपर्यन्तत्वनिरासात् । यद्यपि जगदात्मनः शरीर स्यात् , तथापि न शरीरशब्दत्वादात्मपर्यन्तो

मनुष्यादिशब्द । तादात्म्याभिमानमूलतया सर्वसिद्धत्वात्, शरीरात्मभावादिनिरासाच्च । एवञ्च ब्रह्मविवर्ततया तादात्म्याद्, जगत· सत्तानिषे(धे) निरुपाख्यतापत्त्या च जगत्पदस्यापि तद्वृत्तित्वात् । ब्रह्मणश्च 'अस्तीत्येवोपलब्धव्यः', 'सत्तामात्रात्मके ज्ञेय' इत्यादिशास्त्रेण सत्तात्मकत्वाद् 'जगच्च स' इति सामानाधिकरण्ये विशि(ष्टो ? ष्टा)भेदासम्भवेन स्वरूपाभेदावसायिनि सत्तात्मको विष्णुरेव स्वभावो जगतो नाभावो न वा दृश्यमानविशेषात्मैवेत्युक्तं भवति । नहि बाधाया सामानाधिकरण्यमिति बाधबोधकमित्यर्थः । आर्थिके शब्दवृत्तिकल्पनागौरवाद्, लक्षणादोषाच्च ।

कस्तर्हि विशेषो बाधसामानाधिकण्यस्य । 'तत्त्वमसी'त्यादावपि स्वरूपाभेदावगमे तदनवगममूलरूपबाधाविशेषात् । उच्यते । यत् प्रतिपन्नधर्मिरूपबाधपर्यवसायि तद् बाधसामानाधिकरण्य, यथा यः सर्पः सोऽसौ रज्जुरिति । धर्ममात्रबाधपर्यवसायि त्वभेदसामानाधिकरण्य, यथा यमशङ्ख मन्यसे तदिद पीतद्रव्य शङ्ख इति । अथवा प्रतीतरूपबाधविमर्शापेक्षयैव यदभेदबोधक तद् बाधसामानाधिकरण्यम् । एकस्योभयसम्भावनया तदनपेक्षयैवाभेदबोधकमभेदसामानाधिकरण्यमित्यादि दिक् ।

एव चेह न सामानाधिकरण्यवैरूप्यम्, अविशेषेण स्वरूपाभेदविषयत्वात् ॥

---

## अविकारायेत्यादिपद्यानामर्थविचारः ।

एव कारणत्वोपपादनमुखेन सर्वविधविशेषबाधया सामानाधिकरण्ये(न ? ना)द्वितीय ब्रह्मतत्त्वमुपक्षिप्तम् । अस्यैव च प्रपञ्चो'ऽविकाराये'त्यादि । तत्राविकारायेति कार्यादन्यत्वमुच्यते । शुद्धाय मायातीतायेति कारणादन्यत्वम् । अत्र हेतुगर्भविशेषण नित्याय परमात्मन इति । सदैकरूपरूपायेति त्रिविधभेदात्यय. प्रतिपाद्यते । विष्णव इत्युक्ते

"तस्मात् स प्रोच्यते विष्णुर्विशेर्धातोः प्रवेशनाद्"

इति निरुक्तिगम्यकारणात्मता मा भूत् स्वभाव इति 'सर्वजिष्णवे' इत्युक्तम् । स्वभावासस्पृष्टहेतुविकाराय असङ्गायेत्यर्थः । अन्ये तु —

"प्रधानपुरुषव्यक्तकालाना परम हि यत् ।
पश्यन्ति सूरयः शुद्ध तद् विष्णोः परम पदम् ॥"
(विष्णुपु० अ० १. अ० २. श्लो० १६)

अविकारादिचतुष्टयेन प्रतिपाद्यते । अर्थाच्च देहाहङ्कारक्षणिकविज्ञानानीश्वरतद्भिन्नाभिन्नात्मवादा विशेषणपञ्चकेन निरस्ताः । सर्वजिष्णव इति स्वज्ञानानाश्रयप्रकृतिवाद इत्याहुः ।

यत्तु अविकारायेति तत्पुरुषबहुव्रीहिभ्यां कार्यकारणावस्थादचितः, शुद्धायेति बद्धजीवात्, शुद्धाय नित्यायेति मुक्तात्, परमात्मन इति नित्यमुक्ताच्च व्यावृत्तिरिति । तन्न । परमात्मन इत्येव सिद्धौ शेषवैयर्थ्यात् । गुणानां च परार्थत्वाद् नित्याय शुद्धायेत्यनभिसम्बन्धात् । सदैकरूपरूपायेति न विलक्षणविग्रहवत्त्वमुच्यते । विग्रहवत्त्वे तस्य प्रियाप्रियसंस्पर्शप्रसङ्गादिति । तदेतन्निर्विशेष ब्रह्मतत्त्व कारणत्वेनोपलक्ष्यते

"नमो हिरण्यगर्भाय हरये शङ्कराय च ।
वासुदेवाय ताराय सर्गस्थित्यन्तकारिणे ॥"
(विष्णुपु० अ० १. अ० २. श्लो० २)

इति । अत्राकारादिवाच्यहिरण्यगर्भादिव्यष्टिरूपावस्थितमर्धमात्राभिधेयगुणैश्वर्यसमष्टिमयवासुदेवाख्य कारणरूपम् ।

"सकार च हकार च लोपयित्वा प्रयोजयेत् ।
सिद्धि च पूर्वरूपाख्यं ततोऽसौ प्रणवो भवेत् ॥
तारः शक्त्यु(त्थ ? त्थित)तया निर्दिष्टः सोऽहमर्थकः ।
पूर्वम्"

इत्याद्याचार्यदर्शनात् ।

"अकाराय नमस्तुभ्यमुकाराय नमोऽस्तु ते ।
मकारायार्धमात्राय मात्रातीताय ते नम. ॥"

इति शैवपुराणे दर्शनात् । 'यस्मादुच्चार्यमाण एव गर्भजन्मजरामरणसंसारम(हद्भ ? हाभ)यात् तारयति तस्मादुच्यते तारमि'ति श्रवणाच्च । सोऽहमर्थकमा-

त्रातीतोऽपर्यायतारगम्यस्वरूपसामानाधिकरण्येनोपलक्षणतयाभिधाय तस्य कारणतानिर्वाहाय रूपभेदा उच्यन्ते ।

'एकानेकस्वरूपाय' गुणसाम्यवैषम्य(द ? व)शात् । 'स्थूलसूक्ष्मात्मने नम.' विशेषाविशेषविकारात्मना । 'अव्यक्तव्यक्तरूपाय' विद्याप्रतिबिम्बमयजीवात्मना । एव सत्यर्थविशेषोपपत्ते । 'विष्णवे मुक्तिहेतवे' इति वेदानभिज्ञस्य पौराणिकनाम्ना विशेष्यनिर्देशः । यथाह —

"यज्वभिर्यज्ञपुरुषो वासुदेवश्च सात्त्वतैः ।
वेदान्तवेदिभिर्विष्णु· प्रोच्यते यो नतोऽस्मि तम् ॥"

इति । एव

"परस्य ब्रह्मणो रूप पुरुष. प्रथम द्विज ! ।
व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथापरम् ॥"
(विष्णुपु० अ० १ अ० २. श्लो० १५)

इति चतूरूपस्य ब्रह्मण प्रधानव्यक्तपुरूपाण्युक्त्वा कालरूपमवशिष्टमुच्यते ।

"सर्गस्थितिविनाशाना जगतो यो जगन्मयः"
(विष्णुपु० अ० १. अ० २. श्लो० ४)

भूतादिरूपेण जगन्निरूप्यतया तत्प्राचुर्योपपत्तेः ।

"मूलभूतो नमस्तस्मै विष्णवे परमात्मने"
(विष्णुपु० अ० १. अ० २. श्लो० ४)

कालस्य सर्गादिहेतुत्व 'ब्रह्मा दक्षादय काल·', 'विष्णुर्मन्वादयः कालः', 'रुद्रः कालोऽन्तकादिश्चे'त्यादिसिद्धम् । 'आधारभूत विश्वस्य' प्रधानात्मना । 'अणीयासमणीयसाम्' अव्यक्तादिविशेषान्तानुप्रवेशितयात्यन्तसूक्ष्मपुरुषरूपम् । 'सर्वभूतस्थं' सर्वभूतात्मनावस्थितमिति व्यक्तरूपम् । 'अच्युतं पुरुषोत्तम' जगत्यनेकधा च्यवमानेऽपि स्वय तदवस्थम् ।

"अनादिर्भगवान् कालो नान्तोऽस्य द्विज ! विद्यते"
(विष्णुपु० अ० १. अ० २. श्लो० २६)

इति कालरूपमिति चतूरूपमुक्तमेव परमात्मानमनुकृष्य पुराणप्रतिपाद्यस्वरूपपरिशुद्धये तस्य याथात्म्यमुच्यते 'ज्ञानस्वरूपमि'त्यादिनेति युक्तम् । अनुक्त-

समष्टिर्व्यष्टिजीवरूपविषयत्वे प्रणम्येत्यनुवादायोगात्, स्वनिष्ठनमस्कारवाक्यार्थावसायिवाक्यप्रक्रमवैरूप्यप्रसङ्गाच्च । स्वरूपविषयत्व एव सम्भवति व्यष्टिजीवविशिष्टविषयत्वानवकल्पनाच्च । नहि 'नमो हिरण्यगर्भाये'त्यादेरपि तद्विशिष्टब्रह्मविषयता, येनास्यापि कथञ्चित् कल्प्येत । विना लक्षणामन्यशब्दस्य तद्विशिष्टवृत्त्यनुपपत्ते' । इह च विशिष्टवृत्तित्वे ज्ञानस्वरूपमिति स्वरूपशब्दास्वारस्यात् । 'अर्थस्वरूपेण भ्रान्तिदर्शनतः स्थितमि'त्यनन्वयाच्च निर्विशेषस्वरूपपरत्वावगमात् ॥

---

### ज्ञानस्वरूपमित्यादिपद्यानामर्थः।

ननु भ्रान्तिदर्शन सद्वारकमात्मन., अन्यथा अविद्याभ्रान्तिमत्त्वे तस्य निरवद्यत्वादिश्रुतिविरोधादिति चेत् । तथापि नार्थस्वरूपदर्शनमेव भ्रमः, परमार्थत्वोपगमात् । (केवलार्थस्वरूपदर्शनमेव भ्रमः परमार्थत्वोपगमात्?) केवलार्थस्वरूपदर्शनमिति चेद्, एष ह्यधिकावापो हतकस्य दोषः । किञ्च यदि केवलमित्यर्थदर्शन विशेष्येत, तत्र ज्ञानात्मना सात्मकत्वानालम्बन हि न भ्रमः । विपरीतदर्शनस्यैव भ्रमत्वात् । नापि तदनालम्ब्य देवमनुष्यादिरूपार्थदर्शनं, विषयसत्त्वात् । शुक्तित्वाज्ञानपूर्वकमिव रजतज्ञानं सात्मकत्वाज्ञानपूर्वकमर्थाकारज्ञान भ्रमः स्यादिति चेत् । न । स्वरूपदर्शनबाध्याकारान्तरदर्शनस्यैव भ्रमत्वात् । अन्यथा पृथिव्याद्यात्मकत्वाविज्ञाने सति वृक्षाद्याकारदर्शनं भ्रमः प्रसज्येत । न च तान्त्रिकविवेकिनो देवाद्यर्थाकारस्य सात्मकत्वज्ञानबाध्यत्वमिष्टम् । अथ कैवल्य विषयविशेषणमुच्येत । तन्न । यथाभवदर्थाकारज्ञानस्य सात्मकत्वाभावाविषयत्वात् । अपिच न तान्त्रिकस्य ज्ञानात्मनो देवाद्यर्थाकारस्य दर्शन भ्रम इति श(क्यं? क्यं) वदितुम् । शरीरिणः शरीरप्रकारकतया प्रकारशब्दप्रत्यययो. प्रकारिपर्यन्तवृत्त्या देवोऽहमित्यादिसामानाधिकरण्यमुख्यत्वोपगमात् । न च ज्ञानैकाकारस्य देवादिभेददर्शनं भ्रमः। तादृश एव तत्प्रकारकत्वोपगमात् । नहि स्वरूपाज्ञानप्रयोज्यं भेददर्शनं, विज्ञातज्ञानैकाकारात्मतत्त्वस्यापि वामदेवादे. 'अहं मनुरभव सूर्यश्चे'ति भेददर्शनानुवृत्तिश्रवणात् । देवाद्याकारेऽनात्मन्यात्मदर्शन भ्रम इति चेत् । तथापि प्रस्तुतार्थाकारदर्शनभ्रमत्वे किमायातम् । वास्तवे प्रकारप्रकारिभावे शुक्ति-

पटयोरिव शरीरशरीरिणोरभेददर्शनं भ्रम इति चेत् । न । असदभेदालम्बनत्वायोगात् । न चात्मन्यर्थस्वरूपाभेदस्य प्रागप्रतीतस्यारोपसम्भवः । विविक्तार्थस्वरूपाभेदप्रत्यये च देवोऽहमित्यादिधी प्रकारप्रकारितालम्बनैव, नाभेदविषया शक्याश्रयितुम् । अन्यथाख्यातिश्चाग्रे निरसिष्यते । तस्माद् निष्केवलज्ञानैकरसपरमार्थस्वभावस्याज्ञानादर्थाकारविवर्तदर्शनं भ्रम इति निर्विशेषात्मैव पुराणप्रतिपाद्यो विवक्षित इति युक्तमुत्पश्यामः । एवं सत्यश्मनो हृदयं नास्तीति निर्जीवाश्माकारदर्शनस्य कथमपि भ्रमत्वायोगेनार्थस्वरूपेणेति जीवविषये सङ्कुचितवृत्तिरकल्पिता भवति । आदिभरतचरिते चार्थमिथ्यात्वं प्रपञ्चितं —

"त्वं राजा शिबिका चेयं वयं वाहाः पुरस्सराः ।
अयं च भवतो लोको न सदेतन्नृपोच्यते ॥"
(विष्णुपु० अं० २. अ० १३. श्लो० ८८)

"शिबिका दारुसङ्घातो रचनास्थितिसंस्थितिः ।
अन्विष्यतां नृपश्रेष्ठ! तद्भेदे शिबिका त्वया ॥
एवं छत्रशलाकानां पृथग्भावो विमृश्यताम् ।
क्व यातं छत्रमित्येष न्यायस्त्वयि तथा मयि ॥"
(विष्णुपु० अं० २. अ० १३. श्लो० ९१,९२)

"यत् तु राजेति लोकेऽस्मिन् यच्च राजभटात्मकम् ।[1]
तथान्यच्च नृपेत्थं तन्न सत् सङ्कल्पनामयम् ॥"
(विष्णुपु० अं० २. अ० १३. श्लो० ९९)

इत्यादिना । श्रुतिश्च 'यदग्ने रोहितं रूपमि'त्यादिकोदाहृता । न चैव ब्रह्मणोऽविद्यादिहेयसम्बन्धापत्तिः, निरवद्यनिरञ्जनस्वभावे कल्पनामात्रत्वोपगमात् । अस्य च पुराणपरमतात्पर्यविषयस्य योगयुजा चिन्तयितुमशक्यत्वादुपास्यं कारणरूपं पुनरनुकृष्यते ।



---

१. 'वस्तु राजेति यल्लोके' इति मुद्रितविष्णुपुराणपाठः ।

"विष्णुं ग्रसिष्णु विश्वस्य स्थितिसर्गे तथा प्रभुम् ।
प्रणम्य जगतामीशमजमक्षरमव्ययम् ॥"

(विष्णुपु० अ० १. अ० २. श्लो० ७)

इति । न 'ह्येवम्प्रकार'मिति प्रथमाशोपसहारे सविशेषपरत्व, येनात्र निर्विशेषविषयता भज्येतेत्युक्तम् ।

अमुमेव पुराणार्थ प्रत्यस्तमितभेदं वचसामगोचर सत्तामात्र कथयामीति प्रतिज्ञाय प्रस्तौति 'पर. पराणामि'त्यादिना । इन्द्रियार्थादीनां पराणा हि परमात्मा परमः परः ।

'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यारभ्य,

"अव्यक्तात् पुरुष. परः ।
पुरुषान्न पर किञ्चित् सा काष्ठा सा परा गतिः ॥"

इति परान्तरप्रतिषेधात् । स च 'आत्मसस्थित.' ग्राह्यग्राहकादिभेदशून्यतया स्वमहिमप्रतिष्ठः । 'यत्र नान्यत् पश्यति नान्यच्छृणोति (नान्यद् विजानाति) स भूमा', 'स भगवः! कस्मिन् प्रतिष्ठितः स्वे महिम्नी'त्यादिश्रुतेः । यदि ह्यन्यत् स्याद्, न शक्यं तस्य दर्शनादि प्रतिषेद्धुम् । अन्यथात्वेन दर्शनादि निषिध्येत, भूम्नैव सात्मकमन्यत् पश्यतीति । न । भूम्ना सात्मकस्यापि स्वरूपान्यत्वानपायात् । नहि तेन निरात्मकत्वमन्यत्वम्, अन्यशब्दस्य भिन्नमात्रवृत्तित्वात् । न च जडाजडस्वरूपाभेद इत्यतो यद् दृश्यते श्रूयते मन्यते विज्ञायते वा नामरूपात्मक जगत् तत्प्रतिषेधेन भूमात्मा लक्ष्यते इति । अनेन प्रत्यस्तमितभेदत्वमुक्तम् । 'रूपवर्णादी'त्यादिना सर्वविधशब्दप्रवृत्तिनिमित्तशून्यतया वचसामगोचरत्वमुक्तम् । 'अपक्षयविनाशाभ्यामि'त्यादिना भावविकारषट्कप्रत्याख्यानेन सत्तामात्रत्वमुच्यते । 'सदास्ती'ति विशेषणेन जनित्वासत्त्वव्यावृत्तिः । अस्तीति वक्तु शक्यते । केवलमित्यदूरविप्रकर्षेण श(ब्द°ब्दा)बोध्यताभिप्रायम् । तस्यैतस्य कारणरूप योगयुग्ध्येय वासुदेवनामनिर्वचनव्याजेनोच्यते 'सर्वत्रे'त्यादिना । अत्रैव पुराणपरमतात्पर्यविभ्रमो मा भूदिति 'तद् ब्रह्मे'त्यादिना कारणरूपोपलक्ष्यस्वरूपानुवादेन तस्यैव सर्गाद्युपयोगि चातूरूप्यमभिधीयते 'तदेव सर्वमि'त्यादिनेत्येव पुराणोपक्रमस्य निर्विशेषपरत्व सिद्धम् ॥

## परमार्थस्त्वमेवैक इत्यादिपद्यार्थ ।

'परमार्थस्त्वमेवैक' इत्यादौ च 'नान्योऽस्ती'त्यद्वितीयत्वमुच्यते । 'एकमेवाद्वितीयमि'ति श्रुत्यर्थप्रत्यभिज्ञानात् । एव चान्य एक. परमार्थो नास्तीति प्राधान्यांशेन पारमार्थ्यनिषेधोऽन्यस्य न स्वरूपनिषेध इति दुरुक्तम्, एकशब्दानुवृत्तिगौरवात्, परमार्थशब्दस्य धर्मिवृत्तिभङ्गप्रसङ्गात्, तवैवैकत्व परमार्थो नान्यस्येति धर्मवृत्तिलाभाय त्वमेक इति परमार्थ इति कल्पनापाताच्च । आत्मान्यस्य सर्वस्य स्वरूपनिषेध एव । 'नान्योऽस्ती'ति पुल्लिङ्गं तु सम्पातायातम् । अर्थ इत्येता(व)द् वानुषक्ष्यते । यद्येव किं तर्हीद जगत्। 'तवैष महिमा' महत्त्व विजृम्भित व्यक्तीभाव', येन व्यक्तीभावेनैतच्चराचर व्याप्त सर्वगतं वर्तते, तव व्यक्तिरेवैतच्चराचरमित्यर्थः । एव यदेतच्छब्दावेकार्थौ स्यातामित्यतो ब्रह्मणा व्याप्यत्वाभिधानाद् जगतो ब्रह्मशेषत्वनिरासाच्च कृत्स्नशरीरं ब्रह्मैकं स्वप्रधानं परमार्थ इति कल्पना निरस्ता । यत्त्वेवं तवैष भ्रम इत्युच्येतेति । तन्न । वचनव्यक्तिभेदेऽपि विवक्षितार्थसिद्धेरविशेपात् । स किं परिणामः, तथा च न स्वरूपं निषिध्येत। नेत्युच्यते यदेतद् दृश्यते मूर्तं चराचरं तदेतज्ज्ञानात्मनस्तव भ्रान्तिज्ञानेन त्वदालम्बनविपरीतविज्ञानेन जगद्रूप पश्यन्त्ययोगिनः शास्त्राचार्योपदेशोपायत्वज्ज्ञानविधुरा इति । एव ह्यवधि श्रुतान्वय. स्यात् । जगद्रूपदर्शने को दोषः । ज्ञानस्वरूप ब्रह्मैव अखिलं जगदिति । सामानाधिकरण्यं व्याख्यातम् । तदिदमबुद्ध्योऽर्थस्वरूपं पश्यन्तो मोहसम्प्लवे भ्राम्यन्ति संसारावर्त नातिवर्तन्त इति । अत एवापौनरुक्त्यम् । एवञ्च न प्रकृतविपयताहानिः । अखिलं जगदिति च विना हेतुं न सङ्कुचितवृत्ति स्यात् । अन्यत्र तु 'मोहितं नाभिजानाती'ति चेतनधर्मोपादानं सङ्कोचहेतु' । अर्थशब्दश्च देवमनुष्यादिविषये न सङ्कुचितः स्यात् । 'ये तु ज्ञानविदः' शास्त्राचार्योपदेशलब्धत्वज्ज्ञानाः ते किं जगदाकारमपि पश्यन्त एव ज्ञानात्मना सात्मकं पश्यन्ति । न । त्वद्रूपं जगदाकारबाधेन तव यद् ज्ञानैकरस्य तदेव पश्यन्तीति । अन्यथा ज्ञानात्मकं त्वद्रूपमित्यनयोरनतिप्रयोजनत्वात् । यत्तु जगतः पते' परमेश्वर' इत्याद्यनाञ्जस्यमिति । तत् तुच्छम् । प्रस्तुतदृशा तत्त्वदृशा च सर्वोपपत्तेः । ब्रह्म हि स्वतो निर्विशेषमेव प्रकृतिभूयं गतं तदुपहितमर्यादं सर्व(ज्ञा ? ज्ञत्वा)दिगुणमीश्वर इति गीयते । तस्य च समस्तकल्याणगुणात्मकस्य स्वभावेन कल्पनया च स्तुतिरुपपन्ना तव त्वमि-

त्यादिसम्मुखीकरणं च। तत्त्वदृशामपि व्यवहारे लोकसामान्यादीश्वरस्तुत्याद्यविरोधात्। अन्यथा परस्यापि ज्ञानैकाकारात्मदर्शिना तवत्वमित्यादिव्यपदेशासाङ्गत्यात्। न चेह सविशेषोपक्रमोऽस्तीत्युक्तम्॥

---

### ज्ञानस्वरूप इत्यादिपद्यैकादशकार्थः।

यद्यपि 'ज्ञानस्वरूपो भगवानि'त्यत्र प्राग् भुवनकोशः प्रपञ्चितः, सर्गप्रसङ्गेन भुवनसंस्थानस्य पृष्टत्वात्। किन्तु तत्प्रपञ्चानुसन्धाने जिज्ञासितज्ञेयब्रह्मप्रस्मारिकातिप्रसक्तिर्मा भूदिति भुवनमयता ब्रह्मणो याथात्म्यं च भुवनबाधावधिभूतं वक्ष्यामीति 'संक्षिप्य श्रूयतां पुनरि'ति प्रतिज्ञायते। ततो भ्रान्तस्य भ्रान्तिपरिष्कारवैयर्थ्यमित्यपास्तम्। भुवनकोशस्वरूपजिज्ञासाशमनेन तस्य ब्रह्मपरिशेषयाथात्म्यबोधनोपयोगित्वात्। तत्र 'यदम्बु वैष्णवः कायः' इति मन्दयोगिनो वैराजं रूप(म ? मु)पास्यतयोपक्षिप्य 'ज्योतींषि विष्णुरि'ति समष्टिव्यष्टिभ्यां विश्वस्य ताद्रूप्ये निरूपिते शरीरात्मभावेन सामानाधिकरण्यनिरासाज्जडाजडरूपाभेदासम्भवाच्च तदयोगो मा शङ्कीति 'मायामात्रमिदं द्वैतम्', 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुत्या तद्विवर्ततामाह 'ज्ञानस्वरूप' इति। यतो ज्ञानैकरसो वस्तुभूतो भगवानात्मा, न त्वशेषमूर्तिर्वस्तुभूतः। अथवा ज्ञानैकरसः सन्नेवाशेषमूर्तिः, न तु तदवस्थाहानेन वस्त्वात्मना परिणतः। ततः शैलादिभेदा विपरी(तानि ? त)ज्ञानात्मनो विजृम्भणानि, विवर्ता इत्यर्थः। एवमुपात्ताक्षरानुगुण्यान्न वाक्यान्तरालोचनया देवादिवैविध्यज्ञानहेतुकर्ममूला इति क्लिष्टार्थकल्पना युक्ता। न च ब्रह्मणः कर्मसम्भवः। जीवस्तु न प्रकृतः। न हि 'यदस्ति यन्नास्ती'ति चेतनाचेतनविषयम्, अप्रसिद्धेः। प्रसिद्धं तु भावाभावविषयम्। न च ज्ञानस्वरूप इत्यादावाहत्य प्रकृतब्रह्मविषयता सम्भवन्ती हातव्या। प्रकृतिविवेकेन जीवैकात्म्यं ह्यादिभरताख्यानप्रतिपाद्यम्। न च तस्यायं संक्षेपः। 'संक्षिप्य श्रूयतां पुनरि'त्युक्तसंक्षेपो ह्याञ्जसो गम्यते। न च जीवस्याशेषमूर्तित्वमाञ्जसमुपपद्यते। तथा च ज्ञानस्वरूपत्वं देवादिवस्तुभावनिषेधश्च विशेषणस्य क्षेत्रज्ञस्य, अशेषमूर्तित्वं तु विशेष्यस्य ब्रह्मण इति वाक्यार्थवैरूप्यप्रसङ्ग इति। कुतः पुनरमी भेदा न वस्तुभूताः, बाधादित्याह। 'यदा तु शुद्धमि'त्यादि। अत्र सर्वकर्मक्षये ज्ञानं निजरू-

पीति विशेषणाज्जीवकर्ममूला. शैलादिभेदा इति पूर्वश्लोकार्थो न विज्ञातव्यः। प्राथमिकानुपजातविरोधिस्वारसिकार्थानुरोधेनानन्तरस्योपक्रमन्यायनेयत्वात् । एवं च प्रतिबन्धककर्मक्षयेऽपास्तसंशयत्वादिदोषं शुद्धमविशेषालम्बनमात्मस्वरूपावद्योति शास्त्रीयं ब्रह्मात्मापरोक्षज्ञानं यदा, तदा वस्तुषु 'यत्र त्वस्य सर्वमात्मैवाभूदि'त्यात्मवस्तुभूतेषु मनःकल्पनामया वस्तुन आत्मनो भेदाः शैलादिरूपा न भवन्ति, बाधितत्वादिति। अथवा 'तस्य तावदेव चिरं', 'भूयश्चान्ते विश्वमायानिवृत्तिरि'ति सहारब्धेन सर्वकर्मक्षये तत्त्वज्ञानेनापास्ताविद्यादिदोषं शुद्धमविशेषं स्वभावावभासं ज्ञानं यदा, तदा वस्तुभूतेषु वस्तुभेदकल्पना न भवन्तीति निरन्वयबाध उक्तो भवति। एवं च सङ्कल्पतरोः फलानि एकीकृत्यात्मकल्पनामूलकर्मफलभूता इति क्लिष्टार्थकल्पना न श्लिष्टा। 'सङ्कल्पः कर्म मानसमि'ति प्रसिद्धेः। आविद्यकस्यापि भेदस्य विकल्पावभासो हि मनःकल्पनैवेति। अथवा अविद्यैव सम्यगात्माभेदेन वा कल्पनात् सङ्कल्पः, तस्य कार्यभूता भेदा इति। नैवमपि कर्मणि लक्षणा न भवति।

युक्त्यापि जगतो बाध्यत्वमुच्यते 'वस्त्वस्ति किमि'त्यादिश्लोकद्वयेन। कुत्रचिद् ब्रह्मणोऽन्यत्रेति निर्धारणे। सततैकरूपं हि वस्तु। तत् किं, कुत्रचिदस्ति। नास्त्येव। हन्तैवं ब्रह्मणोऽपि जगद्रूपापत्त्या सततैकरूपत्वाभावादवस्तुत्वं प्राप्तम्। न। यद्धि मृद्रज्ज्वादिकमन्यथात्वं घटशरावाहिधारादिभावं याति, तन्न तथा घटसर्पादिप्रकारम्। कुतो हि तस्य तत्त्वं घटादिभावः, न कुतश्चित्। 'मृत्तिकेत्येव सत्यमि'ति हि श्रुतिः। अन्यथा घटादिभावे तात्त्विके मृद्रूपापायापत्त्या मृद् घट इत्यप्रत्ययापत्तेः, सर्पादिबाधाभावप्रसङ्गाच्च। एवं ब्रह्मणोऽपि न जगद्भावः, 'ऐतदात्म्यमिदं सर्वं तत् सत्यमि'त्यादिश्रुतेरिति भावः। अनुवर्तमाने व्यावर्तमानाकारस्यावस्तुत्वमुदाहरति। मही घटत्वं याति। घटतो घटभावात् प्रच्युत्य कपालिका भवति। यथायोगं क्रियान्वयः,

"यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा"

इत्यादिवत्। कपालिका भूत्वा चूर्णरजो भवति। ततो दुर्दर्शोऽणुः। एवं स्वकीयपराग्ज्ञानहेतुकर्मप्रतिबद्धात्मयाथात्म्यनिश्चयैरालक्ष्यते। अत्रैव सति किं

१. 'स्तुतत्त्वमु' क पाठः.

वस्तु, न किञ्चित्। व्यावृत्त्या चावस्तुत्वमनुमास्यते। अथवा सततैकरूप्या-भावेऽपि कुतोऽवस्तुत्वम्, अन्यथान्यथा भवतः स्वप्नविकल्पादेरवस्तुत्वदर्श-नादित्याह 'यच्चान्यथात्वमि'ति। अन्यथाभावमुदाहरति 'महीति'। घटत इति तत इति च प्रथमार्थे तसिः। अत्र पक्षे कादाचित्कत्वादवस्तुत्वमनुमेयं मन्यते।

जगदुपलब्धिप्रकारेणापि वस्तुभेदाना परिणामित्व नास्तिशब्दाभिधे-यतानिमित्तमुपपाद्यते श्लोकद्वयेनेति परकीयव्याख्यान तु प्रत्याख्येयम्। घटा-दयो हि न कपालादिपरिणामिनः। उत्तरोत्तरावस्थाप्राप्त्या पूर्वपूर्वावस्था जहातीति स्वोक्तिविरोधात्। नापि मृदेव, मृद्रूपापायप्रसङ्गात्। नह्यप्रच्यु-तस्वभावस्यैवान्यथाभावः परिणाम.। रजतादेरशुक्त्यादिपरिणामत्वात्। यद्यु-च्येत — पिण्डावस्थाया मृदो घटावस्था परिणाम, घटाद्यवस्थायाश्च कपाला-द्यवस्थेति, तर्हि मृद एव परिणामित्वाद् नास्तिशब्दाभिधेयतापद्येत। एवं ब्रह्मणोऽपि। तथा च 'मृत्तिकेत्येव सत्य', 'तत् सत्यमि'त्यादिविरोध इति। निदर्शितमर्थं निगमयति 'तस्मादि'त्यादिना। क्वचित् कदाचिद् न किञ्चिदस्तीति 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं', 'तस्मिंल्लोका श्रिताः सर्वे' इत्याद्यवगता-श्रयेऽपि त्रैकालिकनिषेधाद् बाधो गम्यते। न ह्यत्र नास्तिशब्दाभिधेयत्व प्रकृत येन निगम्येत। किन्तु भावाभावात्मकस्य सर्वस्य ब्रह्मात्मतैवेति। कि-मेवमलीकमेव जगत्, तथा च न प्रतिभासेत। न। विज्ञानमेकमेव निजमा-जानसिद्धं कर्म विज्ञेयमविद्याख्यम्। तस्य भेदैर्विशेषावस्थानैरनेकविकल्पानि चित्तानि ज्ञानानि। तैर्विभ्रमैरनिरूपितगगनपवनादिरूपेण विकल्पितम्। अतो नात्यन्तमसदेव जगदिति। अथवा विज्ञानमृते नास्ति किञ्चिद् वस्तुजातम्। किन्तु विज्ञानमेव सर्वमिति प्रस्तुतसर्वात्मतोपसहार। तर्हि कथमिष्टमनिष्ट च। विज्ञानमेकमपि निजैरनादिप्रसृतभोगोपपादककर्मभेदैरविद्यावष्टम्भैरने कधा भिन्नचित्तैरिष्टानिष्टादिभेदेनाभ्युपेतम्।

''मनस परिणामोऽयं सुखदुःखादिलक्षणः''

इति ह्याह। अत्र परमते विज्ञानमेकमिति च क्लिष्टम्। परमात्मा पुनरेकत्वात

सदैकरूपत्वाच्चाबाध्य तत्त्वमित्याह 'ज्ञान विशुद्धमि'त्यादिना। विशुद्धिरनञ्जनत्वम्। अविद्याकामकर्माणि मलाः। तत्कार्य शोको भोगहेतुकहर्षविषादादि गर्द्धोऽभिनन्दो लोभ'। आदिपदाद् द्वेषादिग्रह'। 'स वासुदेव' इति कारणात्मनोपलक्ष्यते। अन्ये तु — निर्विषयत्वमसशयादित्वमहङ्काराद्यशेषदोषातीतत्व च विषयज्ञानव्यावृत्तये विशेषणमित्याहु'। 'एक सदैक न यतोऽन्यदस्ती'ति सजातीयस्वगतविजातीयभेदा. प्रतिषिध्यन्ते। ज्ञानसत्यत्वमन्यमिथ्यात्वं च स्वभाववाद इति निगम्यते 'सद्भाव एषो भवत.' इति। सुलोपाभाव आर्षः। सद्भाव एवमिति वा पाठः। यथा ज्ञानं सत्य सदैकरूपतया अबाधेन, यथा चान्यदसत्य व्यभिचारितया बाधेन, तथा सद्भाव उक्त.। एतच्च ज्ञानात्मतत्त्व यत् सत् संव्यवहार भूत प्राप्तम्। तत्रापि जगद्विषये वक्तव्यं भुवनाश्रितं भूरादिप्रमाणसस्थानादिकमुक्तम्। भुवनाश्रितमाचिन्मिश्रं भोगस्थानगतमिति तु व्यवधानादपहेयम्। व्यावहारिकमेव जगदाश्रित्य तत्र तत्र प्रपञ्चितसाध्यसाधनविभाग सङ्गृह्याह —

"यज्ञः पशुर्वह्निरशेष ऋत्विक् *सोमः सुरा. स्वर्गमयश्च काम.।
इत्यादि कर्माश्रितमार्गदृष्ट भूरादिलोकाश्च फलानि तेषाम्॥"

इत्यादीत्यादिशब्देनान्यस्यापि विहितस्य निषिद्धस्य च सङ्ग्रहः। भूरादीत्यादिशब्देनान्यस्यापीष्टस्यानिष्टस्य च सङ्ग्रहः। एवं जगदात्मस्वरूपनिरूपणफलमुच्यते—

"इत्येतद् भुवनगत मया तवोक्त सर्वत्र व्रजति हि §तत्र कर्मवश्यः।
ज्ञात्वैतद् ध्रुवमचल सदैकरूप तत् कुर्याद् व्रजति हि येन वासुदेवम्॥"

इति। एवमर्थस्वरसानि वचनानि न क्लेशेनास्तिनास्तिशब्दवृत्तिनिमित्तपराणि नेयानि। तथा च 'यन्नास्ति', 'न तु वस्तुभूतः', 'किमत्र वस्तु', 'विज्ञानमृते नास्ति किञ्चिद्','न यतोऽन्यदस्ति','असत्यमन्यदि'त्यादेर्नास्तिशब्दाभिधेयत्वपरतया व्याख्यानमौत्प्रेक्षिकसमयाचाराजीवदासानामेव शोभते न प्रमाणमनुसरतां, सामर्थ्येन बाध्यताबोधित्वात्। प्रतिपन्नोपाधिविषयनिषेधस्य सत्यवस्तुपर्यु-

१. 'दि। वि' ख पाठ'

* 'सवत्सरा' § 'हि कर्मवश्य एक.' इति मुद्रितविष्णुपुराणपाठ.।

दासस्य च बाध्यतामनाक्षिप्यापर्यवसानात् । कादाचित्कत्वे नास्त्यसत्यशब्दासामर्थ्यात् । सामानाधिकरण्य च बाधार्थमवेदितम् । यत्तु इतरस्य स्वरूपबाधे अशेषमूर्तित्वविधेर्नित्यत्वाक्षयत्ववचनस्य च विरोध इति । तन्न । अशेषमूर्तिरिति हि 'ज्योतींषि विष्णुरि'त्यादिसामानाधिकरण्योपपादनाय विवर्तत्वविधिशेष इत्युक्तम् । नित्यस्याक्षयस्य च नास्तिशब्दार्हतापि हि विरुध्यते। कारणात्मना स्वात्मना चोभयाविरोधश्चेद्, ममाप्यनादिवृत्त्या सन्तन्यमानतया ज्ञानात्मपरिशेषतया चोभयाविरोध इति तुल्यम् । असद्व्यावृत्तप्रतिभासानुबन्धितया च वस्तुत्वनिगदः । न च 'अनाशी परमार्थश्चे'ति ज्ञापकादपारमार्थ्येऽसत्यत्वे निबन्धनमनित्यत्वमिति युक्तम् । 'परमार्थो न साधनमि'त्युक्त्या साधनत्वमेवासत्यतानिबन्धनमित्यापत्ते. । एवं प्रकरणस्य निर्विशेषपरत्वेऽपि भगवत्परमेशवासुदेवशब्दास्तदुपलक्षणकारणात्मविषया उपपत्स्यन्त इति ॥

---

### आत्माभेदः ।

एवमात्मनानात्वमाक्षिप्य तदभेदो विधीयते 'यद्यन्योऽस्ती'त्यादिना । कथ[2] हि प्रकाराद्वैतमेव विधीयेत यद्यात्मभेदः प्रमाण्येत, भवाप्यययोरात्मबहुत्वाम्नान तावदौपाधिकभेदविषयम्, 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती'ति लिङ्गात् । तवाप्याब्रह्मातेरचिदनुषङ्गसम्प्रातिपत्ते. । 'तदापीतेः ससारव्यपदेशात्' (ब्र० ४. २. ८) इति न्यायात् ॥

---

### नित्यो नित्यानामितिश्रुत्यर्थः ।

'नित्यो नित्यानामि'ति च न जीवविषयं, 'चेतनश्चेतनानामि'त्येव तत्सिद्धेः । अपि च 'त देवा ज्योतिषा ज्योतिः'

"पवित्राणा पवित्रं यो मङ्गलानां च मङ्गलम्"

इत्यादिवदत्र विशेषो वाच्यः । न हि निर्धारणे षष्ठी नित्यो नित्यानामिति, 'एको बहूनामि'ति समभिव्याहृतवैरूप्यापत्तेः । किन्त्वपेक्षायाम् । तथा चाचित्ससृष्टानामेव भिन्नाना जीवानामापवर्गिकज्ञानात्यन्तदौर्लभ्यादौत्सर्गिकनित्यत्ववा

---

१ 'ना सा चो', २ 'थ प्र' ख. पाठ.

द्योपपत्तिः । तत्प्राये हि तद्वादा भवन्ति यथा 'अनन्त नभ' इति, 'आकाशवत् सर्वगतश्च नित्य' इति चोपमीयते । ब्रह्मणश्चानवधिक नित्यत्व, 'सत्यस्य सत्यं प्राणा वै सत्य तेषामेष सत्यमि'त्यैकार्थ्योपपत्तेश्च । प्राञ्चस्तु अनित्यानामिति छिन्दन्ति । निष्फले च जीवभेदे ब्रह्मपरवाक्यतात्पर्यायोगाच्च ।

सितनीलादिवैचित्र्यमिव नाकस्यैकस्यैवात्मनो नानासुखादिवैचित्र्यं चौपाधिकमुपपद्यते । उपाधिव्यवस्थया च प्रमातृभेदविभ्रमनिबन्धना तदनुसन्धानादिव्यवस्था च । एकस्यैव जीवस्य जन्मभेदे तत्तद्देहतादात्म्यविभ्रमविच्छेदे जन्मान्तरीयाननुसन्धानदर्शनात् । तथा च सूत्रम् 'असन्ततेश्चाव्यतिकरः' (ब्र० २ ३ ४९) इति । भोगस्य परोपाधिकत्वादौपाधिकस्य चात्मनः कर्तृत्वे भोक्तृत्वे च व्यवस्थैवेत्यर्थ । प्रमातृभेदविभ्रमात् तु पादाद्यवच्छेदवृत्तिसुखाद्यनुसन्धानमिति विशेष. ॥

---

बद्धमुक्तादिव्यवस्था ।

यत्तु बद्धमुक्तव्यवस्थानुपपत्तिरात्मैकत्व इति । तन्न । अविद्यया-चिदात्माभिनिवेशी बद्ध., विद्यया निष्केवलो मुक्त इति व्यवस्थोपपत्तेः । अन्यो बद्धो मुक्तोऽन्य इति व्यवस्था न स्यादिति चेत् । कस्य पुनरपेक्षयैषा न स्यादिति । मुक्तो हि स्वमहिमप्रतिष्ठश्चिन्तितन्मात्रो न बद्ध मुक्त वा बुध्यते । अन्यस्य पुनरविद्ययैव सा च व्यवस्था स्यादन्या च, विभ्रममयत्वात् । कि पुन(रे?)रत., मा मोचि कश्चित् । किमतो भोः' । 'तद् यो यो देवाना प्रत्यबुध्यत स एव तदभवत् तथर्षीणा तथा मनुष्याणाम्'

"बहवो ज्ञानतपसा पूना मद्भावमागता."

"ततो मुक्तिमवाप परमा द्विज'"

इत्यादिविरोध । न । सर्वस्यैव नित्यमुक्तस्वभ.वत्वात् । मुक्त एव स्वभावादविद्ययैव मुच्येयेति साधनानुष्ठाने वर्तते । लब्धविद्यस्तु मुच्यत इत्येतावद् ब्रूते 'तद् य' इत्यादि । तावतैव प्ररोचित' प्रवर्त्स्यतीति । न पुन' स एव तदभवद् नान्य इति प्रतिवक्तव्यमिति, फलाभावात् । अन्यथा बद्धमुक्तान्यत्वे वास्तवे ब्रह्मणोऽपि स्यादन्यत्वमिति तद्भाववचन 'स एव तदभवदि'ति विरुध्येत । न हि स्वभावादेव प्रागतद्भूतो नष्ट. स्थितो वा तद् भवति । तेन

सात्मकत्व तु सदातनं न बोधापेक्षम् । तदभवत् तदात्मकोऽभिव्यक्तोऽभवदिति चात्यन्तविप्रकर्षः । अस्माक पुनरबोधादतद्भूतो बोधापेक्षया तदभवदिति युक्ता वाचोयुक्ति । प्रवर्त्यबुद्ध्यनुरोधेन देवर्ष्यादिबद्धमुक्तभेदार्थवादस्याज्ञातविषयत्वेऽपि रुद्ररोदनादिवादवदतात्पर्योपपत्ते. । एतेन स्मृतिरपि व्याख्याता । अथ कस्यचिद् विद्यया अविद्याबाधे नेदानी बद्धः स्यादिति चेत् । न । स्वरूपकैवल्यातिरिक्ताविद्याबाधाभावात् । तस्यैवानाद्यविद्याकल्पनया जीवभावेन बद्धत्वोपगमात् । न चैव विद्यावैयर्थ्य, निद्रयैव नवग्रहहस्तिभावाभिनिवेशेन शोचत सम्राज' प्रबोधवदविद्ययैव जीवभावाभिनिवेशेन शोचत आत्मनो विद्याया' स्वरूपप्रतिष्ठार्थत्वात् । किमेव सत्यनादिसिद्धा जीवा बहवस्तदुपाधयोऽविद्याश्च । यथा तत्र भवान् मन्यते भवतो यदि किञ्चित् तदध्यवसायेन स्यात् । वय तु तदेकत्वानेकत्वे न प्रसह्य वक्तु प्रभवाम., सर्वस्य कल्पनामात्रत्वोपगमात् । अत एवामुक्तस्याविद्योपपादितजीवेशविभागनिर्व्यूढप्रपञ्चप्रतिभासोऽपि ॥

---

## ब्राह्मेणेत्यादित्रिसूत्री ।

अत एव मुक्तश्चितितन्मात्रब्रह्मैव कल्पनया सर्वज्ञादिमयमिति वास्त वस्वरूपप्रतिष्ठामवस्थाप्यैव 'एवमप्युपन्यासात् पूर्वभावादविरोध बादरायणः' (ब्र० ४ ४ ७) इति ब्राह्मरूपोपन्यासाद्यविरोधसूत्रमुपपन्नम् । अन्यथा ब्राह्मरूपस्यापि स्वाभाविकत्वे विरोधाभावेन 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः', 'चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः' (ब्र० ४. ४. ५, ६) इति पक्षविकल्पानुपपत्तेः । न हि प्रकाशत्वव्यावृत्तिर्जैमिनिपक्षः । 'आह च तन्मात्रम्' (ब्र० ३. २. १६) इति स्वप्रकाशस्यापि श्रुतिवशादस्वातन्त्र्यनिर्गुणत्वव्याप्तिभङ्गेन ब्रह्मणोऽपहतपाप्मत्वादिगुणकत्वस्य तदवस्थिततत्वात् । औडुलोमेस्तु 'तदात्मकत्वादि'ति वदतो गुणविशिष्टानात्मकत्वमिष्टम् । तथापि कथञ्चिदपहतपाप्मत्वादेरुपपाद्यत्वाद् न विरोधः । तथा च विरोधभ्रम इति वा कल्प्येत । 'एवमपी'ति चितितन्मात्रतावस्थापनेन विरोधसमाधान वा नावकल्पेत । मुक्तस्यापहतपाप्मत्वादिगुणान्यत्वे सति ब्राह्मेणेत्यनाञ्जस्याच्चेति ।

केचित् तु शुकादयोऽपि न मुक्ता इति संसारोपलब्धिं समर्थयन्ते । अन्ये तु अविद्याभेदं प्रपञ्चभेदं चोक्त्वा बद्धमुक्तव्यवस्थामाहुः । अपरे तु साधारणमीशप्रपञ्चमसाधारणाश्च जीवभेदप्रपञ्चभेदानाश्रित्य तत्तत्प्रपञ्चविलयेऽपि साधारणप्रपञ्चोपलब्धिरिति निर्वहन्ति ॥

---

ऐकात्म्यविदोऽप्युपदेष्टृत्वम् ।

यत् तूपदेशानुपपत्तिः, तत्त्वज्ञस्य सर्वबाधोपगमादिति । तन्न । तत्त्वज्ञस्यापि यावदारब्धं व्यवहारे लोकसामान्योपगमात् । आरब्धकर्मप्रतिबन्धादेवोपदेशसमये सन्तन्यमानस्यापि स्वरूपतत्त्वावभासस्य भेदप्रतिभासमात्राविरोधित्वात्, तावतैवोपदेशोपपत्तेश्च । न चाविद्याबाधेऽपि तदुपादानारब्धकर्मानुपपत्तिरित्युक्तम् । 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदि'ति च न भेददर्शननिषेधश्चोद्यते । केन कमित्याक्षेपस्य कारकभेदविषयत्वात् । यद्यपि कारकभेदनिषेधः सार्वदिकोऽपि विद्याविषये तत्काल इव निर्दिश्यते । स्वरूपावभासपरिशेषात् । तत्र भेददर्शनक्रियानिषेधोऽर्थसिद्धः । यथाहुः—

"ऐकात्म्यमात्रकूटस्थप्रबोधावसितेः कुतः ।
मातृमानक्रियामेयव्यवहारस्य सम्भवः ॥"

इति । तथापि 'तस्य तावदेव चिरमि'ति विशेषणादारब्धभोगस्य च भेददर्शनसाध्यत्वादात्मापरोक्षवतोऽपि भेददर्शनानुभवाच्च नात्यन्तिकतदभावो गमनीयः । भेदस्वरूपबाधेन स्वात्मसत्तावभासपरिशेषेऽपि, भोगमात्रोपयोगिभेदाभासदर्शनस्य कालपरिवासामृष्टलेख्यविशेषसन्निवेशभित्तिस्वरूपावभासे सत्येव दृष्टचरलेख्यलाञ्छनाभासदर्शनस्येवोल्लोलबहुलकल्लोलमालिनि गुरुतरभारनिभृतपोतवदुन्मज्जननिमज्जनमिवानुभवतोऽभ्युपगमे बाधकाभावात् । यद्यपि 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि'(ब्र० सू० ४. ४. १६) इत्यत्र सम्पत्तिर्न मरणम्, अप्रसिद्धेः । स्वाप्ययेत्येव सिद्धेश्च । किन्त्वभेदेन सम्यग्गतिर्ब्रह्मात्मतापरिशेषकैवल्य, परिशेषात् । 'अथ सम्पत्स्ये' इत्यादिप्रसिद्धेश्च । 'वाङ् मनसि सम्पद्यते' इत्यादावप्यभेदापत्तिरेव । परन्तु पुनरुत्क्रमणश्रवणात् सा गौणी । न चेह गौणत्वे हेतुरस्ति । 'सर्वं ह सर्वं पश्यती'त्यस्य च ब्रह्मवि-

---

१. 'वे' क पाठः.

ज्ञानेन सर्वविज्ञानदिशा व्याख्येयत्वात् । तदपेक्ष च विशेषविज्ञानाभाववचन-मित्याविष्कृतम् । 'यत्र त्वस्य सर्वमात्मैवाभूदि'तीति व्यवस्थितम्, तथापि

"कदाचिद् व्यवहारे तु द्वैत यद्यपि पश्यति ।
चिदात्मव्यतिरेकेण न पश्यति चिदन्वयात् ॥

किन्तु पश्यति मिथ्येति दिङ्मोहेन्दुविभागवत् ।"

इत्यभियुक्तोक्तेस्तदारब्धवासनापेक्षया निरिन्धनज्योतिरिव प्रशान्तमात्मकैवल्य-मभिप्रेत्येति निगद्यते, अन्यथा जीवन्मुक्तिविरोधात् ॥

---

## जीवन्मुक्ति ।

यत्तु ससरतो हि जीवत्व तदवस्थस्य च मुक्तिरिति विरुद्धमिति । तदसत् । 'तद्धैतत् पश्यन् ऋषिर्वामदेव प्रतिपेदे', 'ब्रह्म वेद ब्रह्मैव भवती'ति ज्ञानसमकालमुक्त्यवगमाद्, यावदारब्धभोग च वासनामात्रेण प्राणधारणा-दिसकलव्यवहारोपगमात् ।

एवञ्च आत्मतत्त्वमनुसन्दधत एव संव्यवहारवदुपदेश उपपद्यते । अन्यथा तान्त्रिकदेशिकस्यापि ज्ञानैकाकारमात्मानमनुसन्दधतो मनुष्यादिभेदविभ्रमाव-भासायोगेनोपदेशानुपपत्तेः । अन्ये तु ज्ञानसमकालमुक्तस्य भेदप्रतिभास-सव्यवहाराभावेऽपि परपरिकल्पितमुपदेष्टृत्व तत्त्वज्ञानहेतुरित्याहुः । अपरे तु शास्त्राभ्यासपाटवेन परोक्षनिश्चयादुपदेष्टृत्व धर्मादाविव, तत्रापरोक्षस्यानपेक्ष्य-त्वादिति वदन्ति ।

एतेन भगवतोऽर्जुन प्रत्युपदेशो व्याख्यातः । सर्वज्ञतत्त्वज्ञान हि नाज्ञा-नबाधकमित्युक्तम् । न चैवमपि सर्वस्याविद्यकत्वज्ञाने मरीचिनीरस्येव व्यवहा-रानर्हत्वविज्ञानादुपदेशायोग इति वाच्यम् । भ्रमादवसीदतो जीवस्य दिङ्मूढ-स्येव तदाविद्यकत्ववेदनायोपदेशाविरोधात् । यत्तु नानुन्मत्त स्वाभेदावग-तायादर्शादाविवात्मप्रतिबिम्बाय जीवाय किमप्युपदिशेदिति । तन्न । उपदेश-स्योपदेश्यभेदबुद्ध्यनुरोधित्वादादर्शादावात्मप्रतिबिम्बाय तु नोपदिश्यते । तस्यो-पदेशग्रहणाशक्तिविज्ञानात् । न तथा जीवस्य चेतनस्येत्युपदेशाविरोधात् । अन्यथा तवापि पाणिचरणायेव स्वप्रतीकावगतायोपदेशविरोधात् । न च जी-वभेदनिषेधो देवाद्याकारभेदविषय । तथापि स्वरूपभेदे मानाभावादौपाधिक-

---

१. 'ब्धावसाना' ख. पाठ

भेदनिषेधतया स्वरूपाभेदपर्यवसानात् । न च प्राकरणिकमहं त्वमित्यादि विविक्तात्मविषयमेव, व्यावर्तकाभावे व्यावर्त्यनिर्देशानुपपत्तेः । स्वयम्प्रकाशत्वनित्यत्वाणुत्वप्रत्यक्त्वपराक्त्वादीनि सर्वात्मसाधारणानि न व्यावर्तकानि । व्यावर्तक देवाद्याकारस्तु नात्मन्यस्तीति स्वयमेवोक्तम् । एवञ्च आत्मन्येकशब्द आकारैक्ये जातावेकवचनम् । आकारभेदविषयश्चान्यत्वाक्षेप इत्यादि न कुकाव्यमिव क्लिष्टार्थं कल्पनीयम् । यत्तु 'यद्यन्योऽस्ति पर. कोऽपि', 'एषोऽहमय चान्य.' इत्यत्रैकेनैव पदेन स्वरूपप्रतिपत्तौ पदान्तरस्याकारपरतावश्यम्भाव इति । सत्यम् । एव रूपत. प्रकारतश्च भेदनिषेधसम्प्रतिपत्तेः । नहि 'पर कोऽपी'त्यनुवाद· । बोध्यस्य शुद्धात्मभेदाप्रसिद्धे । तत्प्रसिद्धभेदस्य चाकारभेदनिषेधायोगात् । अत एवाहमय चेति न भेदेनात्मानमनूद्य तत्प्रकारभेदमात्रस्य दुर्वचत्वमुच्यते । यद्यपि को भवानिति प्रश्नो राज्ञो भिन्नदृशो देवादिभेदविषयः, तथापि तत्त्वदृशा भरतेनात्मैकत्वमुपपाद्य रूपत· प्रकारतश्च व्यावर्त्यवचनमनर्थकमित्युच्यते को भवान् सोऽहमित्येतद् वचो विफलमिति । एवमेकवचनैकशब्दस्याङ्गस्यात् । नहि स्वरूपभेदे सत्येव बाह्याभ्यन्तरभेदकाभावादेकमयमित्यैक्यप्राचुर्यमुच्यते । भेदकाभावे स्वरूपभेदासिद्धेः । एकशब्दस्य भावे क्लिष्टत्वात् । 'आत्मपरदेहेष्वि'ति च बोध्यदृशेत्युक्तम् । 'सतोऽप्येकमयमि'ति चोपपादितार्थम् । एव सिद्धे स्वरूपाभेदे 'द्वैतिनोऽनथ्यदर्शिन.' इति न देवादिभेदविषयम् । सामान्यवृत्तेः । नहि 'पण्डिता· समदर्शिनः' इति सद्ब्राह्मणश्वादिषु सामान्यदर्शन विधीयते । प्रत्यवायात् । नहि ब्राह्मणादिशब्दा. केवलात्मविषया., येनाकारैक्यदर्शन समदर्शनामिष्येत । सप्तम्यधिकरणे न विषय इति चेद् , अस्तु तावत् । समशब्दो विशेष्यमाकाङ्क्षेत् । तस्मादुत्कर्षापकर्षदोषहीन सम ब्रह्म । तद्दर्शिन एव समदर्शिन उच्यन्ते । तदेव च तत्त्वद(र्शि [1] र्श)नमिति । यत्तु 'द्वैतिनोऽतथ्यदर्शिन' इति सर्वद्वैतविषयत्वे पिण्डात्माद्वैतमपि स्यादिति । तन्न । सर्वद्वैतबाधोपयोगितया पिण्डात्मविवेचनेन तद्भेदस्यानापाद्यत्वात् । तव देवाद्याकारदर्शनस्यातथ्यदर्शनत्वानुपपत्तेरुक्तत्वाच्च । यद्वा ऐकात्म्यस्य प्रस्तुतत्वादात्मद्वैतदर्शनमेवातथ्यदर्शनमुच्यते । एवञ्च बहुषु बहुवचनमेकस्मिन्नेकवचन प्रकृत्यभिधेयान्वितस्वार्थस्वरसमवति-

---

१ 'स्य' ख पाठः॰

ष्टते। अत एवात्मनानात्वमौपाधिकं भ्रान्तिसिद्धमिति वोच्यते 'वेणुरन्ध्रविभेदेन', 'एकस्य रूपभेदश्च', 'सितनीलादिभेदेन' इति च। यत्त्वत्रैकाकाराणामात्मनामुपाधिनावान्तरभेदसद्भावमात्रं दृष्टान्तेनोच्यते, न स्वरूपाभेदोऽपि। दृष्टान्ते च वायुत्वैकाकाराणा वेणुरन्ध्रोपाधिना षड्जादिसंज्ञितो भेद इति विशेषणादित्यादि। तन्न। स्वरूपाभेदविवक्षयापि दृष्टान्तोपन्यासे बाधकाभावात्। उपपादितश्च 'आत्मपरदेहेष्विति' निर्देशः। न च दृष्टान्ते स्वरसभिन्नानामेव वायूनामुपाधिनावान्तरभेद एव गम्यते येन दार्ष्टान्तेऽपि स एवोपसह्रियेत, अभेदेन व्यापिन इति विरोधात्। वायोरित्येकवचनस्य लाघवेन व्यवहिताकारैकत्वविषयत्वाकल्पनात्। षड्जादिसंज्ञित इति च रन्ध्रोपाधिभेदस्वरूपमेव विशेष्यते न स्वयमेवौपाधिकोऽवान्तरभेद इति। अभेदव्यापिन इति स्वरूपाभेदोक्तेः। अत एव नभोदृष्टान्तेऽपि तदुक्तगतिर्निरस्ता। एकमेवेति दृष्टान्तदार्ष्टान्तयोरुपादानेन स्वरूपैक्यतात्पर्यातिशयावगमात्।

"आकाशमेकं हि यथा घटादिषु पृथक् पृथक्।
तथात्मैकोऽप्यनेकस्थो जलाधारेष्विवांशुमान्॥"

इति स्मृतेश्च। संयोगश्च स्वकृत्युपाधिभिन्नाश्रयवृत्तिरिति न संयोगिनोरण्वाकाशयोरणुत्वमहत्त्वान्यतरापत्तिः। न चैकस्यापि पर्यायेणानेकरूपत्वविभ्रमः स्यादिति वाच्यम्। कालभेदेनेत्यध्याहारगौरवात्। औपाधिकेऽपि जीवभेदे सत्ये जीवजगदीशापृथग्भावे नियाम्यतयोपाधियोगसातत्यप्रसङ्गेन चानिर्मोक्षः स्यात्। नेत्युच्यते 'एकं समस्तं यदिहास्ति किञ्चिदि'त्यादिना 'अव्यक्तादिविशेषान्तमच्युत' इत्युक्ते मा भूदन्यार्थविभ्रम इति 'नास्ति परं ततोऽन्यदि'ति बाधेन निष्केवलज्ञानैकरसताभिधीयते। न च परमिति वस्तुभेदमनूद्य नास्त्यन्यदिति स्वातन्त्र्यनिषेधः स्यात्, एवं परान्यपदद्वयावैयर्थ्यादिति वाच्यम्। अन्यपदस्य स्वातन्त्र्यलक्षणादोषात्। तदच्युतः परं ब्रह्म केवलम्। कथम्। नास्ति ततोऽन्यदित्येवं नास्ति परं नास्त्येवेत्येव वा तदवैयर्थ्याच्च। 'सोऽहं स च त्वमि'ति जीवस्य तदभेदः प्रतिपाद्यते। 'ऐतदात्म्यमिदं सर्वं, तत् त्वमसि श्वेतकेतो!' इति श्रुतिशैलीसज्ञानात्। अन्यथा सामानाधिकरण्यानाञ्जस्यात्। स च सर्वमित्युपात्तान्यजीवाभिप्रायम्। पदवृत्त्या च विशिष्टोपस्थितौ स्वरूपाभेदे वाक्यस्य सर्वत्र लक्षणैवेति नासौ दोषः। एतद् आत्मस्वरूपं यत्र परमार्थे तव

---

१. 'स्तु' क पाठः. २ 'मौपा', ३ 'व तद' ख पाठः.

मनो विह्वलता गतमित्युक्तोपसहार. । 'त्यज भेदमोहमि'ति फलोक्तिः । 'तत्याज भेदामि'ति सजानीयादिसर्वभेदविषय, सामान्योक्तिलाघवात् प्रकरणतात्पर्याच्च ॥

---

## गीताया अभेदपरत्वम् ।

एतेन

"न त्वेवाह जातु नास न त्व नेमे जनाधिपाः ।
न चैव न भविष्याम. सर्वे वयमत परम् ॥"

इति पार्थायाज्ञानशोकनिवृत्तये पारमार्थिकनित्यात्मविषयाहन्त्वमादिनिर्देशादात्मभेदो भगवदभिमत इति निरस्तम् । न खल्वत्राहन्त्वमिति भेदो विधीयते । अनुवादस्तु यथाव्यवहारविषयो नौपाधिकभेदमतिवर्तते । उपदेश्यदृष्ट्या चाहंत्वमित्याद्यनूद्यात्मनित्यत्वविधिपरत्वात् । अन्यथा

"सम सर्वेषु भूतेषु तिष्ठन्त परमेश्वरम्"
"अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः"
"क्षेत्रज्ञ चापि मा विद्धि सर्वक्षेत्रेषु भारत !"
"क्षेत्र क्षेत्री तथा कृत्स्न प्रकाशयति भारत !"

इत्यादिभगवदात्मैकत्वदर्शनविरोधात् ॥

---

## प्रत्यस्तमितभेदमितिश्लोकार्थ ।

एव प्रत्यस्तमितभेदमित्यादौ विमर्द्य कुसुमाघ्राणगीतिरकल्पनीया । 'स सर्वभूतप्रकृतिमि'त्यादिसविशेषवचनाना भगवद्वासुदेवादिपदवाच्यत्वस्य च कारणरूपविषयत्वात् । यद्यप्याध्यात्मिकादिदु खभेषजतया यत्प्राप्तिरुक्ता

"तदस्य त्रिविधस्यापि दुःखजातस्य पण्डितै."
(विष्णुपु० अं० ६. अ० ५. श्लो० ५८)
"भेषज भगवत्प्राप्तिरेकान्तात्यन्तिकी मता"
(विष्णुपु० अ० ६ अ० ५. श्लो० ५९)

इति, तदेव

"यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम् ।
अनिर्देश्यमरूप च पाणिपादाद्यसयुतम् ॥
विभु सर्वगत नित्य भूतयोनिमकारणम् ।
व्याप्य व्याप्त यतः सर्व तद् वै पश्यन्ति सूरयः ॥
तद् ब्रह्म परम धाम तद् ध्येय मोक्षकारणम् ।
श्रुतिवाक्योदित सूक्ष्म तद् विष्णो. परम पदम् ॥"
(विष्णुपु० अं० ६. अ० ५. श्लो० ६६—६८)

इति स्वरूपेणोपलक्षणेन चानुकृष्य

"तदेव भगवद्वाच्यस्वरूप परमात्मन· ।
वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः ॥"
(विष्णुपु० अं० ६. अ० ५. श्लो० ६९)

इति भगवद्वाच्यत्वमुक्तम् । तथापि

"अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज ! ।
पूजाया भगवच्छब्दः क्रियते ह्युपचारतः ॥"
(विष्णुपु० अ० ६. अ० ५. श्लो० ७१)

इत्युक्तेः अप्रस्तुतत्वेन मुक्तस्य ब्रह्मण इति परामर्शानुपपत्ते., तस्यैव परब्रह्मणो मायोपाधिकस्य सकलगुणमयतया वासुदेवाख्यकारणरूपद्वारा विशुद्धं भगवत्पदेन लक्ष्यते इति गम्यते । अत एव शुद्धे परे ब्रह्माणि सर्वकारणकारणे भगवच्छब्द इत्युक्तम् । यथा च तत्र भगवच्छब्दो नोपचारेण, अन्यत्रोपचारतस्तथोक्त ब्रह्मपदव्युत्पत्तिप्रसङ्गे । शास्त्रेषु च सगुणमपि ब्रह्म प्रपञ्च्यते, उपासनया निर्गुणविज्ञानोपकारात् । 'समस्ता· शक्तयश्चैता' इत्यादिश्च न सविशेषोपसहार इति समनन्तरमेव स्फुटिष्यते । एवञ्च 'प्रत्यस्तमितभेदमि'ति सजातीयादिसकलभेदविरोधिस्वरूपमुपलक्ष्यते । जडगुणादिभेदस्य कारणविषयत्वात् । यत्रेदं श्रूयते 'एकमेवाद्वितीय', 'प्रपञ्चोपशम. शिवोऽद्वैत.' इत्यादि । न चाविशेषनिषेधो विशेषे सङ्कोचनीयः, श्रुत्यादिविरोधो हि नास्तीत्युक्तम् ।

यत्तु 'प्रत्यस्तमितभेदमि'ति त्रिविधपरिच्छेदनिषेध इति, तन्न । भेदशब्दस्यापेक्षाबुद्धिपरिच्छेद्यत्वलक्षणे परिच्छेदेऽप्रसिद्धेः । 'परः पराणामि'त्यादि

इति चतूरूप ब्रह्म प्रस्तुत्य, तत्र ध्येयरूपनिर्धारणायापर मूर्त ब्रह्म सनन्दनादिरूप भावनात्रितयान्वितमुक्त्वा, पर चामूर्त प्रत्यस्तमितभेदादिलक्षणं

"तच्च विष्णोः पर रूपमरूपमजमक्षरम्"

(विष्णुपु० अ० ६. अ० ७. श्लो० ५४)

इति निरूप्य, 'न तद् योगयुजा शक्य' चिन्तयितुमिति स्थूलं हरे रूप चिन्त्यमित्युक्त्वा, अन्ये चेतस उपाश्रया अशुद्धा देवाद्याः कर्मयोनयः इति विवक्षया 'हिरण्यगर्भो भगवान्' इत्यारभ्य

"मूर्तमेतद्धरे रूप भावनात्रितयात्मकम्"

(विष्णुपु० अं० ६. अ० ७. श्लो० ५९)

अध्येयमभिधाय,

"द्वितीयं विष्णुसञ्ज्ञस्य योगिध्येय्र महामते! "

"अमूर्तं ब्रह्मणो रूपं यत् सदित्युच्यते बुधै."

(विष्णुपु० अं० ६. अ० ७. श्लो० ६८)

इत्यपरममूर्तं कारणरूपमुपन्यस्य, अस्यापि सर्वसमष्टिमयस्य योगयुजा ध्यातुमशक्यतया

"सर्वशक्तिमयो विष्णुः स्वरूप ब्रह्मणोऽपरम् ।
मूर्त यद् योगिभिः पूर्व योगारम्भेषु चिन्त्यते ॥"

(विष्णुपु० अं० १. अ० २२. श्लो० ६०)

"स परः सर्वशक्तीना ब्रह्मणः समनन्तरः ।
मूर्त ब्रह्म महाभाग! सर्वब्रह्ममयो हरि: ॥"

(विष्णुपु० अ० १. अ० २२. श्लो० ६२

इत्यस्त्रभूषणाध्यायोक्तरीत्या

"समस्ता: शक्तयश्चैता नृप! यत्र प्रतिष्ठिताः ।
तद् विश्वरूपवैरूप्य रूपमन्यद्धरेर्महत् ॥
समस्तशक्तिरूपाणि तत् करोति जनेश्वर! ।
देवतिर्यङ्मनुष्या(ख्या ? दि)चेष्टावन्ति स्वलीलया ॥ "

(विष्णुपु० अ० ६ अ० ७. श्लो०' ६९. ७०)

इति सह हर्युपेन्द्राद्यवतारेण पर मूर्त रूपमुक्त्वा,

"तद् रूप विश्वरूपस्य तस्य योगयुजा नृप! ।
चिन्त्यमात्मविशुद्ध्यर्थं सर्वकिल्बिषनाशनम् " ॥

(विष्णुपु० अं० ६. अ० ७. श्लो० ७२)

"तस्मात् समस्तशक्तीनामाधारे तत्र चेतस. ।
कुर्वीत संस्थिति साथ विज्ञेया शुद्धधारणा" ॥

(विष्णुपु० अ० ६. अ० ७ श्लो० ७४)

इति च ।

"आत्मानमस्य जगतो निर्लेपमगुणामलम् ।
बिभर्ति कौस्तुभमणिस्वरूप भगवान् हरि. " ॥

(विष्णुपु० अ० १ अ० २२. श्लो० ६७)

इत्यारभ्य

"इत्थं पुमान् प्रधानं च बुद्ध्यहङ्कारमेव च ।
भूतानि च हृषीकेशे मनः सर्वेन्द्रियाणि च ॥
विद्याविद्ये च मैत्रेय! सर्वमेतत् समाश्रितम् ।
अस्त्रभूषणसंस्थानस्वरूप रूपवर्जितः ॥
बिभर्ति मायारूपोऽसौ श्रेयसे प्राणिनां हरि· ।"

(विष्णुपु० अ० १. अ० २२ श्लो० ७४, ७५)

इत्यस्त्रभूषणाध्यायगदिते

"प्रसन्नवदन चारुपद्मपत्त्रायतेक्षणम् "

(विष्णुपु० अ० ६. अ० ७. श्लो० ७९)

इत्यादिनिर्वर्णितदिव्यमङ्गलविग्रहे भगवति धारणामुक्त्वा, तद्धारणासिद्धावस्त्रभूषणावयवसन्निवेशभेदकल्पितमूर्तरूपशैथिल्येन तदेकावयव देवमेकीभूतावयवसन्निवेशभेद समूढतेज.पुञ्जमिवापरममूर्तं कारणरूप सच्छाब्दित 'चेतसा हि पुनः पुनः । कुर्याद्'

इत्युक्त्वा

"ततोऽव्य[illegible]नि प्रणिधानपरो भवेद्"

(विष्णुपु० अं० ६. अ० ७. श्लो०८८)

इति प्रत्यस्तमितभेदादिलक्षणे परामूर्ते ब्रह्मणि संमिश्रणात् समष्टिमय कारण रूपमवयव. सोऽस्मिन्नस्ति

"मृत्युर्यस्योपसेचन क इत्था वेद यत्र सः"

इति श्रुतेरित्यवयविशब्दोपलक्ष्ये प्रणिधानमुक्त्वा, तत्समाधिजनितापरोक्षज्ञाने नाशेपभावभावनाप्रक्षये 'तद्भावभावमापन्न' इत्यादिना स्वरूपप्रतिष्ठालक्षणेन कैवल्येनोपसहरति। तत्र प्रत्यस्तमितेत्यादेर्मुक्तविषयत्वे प्रस्तुतपरामूर्तस्याप्रतिपत्ति., अप्रस्तुतविषयता च प्रसज्येत। न च 'मूर्त चामूर्त चे'ति यावत् प्रस्तुत पर चापर चेति विशेष्यते। क्रमभेदाद् धारणाधार[1]परिच्छेदफले तत्र विशेषणस्यानतिप्रयोजनत्वात्। द्वितीय[2]ममूर्तमिति विशेषणविरोधाच्च। 'तच्च विष्णो. पर रूपमरूपमि'ति यत् प्रत्यस्तमितभेदादिलक्षणममूर्त पर रूप, तदपेक्षया हि द्वितीयमुच्यते। मूर्तरूपादपि तस्य साजात्यसन्निकर्षात्। मूर्तरूपस्य जगात रूपितावयवसन्निवेशभेदसमस्तशक्तिमयात्मना च परापरविभाग, तत्सहशिष्ट स्यामूर्तस्यापि तद्विभागौचित्याच्च। 'आश्रयश्चेतसो ब्रह्म द्विधे'ति चोभयथापि द्वैविध्यादुपपन्नम्। एव सति 'समस्ताः शक्तयः' इत्यादिसाविशेषोपसहारोऽपि समञ्जस इति निरस्तम्, तस्यान्यथोपपादितविषयत्वात्॥

---

तद्भावम् आत्मभावम् इतिश्लोकौ।

तद्भावेत्यादिनैकात्म्योपसंहाराच्च। न च प्रक्षीणाशेषभावनस्य मुक्तस्य प्राप्ये ब्रह्मणि प्रापणीयतयाभिधानाज्जीवपरभेद इति वाच्यम्। अविद्याविल यस्य ब्रह्मभावमात्रत्वोप[illegible] चावस्थाभेदापेक्षत्वात्। परस्यापि शुद्धात्मविशिष्टब्रह्म[illegible]त्वोपगमेन तथैव वाच्यत्वात्। न च तथाशब्द साम्यपरः, तदनुपपत्तेरुक्तत्वात्। 'भवत्यभेदी'ति च समानाकारत्वे

---

१ 'न', २ 'यमू' ख पाठ.

गौणत्वकल्पनागौरवात् । न चैव द्वितीयभावपदवैयर्थ्यम् । तत्पदस्य ध्येयसविशेषरूपपरतया तस्य भावो वास्तवं निर्विशेषमत्तैकरसस्वरूपं तद्भूयङ्गत इत्यर्थविशेषोपपत्तेः ॥

---

एकस्य प्राप्यप्राप्तृभावे परसम्मतिः ।

एतेन 'आत्मभावं नयत्येनमि'ति व्याख्यातम् । ध्येयं हि सगुणं ब्रह्म परेश्वरशब्दितं ध्यायिनमाकर्षको लोहमिव दारुसम्बन्धात् प्रकृतितादात्म्याद् निष्कृष्य त्रिभावभावनातीतस्वात्मकैवल्यं नयति । उपासनापरिपाके स्वात्मतत्त्वसाक्षात्कारोपपत्तेः । न चाकर्षकादिवद् निष्कृष्टलोहस्य निर्मुक्तस्यापि ब्रह्मणो भेदः सम्भावनीयः । दृष्टान्तस्वारस्यमात्रेण शास्त्रार्थतादात्म्यभङ्गायोगात् ।

एवं च 'भेदश्च तस्याज्ञानकृतो भवेत्', 'विभेदजनकेऽज्ञाने' इति च भिन्नानामेव ज्ञानैकाकाराणां कर्मनिमित्तो देवाद्याकारभेद इत्येवम्परं न व्याख्येयम् । भेदसामान्यशब्दस्य विशेषवृत्तिकल्पनागौरवात् । न च

"एकस्य रूपभेदो(ऽयं)बाह्यकर्मावृतिप्रजः"

इत्युक्तमिति वाच्यम् । नह्यत्रैकस्येत्येकाकारत्वमुच्यते, शब्दवृत्तिव्यवधानात् । नापि पर्यायेणानेकशरीरानुयाय्येको जीवः, 'समस्तभूतेषु पुमानेको व्यवस्थितः' इत्यभिधानात्, किन्त्वद्वितीय एव । तस्य यद्यपि रूपभेदः कर्मणैव, तथापि कर्मसम्बन्धार्हरूपभेद एवानाद्यनिर्वचनीयस्वरूपाज्ञानाधीन इति तत्राक्षेपलभ्यमज्ञानमिह स्वशब्देनोच्यते । न चाकर्मण्यज्ञानशब्दाव्युत्पत्तिः ।

"श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ! ।
अनात्मन्यात्मबुद्धिर्या"

(विष्णुपु० अं० ६. अ० ७ श्लो १०, ११)

इत्यादिना कर्मान्याविद्यारूपाभिधानात् । यद्यप्यत्र भ्रान्तिरविद्येत्युक्तं न सैद्धान्तिकमनाद्यज्ञानं, तथापि मोहतमोवृतः अहं ममेति मतिं कुरुते इत्यनन्तरोक्तेभ्रान्तिहेतुतयावारकमोहतमश्शब्दितमज्ञानमुपेयते ।

"माया तवेयमज्ञातपरमार्थातिमोहिनी ।
अनात्मन्यात्मविज्ञानं यया मूढोऽधिरोहति ॥
अस्वे स्वमिति भावोऽत्र यत् पुंसामुपजायते ।
संसारमातुर्मायायास्तवैतन्नाथ[1] चेष्टितम् ॥"

---

१. 'था' ख. पाठ

इत्यादिदर्शनाच्च । तन्निबन्धनो ब्रह्मान्यभावो जीवस्य नानात्वमचिद्भेदश्चेत्यु-च्यते 'भेदश्च तस्याज्ञानकृत.', 'विभेदजनकेऽज्ञाने' इति चेति ॥

---

विभेदजनके इत्यादेरैकात्म्ये अस्वारस्यभङ्ग ।

यत्तु ऐकात्म्ये 'विभेदजनके इत्याद्यस्वारस्यमिति । तन्न । अनादिरध्यासोऽपि जीवपरभेद. साम्प्रतिक इति कृत्वा व्यवह्रियत इति हि दर्शित 'सदेवे'त्यवधारणादिना । आगमानुगामिन्या च स्मृत्या तथैव निर्दिश्यते 'विभेदजनक' इति भेदस्याज्ञानाधीनत्वोपपत्ते. । अज्ञानशब्दश्चापूर्वावधौ न जानामीत्यनुभवसिद्धे प्रसिद्धः, न कर्मणि । क्वचित् कर्मण्यविद्याशब्दस्य तन्मयत्वेनोपचारात् । लोकवेदव्यवहारानुगमेनापरोक्षावरणभेद एव व्युत्पत्तेः । असन्तमिति च न सद्भेदव्यावर्तनाय, स्वरूपान्वाख्यानमात्रत्वात् । अन्यथा सन्त तु भेद कुर्यादित्यर्थपरिशेषापत्तेः । अथ बाधान्नैव परिशेषः, असन्तमिति व्यर्थ, भेद कः करिष्यतीत्येव कार्यभेदसिद्धावनतिप्रसङ्गात् । हेत्वभावेऽपि स्वत एव भेदः स्यादिति शङ्कानिवृत्तिफलत्व पुनरस्माकमपि । अभेदो हि स्वभाव. ।

"अहमात्मा गुडाकेश! सर्वभूताशयस्थित·"

इत्याशयशब्दिते हृद्यन्तर्ज्योति. पुरुषरूपेण परमात्मनः स्थितिस्मरणात् । आशयशब्देनाशयस्थो जीवो लक्ष्यते, तस्मिन्नात्मतया स्थितः परमात्मोच्यते चेत्, सोऽय सर्वत्र दुर्मेधसः क्लिष्टकल्पनादोषः । 'क्षेत्रज्ञ चापि मां विद्धी'ति च जीवपरस्वरूपाभेदपरमेवेत्यावेदितम् । यत्तु क्षेत्रज्ञः परमात्मैव, जीवः पुनरन्यो भविष्यति यस्तद्बोधेन मोक्षणीय इति । तन्न, क्षेत्रज्ञशब्दस्य जीवे प्रसिद्धेः । अन्यथा वचनानर्थक्याच्च ॥

---

द्वे रूपे इत्यादेर्जीवब्रह्मभेदपरत्वायोगः ।

यत्तु द्वे रूपे ब्रह्मण इत्यादौ क्षराक्षरशब्दितबद्धमुक्तजीवव्यतिरेको ब्रह्मण उच्यत इति । तन्न । 'आश्रयश्चेतसो ब्रह्मेत्यादौ चतूरूप हि ब्रह्म

---

१. 'वस्व' क पाठ..

विवक्ष्यते निर्विशेषात्मतत्त्व सदात्मक, कारणरूप भगवद्वासुदेवाख्य, समस्तशक्तिमयदिव्यमङ्गलविग्रहविशेषित, हिरण्यगर्भादिजगदात्मक चेति । इहापि 'निर्व्यापारमि'त्यादिना निर्विशेषरूपमुदितम् । 'सर्वशक्तिमयो विष्णुरि'त्यादिना च तृतीय रूपम् । एव सति परिशेषाज्जगद्रूप कारणरूप च वक्तव्यमिति तदेव 'द्वे रूपे' इत्यादौ प्रतिपत्तु युक्तम् । उभयत्र परतत्त्वज्ञानोपायवचनप्रवृत्तिसामान्यात् । न च सर्वभूतस्थितिविरोध, नहि कार्यमत्यन्तमेव कारणाभिन्न, कार्यकारणताविरोधात् । कारणविवेके कार्यस्य तुच्छतापत्त्या हि तदनन्यत्वमिष्यते । तथा चाक्षरस्य कारणस्य सर्वभूतस्थितिरुपपन्ना क्षरशब्देन च जगदुपाधिजीव एव विवक्ष्यते ।

"एकदेशस्थितस्येन्दोर्ज्योत्स्ना विस्तारिणी यथा"

(विष्णुपु० अ० १. अ० २२. श्लो०५५)

"*परस्य ब्रह्मणः शक्तिस्तथेदमखिल जगद्"

इति क्षेत्रज्ञशक्ति निर्दिश्य ब्रह्मादिगुल्मान्तेषु तारतम्याभिधानात् । समानप्रकरणे च

"विष्णुशक्ति परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा"

(विष्णुपु० अ० ६. अ०७ श्लो० ६१)

इति प्रकृत्य

"तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसज्ञिता ।
सर्वभूतेषु भूपाल! तारतम्येन लक्ष्यते ॥"

(विष्णुपु० अ० ६. अ०७. श्लो०६३)

इत्याद्यभिहितम् । शक्तिरिति च कार्यभवनानुकूलतोपाधिनाभिधीयते, न त्वपृथक्सिद्धविशेषणतापि तदर्थ । गौरवात् । स्वभावाभिन्नस्यापि तदुपाधिनैव भिद्यमानस्य[1] तथात्वोपपत्तेश्च । क्षेत्रज्ञस्य च सर्वभूतस्थितिरुपपन्ना, सर्वत्र तादात्म्याभिमानिविशिष्टब्रह्मण[2] एव जीवत्वात् । अन्यथा परस्यैव गौणी सर्वभूतस्थितिरापद्येत । क्रमेणेति ज्ञानद्वारेति चोपक्षेपात् । 'अक्षर तत् पर ब्रह्मे'ति विशेषणानाञ्जस्य च । मुक्तस्यापि निरुपचरितपरत्वाभावात् कल्पनाभेदाच्च व्यतिरेकनिर्देशो निर्वक्ष्यते । एव च क्षराक्षरशब्दार्थान्तरमनाशङ्क्यमदूष्य च ॥

१ श्च', २. 'भिनिविष्ट' ख पाठः

* इदमर्ध मुद्रितविष्णुपुराणे न दृश्यते ।

द्वाविमौ पुरुषौ इत्यादेरर्थः ।

एव 'द्वाविमौ पुरुषावि'त्यादावपि क्षराक्षरशब्दावुक्तविषयौ वेदितव्यौ । कूटो राशि· समुदाय समष्टिः, तदात्मना कारणरूपेण तिष्ठतीति कूटस्थ. । स च स्वविकारेषु क्षरत्स्वपि न क्षरति स्वय तानश्नुते वेति परोऽक्षरः । तच्चोभय क्षराक्षरशब्दित कार्यकारणमात्मना तादात्म्येन सन्दब्धमिति पुरुषशब्देनोच्यते । तथाच श्रुतिः 'तदनुप्रविश्य सच्च त्यच्चाभवदि'ति । इहापि 'यो लोकत्रयमाविश्य बिभर्ती'त्युक्तम् । आभ्या च कार्यकारणरूपाभ्यामस्पृष्ट नित्यशुद्धबुद्धमुक्तस्वभावमन्यत् तदुभयविलक्षण परममूर्तरूप ब्रह्मणो दर्शयति

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत."

इति । न तु बद्धमुक्ताभ्यामुत्तम. पुरुषोऽन्य उच्यते, उदितन्यायोपस्कृतसकलशास्त्रव्याकुलताप्रसङ्गात् । अखण्डात्मतत्त्व हि 'तत्त्वमस्या'दिशास्त्रेण समर्प्यत इत्यावेदितम् । यद्यपि तदेव ब्रह्म कार्यकारणरूपविवृत्त, तथापि विशिष्टरूपापेक्षया केवलस्यान्यत्व घटाकाशादिव केवलाकाशस्य परिच्छिन्नप्रतियोगिव्यपदेशनिमित्त व्यपदिश्यते ।

"इदानीमसि मारीच. पूर्वमन्यो निशाचरः"

इत्यादिवदन्यत्वानन्यत्वयोर्विकल्पमात्रत्वात् । तमेन परमात्मान जन्मादिशास्त्राश्रयणेनोपलक्षयति

"यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर."

इति । निरुक्तपर[1]तत्त्वात्मना च सदैव परमेश्वरस्य व्यक्तीभावाद् भगवान् वासुदेव· पुरुषोत्तमशब्देन निगद्यते इत्युच्यते 'यस्मात् क्षरमतीतोऽहमि'त्यादिना । एव

"स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्"

इति सामानाधिकरण्येन सविभूतिकारणरूपोपलक्ष्यं स्वप्रभ परमात्मानमवगमयति, न तु तत्तच्छरीरविशिष्टमिति श्लिष्टम् । 'यो मामेवमि'ति जगत्कारणत्वादि तदवगतिद्वारमवमृश्यते । नहि तस्य वेदितव्य प्रकारभेदो निर्दिष्ट,

---

१ 'रत्वात्म' ख. पाठ

यं तमेवमिति प्रतीयाम । 'असम्मूढो जानाती'ति च कार्यकारणरूपातीतस्वरूपविज्ञानमुच्यते । 'दिव्यो ह्यमूर्त पुरुष.', 'अक्षरात परत पर' इत्युभयातीतस्य शुद्धस्य परमात्मनः श्रवणात् ॥

---

### पुराणस्य कारणातीतपरत्वम् ।

पुराणेऽपि कारणातीत शुद्ध ब्रह्मानुस्मर्यते

"प्रसूतिनाशस्थितिहेतुरीश्वरस्त्वमेव नान्यत् परतश्च यत् पदम् ।
तस्माच्च सूक्ष्मादिविशेषणानामगोचरं यत् परमार्थभूतम् ॥
किमप्यचिन्त्य तव रूपमस्ति तस्मै नमस्ते पुरुषोत्तमाय ।
शुक्लादिदीर्घादिघनादिहीनमगोचरे यच्च विशेषणानाम् ॥
शुद्धातिशुद्ध परमर्षिदृश्यरूपाय तस्मै भगवन्! नताः स्म ।

इत्यादौ । 'रूप महत् तेऽच्युत! यत्र विश्वं यतश्च विश्वमि'त्यादि, 'तेष्वन्तरात्माख्यमतीव सूक्ष्ममि'ति, 'तस्मै नम कारणकारणाये'ति च पृथक् कारणरूपस्याभिहितत्वात् ॥

---

### जगत्कारणत्वस्य निर्विशेषब्रह्मलक्षणत्वम् ।

अन्यथा कस्येदं जन्मादिकारणत्व लक्षणमुच्येतेत्युक्तम् । ननु पृथिव्या एव पृथिवीत्व लक्ष्म नापृथिव्या । एवं कारणत्वमपि कारणस्यैव स्यात् । तत्र यदि पृथिवीत्व सस्थानभेद स्वरूपमेव, युक्त तस्य स्वरूप लक्षणमिति ज्ञानादिकमिव ब्रह्मण, प्रतिपद्यमानस्वरूपस्यैव सर्वतो व्यावृत्तासङ्कीर्णबुद्धिप्रयोजकतया लक्षणत्वोपगमात् । अथ स्वरूपादतिरिच्येत, तद्विशेषविधुरमेव स्वरूप लक्ष्येत । किन्तु तत्र विशेषनिषेधाभावात् पृथिव्येव सेति वस्तुगत्या पृथिव्यास्तल्लक्षणमुच्यते । अत एव न्यायिनोऽपि लक्षणाकारादाकारान्तरेण लक्ष्यतामिच्छन्ति । न चेह कारणत्वमात्मन स्वरूपं, तमसः परस्तान्निर्विकल्पस्य निरञ्जनस्य तदयोगात् । नापि धर्म, अनन्तराबाह्यात्मनि धर्मधर्मिभावायोगात् । तत्प्रयोजकसम्बन्धस्येह दुर्निरूपत्वाच्च । सर्वत्रैव धर्मधर्मिभावस्य सम्बन्धनिरूप्यत्वात् ।[1] अन्यथा गवाश्वादेरपि स किं न स्यात् । अथ तादात्म्य सम्बन्ध, न । तस्यैवैकस्य धर्मधर्मिभावायोगात् । भेदोऽपीति चेद्, न । अभेदविरोधात् । अथ तस्यैव रूपभेदो धर्म, कस्याय रूपभेदो गोत्वं सास्नादिसन्निवेशभेदश्च ।

---

१. 'नि धर्मि' ख पाठ

"जातेः संस्थानभेदाच्च निष्कृष्टा गौर्न गम्यते ।
त्वचादितो विनिष्कृष्टा कदलीव कथञ्चन"॥

एवं कारणत्वादि यदि ब्रह्मणो रूपभेदः स्याद् न धर्मधर्मिभावः । अपि च

"नागन्तू रूपभेदस्तत्स्वरूपानुपमर्दतः।
तत्स्वरूपोपमर्दे च कस्य धर्मः स कथ्यताम्"॥

तस्मादागन्तोरनागन्तोर्वा रूपभेदस्य धर्मभावायोगाद् जगज्जन्मादिहेतुता न ब्रह्मधर्मः । नन्वेव तत् तस्य लक्षण न स्याद् गोरिवाश्वत्वम् । न । अहिशाखादेरस्रक्चन्द्रादिधर्मस्य तल्लक्षणत्वोपगमाद् असावहि स्रक्, शाखाय चन्द्र इति । तत्र सामानाधिकरण्यं परमुपपादयितुमैकार्थ्यकल्पनाक्लेशः । लक्षणं तु शाखादिकमेव । अपिचोपेयत एत्राविद्यको धर्मधर्मिभावसम्बन्ध । किन्तु तेन सर्वज्ञानादिमयेन शास्त्रैकसमधिगमनीयमशेषविशेषविरोधिस्वरूपमेव लक्षणीयम्, लक्ष्यस्वरूपबाधाय लक्षणायोगात् । नहि विसर्पणोत्फणनाद्युपपाद्यफणित्वादिलक्षण स्रग्रूपबाधाय । काल्पनिक तन्न बाधते ज्ञाते चेत् । कारणत्वमपि शास्त्रतात्पर्यविषयलक्ष्यस्वरूपाबाधाय काल्पनिकमस्तु । शेषिभूताधानधर्मोपांशुत्वानुरोधायापि तदङ्गसाम्न उच्चैस्त्वमौत्पत्तिकमपि बाधित्वो पांशुत्वमुपेयते । प्रकृते च शेषिभूतलक्ष्यस्वरूपानुरोधाय तच्छेषकारणत्वरूपलक्षणस्यासिद्धानपेक्षितवस्तुभावस्य यथाकथञ्चिदुपपद्यमानस्य काल्पनिकत्वोपगमो हि न्याय्यतरः । न च गन्धवत्त्वाद्याकारान्तरविशिष्टा पृथिवीव पृथिवीत्वेन सर्वज्ञत्वाद्याकारान्तरविशिष्ट सविशेषमेव ब्रह्म कारणत्वेन लक्ष्यताम्, एवं तस्य न काल्पनिकत्व कल्प्येतेति वाच्यम् । सर्वज्ञत्वादिघटितशरीरस्यैव तस्य तल्लक्षणत्वाद्, अन्यथा प्रधानादिव्यावृत्त्यसिद्धेः । तदिदमुक्त *जन्मादिभाष्ये

**जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेर्भवति तद् ब्रह्मेति वाक्यशेषः**

---

* 'जन्माद्यस्य यत' (ब्रसू० १ १ २) इत्यत्र ।

इति । एवं कारणोत्तीर्णं यो मां विजानाति, स सर्वविदिति युज्येत । अन्यथा कारणरूपविज्ञानेऽपि निरङ्कुशसर्ववित्त्वायोगात् । यथा चैतत् तथाधस्तादभ्यधाम ॥

---

ऊर्ध्वमूलमित्याद्यध्यायतात्पर्यम् ।

अपि च इहाध्याये 'ऊर्ध्वमूलमधश्शाखमि'त्यादिना सकारणं संसारं प्रकृत्य,

"ततः पदं तत् परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः"

इति संसारवर्तन्यनावर्तनाय वेदितव्यतयोक्तं 'न तद्भासयते' इत्यादिना विशेष्यते । न चात्र वेदितव्यं पदं परमात्मातिरिक्तं शुद्धः प्रत्यगात्मैव,

"तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी"

इति प्रपदनीयस्यान्यस्य पुरुषस्याभिधानादिति वाच्यम् । तमिति प्रकृतवेदितव्यपदावमर्शनात् । अथ न प्रकृतावमर्शः, यतः प्रवृत्तिः प्रसृता तमित्यभिसम्बन्धादित्युच्येत, तथापि विषयभेद उत्तमपुरुषानिर्वाहात् । विषयैक्ये च कथं तत् पदं परिमार्गितव्यं, 'तमेव चाद्यं पुरुषं प्रपद्ये' इत्येवमिति निरुह्येत । अन्यथा तकारलोपो वा कल्प्येत । [1]प्रपद्येति पाठभेदो वा । 'तद्धाम परमं मम'ति तु निर्देशोऽपि कथञ्चिन्नेयः । अपि च परमात्मातिरिक्तप्रत्यगात्मवेदनादेव संसारातिवर्तने तदङ्गं ब्रह्मोपासनममानित्वादिवदापन्नमिति तत्र विपरीताभ्युपगमो विरुध्येत । 'तमेव विदित्वातिमृत्युमेती'त्यादिश्चाङ्गिफलेनाङ्गस्तुतिमात्रमिति वा कल्प्येत । तथाचार्थविप्रकर्षः । तदेवमनादिसंसारप्रवृत्तिकारणरूपोपलक्षणीयं हेतुविकाररूपोत्तीर्णं वेदितव्यं पदमुपन्यस्य तस्यैव कारणरूपोपाश्रयेण

"ममैवांशो जीवलोके जीवभूतः सनातनः"

इति जीवेशविभागापत्तिमभिधाय, तदेव 'यदादित्यगतं तेजः' इत्यादिना सर्वात्मकमुक्त्वा पुनः 'स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इति मुक्तस्यात्मभूतं क्षराक्षरातीतमुपनिगमयति 'उत्तमः पुरुषस्त्वन्यः' इति । न चैवं सति 'क्षरश्चाक्षर एव चे'ति बद्धमुक्तावेवमृश्येयाताम्, परमात्मन एव परिमार्गितव्यपदत्वे सति मुक्तस्यासन्निहितत्वात् । अथ वेदितव्यादेतस्मादक्षराद् उत्क्रान्त्यादिमतो जीवाच्च क्षरादुत्तमः पुरुषोऽन्य उच्येत, वेदितव्यतयोपाक्षिप्त

---

१ 'प्रतिप' ख. पाठ.

'यो मामेवमसम्मूढो जानाती'ति न निगम्येत। तस्माद्धेतुविकाराभ्यामेव क्षराक्षरशब्दाभ्यामुत्तम पुरुषोऽन्य परमात्मेोच्यत इति युक्तम्। न तु प्रत्यगात्मनोऽन्यः, तद्विद. सर्वविस्वाद्यसामञ्जस्यात्। तदिद हेतुविकारातीतकेवलप्रत्यगभिन्नब्रह्मात्मवेदन तदावेदकशास्त्रद्वारा स्तूयते इति गुह्यतम शास्त्रमेतद् बुद्ध्वा स्यात् कृतकृत्य इति। न तु विशुद्धप्रत्यगात्मवैलक्षण्यवेदन, तस्येहाप्रकृतत्वात्।

यत्तु अविद्यादिसम्बन्धार्हस्य तदनर्हब्रह्माभेदोऽसम्भवीति। तन्न। जीवोऽपि ह्यपहतपाप्मादिस्वभावस्तत्रापि सम्प्रतिपन्नः 'य आत्मापहतपाप्मा', 'असङ्गो ह्यय पुरुषः',

"नादत्ते कस्यचित् पाप न चैव सुकृतं विभुः"
"शरीरस्थोऽपि कौन्तेय! न करोति न लिप्यते"
"निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः।
दुःखाज्ञानमला धर्माः प्रकृतेस्ते तु नात्मनः॥"
(विष्णुपु० अ० ६. अ० ८. श्लो० २२)

इत्यादिश्रुतिस्मृतिभ्यः। तथापि

"मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्"

इतीश्वराधीनप्रकृतिसंयोगे सति

"कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु"
"तथात्मा प्रकृतौ सङ्गादहम्मानादिदूषितः।
भजते प्राकृतान् धर्मान्"
(विष्णुपु० अ० १. अ० ७. श्लो० २४)

इत्यादिना तस्यैव शतश. संसार उपवर्ण्यत इति चेत्। स तर्हि स्वभावनिर्धूतदोषस्यापि परमात्मन एव स्तात्। स्वतोऽसङ्गस्वभावत्व च समानम्। नहि गुणसङ्गिस्वभावत्वे जीवस्यासङ्गत्वादिवचः सङ्गच्छेत। अथाविद्ययैवास्य गुणसङ्ग। न च सर्वज्ञस्याविद्या सम्भवतीत्यन्यत्वमिति चेत्। सा यदि तस्य स्वभाव, ज्ञानादिवन्न निवर्तेत। न खल्वौष्ण्यं प्रकाशो वाग्नौ सति निवर्तते। अथागन्तुको धर्म', स विक्रियेत।

"उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्"

इति, 'अज आत्मा महान् ध्रुव', 'अविकार्योऽयमुच्यते', 'कूटस्थमचलं ध्रुव-

मि'त्यादिविरोधः । स्वभावसर्वज्ञ(सर्व)शक्तेरनिमित्तागन्तवविद्यासम्बन्धे मुक्तबन्धप्रसङ्गश्च । अहं ममेत्यविद्यया ज्ञानावरणं कर्म, तेन चाविद्येत्यनादिरयं प्रवाह इति चेद्, न । एवमपि विकारापत्तेरपरिहार्यत्वात् । नहि 'आत्मभावं नयत्येनमि'त्यत्र 'विकार्यमात्मनः शक्त्ये'त्याहत्यात्मनो विकार्यत्वमुच्यते, अनित्यत्वप्रसङ्गात् । किन्तु जीवरूपभेदेन, तद्रूपहानेन स्वरूपकैवल्यस्य नेयत्वात् । अविद्ययैवाविद्यादिसम्बन्धोऽपीति चेद्, हन्तैवमनादिविभ्रमसय्य विद्या परमात्मन्येव सर्वसंसारविभ्रममादधातु । न किञ्चिद् दुष्यति । सर्वज्ञस्य सतोऽविद्या न सम्भवतीति चेद्, मा सम्भूत् । परमात्मैव हि सर्वज्ञः संसारी चेति व्यवस्थितधर्म एवावतिष्ठते । मृषैवेत्युपगम्यते मायया ह्यन्यदिवेति । यथा चैतत् तथोक्तमधस्तात् । एवञ्च अन्यस्य स्थितिनाशयोरन्यात्मता न स्यादिति निरस्तम् । नहि येन रूपेणान्यता जीवस्य तेनैव रूपेण ब्रह्मभावमाचक्ष्महे, किन्तु विगलिताविद्यासंसारमलस्य तात्त्विकेन रूपेण प्रहीणवर्णिकाभेदस्य नटस्येव मायिकस्य प्रकृतिभावम् । अत एवापगतहेयसम्बन्धस्वरूपेणापि नेश्वरैकात्म्यं, कारागृहनिर्मुक्तस्यापि नरपतिनैकात्म्यादर्शनादिति मूढदासेरजनरञ्जनमपास्तम् । तस्यैवात्मनोऽनाद्यविद्यामयजीवेशभेदबाधेन स्वरूपकैवल्ये तदभेदवाचोयुक्तेरिष्टत्वात् । तथाच 'परमात्मात्मनोर्योगः परमार्थ' इत्येतन्मिथ्येत्यन्यस्याभावानुपपत्त्यभिधानमुखेन स्वरूपैकात्म्यपरमेव व्याख्येय, यथावगतभेदनिर्दिष्टजीवपरविशिष्टरूपाभेदापारमार्थ्यपरं वा । अन्यथा वस्तुभेदे सति जीवपरयोरेवापारमार्थ्यापत्तेः । 'परमार्थो न भेदवानि'ति ह्युक्तम् । 'यद्यन्योऽस्ति परः कोऽपि', 'समस्तभूतेषु पुमानेकः' इत्युपक्रम्याभेदेन 'त्यज भेदमोहमि'त्युपसंहाराच्च ॥

---

## सायुज्यशब्दार्थः ।

सायुज्यं चाभेद एव, न समानगुणकत्वम् । युज्यत इति व्युत्पद्यमानस्यापि युक्पदस्य गुणासन्निधेः सन्निहितब्रह्मविज्ञविषयत्वौचित्यात् । अथापि समानो युक् सयुक् । सयुजो भावः सायुज्यं नैकात्म्यं भेदगर्भत्वादिति चेत् ।

एव तर्ह्यर्थविशेषविवक्षा कल्पयितव्या । न च समप्राधान्यविवक्षा शक्या । मुक्तस्यापि तव ब्रह्मशेषत्वोपगमात्, 'सयुजा सखाये'ति ससारेऽपि सायुज्यनिर्देशे सतीह तद्व्यावृत्त्यार्थविशेषासिद्धेश्च । अतोऽवयववृत्त्यापि सायुज्यमविभागयोगस्तादात्म्यमेव विवक्ष्येत । भेदगर्भव्यपदेशश्च तदेतयोरभेद इत्यादाविव प्राचीनभेदप्रतिभासनिबन्धन. । वस्तुतस्तु सायुज्यमिति तादात्म्यवृत्तमेव युक्तम् । 'ब्रह्मण सायुज्यमि'ति साक्षात्सम्बन्धोपपत्तेः । अवयववृत्तौ च समानगुणकत्वमन्यद् वा न साक्षात् सम्बन्धुमर्हति, अन्यगतत्वात् । न च पदार्थैकदेशगुणसामान्यप्रतियोगितया ब्रह्मान्वियात् । पदार्थः पदार्थेनान्वेतीति व्युत्पत्तिविरोधात् । अपिच 'देवताना सायुज्यमि'त्यादौ सार्ष्टिशब्देनैव समानगुणकत्वमप्याक्षिप्तम् । अन्यथा गुणन्यूनतया सार्ष्टिशब्दितसमानभोगकत्वानुपपत्तेः । गुणवैकल्ये भोगवैकल्यप्रसिद्धे. । 'युवा स्यात् साधुयुवे'त्यादौ गुणपौष्कल्ये भोगपौष्कल्याम्नानाच्च । एव सति सायुज्य तादात्म्यमुच्येत, अन्यथा द्वैरुक्त्यात् ॥

---

### सायुज्यपदस्याभेदार्थत्वे दोषोद्धार. ।

यत्पुनरुच्यते अग्नितादात्म्यमापन्नस्य युगपत् क्रमेण वा देवतान्तरतादात्म्यायोगाद् अर्थविरोध इति । तन्न । नह्यग्निरादित्यो वायुरित्यादयोऽनित्यस्थितयो देवता ब्रह्मवदिष्यन्ते, येन ब्रह्मण इव तादात्म्य तासामापद्य न विपद्येत । विद्याकर्मसाधनाधीनविपाकतया समानानामरूपाणामेव देवर्ष्यादीनामाधिकारिकाणामन्यान्यत्वोपगमात् । तदेव सत्यनुष्ठितसाधनो यद् देवताभूय गच्छति, तदुच्यते— 'देवताना सायुज्यमि'ति, 'देवो भूत्वा देवानप्येती'ति च । 'वसूनामेवैको भूत्वे'त्यादिलिङ्गात् । इयास्तु विशेषः — देवतातादात्म्य विकारो ब्रह्मतादात्म्य स्वरूपमिति । एवञ्च अग्न्यधिकारोचितजात्यादिविपाकावसाने तावत्प्रसुप्तविपरीतकर्माशयोद्बोधादग्निसायुज्यादवस्कन्द्य वायुसायुज्यमाप्नोति । अन्यश्चानुष्ठितविद्याकर्माग्निसायुज्यमित्येवमनादिरनन्तः परिवर्तः । तथाच भिन्नोपाधिव्यवस्थितकर्मभेदवतस्तद्विपरीताग्निसायुज्यानुपपत्तिः, अतद्वतश्च हेत्वभावादमुतः प्रच्युत्यान्यसायुज्यानुपपत्तिरित्यादिना-

---

१. 'गत्वा' क. पाठ..

न्त्रिकविकल्पास्तादात्म्यभेदानधिगतिनिगाढनिरूढतामसाभिमानिना द्रष्टा नाद-रणीयाः । यत्तु समानलोकतासाहचर्यान्नैक्यं सायुज्यम् । ... च समा-नलोकत्वासम्भव इति । तन्न । देवताना सायुज्यमिति साक्षात्सम्बन्धस्य वाक्यीयस्य सन्निधिमात्रेणाहेयत्वात् । देवताना सार्ष्टितामित्यादौ तु गत्य-न्तराभावात् समानशब्दस्य सापेक्षत्वेऽपि गमकतया गम्यमानप्रतियोगिनै-वान्वयबोधे देवतानामिति विशेषसमर्पणमात्रपरमुपगम्यते । न सायुज्यमाप-न्नस्यैव सामानलौक्यमुच्यते । अग्निवाय्वादिभावस्य यावत्तदुपकरणोपाधिक-तया पृथगुक्तिवैफल्यात् । किन्तु साधनाधिकृतावस्थस्य 'अन्योऽसावन्योऽह-मस्मी'ति भेदप्रतिभासापेक्षया तथा फलमवबोध्यते । यद्वा साधनतारतम्यात् सालोक्यसार्ष्ट्यादिफलतारतम्यमुच्यत इति गम्यताम् ।

एवञ्च य एते तान्त्रिकस्य विभ्रविबुधसल्लापनयोल्लापितकतिपयदासे-रकापशदानुवर्तनप्रवर्तितमदभरस्खलितप्रलापा. "ऐक्ये सालोक्यानुपपत्तिः । सालोक्यानन्तर्ये च सायुज्यस्य पाठक्रमबाधः । सायुज्यशब्दस्यैक्यवृत्तित्व-निश्चये सत्यर्थवशात् पाठक्रमबाध' । न च पाठक्रममबाधित्वा तस्यैक्यवृत्ति-त्वनिश्चय इत्यन्योन्याश्रयः । 'स एतेषामेव सलोकता सायुज्यमश्नुत' इति च क्वचिदेव श्रुतक्रमस्य अग्नेरेव सायुज्यं सलोकतामाप्नोति, वायोरेवेन्द्रस्यैव, बृहस्पतेरेव प्रजापतेरेव ब्रह्मण एव सायुज्य सलोकतामि'त्यादि भूयोबलीयस्त्वेन बाधः । वेदान्तिभिरर्थवादप्रामाण्योपगमेन कर्मविधिशेषार्थवादेनापि देवतासा-युज्यसिद्धौ कर्मावसाने मोक्षादर्वाक् पृथग्भावावश्यम्भावेन नैकात्म्यं सा-ज्यमि"त्यादय', ते निरस्ता वेदितव्याः ।

लयशब्दोऽपि प्रतीतरूपादर्शनप्रयोजकभावकर्मा, धातूनामनेकार्थतया 'लीङ् श्लेषणे' इत्यादेः प्रदर्शनार्थत्वात् । 'लियः सम्माननशालीनीकरणयोश्च' (१. ३ ७०) इत्यर्थभेदेनात्मनेपदविधानात् । स च भाव' क्वचिददर्शनमा-त्रावसान' निलीयते चोर इति । क्वचिदभावावसान. विलीयन्ते मेघा इति । क्वचिदन्यनिमित्तापन्नरूपभेदहान्या स्वरूपप्रतिष्ठावसान. विलीयन्ते तरङ्गाः विलीयन्ते करकाः विलीयते घृतमिति प्रयोगदर्शनात् । एवञ्च अविद्यापादि-तरूपभेदस्यात्मनो विद्यया तद्रूपप्रहाण्या स्वरूपप्रतिष्ठैव 'लीना ब्रह्मणि', 'लये

---

१ 'ण', २ 'दौ ग' ख पाठ. ३. 'स' क. पाठ. ४. 'ज्ञा । त',

५ 'न्ते र' ख. पाठ..

ब्रह्म त्यादौ लयशब्देनोच्यत इति युक्तम् । तत्रापि 'निर्व्यापारामित्यादौ विशुद्ध प्रत्यगात्मानमुपयत.

"तत्रान्यज्ञानरोधेन योगिनो यान्ति ये लयम्"

इति लयशब्दस्योक्तगतिनेयत्वात् । तत्र नृदेवसुखदुःखादिविशिष्टरूपभेदहानेन स्वरूपप्रतिष्ठातिरिक्तलयशब्दार्थासम्भवात् । प्रतिसञ्चरभेदेष्वपि कारणे कार्यलयस्यैवरूपत्वात् । नहि विसदृशावस्थाहानेन कार्यस्य कारणत्वधर्मिणा द्रव्येण सश्लेषो लय. सम्भवति, अवस्थाभेदस्यैव कार्यतया तद्धाने संश्लिष्यतोऽभावात्,

"प्रणष्टे गन्धतन्मात्रे भवत्युर्वी जलात्मिका"

(विष्णुपु० अ० ६. अ० ४. श्लो० १५)

"ततश्चापो हृतरसा ज्योतिष्ट्व प्राप्नुवन्ति वा"

(विष्णुपु० अ० ६. अ० ४. श्लो० १८)

इत्यादिस्मरणाच्च । यद्यपि प्रतिसर्गे परमात्मनि प्रकृतिलयो नात्यन्तिकी स्वरूपप्रतिष्ठा, 'तम आसीत् तमसा गूढमग्रे प्रकेतम्', 'आसीदिदं तमोभूतं', 'प्राधानिक ब्रह्म पुमांस्तदासीत्' इत्यादिविरोधात् । किन्तु विवेचनीयस्वरूपहानेन स्वरूपप्रतिष्ठैव । 'तमेकीभवती'ति हि परेणापि श्राव्यते । एवमत्रार्थपौष्कल्येऽपि लयशब्दार्थैकरूप्योपपत्ते । अत एव सुप्तिप्रलयादौ पुरुषस्य स्वरूपापत्त्यवसानोऽपि लय. कियताप्यनुपाख्यभेदगन्धेनानुविद्ध इति मुक्तिरात्यन्तिको लयः इति विशेष्यते । एतेन 'ब्रह्मैव सन् ब्रह्माप्येती'ति व्याख्यातम् । एवञ्च प्रलये 'हिंस्रा हिंस्रे' इत्यादिसवासनकर्मान्वितजीवबहुत्वदर्शनात् । अत्र लयशब्दार्थभेदे शक्तिभेदकल्पनालक्षणान्तरापत्तेः । सर्वप्रयोगानुगुण्येन मोक्षेऽपि विसदृशावस्थाहानेन कारणत्वधर्मिणा सश्लेषो लय इत्यादिमुग्धदासज्जनगर्धना तान्त्रिकस्य व्युदस्ता । 'ब्रह्म वेद ब्रह्मैव भवती'ति च मुक्तौ स्वरूपापत्तिमात्यन्तिकी श्रावयति ॥

---

१. 'व', २ 'स', ३. 'ति। न' ख. पाठ

ब्रह्म वेद ब्रह्मैव भवतीतिश्रुत्यर्थः ।

यत्तु ब्रह्मपर्यन्तस्वरूपाविर्भावपरमिदं वाक्यं, मुक्तस्य ब्रह्मसाम्येन प्रकाराभेदपरं वेति । तन्न । भवतिर्हि नाविर्भावकर्मा । आविरिति चाध्याहारे गौरवाद्, 'ब्रह्मैव भवती'ति स्वरूपावधारणविरोधाच्च । ब्रह्मसमानाकारत्वे ब्रह्मशब्दस्यामुख्यत्वात् । न च सोऽयं व्रीहिरित्यादावपि मुख्यवृत्त्या तज्जातीयोऽयमिति गम्यते । जातिविशेषविशिष्टव्यक्तिवृत्तित्वेऽपि तच्छब्दस्य जात्यैक्यावृत्तित्वात् । न चावगतभेदे ताच्छब्द्यं लाक्षणिकं दृष्टमित्यन्यत्रापि तद् युक्तम् । अथ गोशब्द इव गवान्तरे जीवे ब्रह्मशब्दो मुख्यः, किं पुनरुच्यते 'ब्रह्म वेद ब्रह्मैव भवती'ति । निसर्गत एव ह्यपरिच्छिन्नज्ञानानन्दगुणको जीवः । तत्परिच्छेदस्यौपाधिकत्वोपगमात् । आविर्भूतापरिच्छिन्नज्ञानानन्दादिगुणको भवतीति व्याख्याने च गौरवात् । तत् किं तव प्रागब्रह्म जीवो ब्रह्म भवति । मा भूदागन्तुरवस्थाभेदो मोक्षः । तत्र यदि तस्यैव सतः स्वरूपाविर्भावो ब्रह्म भवतीति गम्येत, गुणाविर्भाव एव किमिति न गम्येत । नैव गम्येत । ब्रह्मण एव भवनान्वयात् । गुणस्य सतो भवनान्वये हि तदाविर्भावो गम्येत । न च ब्रह्मपदवृत्तिनिमित्तगुणस्यास्वतन्त्रोपस्थितस्य भवनान्वयः । अन्यान्वितोपस्थितस्य आकाङ्क्षाभावात् । अपिच मुक्तस्यापरिच्छिन्नज्ञानानन्दगुणत्वेऽपि न जगत्कारणत्वानुगुणब्रह्मत्वमिति प्रवृत्तिनिमित्तापौष्कल्येन हिरण्यगर्भ इव तत्र ब्रह्मशब्दमुख्यत्वानुपपत्तिः । प्रवृत्तिनिमित्तैकदेशेनापि मुख्यत्वे राजमात्रे सम्राडादिशब्दमुख्यत्वापत्तेः । उपस्थितवेद्यब्रह्मविषयत्वसम्भवे ब्रह्म भवतीत्यर्थान्तरकल्पनायोगाच्च । न च ब्रह्मैव भवतीत्येवशब्द इवार्थः 'घ्नन्ति त्वेवैन', 'विनाशमेवापीतो भवती'त्यादिवत् । तथा च मुक्तस्य ब्रह्मसाम्यमेव बोध्यते, यद्वा 'विष्णुक्रमान् क्रमते, विष्णुरेव भूत्वे'त्यादिवद् गुणवादो वेति वाच्यम् । तादात्म्यावधारणपरत्वे बाधकाभावात् । अथ प्रकृतिविविक्तादपि केवलात् प्रत्यगात्मनः परमात्मा पृथगुपदिश्यते,

"परः परस्मात् पुरुषात् परमात्मस्वरूपधृक् ।
शुद्धः सूक्ष्मोऽखिलव्यापी प्रधानात् परतः पुमान् ॥
यस्य रूपं नमस्तस्मै पुरुषाय गुणाशिने ।
बुद्ध्यादीनां प्रधानस्य पुरुषस्य च यः परः ॥

शुद्ध मलक्ष्यते भ्रान्त्या गुणवानिव योऽगुण ।
तमात्मरूपिण देव नता स्म पुरुषोत्तमम् ॥"

इति विशुद्ध प्रत्यगात्मानमुक्त्वा,

"अविकारमज शुद्ध निर्गुण यन्निरञ्जनम् ।
नता स्म तत् पर ब्रह्म विष्णोर्यत् परम पदम् ॥"
"या शक्तिरपरा तव । गुणाश्रया नमस्तस्यै"

(विष्णुपु० अ० १ अ० १९ श्लो० ७६)

इति जडशक्तिमुक्त्वा,

'यातीतगोचरे वाचा मनसा चाविशेषणा ।
ज्ञानिज्ञानपरिच्छेद्या ता वन्दे चेश्वरा पराम् ॥"

(विष्णुपु० अं० १ अ० १९. श्लो० ७७)

इति चिच्छक्तिमात्माख्यामाख्याय,

"ओं नमो वासुदेवाय तस्मै भगवते सदा ।
व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य य· ॥"

(विष्णुपु० अ० १. अ० १९. श्लो० ७८)

"नामरूपं न यस्यास्ति योऽस्तित्वेनोपलभ्यते"

(विष्णुपु० अ० १. अ० १९. श्लो० ७९)

'एकः शुद्धोऽक्षर· पुमान्', 'सोऽप्ययश परमात्मन' इत्यादौ । अतो मुक्तादपि परमात्मातिरिच्येत । एवं सति मुक्तौ साम्यसाधर्म्यवचनानुग्रहाय ब्रह्मैवेतीवार्थ स्यादिति । उच्यते । साङ्ख्यच्छायानुपातात् तावदमुमशमुपेक्षिष्यामहे । नेदमर्धजरतीयमुपगन्तु न्याय्यम् । इदं तर्हि प्रकृतिविशिष्टमर्यादं तावदेकं रूप जीवस्य यत्राविद्या सुखदु.खादिपरिणामः, यद्रूपेण च जीवः कर्ता शास्त्रार्थवत्त्वादिभिरुच्यते । तदुपहितमर्याद चापर यतस्तदव्यभिचरितावभासः। यत्र च श्रूयते 'अथ यो वेदेद जिघ्राणीति स आत्मे'त्यादि । 'यदात्मा च द्रष्टा दृशिमात्र' शुद्धोऽपि प्रत्ययानुपश्य' इति साङ्ख्ये सङ्ख्यायते। प्रत्ययानुपश्यता च तस्य भेदोपाधिरित्यस्मादेव कारणात्मा द्विरुगुपदिश्यते ।

मायोपहितमर्यादस्यापि परमात्मनः सर्वज्ञत्वादिभेदोपाधेरिष्टत्वादस्माभिस्तद्भेदानपसेधात् । अत एव प्रलयक्रमे 'प्रकृतिर्या मयाख्याता', 'यश्च शुद्धोंऽशः परमात्मनः',

"पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि"

(विष्णुपु० अ० ६ अ० ४. श्लो० ३८)

इति लयदर्शनमुपपन्नम् । निष्केवलस्य मुक्तस्य तथापि सर्गप्रलयासम्प्रतिपत्तेः ।

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥"

इति स्मृतेश्च । अदर्शितविषयदर्शिसत्तामात्रात्मा तु परमात्मा न भेदाभेदव्यपदेशमर्हति, यत्रेदमुच्यते 'अस्तीत्येवोपलब्धव्य.', 'योऽस्तित्वेनोपलभ्यते', 'सत्तामात्रमि'त्यादि ॥

---

### साम्यशब्दस्यैक्यविषयता ।

यत्तु मुक्तावात्मभेदे साम्यवचनानुग्रह इति । तदपेशल, निग्रह एव हि, तस्य पारम्यविशेषणात् । नहि भोगमात्रसाम्येन परमसाम्य भवति, अनन्याधीनत्वसर्वेशेषित्वादिबहुवैषम्यात्[1] । नहि परिमाणादिविशेषमनाश्रित्य काचकाञ्चनसाम्य परममुपैतु शक्यम् । तत्र[2] भोगेन परम साम्यमुपैतीति विवक्षायामधिकावाप । अथ 'यथैता देवता सर्वाणि भूतान्यवन्त्येव हैवंविद सर्वाणि भूतान्यवन्ति', 'तेनैतस्यै देवतायै सायुज्य सलोकता नयन्ती'त्यादौ भोगसाम्यदर्शने सामान्यसाम्यवचनस्य छागपशुन्यायेन विषयविशेषप्रत्यय इति चेद्, न । 'ब्रह्म वेद ब्रह्मैव भवती'त्यनुगृहीतसन्निहितपारम्यविशेषणपरिच्छिन्नविषयतया व्यवहितभोगसाम्यानुपस्थितेः । उक्ता च मुक्तस्य भोगसाम्यानुपपत्तिः ॥

---

### मुक्तस्य भोगायोगः ।

अपिच मुक्तस्य करणकलेवरयोगाभावे भोगायोगः, रूपान्तरानिरूपणात् । अविद्यामात्रे तद्योगे च ससारादविशेषः । 'आत्तो वै सशरीरः प्रियाप्रियाभ्यामि'ति सङ्कल्पोपादानस्य कर्मोपादानस्य वा भोगार्थस्य देहादियोगस्य

---

१. 'हुगुणवै', २. 'तदत्र' ख. पाठ..

यत्तन्निमित्तहडि[1]निगलपादप्रवेश[2]नस्येव दु:खहेतुभावापरिहारात् । न चापेत-कर्मावरणमल नित्यविज्ञान चक्षुर्मनश्शब्दार्थ:, येन 'दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' इति श्रुतेः शरीरानिरपेक्ष एव भोगो मुक्तस्याभिधीयेत । अपूर्वशक्तिकल्पनाप्रसङ्गात् । परेण च 'उपपन्नस्तल्लक्षणार्थो-पलब्धेः—' (ब्र० ३. ३ ३०) इति सूत्रे पर्ययणकामचारादिश्रुतिषु कर्म-क्षयेऽपि देहसम्बन्धाख्योऽर्थो ह्युपलभ्यत इत्युक्तत्वाद्, मुक्तस्य कामसङ्कल्पाद्युप-गमेन तदुपादानस्यान्तःकरणस्यैव मनश्शब्दार्थत्वोपपत्तेश्च । ईश्वरस्याप्य-न्तःकरणसमष्टिमयमायात्मकस्य कामसङ्कल्पाद्युपादानस्य मनसोऽभ्युपगमाद्, 'मन आनन्दमि'ति श्रुतेः । तत्तु न भोगहेतु, परमात्मनो दुःखसम्भेद-नियतभोगाभावात् । किं पुनरुच्यते मन आनन्दमिति । भोगहेतुत्वाभाव एव । मन एवानन्दयतीत्यानन्द यस्येत्यसाधारणव्यपदेशात् । अन्यथा जीवोऽपि मन-आनन्द इति किं विशेष्यते मनआनन्दमिति । यद्वा सृज्यावस्थाभेदोपा-धिकज्ञानभेद एव कामसङ्कल्पादिरीश्वरस्य । मुक्तस्य तु स भोगार्थो मनोमूल एवेति न तद्देहाद्यनधिष्ठान पित्रादिभोगाय क्षमते । 'तन्वभावे सन्ध्यवदुपपत्तेः, (ब्र०४. ४. १३) इत्यस्य च सावष्टम्भे लिङ्गे सत्येव स्वसङ्कल्पायत्तदेहा-भावपरत्वात् । अपिच प्रागेव दृष्टानुश्रविकविषयात्यन्तवितृष्णस्य न भोग. पुरुषार्थो युक्तः । अपिच मुक्तस्य पित्रादिसर्गसापेक्षत्वे ब्रह्मानुभवैकभोगत्व-हानिः, ब्रह्मणि भोग्यतावैकल्यं पित्रादिकामस्य कर्माधीनता च स्यात् । ननु स्वरूपानन्द पित्रादिलोकश्च भगवद्विभूतितयानुभूयमानो ब्रह्मानुभवान्तर्गत एव पुरुषार्थः, ब्रह्मणः प्रियतमत्वातिशयनिबन्धनतया च पित्रादिविभूत्यनुकूलत्वस्य ब्रह्मणि भोग्यतावैकल्याप्रसङ्गः, मुक्तपित्रादिकामस्य भगवतो (वा ? व)सुदेवा-दिपित्रादिकामस्येवाकर्मायत्तता चेति चेद्, न । भोगाय काम्यमानस्य पि-तृलोकादेरधुनेवासाधारणविकारात्मनैव स्रगादितुल्यभोगत्वौचित्यात् । भगवद्वि-भूतिभावस्य श्वसूकरादिसाधारण्येन भोग्यतया कामनाविषयवैलक्षण्यावश्यम्भा-वात् । अन्यथा भगवल्लीलोपकरणैरेव भोगसिद्धौ मुक्तस्य पृथक्कामनावैयर्थ्यात् । तथाच स्वलीलारसभोगाय स्वसृज्यस्यापि पित्रादेः परमपुरुषविभूत्यन्तर्भावा दुभयथा भोगो मुक्तस्याधिक इति भोगसाम्यानुपपत्तिः । एव मुक्तानामपि

---

१. 'मि', २. 'योजनस्यैव' ख. पाठ०.

भोगतारतम्ये मुक्तितारतम्यं प्राप्तम्। नचायुक्तम्। यद्यपि सर्वस्यापि सविभूतिब्रह्मानुभवो न विशिष्यते, तथापि प्रियतमपित्रादिविभूत्यल्पत्वबहुत्वकृतप्रीत्यतिशयदर्शनेन वैशेष्यस्यापरिहार्यत्वात्। न च भगवतो लीलारसभोगाय पित्रादिसङ्कल्पः, किन्तु प्राणिकर्मापेक्षयावसीदतो धर्मस्य स्थापनाय,

"परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥"

इति स्मरणात्। §'लोकानां हितकाम्यया। राज्ञो दशरथस्य त्वं', 'विष्णो! पुत्रत्वमागच्छ' इतीतिहासदर्शनाच्च।

"सर्वथैव जगत्यर्थे स सर्वात्मा जगन्मयः।
स्वल्पांशेनावतीर्योर्व्यां धर्मस्य कुरुते स्थितिम् ॥"

इति पुराणाच्च। भोगाय च पित्रादिसङ्कल्पो मुक्तस्य स्वकर्माधीनः स्यात्। न च निरतिशयानन्दतृप्तस्य पितृलोकादिकामाः कथञ्चिदवकल्पन्ते, नापि भोगाय तत्र तत्र कामचारः ॥

---

## मुक्तस्य ब्रह्मसाम्ये विरोधः।

अपिच, कथमपि मुक्तस्य ब्रह्मसाम्योपगमे 'न तस्य प्रतिमास्ति', 'न तत्समश्चाभ्यधिकश्च दृश्यते', 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' इत्यादिविरोधः। न चाकस्मादन्यविषयं साम्यमन्यविषयश्च तन्निषेध इति व्यवतिष्ठते। परमसाम्यश्रुतिश्च ब्रह्मभावश्रुत्यनुरोधेन व्याख्याता। एवञ्च निरङ्कुशैश्वर्यस्य परमात्मन उपास्यत्वाद् 'यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती'ति श्रुतेरुपासितगुणप्राप्त्यवश्यम्भावात्। अन्यथान्येनान्यो गुणोऽन्यश्चान्येनाप्यत इति मुक्तावव्यवस्थाप्रसङ्गात्। परमसाम्यमसङ्कोचेन भोगा जगद्व्यापारश्च निरङ्कुशमैश्वर्यमस्तु 'न तस्य प्रतिमे'त्यादिरमुक्तविषये सङ्कोच्यताम्। उताहो परमसाम्यं भोगापहतपाप्मत्वादिविषये साम्यनिषेधश्च जग-

१ 'च। त्वं' क पाठः

§ वाल्मीकिरा० बाल० स० १५ श्लो० १८, २०

ज्ञानार विषये सङ्कोच्यताम्, नन्तूभयनिषेधात् साम्यनिषेध एवामुक्तविषये सङ्कोच्यताामिति न प्राप्नोति, परमसाम्यस्य तद्भूयावसायित्वोपगमात् । न चैव जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च' (ब्र० ४.४.१७) इति न्यायविरोधः । ब्रह्मि प्रकरणं ब्रह्मणः सन्निधिर्वा तदुभयं हि मुक्तस्यापि, तादात्म्यादिति वाच्यम् । परमतेऽपि मुक्तस्य परमसाम्ये ब्रह्मणोऽन्यस्य वा प्रकरणादिति नियन्तुमशक्यत्वाद्, मुक्तस्य स्वशब्देनाप्रकृतत्वेऽसन्निहितत्वेऽपि 'समानमितरच्छ्येनेन' इति श्येनवै(शि [1]शे)षिकाङ्गस्य *इषाविव परमसाम्यवचनेनैव जगद्व्यापारस्यातिदेशानिवारणात् । एव हि ब्रह्मलक्षणातिप्रसङ्गो लाघवानुगृहीतकारणैकत्वश्रुतिविरोधश्च नास्माभिः समाधयः ॥

---

## सम्पद्याविर्भाव इत्यादिसूत्रविचारः ।

वस्तुतस्तु 'सम्पद्याविर्भावः स्वेन शब्दात्' (ब्र० ४. ४. १) 'स एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय पर ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति स्वरूपाविर्भावमेव विद्याफलमाचष्टे सूत्रकार । न चेह शरीरात् समुत्थान परज्योतिरुपसम्पत्तिः, स्वरूपाभिनिष्पत्तिश्चान्यान्याः क्रियाः पूर्वापरकालाश्च विवक्ष्यन्ते, विशेषाभावेन शब्दविकल्पमात्रत्वात् । नहि शरीरात् समुत्थान पञ्जरादिव पक्षिणामुद्गमनमात्मनो निरुपाधिकस्य सम्भवति, सोपाधेश्च सम्प्रसादत्वस्वरूपाभिनिष्पत्त्योरयोगात । अथ सम्प्रसत्स्यन् सम्प्रसादः सोपाधिरेव समुद्गम्य देशविशेषे पर ज्योतिरुपसम्पद्योपाधिप्रहाण्या स्वेन रूपेणाभिनिष्पद्यते, 'तस्य तावदेव चिरमि'ति कालविशेषस्येव देशविशेषस्याप्यपेक्षोपपत्तेरिति चेद् , न [2] । 'न तस्य प्राणा उत्क्रामन्ति', 'अत्र ब्रह्म समश्नुते' इत्यादिगतिनिषेधात् । म न्यायमुपपादयिष्यते । अथ शरीरात् समुत्थानमनात्मन्यात्माभिमानाविद्यानिवृत्तिरुच्येत, न सा स्वरूपाविर्भावादतिरिच्यते, विद्यया निरुपाख्यरूपभाविन्या अविद्याया निवृत्त्यनतिशेषात् । न च प(र[2]र)ज्योतिरुपसम्पत्तिरपि समीपगतिमात्रम् । 'समभेदे च सम्यक्त्वे' इति विवक्षितसमर्थोपपत्त्या तादात्म्यापत्त्यवसायित्वात् । एव हि परमं सामीप्यं, प्रत्यगात्माव्यतिरेकात् । अतः स्वेन रूपेणाभिनिष्पत्तिरेव प्रागवस्थामपेक्ष्याविद्योत्तीर्णतया

---

१ 'न्या पू', २. 'न तस्य' ख. पाठः

---

* ज्योतिष्टोमविकारो यागविशेष इषुनामकः ।

परंज्योतिरात्मब्रह्मभावापत्त्या च व्याख्यायते । यथा आवाय प्रवाय तन्तून् वयतीति वानमेव व्याख्यायते, क्रियान्तराभावात्, तद्वत् । दृष्टान्ते च 'तद्यथैतान्याकाशात् समुत्थाये'त्यादौ शरदादौ विनदविविक्तरूपस्य वाय्वादेराकाशात् समुत्थानं स्वोपादानविवक्तरूपपरंज्योतिरुपसम्पत्तिः स्वेन रूपेण पुरोवातादिभावेनाभिनिष्पत्तिश्च न तद्रूपव्यक्तिभावव्यतिरेकेण शक्याधिगन्तुम् ॥

---

ब्राह्मेण जैमिनिरित्यादिसूत्रार्थः ।

तच्च स्वरूपं 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः', 'चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः', 'एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः' (ब्र० ४ ४. ५, ६, ७) इति त्रिसूत्र्या निरधारि । अत्र यद्यपि नोभयरूपविरोधेन पक्षो जैमिन्यादेः, किन्तु प्रकाशात्मना नित्याभिनिष्पन्नोऽपहतपाप्मत्वादिगुणाष्टकविशिष्टात्मना मुक्ताविभिनिष्पद्यते, 'कृत्स्नः प्रज्ञानघन एवे'त्यवधारणान्यथासिद्धेरिति पक्षो जैमिनेः । औडुलोमेस्तु विपर्यस्तरूपहानेन तात्त्विकचितितन्मात्रब्रह्मात्मनाभिनिष्पद्यते, स्वेन रूपेणेति स्वकीयवृत्तिव्यवधानायोगात्, परोपाधिनिरूप्यस्यापहतपाप्मत्वादेस्स्वाभाविकत्वादुपदेश्यात्मस्तुत्यादिभिरुपन्यासाद्यन्यथासिद्धेश्चेति । तथाप्यौडुलोमिपक्षानुज्ञया तत्र प्राप्तमुपन्यासादिविरोधं मुक्तस्य ब्रह्मैकात्म्यादमुक्तदशापहतपाप्मत्वादिगुणवैशिष्ट्योपपत्त्या परिहरति बादरायण इत्युपरत्नम् । अत एवोपन्यासग्रहणमर्थवत् । अन्यथा एवमपि पूर्वभावादविरोधमित्येवोच्येत । नहि चितितन्मात्रतामुपगम्य ब्राह्मरूपभाविकत्वोपगमः शक्यः, परस्परविरोधात् । यत्तु विज्ञानघन एवेत्यापातप्रतीतचितितन्मात्रत्वाभ्युपगम एवमपीति । तन्न । सूत्रकृदभ्युपगमादेव तदापातत्वनिरासात् । यदप्यवधारणीयपदार्थशेषभूतैवकारस्वारस्याय न शेषिपदजातभङ्गः कार्य इत्यतो विज्ञानरूपत्वमपहतपाप्मत्वादिकं च तुल्यप्रमाणकत्वादेवकारभङ्गेनापि स्वीकर्तव्यमिति तदापातत्वबीजोत्प्रेक्षणमौत्प्रेक्षिकचरणस्य, तदप्यरमणीयम्, अवधारणीयस्वरूपानुपातिनोऽवधारणस्यान्तरङ्गतया परोपाधिनिरूप्यबहिरङ्गगुणबाधकत्वौचित्यात् । अन्यथैवकारानर्थक्यात् ।

---

१ 'क्षी', २ 'त्वानिप' ३. 'व', ४. 'यस्व' ख. पाठ.

अपहतपाप्मत्वादिगुणविशिष्टस्याशतो जडत्वस्यापि वारयितुमशक्यत्वात् । विज्ञानघन इत्येव स्वरूपमात्रजडत्वव्यावृत्तेः । यथा 'सैन्धवघनो' 'रसघन एवे'ति च । लोकतो रूपद्रव्यत्वादेरविविक्तप्रत्ययतया तद्व्यावृत्तिमनपेक्ष्य फलपुण्ड्रादाविव त्वगस्थ्यजीषादिव्यावृत्त्यैव निर्विशेषदृष्टान्तोपन्यासविरोधात् । अथापि चितितन्मात्रेणाभिनिष्पन्नादन्यत् परं ब्रह्म स्यात् ।

"सगुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते"

इत्युक्त्वा तत्प्रतिष्ठात्वेन

"ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च"

इति परस्य पृथ(ग)भिधानाद् ब्रह्मैव भवतीति च तादर्थ्योपपत्तेरिति चेद्, न । मां च वासुदेवमीश्वरं योऽव्यभिचारेण भक्तियोगेन सेवते स कथं गुणानतीत्याविशेषब्रह्मभूयाय कल्पत इत्यपेक्षिते ब्रह्मणो हि निर्विशेषस्यैव प्रतिष्ठाहमौपाधिको रूपभेदः, अतो मामुपासीनस्य तदेवमात्मभूतं ब्रह्मापेतोपाधिकल्पनमाविर्भवतीत्यभिप्रायोपपत्तौ 'ब्रह्म वेद ब्रह्मैव भवती'त्यैकार्थ्यस्वारस्यभङ्गेनार्थभेदकल्पनानवकल्पनात् । तदेवमाविर्भूतचितितन्मात्रब्रह्मात्मन एव मुक्तस्य ब्राह्मरूपमपि कथञ्चिदुपयतो बादरायणस्याविद्यादृष्ट्यापादितजगद्व्यापारो न प्रत्याचिख्यासितः । दहरादिसगुणोपासनामात्रेण तु मुक्तदेशीयस्य तत्क्रतुन्यायप्रसञ्जितोऽसौ निराचिकीर्षित इति गम्यते । तत्क्रतोरहङ्ग्रहालम्बनस्यैव ब्रह्मप्राप्तिर्न प्रतीकालम्बनस्येत्येव तत्क्रतुन्यायोपपाद्यं न निरवग्रहैश्वर्यम् । 'न तत्समश्चे'त्यादिनिषेधाद्, नानेश्वरविरोधाच्चेति । सौत्रं च मुक्तस्य प्रकरणासन्निहितत्वमुक्तन्यायमाक्षिपति, उपजीव्यत्वात् ॥

---

## निर्गुणविद्यायामैश्वर्योक्त्यन्यथासिद्धिः ।

तस्यास्य मुक्तकल्पस्य सङ्कल्पादेवाभिरुचितदेहेन्द्रियादियोगः पितृलोकादिभोगश्च स्यात् । कर्मसमुच्चितोपासनावर्जितेश्वरसङ्कल्पादेव तस्य सत्यसङ्कल्पत्वाद्याविर्भावेन तदविघातात् । परममुक्तस्य तु सशरीरत्वे भोगैश्वर्ये च बाधिते 'स एकधा भवति त्रिधा भवति', 'स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा वयस्यैर्वा', 'कामान्नी कामरूप्यनुसञ्चरन्' इत्यादिकायव्यूहपर्ययणजक्षणादि निर्गुणविद्याविषयेऽपि प्रशंसार्थमुपादीयते । यद्धि ब्रह्म कारणात्मनैकधा भवति सृष्ट्या चानेकधा, तन्मुक्त एव तद्भूतत्वात् ॥

---

अविभागेन दृष्टत्वादितिमन्त्रार्थः ।

तथाच सूत्रम् 'अविभागेन दृष्टत्वात्' (ब्र० ४. ४ ४) इति स्वरूपेणाभिनिष्पन्नो ब्रह्माविभागेन भवति, 'अह ब्रह्मास्मी'ति तादात्म्यदर्शनादिति । परस्य तु स्वात्मनो विभक्तस्य ब्रह्मणोऽविभागेनानुभवो भ्रमः स्यात् । प्रकारतया स्वात्मनो दृष्टत्वादिति च विभागस्य दृष्टत्वाद् विरुद्धो हेतु', अविभागे तस्यैव प्रकारप्रकारितायोगाद् अध्याहारदोषाच्च, तत्त्वमसीत्याद्यसामञ्जस्याच्चेति ।

एव यन्नृदेवादिब्रह्मलोकावसानेषु कर्मणा, कामसङ्कल्पेन वोपनीतानुच्चावचान् विषयानुपभुञ्जान. पर्येति, तदयमेव सर्वात्मकत्वात् । आत्मा ह्येषा स भवतीति । एतेन कामान्नित्वादि व्याख्यातम् । नह्युपजनमिद शरीरमस्मरतो निवृत्ताविद्यस्याकरणकलेबरस्याहत्य पर्ययणजक्षणरमणादि सम्भवति, तस्य सर्वशो देहाद्यहम्ममाभिमानमूलत्वात् । तस्मात् साम्यवादेन मुक्तभेदसिद्धौ हताशानामाशामात्रमेव । साधर्म्यम्मरण च व्याख्यातम् ॥

---

पुराणाद्यर्थनिष्कर्षः ।

तदेव

सामानाधिकरण्येन जगतः परमात्मना ।
ज्ञानार्थपरमार्थत्वभ्रान्तिदृष्टत्वभाषया ॥
अविशेषनिषेधेन विशेषाणामशेषतः ।
कारणात्ययकण्ठोक्त्या सर्वत्र परमात्मनः ॥
मृषाविशेषासस्पृष्ट प्रत्यगेकरसात्मकम् ।
स्मृत्यादिषु पर ब्रह्म प्रतिपाद्यं प्रतीयताम् ॥

सविशेषवचनानि पुनरौपाधिकरूपभेदालम्बनतया न विरुध्यन्ते । तस्यैव विकल्पितानेकविशेषं(विषय)त्वात् । नन्वेवं विषयभेदे विशेषाणां प्रतिपन्नोपाधावनिषेधादमिथ्यात्व प्राप्तम् । न । सह मायोपाधिना कारणत्वादिविशेषाणा सत्तामात्रात्मनि प्रतिपन्नाना तत्रैव निषेधात्[1] । अन्यथा रज्जुसर्पादिरपि मृषा

---

१ 'धात्' ख पाठ.

न तु तद्विधिनिषेधयोऽप्यविदितकविविक्तरज्जुगोचरतया विषयभेदात् । सैव रज्जुः कालेन सविशेषा सम्पद्यत इति विधिनिषेधैकविषयत्वोपगमस्तु ब्रह्मण्यपि । कथं प्रमाणभूतं शास्त्रं मृषार्थविषयमिति चेद्, न कथञ्चिद् अद्वैतैकात्म्यविषयत्वात् । तत्प्रतिपत्त्यर्थतया च कारणरूपोपादानमित्युक्तम् । तदाश्रयेण च कर्मोपासनाविधयस्तदनुरूपसाधनफलभावावबोधिनो न विरुध्यन्ते च । यक्षानुरूपो बलिरिति ह्याभाणकः । यत्तु ब्रह्मणस्तनुरंशो विभूतिः शक्तिरिति चोपूर्वतया प्रतिपाद्या भेदा न मृषेति युक्तमिति । तन्न । तदर्थविज्ञानस्याफलत्वेनाप्रतिपाद्यत्वाद्, भेदातिरेकविज्ञानेन प्रतिपाद्याद्वितीयात्मतत्त्वग्रहो मा प्रतिबन्धीति प्रतिषेधायैव तथानतिरेकप्रतिपादनाविरोधाच्च । दृश्यतोऽक्षयत्वादिवचनं चाधिष्ठानात्मालम्बन(त)या नेयम् । परस्यापि कारणात्मनैव नित्यत्वादेरुपपाद्यत्वात् । 'न तदस्ति विना यत् स्यात्' इति च ब्रह्मण एव चराचररूपविवृत्त्या तदतिरिक्तनिषेधपरं व्याख्यातं भेदापवादनिरूपणे । तादात्म्येऽपि शक्तित्वव्यपदेशगतिरुक्ता । विष्टम्भनं च तादात्म्यादेव, अतदात्मनो निस्सत्ताकतयावसादात् ॥

---

## सूत्राणां सविशेषपरत्वनिरासः ।

यत्तु वैयासिकं शास्त्रं सविशेषपरमेवोपलक्ष्यत इत्यादि । तन्न । जन्मादिसूत्रस्य कारणरूपोपलक्ष्यं ब्रह्मेत्युपपादकतया 'यतो वे'त्यादेर्निर्विशेषतात्पर्यनियामकत्वाद्, ईक्षतिनयस्य च तदुपलक्षणकारणरूपाश्रयत्वात्, अन्तर्यामिनयादेरपि तदाश्रयेणैवोपासनोपदेशोपयोगितया प्रधानपुरुषादिवैलक्षण्योपपादनपरत्वात् । 'अदृश्यत्वादिगुणक' इत्यादि चादृश्यादिशब्दविकल्पापेक्षया केवलमनुवादः । सर्वज्ञत्वादिधर्मोक्तेरक्षरेऽप्रधानत्वस्य भूम्नि च सुखत्वामृतत्वाद्युपलक्षणधर्मोपपत्तेः, उपलक्ष्यप्राणादिभावस्य च सिसाधयिषितत्वात् । नहि धर्मादित्युक्तम् । किन्तु 'धर्मोक्ते'रिति 'धर्मोपपत्ते'रिति च । तेन गम्यते शब्दविकल्पप्रत्येया धर्मा उपलक्षणेनैवात्मनः, न वस्तुवृत्त्या धर्मधर्मिभाव इति

---

१. 'च' ख. पाठः.

भावः सूत्रकृत इति । सगुणविषयेऽपि विवक्षितगुणोपपत्तेः । 'विशेषणभेदव्यपदेशाभ्यां च—'(ब्र० १.२.२२) इत्यादौ शास्त्रतात्पर्यविषयापेक्षयैवाधिकनिर्देश इति गमयितव्यम् । आनन्दादिगुणोपसंहारन्यायफलञ्चावेदितम् । 'नेतरोऽनुपपत्तेः' 'भेदव्यपदेशाच्च' (ब्र० १. १. १६, १७) इत्यादि च जीवरूपाभिप्रायम् । विशिष्टस्य चिदेकरससत्तात्मनो भेदकल्पनया स्वरूपनिष्कर्षार्थत्वादिति सर्वमवदातम् ॥

जालं विलङ्घ्य पदपश्यमतानुकीर्णं
पाषण्डवाक्क्रकचवञ्चनपारगस्य ।
दास्ये चिराय निरये पततः स्वराजः
स्वाराज्यदो जयति सयमिरामभद्रः ॥

---

## कुतर्कनिरास ।

यत्पुनरेवमौपनिषदवस्तुनि परिशुद्धे कुतर्कितं तान्त्रिकवराकेण सर्वे भावाः सत्तातिरेकिभिः स्वासाधारणविशेषैः सविशेषा एवानुभूयन्ते । न च निर्विशेषं किञ्चित् केनापि सिध्यतीति । तत्रेदं वक्तव्यम् । यैर्विशेषैर्विशेष्यन्ते भावाः, ये च विशेष्यन्ते ते द्वये किमय गौरित्यादौ विविक्तबुद्धिनिर्ग्राह्या न वेति । अन्त्ये अबाधिताविविक्तबुद्धिनिर्ग्राह्यं वस्तुतावन्मात्रमेवेति क्व सविशेषता । आद्ये च यदि स्वासाधारणविशेषैरेव ते विविच्येरन्, तेऽपि विशेषा विशेषान्तरैरित्यनवस्था । अथ सत्तामात्रेण, हन्त तर्हि स्वतो विविच्यमाना भावाः सर्व एव निर्विशेषाः । अथापि धर्मधर्मिभूता एव भावा निर्भासन्ते, तदेवैषां सविशेषत्वमिति चेत्, तथापि निर्विशेषवस्तुसत्त्वं तावदप्रत्याख्येय धर्मधर्मिभावस्य परस्परोपाधिकत्वात् । न खलु धर्मितैकस्वभावा धर्मतैकस्वभावाश्चान्येऽन्ये भावा व्यवतिष्ठन्ते, मृद्धर्मो घटादिर्धर्मी च घटत्वादेरित्यवस्थानात् । एवं धर्मधर्मिभावस्यापि वस्तुस्वरूपविविक्तावभासतया निर्विशेषवस्तुनिर्भासो दुरपह्नवः । अन्यथा धर्मादिभावावभासोऽपि कस्य स्यात् । अथाय तर्को न प्रमाणम् । प्रमाण च सर्वं भावानामितरेतरविशेषितरूपमात्रा-

दवभासीति न निर्विशेषसिद्धिरिति चेत् । न । तर्कस्य प्रमाणानुग्राहकत्वाद्, गवादिप्रत्यक्षस्य जातिव्यक्त्यादिस्वरूपावभासित्वानुभवेन विशेषितरूपमात्राव-भासित्वासिद्धेश्च । अन्यथा तस्य तद्विपरीतविषयतर्कानुग्राह्यत्वासम्भवात् । सर्वं ज्ञानं सविशेषवस्तुविषयं, सविषयत्वादिच्छादिवदित्यनुमानस्यापि विशेषविशे-षिवस्तुस्वभावविवेचकत्वेन निर्विशेषसिद्धिः । अथ विविञ्चत्यपि विशेषविशे-षिणावनुमितिरन्योन्यविशेषितावेव निर्भासयतीति चेद्, न । अस्या एव स्व-स्यामपि सविशेषवस्तुविषयकतालम्बनत्वेन स्वयमेव स्वविषयविशेषादिविवेच-कतया निर्विशेषविषयत्वावश्यम्भावात् । अन्यथा यैर्विशेषैर्ज्ञानविषयवस्तूनि विविच्यन्तेऽनुमित्या, तेषामपि स्वविषयतया विशेषान्तरैर्विवेचनेऽनवस्थान-न्त्यात् । न चैवं प्रत्ययमात्रस्य निर्विशेषवस्तुविषयत्वे विशिष्टज्ञानानुपपत्तिः, परोपाधिव्यपेक्षसम्बन्धिरूपावभासित्वस्याप्युपगमात् । सामग्रीसमावेशेन वि-ज्ञानानामितरेतरसम्बन्धिरूपनिष्कृष्टनिर्विशेषस्वरूपमात्रावभासपर्यवसानानुपप-त्ते. । अत एव वस्तुनो न द्वैरूप्यापात्तिः । स्वतो निर्विशेषस्वभावस्य परोपा-धिना सविशेषत्वोपपत्तेः, वियतः स्वतोऽनन्तस्य पाशाद्युपाधिना परिच्छेदानु-भवात् । किन्तु परोपाधिनिबन्धनमपि सम्बन्धितारूप सविशेषत्वं निर्विशेष-वस्तुस्वरूपतुल्यबलं बाधकाभावात् । परत्र त्वौपाधिकं रूपं बाध्यमिति वि-शेष । एवंच रजतत्वादिविशेषबाधे तन्निर्भाससामग्रीवैकल्येन शुक्तिज्ञानस्य शुक्तिमात्रावभासपर्यवसानवदशेषविशेषबाधे वस्तुविज्ञान निर्विशेषस्वरूपमा-त्रावभासावसायि निर्विकल्पक भवति यथागमिक ब्रह्मात्मापरोक्षविज्ञानम् ।

नचैव वस्तूनामविशेषस्वभावत्वे परस्परनिष्कर्षो न स्यात् । न खलु स्वस्य स्वतो निष्कर्ष. । कस्य हेतोः । स्वतः स्वस्याविशेषत्वाद्, एवमन्य-त्वेऽपीति वाच्यम् । सर्वस्यैव स्वत एवासङ्कीर्णस्वभावत्वात् । अन्यथा विशेषा एव कथ व्यवतिष्ठेरन् । वनसिह्मन्यायेन भावानामितरेतरस्य स्वभावसम्बन्धा-देव व्यवस्थेति चेद्, न । तस्य व्यभिचारेणानियामकत्वात् । एकस्यैव गन्ध-रसादिनानाविशेषसम्बन्धाद्, अनुगतविशेषस्यैकस्यानेकसम्बन्धाच्च, तत्तद-साधारणस्वलक्षणव्यवस्थायाः स्वभावैकनिबन्धनत्वस्यावश्यवाच्यत्वात् । तथा च न्यायिनोऽप्याहुः — किञ्चिद्वस्तु स्वत एव विलक्षणमिति । विशेषान्त-राश्रयणे चानवस्थैव । एवच

विशेषा यदि सत्तातो विविच्येरन् प्रमाणतः ।
ता सत्ता तद्वसन्तस्ते न विशिष्युः कथञ्चन ॥
अथ ते न विविच्येरन् सत्तैकैव प्रमीयते ।
कैः कस्य सविशेषत्वमेव सति निरूप्यताम् ॥
तस्मात् सत्तैकमेयत्वे सर्वमानेषु निष्ठिते ।
सम्बन्धिरूपनिर्भासस्तत्र बुद्धेरुपप्लवः ॥

नहि द्विरवभासो वस्तूनामुपगम्यते प्रथम निर्विशेषावभास इति, येन सर्वप्रमाणविज्ञाने निष्कृष्टसत्तामात्रावभासे विशेषबाधः प्रसज्येत । किन्तु द्विरूपावभासः । तत्र सम्बन्धिरूपभानसामग्रीसमावेशेन बुद्धेरविशेषवस्तुमात्रावभासपर्यवसानमित्युक्तम् । एव विषयानुभवयोरपि विषयालोकयोरिव विविक्तस्वरूपावभासगर्भ एवान्योन्यरूषितत्वावभास । अन्यथानालम्बनतदवभासानुपपत्तेः । अनुभवस्य सकर्मकत्वादिस्वभावता च निरसिष्यते । तदेव सर्व एव भावा निर्विशेषा अनुभूयन्त इत्यतो न किञ्चिन्निर्विशेषमनुभूयत इति मतिवैकल्यमेवायुष्मताम् । न चैवमपि निर्विशेषा विशेषा इत्यादिपर्यायता, विशेषसविशेषत्व वेति वाच्यम् । पदार्थभेदेऽपि लक्षणीयवाक्यार्थनिर्विशेषत्व व्यवस्थानात् । अत एवानुभवोऽन्यो वा निष्कृष्यमाण सत्तातिरेकिभिरसाधारणविशेषैरेव निष्कृष्येतेति निरस्तम् । तेषामपि निष्कर्षे विशेषान्तरापेक्षायामनवस्थानाद्, अन्योन्यस्य निष्कर्षणीयशरीरान्तर्गतत्वे तदनन्तर्गतत्वे वान्योन्यनिष्कर्षकत्वायोगाच्च । विशेषविकल्पानुभवेनैव तु स्वरूपमेव निष्कृष्यते । न तु निष्कर्ष एव सविशेषालम्बनः, स्वत एव भावानामसम्भिन्नस्वभावत्वात् । अत एव जात्यादेरपि धर्मिणैव निष्कर्ष इति निरस्तम् । परस्परनिष्कर्षस्य स्वभावायत्तत्वात् ।

यत्तु यदवगतमेव स्वस्य स्वाश्रयस्य वान्यरूपविभ्रमविरोधिजात्यादि, तद्वद्वेदेऽपि स्वत एव व्यावृत्तरूपनिर्भासितया निर्विशेषव्यपदिष्टम् । न च तथा ब्रह्म सत्तामात्रावभासमित्यतः शुक्तिरिव शुक्तित्वादिभिरन्यरूपविभ्रमविरोधिसत्तातिरेकिस्वभावविशेषैः सविशेषमेव ब्रह्मेति युक्तमिति । नैतद्युक्तम् । ब्रह्मणः स्वरूपाज्ञानमेव हि जगदाकारविभ्रमनिबन्धनम् । न तस्मिन्नवगते तद्विशेषाज्ञानम्, अवभासमानस्यैव तस्य निसर्गतोऽविद्यया जगदाकारावभासि-

१ 'र', २ 'पि' ख पाठ

त्वात्। आगमावगते तु तस्मिन् सर्वविभ्रमबाधेन निर्विशेषसत्तामात्रपरिशेष एव, 'यत्र त्वस्य सर्वमात्मैवाभूदि'त्यादिश्रुतेः। ननु द्विरूपावभासित्वाद् विभ्रमस्य ब्रह्मणापि भासितव्यम्। सत्यम्। भासत एव ब्रह्म, अज्ञाततयैव विभ्रमाधिष्ठानत्वात्। भासते च तदज्ञातं चेति विप्रतिषिद्धम्। न विप्रतिषिद्धम्, अज्ञाततयैव स्वतो भानात्। अथ स्वतः परतो वा भासमानस्याज्ञातता रूपभेदोपपाद्यैवेति ब्रह्मापि सविशेषमिष्येत। अज्ञातरूपभेदसत्त्वे मानमन्विष्येत। ननु सविषयकाज्ञानानुभव एव। तत्रापि यदि विषयो भासेत यदि वा न, कस्याज्ञातत्वमनुभूयेत। तस्मादज्ञाततयावभासो न तद्विरोधि। इदं रजतमित्यादावपि शुक्तिकादेरेवाज्ञाततयेदमित्यवभासात्। विभ्रमावभासस्याज्ञातविशेष्यकत्वनियमात्। इदं जानामि न शुक्तिं, चैतन्य जानामि न ब्रह्मात्मानमिति ज्ञातत्वाज्ञातत्वव्यवहारस्य च कथञ्चन भेदकल्पनया निर्वाह्यत्वात्। केवलस्वरूपावभासस्तु तदज्ञानादिविरोधी[1]। मानवृत्तेरन्यतो वा अतद्रूपभानसामग्रीवैकल्ये शुक्तिरूपावभासस्य तदज्ञानादिविरोधित्वदर्शनात्। तथाच ब्रह्मणः स्वात्मनि सर्वविभ्रमविरोधिस्वरूपावभासावसितत्वादात्मनोऽपि निष्कर्षकधर्मैः सविशेषत्वमापतद् दुष्परिहर[2]मिति प्रत्युक्तम्। एतेन विपर्यस्ताकारविरोधिविशेषविषय ब्रह्मज्ञान बाधकमिति तस्य पारमार्थ्ये सविशेषता। अपारमार्थ्ये च पलाशकुसुमदावत्वभ्रमबाधकस्य वृन्तभ्रमरत्वभ्रमस्य वृन्तत्वाविज्ञानेनेव ब्रह्मणि जगद्रूपबाधकस्य विशेषान्तरविभ्रमस्य विशेषान्तरविज्ञानेन बाध्यत्वे तस्याप्यपारमार्थ्ये तद्भ्रमनिवर्तकान्तरापेक्षायामनवस्थेत्यादिदूषणमपास्तम्। स्वरूपावभासस्यैव ब्रह्मणि यावद्विशेषविभ्रमविरोधित्वात्।

यत्तु निर्विशेषत्वसाधकनिवृत्तौ तदनिवृत्तौ वा सविशेषत्वमेवेति। तन्न। नहि हैतुक ब्रह्मतत्वमाचक्ष्महे। आगमिक तु, 'नावेदविन्मनुते तं बृहन्तं,' 'तं त्वौपनिषदं पुरुषमि'त्यादिश्रवणात्। आगमार्थपरिशुद्धये च तदवष्टम्भप्रवृत्ता हेतव उपजीव्यन्ते। ब्रह्म निर्विशेषं, स्वरूपावगतिबाधनीयाशेषविशेषावभासत्वात्। यद् यद्रूपावगतिबाधनीययद्विशेषावभासं तत् तद्रहितं, यथा शुक्त्यादि रजतत्वादिरहितमित्याद्याः॥

---

१ 'धि', २ 'हा' क पाठः.

## यत्रत्वस्येतिश्रुत्यर्थः ।

न चासिद्धिः, 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन क पश्येत्' इत्यादिश्रवणात् । न हि सर्वस्यात्मभवन क्रियानिर्वर्त्यमिहोच्यते मृद इव घटभवनम् । किन्तु ब्रह्मात्मतत्त्वसाक्षात्कारे विशेषरूपबाधेन सत्तामात्र-परिशेषः सर्पधारादेरिव रज्जुतत्त्वज्ञाने तद्भावः । तथा च तत्त्वविज्ञाने कर्तृकरणादिनिखिलविशेषाक्षेपादशेषविशेषबाधस्थिरीकरणात् । निर्विशेषत्वा-दिविशेषा अप्यनुमानेन विधूयन्ते अन्यथोपजीव्यागमविरोधात् । न चैव साध्यविरोधादुत्पतनहतस्वभावमनुमानमेव न प्रवर्तेतेति वाच्यम् । अभावो न भावाभावधर्मी, अभावत्वात् व्यतिरेकेण घटादिवत् । जातिर्न स्वव्याव-र्तकधर्मवती, स्वरूपावगत्यैव स्वस्वाश्रयान्यतादात्म्यविभ्रमविरोधित्वाद्, व्यतिरेकेण व्यक्तिवदित्याद्यभावप्रसङ्गात् । अथ पुनर्वैकल्पिकसाध्यसाधनो-पाश्रयेण निषेधानुमितिरवस्यन्ती साध्यसाधनधर्मभेदबाधेन स्वरूपमात्रालम्बना पर्यवस्यति, नापर्यवसिता विकल्पोपाश्रयमनुमान बाधते । पर्यवसितायां पुनरस्यामनुमानानपेक्षैवेत्युच्येत, तथैव प्रकृतेऽपि भविष्यति । अव्यभिचारेणो-द्देश्यविपरीतरूपविरोधिस्वरूपसिद्धौ साध्यसाधनसत्त्वासत्त्वयोरनपेक्ष्यत्वात् ।

यत्तु अनग्निमत्त्वेऽव्यावृत्तो धूमः पक्षेऽनग्निमत्त्वमेव व्यावर्तयति, न त्वा-कारान्तरम् । एवमिहापि घटादिसविशेषव्यावृत्ता निर्विशेषत्वहेतवः सविशेष एव घटादिगतरूपादिविशेषानेव निवर्तयेयुरिति । तत् तुच्छम् । न खलु स्वरूपसता व्यतिरेकसहचारेण साध्यसिद्धिः, अतिप्रसङ्गात् । तद्भ्रमेणान-नुमानप्रसङ्गाच्च । न चैकेनावच्छेदकेन विना व्यक्त्यानन्त्ये सति पुरुषायु-षेणापि शक्यः सहचारोऽधिगन्तुम् । एवंच निर्विशेषत्वहेतोरनन्तत्वानन्य-त्वादेरवैन्यादौ विशेष इत्येव रूपादिभिर्व्यतिरेकसाहचर्याधिगमाद् यावत् किञ्चन विशेषत्वावच्छिन्नमनन्तत्वादिहेतुभिर्ब्रह्मणि निवर्तत इति युक्तम् । न चात्मनः क्षणिकत्वादिवादिनः प्रति नित्यत्वादिविशेषालम्बनपर्यवसानमनु-मानं, तस्य त्रिकालसम्बन्धरूपनित्यत्वासम्भवात् । 'ज्ञः कालकालः', 'अन्यत्र भूताच्च भव्याच्च', 'यस्मादर्वाक् सवत्सरः' इत्यादावात्मनः कालातीतत्वाव-गमात् । किन्तु कालकलानाकलितत्वादिविकल्पमुखेन क्षणिकत्वादिविरोधि-स्वभावावलम्बनावसान प्रत्यभिज्ञानुगमाव्यावृत्त्यादिनोपपाद्यते ॥

१. 'स्य सा', २ 'द्व्यात्र्', ३ 'न' ख पाठ

प्रज्ञानघनएवेतिश्रुत्यर्थः ।

एव स्वप्रकाशत्वाद्यनुमानमप्यप्रकाशत्वादिविरोधिस्वभावालम्बनावसानमूहनीयम् । अन्यथा स्वप्रकाशत्वादिविशेषाणामपि स्वप्रकाशत्वे कल्पनागौरवाद्, वेद्यत्वे च तेषामात्मनैवात्मनोऽपि वेद्यत्वापत्तेः । 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे'त्यादिश्रुतिविरोधाच्च । यद्यपि दृष्टान्ते तदन्तर्गतविरोधिरूपान्तरसंवलनमेव व्यावर्त्यते, अनन्तराबाह्यत्वमपि रसघनस्वरूपापेक्षयैवेति दार्ष्टान्तेऽपि तथैव स्यात्, तथाप्य'नन्तरोऽबाह्यः कृत्स्नो रसघन' इत्येव 'प्रज्ञानघन' इत्येव च तत्तदन्तर्गतविरोधिरूपान्तरसवलननिवृत्तौ तत्तद्रूपेणोभयत्र विशेषान्तरसम्बन्धव्यवच्छेदफलमवधारणमङ्गीकर्तव्यम्, अन्यथा तद्वैयर्थ्यात् । तत्र रसघनस्यैव सैन्धवघनस्य स्यादपि द्रव्यात्मकरूपभेदेन विशेषान्तरसम्बन्धः, विवक्षितांशेन दृष्टान्तोपपादनात् । न त्वागमगम्यस्य प्रज्ञानघनस्यैवात्मनो रूपभेदे मानमस्ति, येन तेन विशेषान्तरसम्बन्धो न निह्नूयते । वस्तुतस्तु लोकतो रसघनैकात्मप्रत्ययतया द्रव्यत्वादिभेदो नास्तीतिकृत्वैव दृष्टान्तश्रुतिवृत्तिरित्युक्तम् । लोकसम्प्रतिपन्नरूपदृष्टान्तेनैव प्रतिपाद्यार्थे बोध्यबुद्ध्यवतारात् । तदेवं प्रत्यस्तमिताशेषविशेष एवात्मनि साध्यसाधनविकल्पेन कुतर्कोपनीततत्तद्विशेषविरोधिस्वरूपमात्रमवस्थाप्यत इति न सविशेषत्वप्रसङ्गः । न वा स्वरूपमात्रसम्प्रतिपत्तौ विप्रतिपत्तिविरोधः, स्वरूपपरिशेषविरोधिविशेषैरेव तदुपपत्तेः । अत एव न सिद्धसाध्यता । कुतर्कितविशेषविरोधिस्वरूपसिद्धिपर्यवसानात् । न च पक्षसाध्यनिर्देशपर्यायता, पदार्थभेदोपगमात् । एवंच[1] निर्विशेषनिष्कर्षकधर्मापारमार्थ्ये सविशेषसङ्कर इति जल्पाकविकल्पजालमनादरणीयम्, स्वत एव स्वलक्षणनिष्कर्षात् । साध्यसाधनविकल्पैरेव कुतर्कोपनीताशेषविशेषातीतवस्तुस्वभावसिद्ध्यविरोधात् । न चात्मनः सविशेषता शक्या साधयितुम् । साधनविशेषसिद्धौ सिद्धसाधनाद्, अन्यथा हेत्वसिद्धेः । सामान्यविप्रतिपत्तौ च हेत्वतिरिक्तविशेषसाधनस्याप्राप्तकालत्वात् ॥

---

१ 'व नि' ख. पाठ

**यावद्विकार तु विभाग इति सूत्रार्थः ।**

अपिच ब्रह्मणः सविशेषस्वभावत्वे विभक्तत्वाद् विकारत्वापत्तिः । अविभागे सविशेषत्वायोगात् । तथा च सूत्रं 'यावद्विकार तु विभागो लोकवत्' (ब्र० २. ३. ७) इति । यावद्विकार विभागो न विकारं व्यभिचरति । तथा च घटशरावोदञ्चनादिवदाकाशादिकमपि विकारो विभक्तत्वादित्यर्थः । न चात्मनि व्यभिचारः, तस्य स्वलक्षणापेक्षया विकारबाधेन ततो विभागासम्भवात् । विकारापेक्षया त्वात्मन एव तद्भावेनाविभागात् । न हि निरात्मको विकारो नाम, यत आत्मा विभज्येत । 'ऐतदात्म्यमिदं सर्वमि'ति च श्रुतिः । अत एव नाज्ञाने व्यभिचारः, असत्त्वापत्त्या सदात्मभेदायोगात्, कारणात्मतया कार्यभेदायोगाच्च । न च जीवेशयोर्व्यभिचारः, तयोरपि कार्यत्वे कृतहानसर्गविपर्यासादिप्रसङ्गादिति वाच्यम् । भेदो हि नाम प्रतियोगिसापेक्षं स्वरूपमेव । तच्च जीवत्वमीशत्व चौपाधिकमिति अनुपाधिभिन्नत्वस्य हेतुत्वेऽव्यभिचारात् । भगवत्पादास्तु अमुमेवातिप्रसङ्गमाशङ्क्य

**"यदि ह्यात्मापि विकारः स्यात् तस्मात् परमन्यन्न श्रुतमित्याकाशादि सर्वं कार्यं निरात्मकमात्मनः कार्यत्वे स्यात् । तथा च शून्यवादः प्रसज्येत"**

इत्यादि वदन्तो बाधकाभावे सति विभाग विकारत्वहेतुं मन्यन्ते । न च बाधकाभावमात्रं हेतुः, साधकाभावेन सत्प्रतिपक्षत्वात् । न च बाधकाभावे सति सत्त्वम्, उपायान्तरत्वात् । मिश्रास्तु आत्मान्यत्वे सतीति विशेषयन्ति । न चात्र व्यर्थविशेष्यता यावतामुत्पत्तौ बाधकम् । यथाज्ञानोत्पत्तावनवस्था । आत्मोत्पत्तौ च हेत्वनुपपत्तिः[1], असतो वा सद्विशेषस्य वासन्मात्रहेतुत्वायोगात् । सामान्यादेव विशेषोत्पत्तिदर्शनात् । अत एव न सन्मात्रं हेतुः, असत्यतिशये कार्यकारणत्वायोगात् । नियतपौर्वापर्यप्रयोजक पौर्वापर्यमेवेति वदतो दासेरकस्यात्माश्रयत्वात्, पूर्वोत्तरज्वाला असत्यतिशयेऽपि हेतुहेतुमद्भावे निदर्शयतो मूढस्योपेक्षणीयत्वाच्च । तावदन्यत्वलाभार्थत्वात् । असति बाधके वियतोऽप्यनुप्रवेशे गौरवात् । तस्माद् यावतामुत्पत्त्यसम्भवः, तावदन्यत्वमेव हेतुरिति न किञ्चिद् व्यर्थमिति ॥

---

१. 'स्येत्सपे' ख. पाठ.

यत्त्वाह — 'ऐतदात्म्यमिदं सर्वमि'त्याकाशस्यापि विकारत्ववचनाद् यावद्विकारं 'तत् तेजोऽसृजते'त्यादावनुक्तोऽपि विभाग उत्पत्तिरुक्तैव भवति। यथा लोके सर्व एते देवदत्तपुत्रा इत्यभिधाय केषाञ्चिदुत्पत्तिवचनेन सर्वेषामुत्पत्तिरुक्तैव स्यात्, तद्वदिति। तन्न। विभागपदस्योत्पत्तावप्रसिद्धेः। 'ऐतदात्म्यमिदं सर्वमि'ति चोक्तविशेषोपसंहारस्तत्त्वमसीतिमते तस्य जीवसाधारण्येनाविकारवचनत्वात्। अन्यथा तस्यापि परस्मादुत्पत्तिरुक्तैव स्यादिति 'नात्माश्रुते' (ब्र० २. ३. १७) इत्यादिन्यायविरोध.। कश्चित् तु वियतोऽनुत्पत्तिमेव सिद्धान्तं मन्यमानो वैशेषिकपक्षीयः कथमाकाशनित्यत्वे ब्रह्मणोऽद्वितीयत्वमित्याशङ्क्य यावद्विकारं तु विभाग', न तु ब्रह्मणो जगद्विकारयत्नाभावेऽप्याकाशाद् विभागः, लक्षणान्यत्वाभावात्। क्षीरोदकयोरिव संसृष्टयोरविभागादित्यादि जल्पति। तद् बालिशैरपि जुगुप्सितव्यम्। न हि जगद्विकारयत्नेऽपि संयोगविरोधिविभागो विभुनोरात्माकाशयोरुपपद्यते। स्वभावभेदस्तु विभागस्तदभावेऽपि स्यात्। सर्वदैवात्मत्वानात्मत्वलक्षणान्यत्वात्। सदैव सर्वज्ञब्रह्मणः स्वाकाशविभागावगमप्रयोजकवैलक्षण्यावश्यम्भावाच्च। संसृष्टयोरपि नीरक्षीरयोः स्वभावविभागे सत्येवास्मदाद्यविवेकस्य विभ्रममात्रत्वात्। न चाद्वितीयमित्यविवेकविभ्रमापेक्षयेति युक्तम्। सर्वज्ञब्रह्मणो विभ्रमायोगाद्, जीवस्य चाविकारकालविभ्रमायोगात्। नापि स्वविकारापेक्षयाद्वितीयमिति, तत्र दृष्टान्ते लोकवद् मृदेकाद्वितीयासीदित्यादिवदित्यनुन्मादिना[1] शक्यं वदितुम्। लक्षणानन्यत्वेऽनौपचारिकमद्वितीयत्वं प्रतिज्ञाय स्वविकारापेक्षमद्वितीयत्वं लोके निदर्शयतः सूत्रकृतोऽपि तवेवासम्बद्धप्रलापित्वप्रसङ्गादित्यास्तां तावत्॥

---

## नस्थानतोऽपीतिन्यायः।

अपिचात्मनः सविशेषत्वे 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' (ब्र० ३. २. ११) इति न्यायविरोधः। तत्र पृथिव्यादिस्थानोपाधिकस्यापि विशेषस्य प्रतिषेधात्। अत्राह— सविशेषमेव ब्रह्मानेनोपपाद्यते। ब्रह्मणो हि

---

१ 'दिश' ख. पाठः.

तत्तन्नियाम्योपाधिष्ववस्थानतो जीवस्यैव दोषसम्बन्धशङ्कायामिदमुच्यते न स्थानतोऽपि दोषसम्बन्ध । यत· सर्वत्र श्रुतिस्मृतिषूभयलिङ्ग निरस्तनिखिलदोषतासमस्तकल्याणगुणात्मतारूपोभयलक्षण ब्रह्मावगम्यते । 'एष आत्मापहतपाप्मा', 'निरवद्य निरञ्जन', 'सत्यकाम सत्यसङ्कल्प', 'सर्वज्ञ सर्ववित्', 'समस्तकल्याणगुणात्मकोऽसौ', 'सकला न यत्र क्लेशादय सन्ति परावरेशे' इत्यादिष्विति ।

तत् तुच्छम् । सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' (ब्र० १. २. ८) इत्येवास्य गतार्थत्वात्, तत्रापि ह्यपहतपाप्मत्वमेव हेतु. । अथापहतपाप्मत्वेनाकर्मनिमित्तेऽपि देहावस्थाने तन्निबन्धनोऽपुरुषार्थसम्बन्धो दुष्परिहर । नहि राजापराधनिमित्ते वा चोरस्य स्वच्छन्दनिमित्ते वा राज्ञो दुर्गन्धादिदु.खभूयिष्ठकारागृहावस्थानेऽनर्थसम्बन्धो विशिष्यते । जीवस्यापि हि देहयोगैकहेतुरनर्थयोगः । अन्यथा देहयोगमनापाद्यैव कर्माणि भोगमर्पयेयुरित्येवमिहाभ्यधिका शङ्केति चेत्, तर्हि श्रौतापहतपाप्मत्वादेरप्रयोजकीकृतत्वाच्चोद्यपदस्यैव पुनरुपादानम् 'उभयलिङ्ग सर्वत्र हि' इत्यनर्थक स्यात् ।

अपिच, देहावस्थानप्रयुक्तानर्थासम्बन्धे जीवसाधारणमुभयलिङ्गत्वमप्रयोजकम् । नन्वेतदेव निरस्यते सूत्रेण 'भेदादिति चेन्न प्रत्येकमतद्वचनात्' (ब्र० ३. २. १२) उभयलिङ्गस्यापि जीववदेव देहयोगरूपावस्थाभेदादपुरुषार्थयोगोऽवर्जनीय इति चेद्, न । 'यः पृथिव्या तिष्ठन्', 'स त आत्मान्तर्याम्यमृतः', 'य आत्मनि तिष्ठन् स त आत्मान्तर्याम्यमृतः', इति प्रतिपर्याय नित्यत्वस्यावक्तव्यतया तत्तदवस्थानप्रयुक्तदोषसम्बन्धाभाववचनादिति । उच्यतां सकृदिव शतशोऽपि, कथमप्रयोजकतोद्धार. । अनेनातिरोहितोभयलिङ्गत्व सूच्यते, जीवस्तु कर्माविद्यातिरोहितज्ञानादिगुण इति तदुद्धार इति चेत् । हन्तैवमतिरोहितत्वेन हेतुरनेन विशेष्यत इत्यापन्नम् । ततश्च सूत्रकृतोऽविशेषितहेतुप्रतिज्ञाहानि. प्रतिज्ञान्तर च निग्रह आपद्येत । अपिच, देहयोगरूपावस्थाभेदादित्युपस्थितिकल्पनाक्लेश., अतद्वचनादिति कल्प्योपस्थितिकापुरुषार्थाभावविषयत्वे तत्पदस्य प्रकृतावमर्शस्वारस्यभङ्गश्च प्रसज्येत । अपिच देहयोगादनर्थसम्बन्धानुमाने परस्योभयलिङ्गत्वाम्नायो न परिहार, तस्य माना-

न्त्रकेरे,वे श्रुतेरसामर्थ्यात् । न च तिरोहितज्ञानादिगुणकत्वमुपाधिः, देहयोगदे हि नोऽपि तिरोभावः परस्याप्यनुमेय. कर्मवश्यतादिकं च । नन्वप्रयोजनानुसन्धानम् । देहयोगोऽपि कस्यचिदनर्थाय कस्यचिन्नियमनादिलीलारसाय स्यात् । सर्वमेव हि देशकालपुरुषभेदेन सुखाय च दुःखाय च कोपाय च प्रमादाय चेति । एवं तर्ह्यौत्प्रेक्षिकेन सौत्रहेत्वानर्थक्यमापादित स्यात् । अपिचैव निषेध्यस्य स्थाननिमित्तानर्थसम्बन्धस्य प्रागप्रसक्तेरिहाध्याहारगौरवप्रसङ्गः । जीवादर्थनिरूपणप्रसङ्गाज्जीवस्य तत्तत्स्थानप्रयुक्तानर्थसम्बन्धो बुद्धिस्थ इति ब्रह्मणि तस्यायं प्रतिषेध इति यदि कल्प्येत, तत एव श्येनलयोड्डयनाभ्यामिव नीडस्य जीवलयोद्गमनाभ्या ब्रह्मण सविकारत्वमपि स्याद् बुद्धिस्थमिति तस्यायं प्रतिषेध इति किं न कल्प्येत, तथाच सन्दिग्धार्थं सूत्रमापद्येत । अल्पाक्षरमसन्दिग्धं च सूत्रम् ॥

### आह च तन्मात्रमितिसूत्रार्थः ।

अपिचैवम् 'आह च तन्मात्रम्' (ब्र० ३. २. १६) इति सूत्रमसङ्गतम् । अत्र हि मात्रशब्दो न वचनविशेषणम्[1] । विषयसमभिव्याहारात् । तत्र तन्मात्रमाह नान्यद् वाक्यान्तरावगत निषेधतीति व्याख्यानमसङ्गतम् । तदाह केवलमिति हि तदा स्यात् । अथ तन्मात्रमाह नान्यनिषेधमिति व्याख्यायेत, तर्हि 'प्रकाशवच्चावैयर्थ्यम्' (ब्र० ३. २. १५) इति प्रकृतपरामर्शात् प्रकाशमात्र ब्रह्माह तत्र नान्यनिषेधमिति वैरूप्यमापद्येत । प्रकाशरूपत्वमात्रमाहेति व्याख्याने च प्रकृतावमर्शस्वारस्यभङ्गः । अपिच तन्मात्रमाह 'सत्यं ज्ञानमित्या'दिरिति यदि विशेषो विवक्ष्येत, नैतेनैकेनोभय क्रियत इति व्यर्थं वचनम् । अथ श्रुतिमात्रम् 'अयमात्मानन्तरोऽबाह्य. कृत्स्नः प्रज्ञान एवे'त्यादिविरोधादबद्ध वचन स्यात् । यथाचातो विशेषनिषेधस्तथा व्याख्यातमधस्तात् ।

तस्मात् 'तत्त्वमसी'त्यादिवाक्यार्थप्रतिपत्त्युपयोगितया त्वम्पदार्थे जीवस्वरूपे निरूपिते तत्पदार्थो ब्रह्म निरूप्यते न स्थानतोऽपीत्यादिना । तत्र ब्रह्मण. सविशेषनिर्विशेषोभयरूपश्रवणादेकस्य स्वभावादुभयरूपायोगेऽपि स्था-

१ 'म् । अत्र स' ख. पाठः

ननु पृथिव्याद्युपाधियोगात् सविशेषत्वं भविष्यतीति प्राप्ते न स्थानतोऽपि परस्य तदुभयलिङ्गं प्रतिपत्तव्यम्, सर्वत्र हि ब्रह्मतत्त्वपरेषु 'अस्थूलमनणु', 'अशब्द-मस्पर्शं', 'केवलो निर्गुणश्च', 'नेति नेत्यात्मा', 'प्रत्यस्तमितभेदं यत् सत्तामात्र-मि'त्यादिषु निखिलविशेषनिषेधो गम्यत इत्युच्यते । एवं सति आह च तन्मात्रं प्रकाशैकरसम् 'अयमात्मानन्तरोऽबाह्य' इत्यादि । अतोऽपि नोभय-लिङ्गमिति प्रकृतविषया हेतुसमुच्चययोजना श्लिष्टा । परस्य तु मात्रपदलभ्य-विशेषो वा, अप्रकृतशङ्कानिरासमसमुच्चयो वा चार्थ इति क्लिष्टयोजना । नन्वत्र यदि ब्रह्म 'अरूपवदेव तत्प्रधानत्वात्', (ब्र० ३ २. १४) रूपवदुपदेशवै-यर्थ्यमित्याशङ्क्य 'प्रकाशवच्चावैयर्थ्यम्' (ब्र० ३ २. १५) सौरादिप्रकाश-वदौपाधिको रूपभेद उपासनार्थमुपदिश्यत इति सूत्रिते तन्मात्रं प्रकाशैक-रसमाहेत्यप्रकृतार्थविषयमापद्येत । सत्यम् । शब्दमात्रादपि तु प्रकृतविषय-त्वनिर्वाहः

"नालीकासनमीश्वरः शिखरिणां तत्कन्धरोत्थायिनः"

इत्यादिवदिति । नन्वौपाधिको ब्रह्मणः सर्वज्ञत्वसर्वकर्मत्वादिविशेष उपग-म्यते । सत्यम्, तस्याविद्यामात्रत्वमपि । तदिदमत्र ज्ञेयब्रह्मण्युपाधितोऽपि सविशेषत्वनिषेधे फलितमिति । गुणविधिनिषेधविरोधे च बलाबलमवोचाम ।

एतेन सकलविशेषमृषात्वं मारम्भणाधिकरणासिद्धम् । न च श्रुतिवि-रोधसमाश्रयेऽयमारम्भः, 'सर्वकर्मा सर्वकामः', 'अस्थूलमनण्वि'त्यादिविधिनिषे-धानां विषयभेदेनाविरोधाद्, अपच्छेदन्यायनेयत्वाद् वा । अपिच, विरोधेऽपि 'सर्वगन्धः सर्वरस' इत्यादिर्नागन्धमरसमित्यादिनिषेधायानुवादः, लोकतो-ऽप्राप्तेः । नोपासनार्थमारोपः, स्वरूपपरवाक्यसिद्धत्वात् । तदर्थभेदाश्रयणेन विधिनिषेधौ नेतव्यौ । अन्यथा गन्धरसादिमिथ्यात्वे निषेधविरोधनवस्थाप्य सर्वगन्धादिशब्दाप्रामाण्यमेवोक्तं स्यादिति प्रतिक्षिप्तम् । नहि गुणविधि-निषेधौ सामान्यविशेषोत्सर्गापवादन्यायनेयौ, तुल्यविषयत्वादित्युक्तम् । ना-प्यपच्छेदन्यायनेयौ, अप्रामाण्यशङ्काधिक्यादेव । अतो लक्ष्यलक्षणरूपविष-यभेदव्यवस्थार्थोऽयमारम्भः । सा च दर्शिता 'अरूपवदेव हि तत्प्रधानत्वात्'।

प्रकाशवच्चावैयर्थ्यमि'ति स्वतो निर्विशेषमेव, औपाधिकस्तु सौरादिप्रकाशस्येव भेद उपासनार्थ इति। यत्पुन 'अदृश्यत्वादिगुणको धर्मोक्तेः' (ब्र० १. २ २१) इत्यादिसूत्रकारव्यपदेशविरुद्धो निर्विशेषत्वसिद्धान्त इत्यादि। अत्र वक्तव्यमुक्तं पुरस्तादेव। 'सुखविशिष्टाभिधानादेव च' (ब्र० १. २.१९) इत्यत्र च 'कं ब्रह्म खं ब्रह्मे'त्यादौ कखशब्दयोरितरेतरान्वयेन नभोवैषयिकसुखव्यावृत्त यत् प्रस्तुत तदुच्यते। सुखविशिष्टमिति नभोव्यावृत्तये, सुखरूपेण विशेषितमित्यर्थः। तेन सुखादिवाचिशब्दाना तद्विशिष्टविषयत्वं वदन् सूत्रकार कथ निर्विशेषत्व सिद्धान्तयेदिति निरस्त, शंकसुखमित्यादिशब्दाना निष्कृष्टविषयप्रसिद्धिविरोधेन विशिष्टविषयत्ववादायोगात्॥

यदपि 'लिङ्गशब्दस्तावज् ज्ञाप्यातिरिक्ते ज्ञापके प्रसिद्धः। निर्विशेषत्वधर्मश्च नोपगम्यते। तत्र नोभयलिङ्गम्, किन्तु निर्विशेषलिङ्गमेव। निर्विशेषमेवेति क्लिष्टार्थं कल्प्येत। अपिच नोभयलिङ्गम्, किन्तु सविशेषलिङ्गमेवेति किं न भवेत्। सर्वत्र हि निर्विशेषत्व प्रतिपाद्यत इति चाहार्यम्। सविशेषत्व प्रतिपाद्यत इत्यध्याहारे को निवारक इत्यादि, तदप्यसारम्। लिङ्ग्यते गम्यत इति लिङ्गशब्दस्य ज्ञाप्यस्वरूपवृत्त्युपपत्तेः। तत्रापि ज्ञापकधर्मद्वय प्रतिपाद्यते सर्वत्र श्रुत्यादौ परार्थानुमानवदिति विवक्षिते ब्रह्मणः शास्त्रयोनित्वन्यायविरोधात्, तद्वत प्रतिपादने च ज्ञापकत्वविवक्षावैयर्थ्यात्। ध्यानतोऽपि नोभयलिङ्गमिति सामर्थ्यात् सविशेषलिङ्गनिषेधेन निर्विशेषलिङ्गप्रतिज्ञाया आर्थत्वात्। सा च स्फुटिष्यते 'अरूपवदेव हि तत्प्रधानत्वात्' (ब्र०३ २. १४) इति॥

---

**अरूपवदेव हीतिसूत्रार्थः।**

न च सर्वानुप्रवेशेन सर्वनामत्वेऽपि 'ब्राह्मणो यजेते'त्यादिकर्मवश्यत्वमनेन परिह्रियते अरूपवद् ब्रह्म रूपरहिततुल्यमितीति युक्तं, तत्प्रधानत्वादिति जीवसाधारण्यादप्रयोजकतापातात्। सोऽपि हि देवमनुष्यादिनामरूपभेदेषु प्रधानमिति नामरूपनिर्वाहकत्वेनेति हेतुविशेषणे चाध्याहारगौरवात्, तन्निर्वाहकत्वेन[1] प्रधानस्यापि कोशकारकृमेरिव तत्सम्बन्धप्रयुक्तकार्यस्यो[2]निवार्यत्वाच्च। तस्मात् सत्यपि रूपवदाम्नाने ब्रह्मारूपवदेव प्रतिपत्तव्य तत्प्रधान-

---

१. 'ना', २. 'स्य' ख. पाठ.

स्वादित्येव समञ्जसम् । नादर्श्येन च सर्वत्र हि सविशेषलिङ्गनिषेधो गम्यत इति हेतुसिद्धावनध्याहाराच्चेति युक्ता भगवन्गार्दीयैव योजना । परस्य गुणसूत्रान्तरानानुगुण्य च वक्ष्यते । तस्मान्निर्विशेषस्य

सर्वमानप्रसिद्धत्वादागमेऽस्परत्वतः ।
निर्विशेष परं ब्रह्म मृषा तु सविशेषता ॥

निर्विशेषविषयस्यापि मानान्तरस्य सविकल्पकत्वं सम्बन्धिरूपान्तरावभाससामग्रीसमावेशनिबन्धनमित्युक्तम् । तेन मानान्तरेषु निर्विकल्प(क)निरासोऽभ्युपगताभ्युपगम एव । आगमिकमात्मविज्ञान पुनरशेषविशेषनिषेधावष्टम्भेन निर्विकल्पकमुपेयते । यत्तु प्रकृतिप्रत्यययोगेन पदानामेव विशिष्टार्थविषयत्वमिति । तदप्रत्याख्येयमनन्वाख्येयं च, अखण्डात्मनो वाक्यप्रत्ययत्वोपपादनात् । प्रकृतिप्रत्यययोगेन हि पदत्वमित्यपि भ्रान्तप्रलपितम् । वैयाकरणस्य स्वादिष्वसर्वनामस्थानेऽन्यस्मिश्च प्रत्यये परे पूर्वस्य प्रातिपदिकस्यापि पदत्वस्वीकारात्, प्रत्ययलोपेऽपि पदत्वाच्च । लौकिकस्याप्यावापोद्वापाभ्या पद्यते गम्यतेऽनेनेति व्युत्पत्त्या शक्त पदमित्युभयोरपि पृथक्पदत्वादिति ॥

---

## प्रत्यक्षादिप्रमाणानामविशिष्टविषयत्वम् ।

अथापि स्यात् — प्रत्यक्षादिसकलप्रमाणस्य विशिष्टविषयत्वानतिवृत्तेरागमादपि विशिष्टमेव ब्रह्माधिगन्तव्यमिति । अत्रैतच्चिन्तयितव्यम् । न तावदागमस्वरसगतिपर्यालोचनया निर्विशेषब्रह्मणि श(क्त्या? कया)वगमे मानान्तराविशिष्टविषयत्वोनिदर्शनेन निवार्या तस्याविशिष्टविषयता । स्वत एव हि प्रमाणाना प्रामाण्य न निदर्शनापेक्षमिति[2] । नापि मानत्वेन सामान्यतो दृष्टेन विशिष्टविषयत्वमनुमेयम् । उक्तनीत्यागमेन निर्विशेषवस्तुन्यधिगम्यमाने बाधात् । अन्यथागमदृष्टान्तेन मानान्तरस्यैवाविशिष्टविषयत्वमनुमीयेत । मानान्तरविरोधस्तु विवेचनीय । प्रत्यक्षादीनि हि भूरम्बु तेजो वायुराकाश गन्धो रसो रूप स्पर्श शब्दो रागो द्वेषो धर्मोऽधर्म सुख दु ख जीव ईशो बन्धो मोक्ष इत्येवम्प्रकाराणि । ब्रह्मात्मा सर्वविशेषातीतो निष्केवलस्वभाव इत्येव

१. 'स्वद', २ 'ति मा' ख. पाठ.

प्रस्थितस्यागमस्य नाहत्यैव किञ्चिद् विरुन्धन्ति, भिन्नविषयत्वात् । न खलु भेदा निरवधयो निषिध्यन्ते, येन स्वरूपग्राहिप्रत्यक्षादिना विरुध्येत । नापि सत्त्वेन, देशकालसम्बन्धस्यार्थक्रियाकारित्वस्य वा सत्त्वस्यानिषेध्यत्वात् । स्वरूपेणैव तु ब्रह्मणि निषिध्यमाना भेदा मिथ्या सम्पद्यन्ते, तेषामशेषतः सदेकायतनतया तुल्यदेशकालनिषेधप्रतियोगित्वपर्यवसानात् । क्वचिदपि कदाचिदपि किञ्चिदपि न तादृशनिषेधप्रतियोगीति सामान्यतो मानान्तरावगतमिति चेत्, तथापि नाहत्य ब्रह्मणि नानानिषेधस्य किञ्चिद् विरुध्यते । पर्यवसित चागमिकनिषेधप्रत्ययमनुपतन्मिथ्यात्वं प्रपञ्चस्य नौत्प्रेक्षिकेण सामान्यतस्तदभावावगमेन निरोद्धु शक्य, जात्यैवागमस्य प्रबलत्वात् । व्यवहारविषये मानान्तरस्यैव व्यवस्थाप्यत्वात् ।

"यस्मिन् द्यौ. पृथिवी चान्तरिक्षमोत मन. सह प्राणैश्च सर्वै· ।
तमेवैक जानथ आत्मानम्"

इत्याद्यागमस्य चोपलक्षणविषयालम्बनत्वात् । मिथ्याशुक्तिरजतादि च स्थापयिष्यते । नहि प्रत्यक्षादीनि ब्रह्मात्मान विशेषरूषितमभिव्यञ्जयन्ति, विविक्तरूपाग्रहणात् । यथाहि यथास्वसंस्थानसंस्थितौ विविक्तस्वभावनिर्भासावेव शुक्लपटौ सम्बन्धबुद्धिनिर्ग्राह्यौ, न तथा ब्रह्मात्मा पृथिव्यादिविशेषाश्च प्रत्यक्षादिभिर्गृह्यन्ते, येन तैरागमो विरुध्येत ॥

---

**सत्तामात्रग्राहिप्रत्यक्षम् ।**

ननु सन् घट· सन् पट इत्यन्या सत्तान्यश्च घटादिः संसृष्टौ भासेते । सत्ता च ब्रह्म । न त्वर्थक्रियादेशसम्बन्धादि:, तस्यापि सत्त्वानुभवात् । सत्ता पुनरसत्त्वविरोधिविकल्पेन सत्यनुभूयते 'असन्नेव स भवति असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद । सन्तमेन ततो विदुरि'त्यसत्त्वाविरोधेन सत्त्वनिर्देशात् । न चार्थक्रियादिराहि्यमसत्त्व शशशृङ्गादे:, येनार्थक्रियादिरपि तद्विरोधितया विकल्प्येत । तत्प्रयोजकतया स्वरूपशून्यत्वस्यासत्त्वस्य पृथगाश्रयणीयत्वात् । अन्यथा शशशृङ्गादेरर्थक्रियादिरेव कि न स्यादिति चेद्, न ।

सत्तातो विविच्यमानस्य निःस्वभावतया विविक्तसम्मृष्टभानानुपपत्तेः । न च सत्ता वान्यद् वा स्वत एव सम्बभावम् । प्रतिभाव सर्वानुगतसत्तातिरिक्तस्वभाव-कल्पनागौरवात् । सन् घटइत्यादिसामानाधिकरण्यस्य शिलापुत्रको विग्रहवा-नित्यादिवद् विकल्पमात्रालम्बनत्वात् । सत्तात्मका एव हि घटादयो भेदा विकल्प्यन्ते । तत्र च विकल्पेऽर्थक्रियादयस्तदात्मका एव कल्प्यन्ते । सत्तापि हि सती सत्तेति स्वात्मनैव विकल्प्यते, अन्यथानवस्थानात् । यदा चैवं भूरम्बुतेज इत्येव विश्वरूपविवृत्ता सत्तैव केवलमवभासते, तदा किं केन रूपि-तमवभासेत । अत एव 'नेति नेती'त्यादिनिषेधोऽपि भेदविकल्पप्रतिभासापे-क्षया विकल्प एव ॥

---

## सत्तामात्रब्रह्मणोऽपि शास्त्रविषयत्वम् ।

अपिचैव मानान्तरगम्यत्वे सविशेषब्रह्मण' शास्त्रं निर्विषयमापद्येत । जगत् सोपादाननियन्तृक, कार्यत्वाद् घटादिवद्, धर्माधर्मफल सदातृकं, चेतनहिताहितक्रियाफलत्वात् सेवापराधक्रियाफलवेतनदण्डादिवदित्यादिभिरेव कारणत्वादिविशेषाणामपि सत्तासामानाधिकरण्यसिद्धेस्तदंशेऽपि शास्त्रस्यानपे-क्ष्यत्वात् । अथ सत्तामात्रब्रह्मवाद एष दोष न तु गुणाः सत्यज्ञानानन्दप्रभृतय इति सगुणब्रह्मवादे तस्य मानान्तरागम्यत्वादिति चेद् , हन्तास्माकमपि सत्ता-ज्ञानानन्दैकरसतया शास्त्राधिगमनीयरूपेण प्रत्यक्षाद्यविषयत्वाद् न तस्य ततः सविशेषत्वम् । अथ सत्तानतिरेकाज् ज्ञानानन्दयोस्तदेकप्रतिभासतोच्येत , सतो-ऽपि विज्ञानादिगुणवदव्यतिरेकात् तदेकप्रतिभासतया मानान्तरैरेव सविशेषसि-द्ध्यापातः । अथ ज्ञानादिगुणवत्त्वे सति कारणत्वादिविशेषवत्त्व सतो मानान्त-रागम्यमित्युच्येत, तर्ह्यनृतजडदुःखात्मताविरोधिसत्ताद्येकरसताया सत्यां सवि-शेषत्व मानान्तरागम्यमिति तुल्यम् । एतदुक्तं भवति । यथा परस्य प्रत्यक्षाद्य-नवगतरूपभेदेन ब्रह्मणः सविशेषत्वे शास्त्रप्रवृत्तिरननुवादः, तथैवास्माकमपि तादृशरूपभेदेन तस्य निर्विशेषत्वे शास्त्रप्रवृत्तिरविरोधिनीति ।

एतेनेदं निरस्त —

"युक्तिसन्दृब्धमानेन जगन्मिथ्यात्वसिद्धितः ।
सत्तामात्रात्मससिद्धेः प्रत्यक्षेण किमागमैः ॥"

इति। अनृतादिनिपरीतरूपावभासविरोधिस्वभावेन तस्यागमसिद्धिमुपपादयितुमेव जगन्मिथ्यात्वानुमानाद्, अन्यथानुमानाप्रवृत्ते। आगमानुपजीवने च तदनुमानस्य शून्यपर्यन्तत्वापत्ते। सत्तायाश्च मानान्तरेण प्रपञ्चरूपमात्रावभासित्वात्, तस्य च मिथ्यात्वे मानान्तरमागममनुपादाय भावात्मपरिशेषासम्भवात्। अथैवमपि रजतरूपविशेषनिर्भासाया इव शुक्ते सत्तामात्रात्मनोऽपि प्रपञ्चरूपनिर्भासस्य स्वात्मना तद्विशेषरूपावभासविरोधिस्वभावावबोधिमानप्रवृत्त्यविरोधित्वेऽपि विषयापहाराद् मानान्तरबाध. स्यादेव। न चैवमबाधेन शास्त्रप्रवृत्त्युपपत्तौ युज्यते। तदबाधेन च शास्त्रप्रवृत्तिरनुगमिता मयेत्युच्यते। आगमप्रवृत्तिस्वारस्योपमर्दनेन किमिति तद्बाधोऽनुसर्तव्य इति वक्तव्यम्। आब्रह्मविज्ञानोदयादशेषोऽपि दृष्टानुश्रविकविषयव्यवहारो यथायथमुपपद्यते। बाधनीयविषयैरेव स्वकाले स्वप्नव्यवहारस्य च दृष्टत्वात्॥

---

## स्वप्नापारमार्थ्यम्।

न च स्वप्नस्य पारमार्थ्यम्, अर्गलितापवरके शयानस्यैव विनैव दृष्टहेतु सहस्रशो विविधदेहग्रहण, त्रुटिमात्रेणानेकयोजनशतविप्रकृष्टदेशविहरण, तत्रत्यैरदृष्टचराणामसम्भावितार्थानामनेकशो दर्शन, दृश्यमानाना च क्षणेनानेकपरिणाम, आत्मनश्च पुत्रनप्त्रादिसन्तानप्रबन्धदर्शनेन यून एवानेकशतसवत्सरातिवाहनेन जरितत्वमित्यादिकमीश्वरसङ्कल्पादेव समर्थयता 'घ्नन्तीव जिनन्तीव', 'हस्तीव विच्छायति गर्तमिव पतति', 'उतेव स्त्रीभि सह मोदमानो जक्षदुतेवापि भयानि पश्यन्' इत्यादिश्रुतय इवशब्दानुबन्धेन स्वप्नमिथ्यात्वमावेदयन्त्यो न दयन्ते। आरुक्षमिव वृक्षाग्रम्, आविक्षमिव प्लक्षवाटमित्यादिप्रतिबुद्धव्यवहाराश्च। 'रथयोगान् पथ सृजते',

"बहिष्कुलायादमृतश्चरित्वा स ईयतेऽमृतो यत्र कामम्।
व भ्रान्तमुच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि॥"

इत्यादिनिरिवानुबन्धसिद्धवन्निर्देशाश्चासन्नारिष्टविषये 'लोहिनी द्यौर्भवति यथा-मञ्जिष्ठे'त्यादिवदवगन्तव्याः। आसन्नारिष्टस्य हि लोहिनीव द्यौर्भवति, न लोहिन्येव। अत एव तत्प्रकरणे 'यत्रच्छिद्र इवादित्यो दृश्यते,' 'यत्र

नील इवाग्निर्दृश्यते, यथा मयूरग्रीवा, यत्र भूमि ज्वलन्तीमिव पश्येदि'-तीवानुबन्धेन विपरीतरूपमृषाभावो द्योत्यते । तथा स्वप्नस्यापि तत्र तत्रैवा-नुबन्धेन मृषाभावद्योतनात् । अन्यथा प्रकृतविरोधात् । आत्मन स्वयज्यो-तिष्ट्व प्रतिपिपादयिषितम् । जागरे सूर्यादिज्योतिर्व्यतिकराद् दुर्विवेचमित्यव-तारिते स्वप्नेऽप्यादित्यचन्द्राग्न्यादिसृष्टिपारमार्थ्ये जागराविशेषादफल. प्र-यास. स्यात् । आम्नायस्य 'को हि तद्वेदे'ति हि न स्वार्थमुपगम्यते, स्वर्ग्यविधि-विरोधात् । तस्मात् प्रकृताविघाताद् 'न तत्र रथा' इत्याद्यभावोपन्यासोपक्र-माच्च निद्रोद्भूताविद्यावासनाविकासमा(त्र?त्रं) स्वप्नो मनोराज्यवदिति युक्तम् । नहि मनोराज्ये यथाभिमतनानादेहग्रहण, भारतीयस्य निमेषेण मेरुपृष्ठप्रतिष्ठा, तत्र देवोपास्यता, सङ्कल्पितानामनुकूलमन्यथाभाव इत्येवमादयो भावा सत्या शक्योपगमा । सत्यपीश्वरसङ्कल्पे समाने हेतौ रागाद्युपसृष्टाविद्यावासनाविका-समात्रत्वात् ।

क एव सति दोषः, सौभर्यादेरनेकदेहग्रहणस्य सत्यत्वाद्, योगसिद्धौ मनोजविनो निमेषेण दविष्ठदेशप्राप्ते, प्राग् दीनस्य राज्यप्राप्तौ सकलोपास्य-ताया, नन्दिनहुषादेस्तेनैव देहेन देवसर्पादिभावे मनुष्यदेवादिभावव्यभिचा-रस्य च सत्यत्वात् । एकजातीयकार्यस्यापि लोकेऽनेकसाधनतया तत्सङ्कल्पानु-गतकर्मण एव तत्र साधनत्वोपपत्तेरिति चेद्, एव सति स्वसङ्कल्पादेवायमपि नादृग् विश्व सृजतीतीश्वरतुल्यत्व दोष । स्वमात्रानुभाव्यं तदिति चेद्, न । तस्य सत्यत्वे मनोराज्यगतचेतनवर्गस्यार्धजरतीयन्यायादसत्यत्वायोगेन तेनाप्यनुभाव्यत्वात्, तेनैवाननुभाव्यतयेशसङ्कल्पितजगतोऽपि सर्वानुभाव्यत्वा-सम्भवाच्च । किञ्चैवमभिमतविषयसाधनायासानर्थक्य सङ्कल्पितैरेव सत्यविषयै-रुपभोगनिर्वृत्तेः, सर्वलोकविसवादादिविरोधश्च । तदेव स्वप्नादिवदयथाभूतैरेव स्वकाले प्रत्यक्षादिव्यवहार उपपद्यत इति । यद्युच्येत — न वय बाधनीयैर-र्थैर्व्यवहारानुपपत्ति ब्रूमहे । किन्तु प्रवृत्तप्रमाणानुपजीविना निरपेक्षप्रवृत्तिकेन च परेण । स्यादपि पूर्वस्य बाध. शुक्तितत्त्वप्रत्यक्षेणेव रजतप्रत्ययस्य । न तु प्रवृत्तप्रत्यक्षाद्युपजीविना पौरुषेयन्यायानियोम्यार्थेनागमेन परेणापि प्रत्यक्षादि

१. 'गी' ख पाठ २ मि' क पाठ. ३ य' ख पाठ

बाधो युक्तः । बाधकस्यापि स्वेन स्वबाधे व्याघातात्, प्रपञ्चाबाधापाताच्च । यत्तु प्रपञ्चस्य सत्त्वनिषेधो बाध स्वरूपानिषेधाच्च न व्याघातादिरिति । तन्न । 'अस्थूलमनणु', 'अशब्दमस्पर्श', 'नेह नानास्ति किञ्चने'त्यादिप्रपञ्च-स्वरूपनिषेधात् । अन्यथा स्वोपाधावनिषेध्यस्वरूपस्य ब्रह्मवदेव सत्त्वापत्तौ तन्निषेधव्याघाताच्च । किञ्च शब्दादौ सत्त्वस्याप्रतीतावप्रसङ्गेन तदवच्छिन्न निषेधायोगः प्रतीतौ च तद्विरोधेनेति ॥

---

### बाध्यबाधकतानियामकचिन्ता ।

अत्र वक्तव्यम् । किमित्यनुपजीविनापि परेण पूर्वं निरुद्धमपि बाधनी-यम्, इन्दीवर इव नीलत्वोत्पलत्वयोर्व्यस्तदृष्टयोरेव शुक्तित्वरजतत्वयोरपि ह्येकत्र समावेशो मानवशादुपपद्यते । एकत्र भिन्नकालनियतश्यामरक्तबुद्ध्यो-रपीतरेतरमबाध्यत्वात् । अथैकस्य श्यामरक्तभाववच्छुक्तिरजतभावो न निर्व-र्त्यते हेत्वभावादिति । न । कार्यं हि प्रतीत कारणकल्पनाया प्रमाण, न पुन स्फुटावधारित कार्यं कारणानिरूपणयापह्नवमर्हतीति हि नीतिविद । बाध्य-बाधकभावस्तत्र लोकसिद्ध इति चेत् । सत्यम् । तन्नियामक तु निरूपणीयम् । न च विरोधे सति पौर्वापर्यम् । यदनेन बोध्य तदसत्यमित्याद्युपदेशेन पूर्वे-णापि परस्य बाधाद् अग्न्यनुष्णत्वाद्यनुमानस्यादित्ययूपाद्यागमस्य च पूर्वेण प्रत्यक्षेण बाधोपगमाच्च । ननु तत्र प्रत्ययस्यैवानुत्पादो न बाधः । न । तत्र बाधितविषयत्वप्रसिद्ध्या बाधकाभावे प्रतिपत्तियोग्योपाधौ निषेधप्रमाया अपि बाधत्वौचित्यात् । तमेनमप्राप्तबाधमाचक्षते तान्त्रिका. । श्रुत्यादिना लि-ङ्गादिगमनीयार्थबाधस्याप्राप्तविषयत्वात् । भूतले घटाभावप्रमा च न बाध । तदा सामग्रीविरहेण तस्य तत्प्रतिपत्त्ययोग्यत्वात् । इह च व्याप्तिशब्दज्ञाना-दिसामग्रीसत्त्वात् । अथोच्येत — पौर्वापर्यमतन्त्रम्, अपरोक्षेण विरोधि परोक्षं बाध्यमित्येष नियम इति । तदपि न । रूप्यापरोक्षभ्रमस्य शाब्दशु-क्तिज्ञानबाध्यत्वात्, चन्द्रप्रादेशिकत्वादिभ्रमानुवृत्तावपि तत्प्रतिपत्तियोग्योपाधौ निषेधप्रमारूपबाधस्यागामिकस्य सम्भवाद्, ज्वालैक्यप्रत्यक्षस्य तद्भेदानुमान-

---

१. 'क्तिर' क पाठ. २ द्यनुमानस्य', ३ 'स्य' ख पाठः

बाध्यत्वोपगमाच्च । अथ प्रमाणं बाधकं तदाभासो बाध्य इत्युच्येत, तदपि न । तादृशोऽपि सत्प्रतिपक्षादेरबाध्यबाधकत्वात् । तस्मादितरेतरविरोधे सति यद् दोषमूलतयान्यथा वा सम्भावितान्यथासिद्धि विषयान्तरेणाप्रामाण्येन वा-घटमानं भवति । तत् पूर्वमपरं वा परोक्षमपरोक्षं वा बाध्यम्, अन्यत् तु बाधकमिति नियमे सत्यनादिनिधनाविच्छिन्नसम्प्रदायासम्भाव्यदोषगन्धासङ्कु-चद्वृत्तिनिरवकाशानिर्विशेषशास्त्रमानेन सम्भाव्यदोषसावकाशप्रत्यक्षादिविकल्प-बाधो नासम्भावनामर्हति । तुल्यबलविरोधे हि विकल्पो विषयव्यवस्था वेति ।

न च स्वेन स्वबाधे व्याघातः । नहि बाधनीयस्य विद्यतिमर्थक्रिया वापह्नुमहे, येन प्रतीतरूपेण स्वबाधबुद्धिजनकता व्याहन्येत । न च बाधबुद्धेरेव स्वबाधकत्वव्याघातः । स्वत एव स्वोपाधौ विशेषसामान्यनिषेधप्रतियोगित्वा-वभासाविरोधात् । न च स्वाभावावभासे स्वावभासविरोधः, स्वाभावविकल्पा-त्मनैवोदितस्य बाधकविकल्पस्य तदुपाधावप्रतीतेः । तदुपाधौ हि तदवभासो विरुध्यते नावभासमात्रम् । यद्येवं स्वप्रतीत्युपाधावनिषेधाद् नासावात्मबाधः स्यात् । न । प्रतीतियोग्योपाधावेव निषेधप्रतीतिबाध इति ह्युक्तम् । स्वनिषे-धाप्रतीतौ च स्वसामग्र्यैव बोधोपाधेस्तत्प्रतीतियोग्यत्वात् । प्रबलज्वलने शलभ-लीतूलसयोगस्य स्ववृत्तिविरोधिसत्त्ववद् बाधविकल्पस्य तदुपाधौ स्वप्रतीति-विरोधिस्वभावत्वोपपत्तेः । इयांस्तु विशेषः । यदेकत्र स्वाश्रयनाशेन स्ववृत्ति-विरोधिता । परत्र स्वनिषेधावभासेन तत्र स्वावभासविरोधितेति । अथ बाध-विकल्पस्य सत्तानिष्कर्षे निरुपाख्यस्य प्रतिभासानुपपत्त्या सत्तालिप्तावभासे तदुपाधावेव प्रतीतिः प्राप्ता । न । इह घटो नास्ति, न त्वा जानामि, नेच्छा-मीत्यादौ निषेध्योपाधिसम्बन्धावभासवद् निषेधशेषतया बाधविकल्पसत्तासंश्ले-षावभासाविरोधात् । न चैव बाधबाधे प्रपञ्चाबाधः । स्वरूपबाधेऽपि बाधवि-कल्पविषयानपबाधात् । युगपदशेषविशेषनिषेधेन निर्विशेषस्वरूपपरिशेषो-पपत्तेश्च । कथञ्च सप्रपञ्चता परिशिष्येत यदि हि प्रपञ्चबाधः पर्यवसन्नः पृथग् बाध्येत । रजतत्वबाधबाधे हि रजतत्वं परिशिष्यते । यावद्विशेषबाध यौगपद्ये च सत्तात्ममात्रपरिशेष इत्युपपन्नामिति दिक् ॥

---

१. 'थवि' ख पाठः

### विधिकाण्डविरोध ।

यद्यपि नानाभेदव्यपाश्रया कर्मोपासनाविधयोऽप्यपौरुषेयत्वेन समा ब्रह्मात्मविद्याविधिभि , तथापि ते सिद्धभेदाश्रयेण साध्यसाधनव्यवस्थामात्रकारिणः स्वाश्रयभेदबाधे केवलमुदासते, न विरुध्यन्ते । सति भेदे विधेयसाध्यसाधनभावमात्रस्यानिषेधात् । न खलु बहि. क्रतोरप्प्रणयनाद्याश्रयाभावे गोदोहनादिविधयो विरुध्यन्ते, सत्याश्रये विधेयपशुगोदोहनादिसाध्यसाधनभावानिषेधात्, तद्वत् । तदेव स्वसिद्धौ प्रत्यक्षाद्युपजीविनापि निगमेन परबाधाभावेन विषयाशे असम्भावितदोषेण स्वरूपतो विषयतश्च सम्भावितदोषमूलत्वान्यथासिद्धि प्रत्यक्षादि बाध्यत एवेति । अन्ये तु— प्राप्तबाधे पौर्वापर्यमेव हेतु

"पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति"

इति । उक्त च —

"पूर्वं परमजातत्वादबाधित्वैव जायते ।
परस्यानन्यथोत्पादान्न त्वबाधेन सम्भव. ॥"

इति । कथ पुनरागमस्य परत्व प्रत्यक्षात् , तावत् स्वरूपासिद्धावुपजीवनात् । कर्मविधेस्तु क्रमपाठात् साध्यविषयत्वाच्च । तत एवोपासनाविधेरपि परो निर्विशेषागम· सर्वमानप्रसञ्जितभेदनिषेधपरत्वाच्चेति वदन्ति ॥

---

### प्रत्यक्षादिदोषमूलत्वसम्भावनाहेतुनिरूपणम् ।

अत्राह— प्रत्यक्षादेर्दोषमूलत्वसम्भावनयान्यथासिद्धिमाचक्षाणेन[1] तत्सम्भावनाहेतुरेव निरूपणीय । न खलु प्रवृत्तिर्विसंवदते । न च विपरीतदर्शनमस्ति । ननु निर्विशेषागम एव । न । इदानीमस्याप्रतिष्ठत्वात् । प्रथमवृत्तप्रत्यक्षादिपरिच्छिन्नविपर्ययतया स्वार्थस्यापूर्वत्वविघातेनातात्पर्यात् । यथाहुः—

"असन्निकृष्टवाचा च द्वयमत्र जिहासितम् ।
तद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि च ॥"

इति । तथाचागमनिर्विशेषतात्पर्याधिगमे प्रत्यक्षादिदोषमूलत्वसम्भावनाया

1 'णो न' ख. पाठ ,

च प्रामितेरेतराश्रयत्वम् । दोषमूलजातीयत्वेन प्रत्यक्षस्य तत्सम्भावना पुनरागमस्यापि स्यात् । अपौरुषेयत्वेन दोषाभावस्तत्र निश्चित इति चेत्, तथापि किं प्रत्यक्षमेव बाध्यता निर्विशेषादिशास्त्रं वा हेयादिविषये सङ्कोच्यतामिति सशयमूलदोषस्य बोद्धरि सम्भवात् । अतो वक्तव्य. प्रत्यक्षादिदोषमूलत्वसम्भावनाहेतुरिति ॥

---

## भेदग्रहानुपपत्ति ।

उच्यते — विषयदुर्निरूपतैव हेतु. । अस्ति तावदय शुक्लो घटो नील. पट इत्येव शुक्लघटादय सत्तया भेदेन चावभासन्त इति । तत्र सत्तया वस्तुभासन सविदां निसर्ग । अपेक्षया तु भेदन । न च तदेव धर्मिप्रतियोगिज्ञानमपेक्ष्य तदेव भेदेन ग्राहयति, विरम्यव्यापारप्रसङ्गात् । न च भेदग्राहिज्ञानान्तरमुपजनयति, यौगपद्यायोगात् । न च वस्तुस्वरूपज्ञानानन्तर भेदज्ञानमनुभूयते । यद् वस्तुस्वरूपमपि ग्राहयदुभयव्यवहार प्रयुञ्जीत । न च प्राचीनतदर्थज्ञानेन प्रतियोगिज्ञानादिसहकारिसम्पन्ना सामग्री तदेव भेदग्राहिवस्तुस्वरूपज्ञान जनयेदिति वाच्यम् । दृष्टविसजातोयप्रत्युत्पन्नवस्तुविशेषविकल्पे तदसम्भवात् । तत्र च गृह्यमाणविशेषविवेकाज्ञाने सम्बन्धिरूपानवभासाद् निर्विकल्पापत्ते । एतेन घटादिज्ञाने वित्त्यन्तरवेद्यपटादिभेदावभासो व्याख्यातः । उभयस्वरूपज्ञानानन्तरभाविभेदज्ञानाननुभवात् । अपिच धर्मिप्रतियोगिज्ञानस्यापि तदुभयविवेकानवभासित्वे सत्तामात्रावभासिना मुण्डो गौरित्यादिवद् भेदग्रहाप्रयोजकत्वात् । तदुभयविवेकावभासित्वे च तत्प्रयोजक धर्म्यादिज्ञानान्तर मृग्येतेत्यनवस्था ॥

---

## भेदस्वरूपानुपपत्ति ।

अपिच न वस्तुस्वरूपमात्र भेद', ज्ञात एव तस्मिन् प्रतियोगिनिरपेक्ष भेदव्यवहारप्रसङ्गात् । अथ यदि भेदव्यवहारोऽसङ्कीर्णविषयव्यवहार., स गवादिज्ञानादेव । अथ भिन्न इति व्यवहार , तत्र प्रतियोगिधीरपि सामग्री कल्प्यते । न । विषयाविशेषे गवादिव्यवहार इव पदव्युत्पत्त्यादिव्यतिरिक्त-

---

१. 'दृष्ट', २. 'प्रत्युत्पन्न' ख. पाठ..

सामग्रीकल्पनानौचित्यात् । नहि भेदव्यवहार एव व्युत्पत्त्यादिसामग्री कल्प्यते, येन कल्पनीये विशेषेऽन्यदपि कल्प्येत । अथ भेदपदव्युत्पत्तिरेव सप्रतियोगिकत्वोपाधिकेति प्रतियोगिज्ञान भेदव्यवहारसामग्रीति चेद्, न । यथावगतस्वरूपभेदे गवादिपदस्येव भेदपदस्यापि प्रतियोगिनिरपेक्षमेव व्युत्पत्तेरप्युपपाद्यत्वात् । परिमाणे तु ह्रस्वत्वादिग्रहणेऽपि प्रतियोगिज्ञानापेक्षोपगमादनुदाहरणम् । न चैवमन्योन्याश्रय. परिमाणस्वरूपज्ञाने सति परस्परापेक्षया युगपद् दीर्घत्वाद्यवभासाभ्युपगमात् । अपिचैव गौर्भिन्न इति व्यवहारो न स्यात् । अर्थावैशेष्येण पर्यायत्वाद्, वस्तुन एव भेदत्वे भेदवद्वृत्तिभिन्नशब्दानाञ्चस्याच्च । न च वस्तुस्वरूपमेव प्रतियोगिनिरूप्यात्मना भेद पुरुष इव पुत्रादिनिरूप्यात्मना पित्रादिः । तद्रूपग्रहणव्यवहारौ च प्रतियोगिज्ञानापेक्षौ, भेदादपर्यायत्वं चेति वाच्यम् । एवमपि भेदेन प्रतियोगिज्ञानापेक्षायामन्योन्याश्रयात् । न खलु तस्य स एव प्रतियोगितया निरूपकः । किं कारण, भेदेनाज्ञानात् । एवमन्यदपि स्यात् ।

नापि वस्तुधर्मो भेद, धर्मधर्मिभावस्य भेदाधीनत्वात् । तस्य तस्यान्यान्यभेदाभ्युपगमेऽनवस्थानात् । धर्मधर्मिभेदासिद्धौ च धर्मभूतभेदासिद्धेः । तस्याप्यन्यनिरूप्यतया भेदेन धर्मिप्रतियोगिज्ञानापेक्षायामन्योन्याश्रयाच्च । न च न भेदेन धर्म्यादिज्ञान भेदधीहेतु, किन्तु पृथक्त्वेनेति वाच्यम् । पृथक्त्वज्ञानस्याप्ययमस्मात् पृथगित्यपेक्षाधीसापेक्षत्वेन भेदधीतन्त्रत्वात् । नापि वैलक्षण्येन धर्म्यादिज्ञान भेदधीहेतुः । लक्षणवैविध्यस्य विरोधस्य वा भेदधीतन्त्रज्ञानत्वात् । यस्य वैलक्षण्य यच्च वैलक्षण्य तयोर्वैलक्षण्यान्तरानिरूपणेन भेदाग्रहप्रसङ्गाच्च ।

एतेन क्वचिज्जातिभेदोऽन्यताप्रत्ययहेतु गौरिय बडबेयमिति । तुल्यजातीयत्वे लक्षणभेद कालाक्षीय स्वस्तिमतीयमिति । तुल्यजातिलक्षणत्वे देशभेद, इद पूर्वमामलकमिदमुत्तरमिति । एकजातिलक्षणदेशत्वे च परिणामलक्षणभेदो योगिनामर्थान्यत्वप्रत्ययहेतु, भिन्नदेशोपलब्धामलकयोर्व्यग्रे ज्ञातर्यन्यतरापनयनेन तद्देश उपावर्तते, तदामलकाद् भेदज्ञाने लक्षणभेद एव

१. 'तस्यान्या', २ 'णे', ३ 'व्यवि' ख पाठ.

हेतुरिति पातञ्जलमपि दर्शन प्रत्युक्तम् । देशादिभेदस्य भिन्नवस्तूपाधिकतया तद्भेदज्ञानस्यापि वस्तुभेदज्ञानाधीनत्वेनान्योन्याश्रयात् । जातिलक्षणभेदश्च वस्तुभेदे न प्रयोजक, एकस्यापि सम्भवात् । तद्विरोधश्च भेदाज्ञाने दुर्ज्ञान इत्यवोचाम ॥

---

## सिद्धान्ते भेदग्रहोपपत्ति ।

ननु किं भेदो मा विज्ञायि, तथा सति सर्वोऽपि व्यावृत्तव्यवहारो लुप्येत । न । भेदविभ्रमादेव सर्वव्यवहारोपगमात् । सत्तामात्रपरमार्थे सर्वस्यैव भेदस्य विभ्रमत्वाविशेषेऽपि तात्कालिकव्यवहारसवादविसवादाभ्या प्रमाणतदाभासत्वविवेकाविरोधात् । सत्युपलब्धरि बाधाबाधाभ्या तद्विवेक इत्यपरे । अथापि व्यावहारिको भेदो लोकसिद्धहेतुविशेषनिरूपणीय इति प्रतियोग्यादिज्ञानापेक्षायामुक्तदोष । उच्यते । न भेदेन धर्म्यादिज्ञान भेदधीहेतु । किन्तूपस्थिततादात्म्याज्ञानमेव, सम्प्रतिपन्नत्वात् । गौरश्वो नेति च भेदनिरूपकतया तादात्म्यस्याज्ञातस्यैव साक्ष्युपनीतस्योल्लेखनात् । न चैव परस्याप्युपस्थिततादात्म्याग्रह एव भेदधीहेतु, भेदनिरूपकतया च तादात्म्योल्लेखो न विरुध्यत इति वाच्यम् । विरोधेन युगपदनाहार्यभेदाभेदग्रहायोगात् । आहार्यतादात्म्यग्रहस्य च भेदग्रहमूलतया तदेकग्रहत्वायोगात् ।

नन्विद रजतमिति भेदधीर्न स्यात् । उच्यते । नेद रजतमिति बाधो हि नारोपितरजतभेदज्ञान बाधे तस्य तुच्छस्य प्रतियोगित्वाद्यनुपपत्ते. । किन्तु रजतत्वेन सद्रजतभेदज्ञानमेव सामान्यानुबद्धभेदज्ञानस्य यावद्विशेषाभेदावभास विरोधित्वेन वस्तुस्वरूपावभासे रजतभ्रमबाधोपपत्तेः । तत्तादात्म्य चाज्ञातमेव भेदनिरूपकतया साक्षिणोपनीयते । न च 'नेति नेत्यात्मे'त्यादौ सप्रतियोगिकभेदज्ञान परिशिष्यते येन पृथक् प्रतियोगिसत्त्वमपेक्ष्येत, सर्वभेदविकल्पस्यापि स्वयमेव बाधेन प्रकाशसत्तामात्रपरिशेषात् । अथवाविशेषाकारतादात्म्य प्रीतातम् ।

---

१. 'स्यो प', २ 'ग्रन्थम्' ख. पाट.

अन्यथा भ्रमत्वयोगात् । तद्रूपभेदप्रत्ययश्चाप्रतीतसत्तामात्रतादात्म्याज्ञानमूल एव स्वसमानविषयाज्ञानमूलमभेदभ्रममपबाधते । अत एव 'नेति नेत्यात्मे'त्यादौ विशेषाकारतादात्म्यविभ्रमबाधो न विरुध्यते । किन्तु तत्र यदि भेदप्रत्ययोऽवस्थाप्येत, तादात्म्याज्ञानमूलो विभ्रम एव स्यादिति सर्वमात्मैवेति प्रत्ययपर्यवसाने भेदविभ्रमबाधः सिध्यति ॥

---

### भेदस्य तादात्म्याप्रतियोगित्वं नञर्थः ।

यद्वा नात्र भेदप्रत्यये गवाश्वतादात्म्यमवभासते, गौरश्वो नेति शाब्दबोधावैरूप्योपपत्तेः । नहि तत्र नञर्थमनपेक्ष्य प्रथमं गवाश्वसामानाधिकरण्यमधिगन्तुं शक्यते, एकवाक्ये पदानां सम्भूयकारित्वात् । कथञ्च तावद् नञ्पदमनर्थकमुदासीत, यदि गवाश्वतादात्म्यमिह प्रसज्य निषिध्येत । न चैवम्, अप्राप्तेः । अत एव प्राप्यप्रतिषेधे चावृत्त्यादिप्रसङ्गात् । नासावश्वः अनश्वः नाय धर्मः अधर्म इत्याद्यैकार्थ्येन नामार्थयोगे नञः पर्युदासवृत्तित्वात् । यथाहुः —

"नकारौ द्विविधौ ज्ञेयौ पर्युदासप्रसज्यकौ"

इति,

"नामधात्वर्थयोगी हि नैव नञ् प्रतिषेधकः"

इति च । पर्युदासश्च भेदः । एकस्य द्वैधं यदि तदेकमुपादाय विधीयेत, निष्प्रतियोगिकमधिगम्यते घटो भिन्न इति । भिन्ने जुहोतीत्यादिदर्शनात् । अथ भित्तमुपादाय विधीयेत सप्रतियोगिकमधिगम्यते इदमस्माद्भिन्नमिति । तदिह गौर्नेति भेदे विधेयेऽश्व इति विशेषणादश्वात्मना भिन्न इत्यक्लेशेन सामानाधिकरण्यपर्यवसानेऽर्थात् तत्प्रतियोगिको भेदो गम्यते । तमेतमन्योन्याभावमाचक्षते । अन्योन्यस्यात्मान्योन्यभावः । तद्व्यतिरिक्तोऽन्योन्याभावः, नान्यात्मान्य इति । अथैवं गव्यश्वो नेति कस्मान्न पर्युदासः । क्रियायोगविवक्षया नञः प्रसज्यप्रतिषेधात् । अभावप्रतियोगिव्युत्पत्त्या च नञः सामानाधिकरण्याविघातात् । नामार्थयोगविवक्षायां पुनः पर्युदास एव स्याद् अनश्वो विषाणादिर्गवीति । ननु नञिवयुक्तमन्यसदृशेऽर्थे तथा ह्यर्थगतिः । न खल्वब्राह्मण इति लोष्टमवगम्यते । न । असम्भवेऽन्यमात्रप्रतिपत्तेः । तदेव सति

गवाश्वैकत्वमनिर्ज्ञातविशेषमर्थादाक्षिप्यत इति तदज्ञानमूला गवाश्वादिभेदप्रत्यया विभ्रमा एव, भेदाज्ञानमूलाभेदप्रत्ययवद्, नहीद रजतमिति सत्तैकात्मयाथात्म्यमवभासते, येन न भ्रम स्यात् । उपस्थितरूपाभेदावभासात् तु भ्रम एव । न चैव परस्यापि तादात्म्याग्रह एव भेदधीहेतुः, गौरश्व इत्येव स्वस्वतादात्म्यग्रहणात् । अन्योन्यतादात्म्य न गृह्यत इति चेत् । न । तस्य सत्त्वे तदग्रहानिरूपणात् । विकल्पितमात्रस्य खपुष्पवदकार्यकरत्वात् । सत्त्वे च तस्य भेदाभेदविरोधेन विद्यमानाभेदाग्रहमूलो भेदग्रहो विभ्रम एवेति । एतदुक्तं भवति — भूरम्बु गौरश्वो जीव ईश इत्यादिविशेषा एव सत्तैकात्मनो भेदा नाम नातिरिच्यन्ते, अनवस्थानात् । ते च तादात्म्याज्ञानेन स्वसामग्र्यैव स्वरूपेण भूरम्बु गौरश्व इत्येव[1] प्रतिभासन्ते । अज्ञाततादात्म्येन स्वरूपोपस्थित्यपेक्षया तु परोपाधिना पर्युदासेन इदमिदं न इदमस्माद भिन्नमित्येवमवभासन्ते । एकस्यैव परोपाधिनिबन्धनरूपभेदप्रत्ययस्य लोके बहुलमुपलम्भाद्, यथा गौ[2]रभिन्नो गौरिति । अभेदो हि नाम स्वरूप गौरित्येवावगत गोभेदापेक्षया तु विकल्प्यते गौरभिन्नो गौरिति, 'परमात्मना भवत्यभेदी'ति चेति ॥

---

अनावृत्ता च बाध । सत्तायाः पुनरव्यावृत्तेरबाध इति । न च दृष्टान्तासिद्धिः । अनिर्वचनीयख्यातिर्हि वक्ष्यते । तदेव हीनबलतया न प्रत्यक्षादीनि प्रतिपक्षतामर्हन्तीत्यतो नागमस्य तदनुरोध । किन्तु तदुपरोध एवेति ॥

---

## परमते भेदादिनिर्वाह ।

अत्राह—न तावद् भेदो न प्रतीयत एव, वेदान्तकथानारम्भप्रसङ्गाद्, गौरश्व इत्यादिविशिष्टव्यवहाराभावप्रसङ्गाच्च । अप्रतीतव्यवहारायोगात् । अपिचैव गोरश्वार्था न निवर्तेत, सत्तामात्रदर्शनाविशेषात् । गवि प्रतिपन्नेऽश्वादिशब्दाश्च स्मर्येरन् । स्मारकप्रतिसम्बन्धिसत्ताग्रहणाविशेषात् । स्मृताश्च प्रयुज्येरन् विषयविशेषाभावात् । अनन्तरप्रतिपन्नगौरश्वादय प्रतिपद्यमानाः पूर्वसत्त्वबुभुत्साया बुद्धतयैव परामृश्येरन्, अनुभूतसत्तामात्रत्वात् प्रत्यभिज्ञायमानवत् । अन्धबधिरादिव्यवस्था चोच्छिद्येत, करणभेदव्यवस्थापकविषयभेदाभावात् । वेदान्ताश्चाप्रमाणमापद्येरन्, सत्तामात्रात्मनो मानान्तरसिद्धत्वात् । न च तत्सामग्री नास्ति दुर्निरूपा वा, सम्प्रतिपन्ने कार्ये तदनुरूपसामग्रीकल्पनात् । प्रतीत हि कार्य कारणकल्पनाया प्रमाणमिति नीतिविदः । न च निर्विषया बुद्धि सम्भवति, येन भेदो विषयोऽपह्नूयेत । न च बाध्यो विषय, प्रत्यक्षबाधाभावात । न च दुर्निरूपः गौरश्व इत्येव निरूपणात् । तत्र क्रमयौगपद्यादिविकल्पानवकाशात् । न च स्वरूपेण जात्यात्मभेदज्ञान प्रतियोगिज्ञानापेक्ष, येन सामग्रीभेदादातिरिच्येत । व्यावृत्तो भिन्न इत्यादिशब्दव्यवहारविशेषे च प्रतियोगिसापेक्षत्व दारा कलत्रमित्यादाविव पुन्नपुंसकत्वादि शब्दविशेषस्वभावाधीन नार्थदूषणमावहति । अन्वयव्यतिरेकाभ्या च शब्दविशेषस्वभावाधीन प्रतियोगिसापेक्षत्वमिति निश्चीयते । गौरिति च भिन्न इति च व्यवहारेषु तदपेक्षानपेक्षयोः सर्वजनीनत्वात् । भिन्नशब्दो हि व्यावृत्तबुद्धिहेतुत्वरूपप्रवृत्तिनिमित्तसाधारण्यात् साधारण एव तदवच्छेदकाश्वाद्युपाधिपुरस्कारेण गोत्वादिविशेषप्रत्ययहेतुर्गौरश्वाद् भिन्न इत्यतो न पर्यायः । उपाधिशब्दानां वाच्यानतिरेकेऽपि तटस्थोपाधिभेदादपर्यायत्वेनाथ प्रभात इत्यादिसहप्रयोगात् । अत एव स गवादावाञ्जस । तस्य जात्यादिरूपभेदयोगात् । तस्य च स्वपरनिर्वाहकत्वेन भेदान्तरमनपेक्ष्य वस्तुभेदव्यवहारविषयत्वान्नानवस्था । भेदो हि स्वस्मिन्ननन्याधीनभेदव्यवहारः । स्वसम्बन्धेनार्थान्तरे

तद्व्यवहारहेतुत्वात् । द्रव्ये चाक्षुषत्वनिमित्तरूपमिव स्वस्मिन्ननन्यनिमित्तचाक्षुषत्वम् । स एव चान्यस्मादिव स्वाश्रयस्य स्वस्मादपि भेदव्यवहारहेतुः । भेदाद् भिन्नो गौरिति निराकाङ्क्षतया साकाङ्क्षतया चैकत्येव व्यवहारोपपत्ते. । भेदो गौर्भिन्न इति चार्थाभेदेऽपि भेदयोगकार्यव्यावृत्तिबुद्धिहेतुत्वादुपचर्यते ॥

## परोक्तजातिः ।

अथ का सा जाति यद्विषयो भेदप्रत्यय । वस्तुसस्थानम् । तन्न तावदवयवसयोगविशेषः, आत्मादावभावात् । नापि स्वरूपमात्र, गवादिज्ञानस्याविशिष्टविषयत्वप्रसङ्गात् । नैवम् । तस्य तस्यासाधारणमपृथक्सिद्धं विशेषण हि तत् । अपृथक्सिद्धयद्विशेषालम्बनेन[1] यस्य व्यावृत्तबुद्धि तत् तस्य सस्थानम् । यथा गोर्गोत्व सास्नादिसन्निवेशः । खण्डस्य खण्डत्व खण्डगव्या. खण्डत्वे सति गोत्व, नीलस्य नीलत्वमुत्पलस्य चोत्पलत्वमिन्दीवरस्य च नीलत्वे सत्युत्पलत्वमित्यादि । गुणादावपि यत् तज्जातिसज्ञकमिष्यते तदेव सस्थानम् । अस्य च तारतम्याभावादि शुक्लिमादिभ्यो विशेष. । शुक्ल शुक्लतर शुक्लतम तारस्तारतरो मन्द्रो मन्द्रतर. खरो मृदुरित्यादिवद् गौर्गोतरो गोतम इत्याद्यभावात् । तच्च सस्थान प्रतिवस्तु व्यावृत्तस्वभावमपि गवाद्यनुगतव्यवहारं प्रयुञ्जीत । जातिव्यक्त्यादावनुगतरूपान्तराभावेऽपि जात्याद्यनुगतव्यवहारसम्प्रतिपत्ते. । अपिच कोऽयमनुगतव्यवहार इति । न खलु गौर्गौरिति शब्दैकत्व, वर्णनित्यत्वेऽप्युच्चारणादिक्रमानुपूर्वीविशिष्टवर्णसमुदायान्यत्वात् । अनुगतस्यैकस्य व्यवहार इति च प्रागनुगतजातिसिद्धेरसिद्धम् । तत् सौसादृश्यमेव शब्दानामर्थानामपि गोत्वादिसस्थानानामनुगतिरङ्गीक्रियताम् । तावतैव व्यक्त्यादिपदानामिव व्युत्पत्तिव्यवहारयोरुपपत्तेरतिरिक्तजातेरकल्पनादनुपलम्भाच्च । किमिद सौसादृश्यम् । सदृशव्यवहारासाधारणहेतुर्विषयधर्म. सादृश्यम् । तदेव पुष्कलं सौसादृश्यम् । तेन गवय न गोशब्दस्य व्यवहारः प्रवृत्तिनिमित्तसंस्थानविशेषपौष्कल्याभावात् । गवान्तरे च सुसदृश इति न प्रयुज्यते, विवक्षाभावात् । प्रतियोगिसापेक्षत्वेन गौरवाच्च । गौरित्येव तु प्रयुज्यते लाघवात् । सर्वगोव्यक्तिषु च संस्थानसौसादृश्याविशेषात् प्रवृत्ति-

---

१ 'द्धि', २ 'पवाल', ३. 'द्दस', ख. पाठ .

...तालग्यन गोशब्दस्य न क्वचिदौपचारिकत्वम् । गौर्वाहीक इत्यादौ तस्य ...टश्यामावनिबन्धनत्वात् । ननु संस्थानमालम्ब्य संस्थानि गृह्यते ...वार्त्तव्य ोपगमात् । एवं सति गवये गवयत्वमस्थानव्यावृत्तगृहीते गोत्व-... असाधारणाकारग्रहणस्य भ्रमविरोधित्वात् । न । एकस्याने-... प्रतिपन्नसंस्थानाविरोध्याकारभ्रमसम्भवात् । गवयोऽय गौरिति ...कारभ्रमश्च विरोधाज्ञानेन सर्वसमाधेय । तेन शुक्लो गौरिति ज्ञाने मा ...श्वत्वादिभ्रमो भूत् । खण्डत्वादिविभ्रमो भवत्येव । एवं सर्वस्यैव सस्था-...क्षिकेऽसाधारण्ये समानेऽपि मा भूद् गवापेक्षया द्रव्यत्वं सस्थानं शुक्लत्वं ...क्त्यपेक्षयेति स्वासाधारणरूप संस्थानमिति विशेष्यते । अथ शुक्लिमा ...संस्थान द्रव्यस्यान्यस्मादात्मनश्च व्यावृत्तिर्गृहीतेति कथ तद्भेदविभ्रमः । अप्रसिद्धेरुत्तेजकत्वात् । तत्र सस्थानान्तरग्रहस्तु विरोधिकार्यगम्यत्वाद् वि-रोधस्य । न च सम्प्रतिपन्नसस्थानेनैव प्रतियोगिनिरूपितरूपभेदेन भेदव्यव-हारोपपत्तावर्थान्तरमदृष्टं कल्पयितु युक्तमिति ॥

---

### भेदासत्यत्वानुमाने परोक्तदूषणम् ।

यत्तु व्यावृत्त्या भेदापारमार्थ्यानुमान, तन्न । बाधात् । सोपाधिकत्वाद् व्याघाताच्च । अप्रतीता हि भेदा न पक्षतामर्हन्ति । प्रतीयमानास्तु सन्त एव प्रतीयन्त इति बाध.। बाधे हि मृषात्वम् । ननु गवादिविषयेऽश्वादिव्यावृत्तिर्बा-धकृता । तदिदमनालोचितबाध्यबाधकविवेकस्य भ्रमजल्पितम् । नहि सर्वे एव विधिनिषेधप्रत्यया बाध्यबाधकभूताः, अलोकसिद्धपारिभाषिकतद्भावस्यादू-ष्यत्वात् । अपि तु विरुद्धयोरन्यतरबलीयस्त्वे तत्रैव तत्प्रसिद्धेः । विरोधश्च विधिनिषेधयोरेकदेशकालप्रकारसम्बन्धावभासनिबन्धनो न तद्भेदे सम्भवति । भुवि गन्धो न जले, प्रगे चत्वरे गजो नेदानीं, पशुरिहेदानीं न गौ., वटुरग्नि-र्नायमग्निरित्यादौ तदप्रसिद्धे । सर्पोऽसौ, नासौ सर्पो रज्जुरेषेत्यादौ देशाद्य-भेदे विरोधेन बाध्यबाधकत्वप्रसिद्धिश्च । नैवम् । क्वचिद् भेदा निषिध्यन्त इति पक्षे बाधो व्यावर्तमानोऽपारमार्थ्यमपि व्यावर्तयति । अत एवात्र बाध एव साध्य इति निरस्तम् । व्यावृत्तिमात्रस्यातत्फलत्वेनाप्रयोजकत्वात्[3] । प्रतिपन्नो-

---

१ 'श्वा', २. 'का', ३. 'त्वोप्र' ख. पाठः

पाधौ व्यावृत्तेश्चासिद्धेः । अपिच साध्यधर्मपारमार्थ्ये धर्मिणोऽपि तत् । न खलु रज्जुसर्पस्यामत्यस्य विसर्पण धर्म. परमार्थो भवति । अत एवानुमानादन्यतो वा तदपारमार्थ्ये च धर्मिसत्यता । बाधबाधे बाध्यस्वरूपाबाधनियमाद्, 'द्वौ नञौ प्रकृतमर्थं सूचयत' इति हि शाब्दा । तथा साधनसत्यत्वे पूर्ववत् तद्धर्मिसत्यत्व, तदसत्यत्वे च साध्यासिद्धिः । न खलु भ्रान्तधूमेन वह्निः साध्यते । बाधकबाधे च बाध्यसत्यता स्यात् । यद्यपि नाशकमुद्गरादिनाशेऽपि नष्टो घटो नष्ट एव दृष्ट. । किन्तु कारकज्ञापकस्वभावो भिद्यते । घटाभाववचने बाधिते घटसत्यत्वदर्शनात् । अपिचैव बाधकज्ञानस्यापि यत्किञ्चिद्विशेषालम्बनतया भ्रमत्वे तद्बाधकज्ञानान्तरापेक्षानुपरमात् तव निश्शेषभ्रमनिवृत्तिरूपनिर्वाणासिद्धिः । अपिच ब्रह्मणोऽपि जडानृतव्यावृत्तत्वेनैकान्त्य, तदव्यावृत्तत्वेऽपि गोरिव व्यावृत्तादव्यावृत्तस्य गोत्वमिव व्यावृत्तत्वमित्यनैकान्त्यम् । व्यावृत्तत्वं ब्रह्मणि कल्पितमिति चेद्, गवादिषु किं सत्यम् । तथा सति धर्मिणोऽपि सत्यत्वे मृषात्वानुमानबाध. । कल्पितस्य च तस्य पक्षत्रयसाधारण्यमेवेति दिक् ।

एतेन दृश्यत्वहेतुरपि प्रत्युक्तः, धर्मिज्ञानबाधाद् . बाधेन सोपाधिकत्वात्, हेतुसाध्यपारमार्थ्यापारमार्थ्याभ्या व्याघाताद् ब्रह्मण्यनैकान्त्याच्च । सदिद सदिदमित्यध्यस्ताधिष्ठानयोरेकवित्तिवेद्यत्वात् । 'दृश्यते त्वग्र्यया बुद्ध्ये'ति दृश्यत्वशास्त्राच्च । 'यत् तदद्रेश्यमि'त्यादिसामान्यनिषेधस्योदाहृताग्र्यधीदृश्यत्वविशेषविधिशास्त्रापोदितस्य 'न चक्षुषा गृह्यत' इत्यादिशास्त्रान्तरैकार्थ्योपपत्तेः । दृश्यतैकस्वभावत्व मिथ्यात्वहेतु., स्वयम्प्रकाशे ब्रह्मणि नानैकान्तिकमिति चेत् । न । भेदमात्रस्य पक्षत्वे जीवे स्वयम्प्रकाशे भागासिद्धे. । जडमात्रपक्षत्वे चात्मनित्यत्वादिष्वनैकान्त्यात् । ते हि तद्धर्मभूतज्ञानवेद्या एव परमार्थभूताश्च । अन्यथा जीवस्यानित्यत्वादिप्रसङ्गात् ।

सत्तापारमार्थ्यानुमानमप्याभास. । घटादिस्वरूपसत्ताना पारमार्थ्यस्य सिद्धत्वात् । अनुगतसत्तायाश्चासिद्धेरिति ।

तदेव प्रत्यक्षादेरदुर्निरूपविषयतया दोषमूलता न सम्भावयितु शक्येति ॥

---

१. 'सदिदमि', २ 'नि नित्य' ख पाठः.

सिद्धान्तः ।

अत्र वदाम — सत्य, न भेदा न प्रतीयन्ते, नापि तत्स्वरूपनिरूपणे प्रतियोगिज्ञानापेक्षा, नापि गौर्भिन्न इत्यादिव्यवहारानुपपात्ति· । किन्त्वज्ञातव्यवहारायोगेन प्रतियोगिनिरूप्यरूपभेदज्ञाने भेदेन प्रतियोगिज्ञानापेक्षायामन्योन्याश्रयो दुरुत्तर । न चाणुत्वमहत्त्वादिव्यवहार एव प्रतियोगिसापेक्षता, न ज्ञाने । अन्योन्यनिरूप्यतयान्योन्याश्रयात् । एवमिहापि स्यादिति वाच्यम् । विषयभेदेन पूर्वपूर्वाणुत्वादिज्ञानेनोत्तरोत्तरदीर्घत्वादिनिरूपणोपपत्तेरुपन्यासवैषम्यात् ॥

---

सस्थानस्य भेदत्वनिरास ।

यत्तु सस्थानमेव संस्थानिनो भेद इति । तन्न । सस्थानस्य हि संस्थानान्तरभेद्यत्वे मा भूदनवस्थेति स्वयमेव भेद इति परस्यापि सम्प्रतिपन्नम् । एवमन्यस्यापि संम्भवे नार्धजरतीय युक्तम् । अपिचानुगतरूपाभावमते भावा. स्वत एव भिद्यन्ते । अन्यथा किरूपाः सन्तु स्वतो भावा., अनुगतरूपा हि नेष्यन्ते । न च ते नि स्वरूपा एव । अथ सस्थानभेदा एव भावा उपगम्येरन्[1], कः कस्यान्यो भेदः स्यात् । अथ कामं भावाः स्वत एव भिद्येरन् । किन्तु भ्रमसहस्वभावा । सस्थान तु भेदः स्वस्वाश्रययोरान्यात्म्यविभ्रमविरोधीति चेत् । ननु स्थाणुः पुरुषश्चेत्यादिविभ्रमा अपि शतशो दृश्यन्ते । न च तदेकाश्रयत्वसम्भावना तदुत्तेजिका । तदा तदा तन्नियमहेत्वभावात् । सस्थानभेदा अपि विरोधि[2]ज्ञानापेक्षा विभ्रम विरुन्धन्तीति चेदु, अथापि कथं स्थाणुरय पुरुषो वेति सशयः । न च गृहीतसस्थानभेदशुक्लादिगुणगुण्यभेदविभ्रमे अपृथक्सिद्धिरुत्तेजिका । सदैवाभेदभ्रमे शुक्लादिविशिष्टप्रत्यक्षाभावप्रसङ्गात् । दोषबलादभेदभ्रम. सशयो वेति च स्वरूपभेदमतेऽपि स्यात् । प्रतियोग्युपसर्गगृहीतसस्थानभेदो भ्रमादिविरोधीति चेत् । तत्तत्स्वरूपमेव तथा गृहीत भ्रमादि विरोत्स्यतीति किमतिरेकेण । अपिचैवं तव तदेव भेदेन प्रतियोगिज्ञानापेक्षायामन्योन्याश्रयणम् । अस्माक पुनरज्ञाततादात्म्येन भेदस्वरूपज्ञानापेक्षया भेदेन तन्निश्चयो भ्रमादिविरोधीत्युपपन्नम् । स्थाणुः

---

१ 'न् कस्या', २. 'धि' ख. पाठ.

पुरुषश्चेति तु तादात्म्यमवभासते । संशये तु भेदापातधीरेव, दोषप्राबल्यात् । प्रागारोपात् तु तदनुपस्थितिरेव, दोषसंस्कारादिभिरेवारोपोपपत्तेः । एवञ्च रूपरूपवदभेदविभ्रमेऽपि स्पर्शसामानाधिकरण्यज्ञानं विरोधीति न कल्पनीयम् । अभेदभ्रमविरोधिज्ञानानुगमोपपत्तेः । स्पर्शतद्वदभेदाविभ्रमे रूपसामानाधिकरण्यज्ञानं विरोधीति कल्पनेऽन्योन्याश्रयाच्च । परस्य तु नागृहीततादात्म्येन प्रतियोगिज्ञानापेक्षया भेदेन ज्ञानमुपपद्यत इत्युक्तम् । एतेन संस्थानभेदस्य स्वपरनिर्वाहकत्वानुमानं प्रत्युक्तम् । भावाना स्वत एव भेदव्यवहारहेतुत्वेन स्वसम्बन्धेनार्थान्तर इत्यादिहेत्वसिद्धे. ॥

---

## वस्तुसंस्थानस्य जातित्वनिरासः ।

यदपि जातिर्नाम वस्तुसंस्थानमेवेति । तन्न । तस्य प्रतिवस्तुव्यावृत्तस्यानुगतव्यवहारानिर्वाहकत्वाद्, अश्वकादौ तुल्यसंस्थानेऽश्वादिव्यवहारागौणत्वप्रसङ्गाच्च । जातिव्यक्त्यादौ च साधारणात्मत्वासाधारणात्मत्वाद्यनुगतोपाधिनैवानुगतव्यवहारोपगमात् । अपिचैव गवादिष्वेव गवादिशब्दा नानार्थाः प्रसज्येरन् । प्रवृत्तिनिमित्तभेदात् । सास्नाद्युपाधिकं गवादावनुगतमन्यत् सौसादृश्यमिति चेद्, नाममात्रविवादः । न च सास्नादिकमेव सदृशव्यवहारासाधारणहेतुविषयधर्मत्वेनानुगतिं क्रियते, परस्यासम्भवात् । नह्येकजात्येनावगतं सास्नादि गवादौ सदृशव्यवहारहेतु, अनुगतजात्यनुपगमात् । न च सौसादृश्येन, अनवस्थानात् । स्वरूपेणैव चेद्, एकशफादिसंस्थानमपि गोसदृशव्यवहारहेतु स्यादिति गोपदशक्यत्वापत्ते । तावतो गौरवेण गवादिपदाशक्यत्वाच्च । तदज्ञानेऽपि गवादिपदादाकृतिविशेषविशिष्टगवादिविज्ञानाद् गवादिपदव्युत्पत्तेश्च । तस्य धेनुपदादौ गोत्वादेरिव शक्त्युपाधित्वकल्पनाया अप्यमूलत्वात् । तथा च स्वर्गेषुपशुवागादाविव प्रतिव्यक्ति गवादिपदव्युत्पत्तौ गौरवम् । क्वचिदेव गवादिपदव्युत्पत्ति[1] सदृशेऽर्थे सदृशशब्दप्रयोगहेतुरिति कल्पना तु निर्मूला, अतिप्रसक्ता च । गवयेऽपि गोसादृश्यात्, खण्डमुण्डादिगवीषु कथञ्चिद् वैसादृश्याच्च ॥

---

१. 'त्ता' ख. पाठः.

## सिद्धान्ते अनुगतव्यवहारोपपादनम् ।

यत्पुनरनुगतव्यवहारविकल्पदूषण, तत्रोच्यते — परेण तावदेकजातीयपिण्डेषु प्रथमदर्शन निर्विकल्पकं, द्वितीयादिदर्शन तु सविकल्पकम् । जातेरनुवृत्तिरपि हि तत्र भासत इति विशेष उपेयते । न च तत्रानुवृत्तिरेकत्व, संस्थानलक्षणजातेरन्यान्यत्वात् । न च सादृश्यं, गुणेषु गुणावयवकर्मान्यतमसामान्यस्य सदृशव्यवहारासाधारणहेतुधर्मस्य दुर्वचत्वाद् , अन्यस्य चानुवृत्तिरूपस्य गन्धादिसस्थाने सविकल्पकग्राह्यस्यानिरूपणात् । नाप्येकजातीयत्व, सास्नादावपि संस्थानसादृश्यविवक्षायामनवस्थानात् । अतिरिक्तैकजात्युपगमे किं गवादौ तत्प्रद्वेषेण । यदि च सस्थानस्वरूपमात्रमनुवृत्ति', प्रथमदर्शनमपि तद्विषयमेवेति सविकल्पकमापद्येत । अनुभूतापेक्षावच्छेद्य सस्थानमेवानुवृत्तिः, सा च गृह्यते द्वितीयादिज्ञाने अयमपि गौरयमपि गौरिति, न प्रथमे । अय गौरित्येवावभासादिति चेद् , एव घटबुद्धिरप्यनुभूतगवापेक्षावच्छेद्यसस्थानविषया कस्मान्न भवति । न च वैसादृश्यात्, तत्र गवामप्यन्योन्यगुणावयवादिसामान्याभावात् । गुणादावनुगतजात्यनुपगमात्, सस्थानसादृश्यानवस्थानाच्च । न च स्वभावात्, जातिभेदस्य नियामकत्वसम्भवात् । तथाच प्रतिगवमान्यजात्ये संस्थानानुवृत्तिविषयत्वमेव द्वितीयादिज्ञानस्य दुर्भणमित्यनुगतजातिरकामेनाप्यतिरिक्तोपेतव्या । न चानुगतिर्व्यवहारस्य सौसादृश्यमेव, न खलु स्वर्गेषुपशुवाग्वज्रादिषु गोव्यवहारानुगतिः । शब्दभेद इवार्थभेदेऽपि तदनुगमाप्रसिद्धेः । तस्मादुक्तस्वविषयशब्दैकजातीयत्वं व्यवहारस्यानुगति' । विषयभेदे सति बुद्धबोधिसजातीयत्व तु ज्ञानस्य । अर्थस्य तु भिद्यमानेष्वभिन्नत्वमनुगतिः । तत्रायमनुगतव्यवहार ईदृशीमर्थानुगति साधयन्नोपाधिकभेदेष्वाकाशादिषु व्यक्त्यभेद स्वरसभेदेषु गवादिषु जात्याद्यभेद च साधयति । शुक्ल' शुक्ल इत्याद्यनुगतव्यवहारोऽपि सामान्यात्मा अनुगतशुक्लाद्यालम्बन एव ।

तस्माद् वस्तुसस्थानातिरिक्तैव जाति', शक्त्येकत्वसकृद्व्युत्पत्त्याद्युपपत्तेः । अन्यथा नि'सामान्यस्वलक्षणार्थवादिसौगतसङ्गतमतेस्तान्त्रिकस्य सकृदुक्ते गोशब्दे व्यक्तिविशेषोऽवबुध्येत । न खलु ततः सस्थानसुसदृशत्वमिति प्रजायते गोषु, न च कृत्स्नैकदेशवृत्तिविकल्पदुःसहता, तादात्म्योपगमात् । ·

१ 'त्मनानु' ख॰ पाठः.

## सत्ताया एव जातित्वम् ।

सा च सर्वेषु भेदेषु सत्तैकैव, लाघवात् । सूचीपाशादिपरामर्शे सत्येवाकाशस्येव गवादिभेदपरामर्शे सत्येव गोत्वादिभेदावगमस्यौपाधिकत्वोपपत्ते. । अतिरेके गौरवाद्, मानाभावाच्च । सन् गौरिति सत्तागोत्वभेदप्रत्ययस्य च गवादिविशेषोपधानभानाभाननिमित्तत्वात् । अनवधारितरूपो गवादिरेव सत्तामशेनोपधत्ते अंशेनावधारितरूप इति विशेषोपपत्त., अन्तराकाशमित्यादौ तस्यैव रूपभेदेन द्विरवभासदर्शनाद्, अनुवृत्तिव्यावृत्तिवैधर्म्यस्य चाकाशघटाकाशादिवदभेदेऽपि भवत सत्तागोत्वभेदाप्रयोजकत्वात् । तदिदमभिप्रयन्त आहुः —

"सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥
ता प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ॥"

इति ।

अपरे तु अविद्यैव सर्वभेदानुगता गोत्वादिजातिरित्याहु । सा चेय सत्ता गवादिभेदेनैव गृह्यते, न सत्तामात्रेणेति यथायथ विशिष्टव्यवहारा व्यवतिष्ठन्ते । नहि वयमपोदिताशेषविशेषसत्तामात्रपरिनिष्ठित प्रत्यक्षादिकमाचक्ष्महे यथौपनिषद विज्ञानम् । उक्तरीत्या तादात्म्यानवबोधमूलविभ्रममयतद्भेदोपसृष्टसत्ताविषयत्वानपवादात् । न च यौक्तिकभेदविभ्रमत्वावगमोऽपि तत्त्वपरिशेषाय क्षमते, दिङ्मोहादावदर्शनात् । आरोप्यापवादविकल्पेन विषयस्वभावापरोक्षावभासे सत्येव न रजतमिय शुक्ति 'नेति नेति', आत्माहमित्यादौ तत्त्वपरिशेषदर्शनात् । स चायमागमादृते सत्तात्मनि न सम्भवतीत्यस्थाने विशिष्टप्रतीतिविरोधाद्युपन्यासो मुग्धदासेरमोहनफल. ॥

---

## भेदापारमार्थ्यानुमाने दूषणोद्धार. ।

यद्यपि बाधादिभिर्भेदापारमार्थ्यानुमानदूषण, तदप्यौत्प्रेक्षिकममयप्रतारितलोकस्य प्रेक्षादैकस्याविप्करणमेव । नहि सत्प्रत्ययो भेदापारमार्थ्यं निहन्ति । शुक्तिरजतादयोऽपि हि सन्त एव प्रतीयन्ते । न च ते परमार्थ

---

१. 'स्य ग', २. 'पा' ख पाठ

इति वक्ष्यते । न च प्रतीयमानं सत्यमसत्यमिति वा प्रतीयते । यथायथं प्रत्यक्षेण ... मात्रावभासित्वात् । नातो धर्मिज्ञानबाधः । नापि ... सोपाधि(क)त्वम् । परस्योपाधिसाध्यव्याप्त्युदाहरणाभावात्, तस्य हेतुसमत्वाच्च । अनन्यात्मतद्धीविषयत्वं हेतुः । अन्यस्यान्यात्मना निषेधप्रमा न कथं । नेदं रजतमिति शुक्त्यात्मना निषेधेन रजतबाधात् । नहि नेदं रजतमित्येव सद्भावः, रजतस्यापीदम्भावाविरोधात् । किन्तु शुक्त्यात्मनैव, अन्येषु च घटोऽयमित्यादिधीरेवान्यात्मना निषेधोल्लेखिनी । अन्यथा व्यवहार ... त् । नञर्थविकल्पव्यवहाराभावस्य च प्रतियोगिनिरूप्यरूपानवभासनिमित्तत्वात् । तदनवभासश्च प्रतियोगिनामानन्त्येनैकरूपबुद्ध्यनुपारोहात् । घटादिबुद्धौ यावदुपस्थितपटाद्यात्मताव्यावृत्त्युल्लेखस्य च सर्वजनीनत्वात् । यत्तु देशकालादिभेदेन निषेधबुद्धिरेव बाध इति, तत् तथैव । घटादिस्तु सदैव तस्मिन्नेव सत्तासामान्योपाधौ पटाद्यात्मताव्यावृत्त्या बुध्यते । नन्वेवं बाधबुद्धिरवैक्यमिति कुत्र कस्य प्रतिपन्नस्याय बाधः स्यात् । न । सत्तोपाधावेव तदात्मना सर्वात्मताप्रतिपत्तियोग्यस्य घटादेरन्यात्मना बाधोपपत्तेः । इदमात्मना शुक्त्यभेदप्रतिपन्नं तु रजतमनन्तरं बाध्यते, प्राग् बाधसामग्र्यसमावेशात् । घटादिस्तु सैव बाधसामग्रीति बाधेनैव प्रतिपद्यते । न चैवं विसंवादो घटादिव्यवहारस्याभाव एव वा स्यादिति शङ्क्यम् । तथाविधैरेव प्रत्ययैरनादिसिद्धव्यवहाराविसंवादस्यानतिशङ्क्यत्वात् । यदात्मना यस्य बाधस्तदात्मना तद्व्यवहारानुपगमाच्च । अत एव तत्र बाधाप्रसिद्धिरपि न दुष्यति, तत्प्रत्ययनिबन्धनव्यवहाराविसंवादेनागन्तुबाधवैलक्षण्यात् । एतेनेदं निरस्तम् —

"अविरुद्धा बलीयस्या घटास्तित्वधिया कथम् ।
निषेधन्त्यापि बाध्येत पटो देशादिभेदतः ॥"

इति,

"अन्यस्यान्यात्मना सत्त्वे नैत्यिकी प्रतिषेधधीः ।
विरुद्धातः परैत्येण बलीयस्त्वेन बाधिका ॥"

... । किमुक्तं भवति । भेदबुद्धिरेव तत्प्रतीत्युपाधिसत्त्वे तदैव तत्प्रतिषेध... रूपपर्यन्ता बाधः रजतप्रतिपत्त्युपाधिविदामत्र शुक्तिरजतभेदबुद्धिरिति ।

---

१. 'ना' ग. पा...

अत्र पक्षे बाधितत्वपर्यवसायिनि हेतौ अदोषमूलज्ञानानालम्बनत्वं, भ्रममात्रसिद्धत्वं, विद्यमानाभेदाज्ञानाधीनस्थितिकत्वं, तदपरोक्षापादनीयविधिनिषेधानर्हत्वं वा साध्यम् । यदि चान्यदेव व्यावृत्तत्वं, तदा बाध एव साध्य इत्यनुपाधिः ।

यदपि साध्यस्य पारमार्थ्येऽपारमार्थ्ये च व्याघात इति । तदपि न । तदपारमार्थ्येऽपि भेदसत्यत्वविरोधात् । अन्यथा तदपारमार्थ्यमसत्त्वे किमपारमार्थ्येन विकल्प्येत । सत्य एव भेदे तदारोपितमिति चेत् । कुतः पुनरारोपः । बाधानुमानादिति चेद्, एवं तदनुमितेरारोपत्वे को हेतुः । भेदसत्यत्वाधिगम इति चेत् । केन भोस्तदधिगमः । प्रत्येयत्वं तावद् रज्जुसर्पादिनानेकान्तम् । अर्थक्रियाकारित्वं व्यवहाराविसंवादित्वं च स्वाप्निकानामपि स्वकाले तथाभावात् । अदोषाधीनविषयत्वमबाध्यत्वं चासिद्धसन्दिग्धम् । तस्माद् भेदानामपारमार्थ्यमनुमानेन धर्मिसमस्वभावं सिध्यत् स्वविरोधिधर्मान्तरं विरुणद्धीति न भेदसत्यता । अपि चैवं

सत्यत्वं यद्यसत्यं ते जगतः स्यादसत्यता ।
धर्मान्तरेण सत्यत्वे तस्य स्यादनवस्थितिः ॥
यदि स्वेनैव सत्यत्वमात्मनश्च परस्य च ।
मिथ्यात्वमपि किं न स्यादात्मनश्च परस्य च ॥

मिथ्यात्वस्य मिथ्यात्वान्तरमनपेक्ष्य मिथ्यात्वेऽपि धर्मिसमस्वभावत्वादानपवादेन जगत्सत्यतानापत्तेः । अन्यथा कस्य मिथ्यात्वं विकल्प्येतेत्युक्तम् । एवं यत्र,

वादिसाध्यमवस्थाप्य तद्विकल्पेन दूष्यते ।
तत्सिद्धौ तदसिद्धौ च विरोधस्तत्र दुस्तरः ॥
परोपदर्शितप्रायः सहचारप्रमाङ्कितम् ।
साध्यमेव विकल्पेन दूष्यते तन्न दुष्यति ॥

यथैहैव, किमिदमपारमार्थ्यम् । न तावदसत्त्वं, पक्षानभिरोधात् । नाप्यर्थक्रियाशून्यत्वम्[1] बाधात् । नापि स्वसंसृज्यमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वं, विरोधादित्यादि ॥

---

१. 'कि पा', २ 'ना पा' ख. पाठ.

## बाधबाधे बाध्यसत्यत्वनिरासः।

एतेन बाधबाधे बाध्यसत्यतेति निरस्तम्। सति बाधधर्मिणि तदबाधात्। ब्रह्मणि रज्जौ वा सत्येव तद्बाधबाधेन वैशेष्यात्। एव साधनधर्मोऽपि तादृगेव स्वसाध्य साधयति, साध्यसिद्धेः प्रागबाधेनार्थक्रियाकारित्वात्। साध्यसिद्धिपर्यवसाने च तस्य पुनरनपेक्ष्यत्वात्। न च बाधकबाधे बाध्यसत्यता, ज्योतिष्टोमप्रयोगे औत्सर्गिकद्वादशशतदक्षिणाबाधकस्य नैमित्तिकादक्षिण्यादेरुत्तरनिमित्तसर्ववेदसादिना बाधेऽपि तदप्रत्यापत्तेः। 'एचोऽयवायावः' (६. १. ७८) इत्युत्सृष्टबाधकस्य 'एङः पदान्तादति' (६. १. १०९) इति पूर्वरूपत्वस्य 'प्रकृत्यान्त. पादमव्यपरे' (६. १. ११५) इति बाधेऽपि अयवाद्यप्रत्यापत्ते', वृन्तभ्रमरभ्रमस्य पलाशकुसुमदावभ्रमबाधकस्य बाधेऽपि तदसत्यत्वाच्च। आरोप्यस्वरूपबाधो हि तत्त्वपरिशेषपर्यन्तस्तदपवादेन विषयापरोक्षमपेक्षते। केवलबुद्धिबाधस्तु मिथ्याविषयत्वाध्यवसायो विशेषदर्शनादेवोपपद्यते। तत्र यदि व्याप्यभ्रमरभ्रमेणाक्षसन्निकृष्टपलाशकुसुमयोग्यतया नाय दाव इति विषयापरोक्षमेव सम्पद्यते, यदि वा दावभ्रमहेतुदोषप्राबल्येम परोक्षमवतिष्ठते, उभयथापि दावभ्रमो बाध्यत एवेति, एतेन पलाशे दावत्वनिवृत्तिः। वृन्तेन तद्बुद्धिनिवृत्तिस्तु स्वयमेव क्षणिकत्वात्। भ्रमरभ्रमस्तु दावबुद्ध्यन्तरोदयप्रतिबन्धको[1] न बाध इति प्रत्युक्तम्। बाधकोच्छेदप्रसङ्गात्। रजतत्वनिवृत्तिः शुक्तित्वेन। तद्बुद्धिनिवृत्तिस्तु स्वयमेव। शुक्तित्वधीश्च भ्रमान्तरोदयप्रतिबन्धिकेति सुवचत्वात्।

अपिचैवं धर्मस्य तदतद्रूपविकल्पेन प्रत्यवस्थानाद् नित्यसमजातिरेषा, एवं हीद पर्यवस्यति। परार्थापारमार्थ्यधर्मित्वात् परमार्था भेदाः, धर्मिणोऽपारमार्थ्ये धर्मपारमार्थ्ययोगात्। अपरमार्थापारमार्थ्यधर्मित्वाद् वा, आरोपितस्य स्वभावाविघातकत्वात्। तथा परमार्थहेतुधर्मित्वात् परमार्था भेदाः हेतुधर्म एव व्यावर्तमानत्वहेतोरनैकान्त्यात्, अपरमार्थहेतुधार्मित्वाद् वा स्वरूपासिद्धेरिति। यथा लक्षिता सा गौतमेन 'नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः' (न्यायद० अध्या० ५. आह्नि० १. सू०-३५) इति। अनित्यः शब्द इति प्रतिज्ञायामनित्यत्वस्य नित्यत्वेऽनित्यत्वे वा शब्दनित्यत्वोपपादनेन प्रत्यव-

---

१- 'त्तिस्तु स्व'-ख. पाठ  २. 'तत्वा' क पाठः.

स्थानं नित्यसमजातिरित्यर्थः । तामम्रूं नित्यत्वानित्यत्वभिन्नत्वाभिन्नत्वकार्यत्वाकार्यत्वादिसर्वधर्मोपलक्षणेनोपरञ्जकसमामाचक्षते । तदुद्धारं च सोऽसूत्रयद् *'निषेध्ये नित्यमनित्यभावादनित्यत्वोपपत्तेः प्रतिषेधाभावः' (न्यायद० अध्या० ५. आह्नि० १ सू० ३६) इति । नायमपारमार्थ्यवान् अपरमार्थतद्धत्त्वात् परमार्थतद्धत्त्वाद् वेत्येव निषेध्ये हेतुतया सर्वथैवापारमार्थ्याङ्गीकारादुक्तोपपत्तिमूलप्रतिषेधो न भवति । प्रतिज्ञाङ्गीकारे हेतोर्हेत्वङ्गीकारे च तस्या व्याघातादिति । यत्तु अप्रामाणिकधर्मपरम्परापादनेन दूषण हि नित्यसमा । मिथ्यात्वमिथ्यात्व च प्रामाणिकं, रज्जौ रज्जुबुद्धेः सर्पबुद्धिबाध्यत्वस्य बाध्यत्वादिति । तत् तुच्छम् । अपारमार्थ्यस्य ह्यपरमार्थनिरूप्यस्य पारमार्थ्यं सत्यत्वापरपर्यायमप्रामाणिकम् । नहि सर्पोऽपरमार्थस्तद्धिसर्पणं परमार्थ इति युज्यते । सर्पत्वादि तु साधारण्येन तदेकनिरूप्यत्वाभावात् तदपारमार्थ्यं नानुविधत्ते । धर्मिसमसत्ताकतया मानसिद्धस्य भेदापारमार्थ्यस्य सति विषये बाध्यत्वलक्षणमपारमार्थ्यमप्यप्रामाणिकमेव । रज्जौ हि सर्पबुद्ध्यापादितरज्जुत्वापारमार्थ्यस्य पुना रज्जुबुद्धिबाध्यतया सत्येव विषये बाध्यत्वलक्षणमपारमार्थ्यमुपपद्यते । रज्जुसर्पबुद्ध्या तु न तदपारमार्थ्यं बाध्यते, स्वभावहानायोगात् । एवमिह मानसिद्धे भेदापारमार्थ्ये भेदसत्यत्वपर्यवसाय्यपारमार्थ्यमौत्प्रेक्षिकसमयाजीवेनापि न प्रामाणिकमुत्प्रेक्षितु शक्यम् ॥

---

## शून्यनिरास ।

एतेन माध्यमिकोक्तस्य ज्ञानबाध्यत्वस्य बाध्यत्वाभ्युपगमो व्याख्यातः । बाधमात्रस्यारोप्यविषयतत्त्वज्ञानाधीनतया तन्निर्भासविरोधिनो बाध्यत्वस्य तत्प्रवृत्त्यैव बाध्यत्वोपपत्तेः । अथ ज्ञाने बाध्यत्व न मिथ्याविषयत्वं पराभिमतम् । किन्तु शून्यपरिशेषावधिः स्वरूपनिषेधः । न । ज्ञाने सत्यसति वा तन्निषेधसिद्धिविघातात् । सिद्धान्त इव साधारण्येन स्वाभावविकल्पावभास

---

१ 'त्वाद् नि' क. पाठ २. 'ध्य', ६ 'स्वभावा' ख पाठः,

---

* प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेरि'त्यादि मुद्रितन्यायदर्शनसूत्रपाठ. ।

ज्ञान शून्यावसानं स्यादिति चेद्, न। सिद्धान्ते सत्ताभूतस्य स्वाभावस्य स्वकालेऽपि भावोपगमात्। असत्ताभूतस्य स्वाभावस्य स्वकालभावित्वे च स्वावभासविरोधात्। अभाव एव तदारोपे च तत्सत्तावभासविरोधात्। विषयानुविद्धावभासित्वादारोप्यस्यासत्तावभासप्रसङ्गाच्च। तत् स्वसत्तावभासाविरोधिविषयालम्बनस्वाभावविकल्पेन स्वबाधे वाच्ये शून्यावधिबाध्यत्वस्य विषयतत्स्वावभासबाध्यत्वोपगम इति ॥

---

परोक्षभ्रमानवस्थित्यादिदूषणपरिहारः।

यदपि बाधकज्ञानस्यापि विशेषालम्बनतया भ्रमत्वे तस्य तस्योत्तरोत्तरबाधकज्ञानापेक्षया भ्रमानवस्थितिरिति। तदपि न।

नहि व्यावर्तमानत्वबुद्धिर्भेदस्य बाधिका।
किन्तु बाध्यत्वधीहेतुर्बाधक ब्रह्मवेदनम् ॥

तच्च स्वरूपमात्रावभासमेव भ्रमविरोधीति न्यरूरुपाम।

स्वतोऽव्यावर्तमानत्वबाध्यताधीश्च नान्यतः।
अतो नान्यान्यबाध्यत्वसिद्धौ हेत्वनवस्थितिः ॥
परमार्थो न बाधोऽपि बाध्यभेदविकल्पितः।
किन्तु तेनैव बाधेन भेद इत्येवं बाध्यते ॥
विशेषा हि प्रसज्यन्ते यावन्तो ये च के च ते।
यौगपद्येन बाध्यन्ते नेति नेतीति वीप्सया ॥
रज्जुतत्त्वधिया सर्पबाधे सर्पनिरूपिते।
बाधिते न पुनः सर्पसत्त्वैव भेदसत्यता ॥
सर्पबाधविकल्पैव रज्जुतत्त्वापरोक्षधी.।
यत् तत् तु रज्जुसमसत् सर्पसत्त्वनिबन्धनम् ॥
सत्तामात्रापरोक्षं तु सर्वशो भेदबाधने।
विधिना वा निषेधेन न विकल्पनमर्हति ॥

किन्तु,

---

१ बु' २. ष क पाठ

निर्विशेषपदारूढ स्वे महिम्नि व्यवस्थितम् ।
सविदेकरस सत्ताकैवल्यमवशिष्यते ॥

एवञ्च काल्पनिकबाधस्यापि काल्पनिकत्वाद् बाधक्लृप्तिरूपैव भ्रान्तिरविरतेति निश्शेषभ्रमनिवृत्तिरूपनिर्वाणानुपपत्तिरिति निरस्तम् ।

यत्तु भ्रमबुद्धिविनाशं बाध परिकल्प्य तत्तन्निवर्तकोत्तरोत्तरज्ञानापेक्षायामनवस्थानात् कस्यचित् स्वयं नाशे काल्पनिकघटादिनाशस्येव तन्नाशस्य काल्पनिकत्वान्नाशक्लृप्तिरूपभ्रान्तिः स्थितेत्यनिर्मोक्ष इति । तदननुभाष्यानुभाषणम् । न खल्वारोप्य तन्निषेधविकल्पविषयतत्त्वावभासेन नाश्यते । किन्तु विधिनिषेधप्रत्ययानर्हमापद्यते । अविद्याभेदभ्रमनिवृत्तिवादाश्च सिद्धान्तेषु सति तत्त्वज्ञाने तस्य सत्त्वव्यवहारायोग्यतया गौणाः । घटादयो हि नाशे न सत्त्वव्यवहारार्हा इति । तथाच लिङ्ग 'न पश्यो मृत्यु पश्यति', 'तत् केन कं पश्येदि'ति । एतेन 'भूयश्चान्ते विश्वमायानिवृत्तिः'

"ज्ञानेन तु तदज्ञान येषा नाशितमात्मनः"

इत्यादिश्रुतिस्मृतिवादाश्च व्याख्याताः ।

घटस्य मुद्गराघाते नाशो यः शकलावधिः ।
कथ स शुक्तिरूप्यस्य कल्पितस्यावकल्पते ॥
अविद्यादिविभेदश्च सत्तामात्रे विकल्पितः ।
विनाशहेत्वसम्बन्धान्न विनाशनमर्हति ॥

ननु वह्निसंस्पर्शविषये श्यामनाशो घटावधिरिव तत्त्वधीविषये सत्तामात्रावधिरविद्यादिभेदविनाशः स्यादिति चेद्, न । अविद्यादिभेदस्य निषेधविकल्पेनैव तत्त्वावबोधनात् ।

"अन्यदेव तद् विदितादथो अविदितादधि"

'नेति नेत्यात्मे'त्यादिश्रवणात् । नहि यस्य यदात्मना त्रैकालिको निषेधस्तस्य तदवधि ध्वसो भवति, घटध्वसस्य तन्तुपटाद्यवधित्वादर्शनात् । न चाविद्यादे स्वानुगतमद्रूपावधिध्वस स्याद् मृद्रूपावधिरिव घटस्येति वाच्यम् । इदमनुगतावभासस्यारोप्यरूप्यस्य स्वकालनिषिद्धस्य शुक्तितत्त्वज्ञानेन लोके

तदवधिकध्वंसाप्रसिद्धेः । अदृष्टशकलसर्वलोकाविदितध्वंसकल्पने मानाभावाद्, मृषैव केवल रजतमभासिष्टेति सर्वलोकानुभवविरोधाच्च । तस्मादविद्यादिभेदस्य न तत्त्ववेदनाद् विनाशः, किन्तु बाध एवेति ॥

---

### व्यावर्तमानत्वस्य ब्रह्मणि व्यभिचारोद्धार ।

यदपि व्यावर्तमानत्व ब्रह्मण्यनैकान्तिकमिति । तदपि तान्त्रिकस्य तत्त्वदर्शनविद्वेषोन्मादविलसितम् । 'ऐतदात्म्यमिदं सर्वमि'ति सर्वात्मत्वश्रवणात्, तदात्मनश्च ततो व्यावृत्त्यनुपपत्तेः । एव ब्रह्मणो जडत्वापात इति चेत्, किं कुर्मः । ज्योतिष्ट्वाम्नानविरोध इति चेद्, ननु विश्वात्मताम्नानमपि दर्शितमिति कर्तव्यो यत्नः, चैतन्यैकरसमेव सत्तात्मकं ब्रह्म जगदात्मना विवर्तत इति कृतो[1]ऽत्र यत्नो मनीषिभिः । नहि घटादिरिव ब्रह्म कस्यचित् सामान्यस्य विशेष, येन कुतश्चिद् व्यावर्त्येत । न च घटादिबुद्धाविव पटादिजगद्बुद्धौ ब्रह्म[2] नालम्बन, सदित्येव सर्वानुभवात् । अन्यथा सत्ताव्यतिरेके निःस्वभावस्य भानानुपपत्तेः । नन्वन्या सत्ता प्रतिभासते, न ब्रह्मसत्ता सर्वमानातीत्वात् । अन्यथा ब्रह्मसत्तयैव सत्त्वे जगत. पारमार्थ्यप्रसङ्गादिति चेद्, न । अनुगतसत्ताद्वैधे प्रमाणाभावात् । ननु त्रिविधं सत्त्वमिष्टं भवता, सत्यमिष्ट प्राचाम् । किन्तु तद् वस्तुस्वरूपावसितमतुच्छत्वापरपर्यायमबाध्यत्वमर्थक्रियामात्रकारित्व प्रतिभासमात्रार्हत्वमित्येव विवक्षाभेदेन ।

सर्वानुगतसत्ता तु ब्रह्मणो नातिरिच्यते ।
भिन्नस्वरूपसत्त्वेन नानुगच्छति सन्मति ॥

विशेषेषु ततो ब्रह्मसत्तया सानुगच्छति ।
विशेषा विनिवर्तन्ते सत्तायामेव सर्वश ॥

बाध्यमाना न सत्ता तु ब्रह्मैवाबाधिता सती ।
सत्तैकात्मतया सर्वे[3] भावाः सन्ति पृथक् पृथक् ॥

ततो विविच्यमानाना किं रूपमवशिष्यते ।
सामान्यरूपनिर्मुक्ता विशेषा बुद्धसम्मता ॥

---

१. 'तो य', २. 'ह्मा', ३ 'र्वे' ख. पाठ.

तद्भिनेयेन शक्येरन्नुपगन्तु न मादृशैः।
यत् सामान्यविशेषात्मा भाव. सर्वोऽपि भाव्यते॥
विकल्पेन विशेषात्मा सामान्यात्मा तु सत्तया।
स्वेतरानुगताभावादव्यावृत्तेः कुतश्चन॥
असामान्यविशेषात्मा ब्रह्मसत्ता तु शिष्यते।
यावद् भेदविकल्प तु सत्तासामान्यता मिता॥
विलीनेषु विकल्पेषु न सामान्याति सा पुन.।
मानातीतापि सा सत्ता विवर्तैरुपसर्गत.॥
सर्वमानपद रूपारोपे नैत्र नभो यथा।

यथाहुः—

"सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते"

इति। वस्तुतस्तु

मानवृत्त्युपधाने तां व्यञ्जयन्ती गवादि च।
स्वय प्रकाशते सत्ता चैतन्यैकरसा हि सा॥

तथाच श्रुति. 'प्रतिबोधविदितमि'ति। न चैव विशिष्टा सती सत्ता भिन्नैवानुभूयमाना कथमव्यावृत्तानुगम्येतेति शङ्क्यम्। सत्तानुगतव्यवहारस्यानुगतविषयापेक्षितयां तदनुगमसिद्धेः। सादृश्यादनुगतव्यवहारं सर्वत्रैवाभ्युपयतः क्षणिकत्वेऽपि प्रत्यभिज्ञासादृश्यादेव सुघटेति सौगतसङ्गत एव तान्त्रिकसमयः स्यात्। न चैवं जगतः पारमार्थ्यप्रसङ्गः। व्यावृत्तात्मना रज्जुसर्पधारादिवदपारमार्थ्योपपत्तेः। तदेव

विविक्तसत्तासम्बोधे जगद्बाधो जगन्मतौ।
सत्तानुवर्तते तत्र ब्रह्म व्यावर्तता कुतः॥

एतेन व्यावृत्तादव्यावृत्तस्य ब्रह्मणो व्यावृत्तत्वादनैकान्त्यमिति निरस्तम्। न हि भेदतावन्मात्र ब्रह्म, भेदा एव तु ब्रह्ममात्रमित्युपगमात्। यत्तु जगद् न ब्रह्मेति व्यावर्तमानत्व ब्रह्मणि विकल्प्यते विकल्पित च तदपारमार्थ्यलिङ्गमुपेयते घटादावपीत्यनैकान्तिकतैवेति। तन्न। धर्मिसमस्वभावस्य तस्य हेतुत्वोपगमाद्, जगदुपाधिभेदविकल्पेन ब्रह्मणोऽपि बाध्यत्वे विरोधाभावाच्च। सत्तामात्रात्मपरिशेषो हि तत्त्वमुपगम्यते। तत्र च न व्यावर्तमानत्वमिति। ननु च

येषु व्यावर्तमानेषु यत्किञ्चिदनुवर्तते ।
तत् तेभ्यो भिद्यते सूत्रं कुसुमेभ्य इव स्रजि ॥

व्यावृत्तेष्वनुवृत्तं च भेदेभ्यो ब्रह्म भिद्यते ।
तच्च व्यावर्तमानत्वमित्यनेकान्तता पुनः ॥

न ।

असद्भावमनापाद्य भेदानेभ्यो न भिद्यते ।
असद्भाविषु भेदेषु ब्रह्म व्यावर्तता कुतः ॥

तुल्यसत्ताकसामान्यविशेषात्मसु वस्तुषु ।
सोऽय न्यायो विनेतव्यो नारोप्यविषयेषु सः ॥

घटत्वव्यतिभेदे च कः स्वभावो घटस्य वा ।
आत्मा विशेषसामान्ये भावानामविशेषतः ॥

अनपेक्ष्यविशेषात्मा सामान्यात्मा त्वपेक्षया ।
एवं वैकल्पिक भेदमादाय न्यायसङ्गतिः ॥

कथञ्चित् तुल्यसत्त्वेषु नारोप्यविषयेषु तु ।

यत्तु—

"व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य च "

इति विष्णुपुराणे व्यतिरेकवचन ब्रह्मणः, तत् स्वरूपावभासे बाधेन जगदसम्भेदाभिप्रायम् । अन्यथा 'व्यतिरिक्त न यस्यास्ती'ति विरोधात् । एकव्यतिरेकस्यान्यव्यतिरेकनान्तरीयकत्वात् । अथवा 'व्यतिरिक्त न यस्यास्ती'त्युदिते जगन्मात्रमेव ब्रह्मेति मा शङ्कीति 'व्यतिरिक्तोऽखिलस्य चे'ति जगदपेक्षयैव स्वरूप विकल्प्यते कथ तद्बाधेन प्रतिपद्येतेति । तत् सिद्ध सर्वभेदा अपरमार्थाः व्यावर्तमानत्वाद् रज्जुसर्पधारादिवदिति ॥

---

### सत्तापारमार्थ्यानुमानाभासत्वनिरासः ।

एत्र सत्तापारमार्थ्यानुमानमपि नाभासः, अनुगतसत्तासिद्धेः । न च रज्जुदृष्टान्ते साध्यवैकल्य, स्वारोप्यबाधावधित्वस्य पारमार्थ्यस्य तत्रापि सत्त्वात् । परन्तु सत्ताबाधावध्यन्तराभावात् सैव परमः परमार्थ इति ।

दृश्यत्वादप्येवमनुमेयं, धर्मिज्ञानाबाधात् । साधनव्यापकतया साध्यतया वा बाधस्यानुपाधित्वाद्, हेतुसाध्यपारमार्थ्यादिविकल्पदोषनिरासाच्च । यत्तु[1] ब्रह्मण्यनैकान्तिकमिति । तन्न । तस्य स्वयम्प्रकाशसंविदात्मनो दृश्यत्वायोगात् । वेद्योपधानेऽपि तदवभासात्मना स्वयंभानोपगमात् । न च विषयारोप्ययोरेकवित्तिवेद्यतानियमः, तादात्म्येनोभयभानमात्रादिष्टसिद्धेः । तच्च स्वतः परतो वेत्यन्यदेतत् ॥

---

## दृश्यते त्वग्र्ययेतिश्रुत्यर्थः ।

'दृश्यते त्वग्र्यया बुद्ध्ये'ति च न ब्रह्मणो दृश्यत्वं विधीयते, किन्तु एष सर्वेषु भूतेषु गूढोत्मा तादात्म्येन न प्रकाशते, स्वरूपेण । न चैवं निःश्रेयसायोगः, प्रकाशते तु सत्यामग्र्यायां बुद्धावित्युच्यते

"दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः"

इति । अयोगिनो हि पराग्वृत्तैरिन्द्रियैर्विषयवृत्तिघना बुद्धिर्योगे सति विषयाश्लेषविगमपरिशुद्धा निशाता सूक्ष्मकुशकण्टकादेरग्रमिव भवति । तस्यामग्र्यबुद्धौ सत्यामात्मनो यत् स्वयमेव प्रकाशनं तदुच्यते 'दृश्यते त्वि'ति । न दृग्विषयत्वम्, अग्र्यबुद्धेरभावे न प्रकाशत इति प्रक्रमात् तद्भावे प्रकाशमात्रविवक्षौचित्यात् । ननु न प्रकाशत इति प्रकाशविषयत्वस्यैव निषेधः, दृश्यते त्विति वाक्यशेषात् । न च श्रुतिमात्रपरिच्छेद्ये न वाक्यशेषापेक्षा, सविता प्रकाशते प्रकाशः प्रकाशत इतिवद् घटः प्रकाशते न प्रकाशत इति प्रकाशविषयेऽपि प्रयोगादात्मा न प्रकाशत इत्यर्थसन्देहे वाक्यशेषापेक्षयैव तदर्थनिर्णयात् । 'सन्दिग्धे तु वाक्यशेषात्' (जै० १. ४. २९) इति न्यायात् । नैवम् । 'यत् तदद्रेश्यमग्राह्यम्', 'अविज्ञातो विज्ञाता', 'न विज्ञातेर्विज्ञातारं विजानीयाः' इत्यादिर्निषेधेन विकल्पानुपपत्त्या च यावदर्थविशेषनियमं वाक्यशेषस्यापि सन्दिग्धत्वात् । नन्वेवमात्मनि दृश्यत्वादृश्यत्वाव्यवस्थितेः सन्दिग्धव्यभिचारित्वम्, आत्मातिरिक्तस्य सर्वस्य दृश्यत्वे जडत्वाव्यभिचारादात्मनि दृश्यत्वव्यापकविरुद्धोपलब्धिसनाथादृश्यत्वश्रुतेरेव बलवत्त्वात् । न च दृश्यतैकस्वभावत्वं जडत्वप्रयोजकं, गौरवात् । एवमद्रेश्यादिवाक्यस्य तत्परतया करणविशेषानवच्छिन्नदृश्यत्वसामान्यनिषेधस्वारस्यभङ्गायोगात् ।

---

[1] 'ति तस्य' ख. पाठ.

दृश्यते त्वित्यस्य च सत्यामग्र्यबुद्धावात्मा प्रकाशत इत्येव लब्धविषयत्वात् । कर्तृकरणसमभिव्याहारस्य कर्माख्यातान्तदृशिप्रयोगोपाधित्वात् । यथा ये विक्लिद्यन्ते तण्डुलास्त उच्यन्ते पच्यन्ते तण्डुलाः सूदेनैधाग्निनेति नार्थभेदः । तथेहापि स्यादिति । एतेन 'न हिंस्यादि'ति सामान्यनिषेधश्रुत्या हिंसात्वादधर्म इति न्यायानुगृहीतया अग्नीषोमीयहिंसापि न प्राप्नुयादिति निरस्तम् । विधिविषयान्तराभावेन वैषम्यात् । तन्निषेधेऽपि तत्प्राप्ति चोदैरिराम । ननु सत्तानुभूयते, सत्ता च तव ब्रह्म । न । अनुभूतेरेव सत्तयावभासात् । ननु सर्वे भावा. सत्तयैवावभासन्ते । सत्य, व्यावृत्ता अपि ते भासन्ते । नन्वनुभूतिरपि व्यावर्तते । न । अनुभाव्याद् व्यावृत्त्यनुपपत्ते. । अनन्यगत्यानुभवाभेदेनैव सर्वस्यानुभाव्यत्वात् । न चानुभूतेरनुभूतिर्व्यावर्तते[1], प्रकाशमात्ररूपाविशेषात् । ननु दृष्टिश्रुत्यादय. संशयनिश्चयादयः परोक्षापरोक्षादयश्च करणभेदाधीना जातिभेदा नानुभवस्यैक्ये सम्भवन्ति । न च ते विषयोपाधिका इति साम्प्रतम् । जातिगुणादिभेदेषु विषयैकरूप्याभावेन तत्तज्जातिभेदस्य करणोपाधिकत्वावश्यम्भावात्, परोक्षापरोक्षभेदस्य विषयोपाधित्वसम्भवाच्च । यद्यपि[2] परोक्षस्वभावाः केचिद् धर्मादय., केचिदपरोक्षस्वभावाः सुखादयः, तथापि[3] ते नैकरूपेणानुगमयितुं शक्यन्ते । अपिच वह्न्यादयो नापरोक्षस्वभावा । न परोक्षस्वभावाः । तद्विषयौ च परोक्षापरोक्षभेदौ करणभेदोपाधिकाविति युक्तम् । तस्माद् भेदोऽनुभवस्यापि । उच्यते । सर्वत्रैव प्रकाशरूपानुगमे दृष्ट्यादिरूपभेदाः कथञ्चिदौपाधिकाः कल्प्यन्ते, स्वभावभेदे मानाभावात् । यत्तु करणभेदाधीना दृष्ट्यादिभेदा इति । तदस्तु । तावद्विषयप्रकाशाञ्जनबुद्धिवृत्तिभेदोपगमात् । तदुपाधिश्च प्रकाशात्मानुभवभेदावभास इति ॥

---

### ज्ञानस्य स्वप्रकाशत्वम् ।

स च स्वयम्प्रकाशः अनुभूतित्वाद् व्यतिरेकेण घटादिवत् । अन्यथा संविदः प्रकाशासिद्धेः । न हि सा स्वयमेव गृह्यते वृत्तिविरोधात् । विषयविषयिभावस्य भेदनियतत्वात् । यथाह तान्त्रिकोऽपि —

---

१ 'र्त्यते अप्र', २, ३. 'द' ख. पाठ

"अङ्गुल्यग्रं स्वमात्मान नात्मना स्प्रष्टुमर्हति ।
स्वाशेन ज्ञानमप्येव नात्मान ज्ञातुमर्हति ॥"

इति । यत्त्वाह — उत्पादक एव स्वविषयत्वविरोध , न ज्ञापके, ज्ञातरि मनसि शब्दशब्दे पदपदे च तद्दर्शनादिति । तन्न । आत्ममनसोः स्वाविषयज्ञानहेतुत्वेऽपि स्वत. स्वविषयत्वासिद्धे । परत्र च वाच्यवाचकरूपभेदेन भेदात् । घोषादिसाधारणशब्दत्वजात्या वाच्यस्य शकाराद्यानुपूर्वीकवर्णसमुदायरूपासाधारणाकारेण वाचकत्वात् पदपदस्यापि शक्तत्वपकाराद्यानुपूर्वीकवर्णसमुदायत्वरूपभेदेनैव वाच्यवाचकत्वादिति । ननु तद्व्यवहारशक्तत्व तद्विषयत्व ज्ञानस्य स्वस्मिन्नपीति चेत् । कुत· पुनरिद व्यवतिष्ठेत । तत्प्रतिबद्धकरणजन्यत्वादिति चेत् । तर्हि ज्ञान न स्वविषय स्याद् , विषयेण हि मानस्य ज्ञानजनन[1]प्रयोजकसम्बन्धः । तथाच घटज्ञान न स्वविषय, स्वजननानुकूलमानसम्बन्धानाश्रयत्वात् पटादिवत् । सिद्धान्ते तु सविदोऽजन्यतया स्वभावादेव स्वपरव्यवहारप्रयोजकतास्थीयते । न च जन्यसंविदोऽप्यय स्वभाव·, स्वभाववादापातादिति । नापि ज्ञानान्तरेण । न खलु घटादयो वा सुखादयो वान्योन्य सिध्यन्ति, जडत्वात् । एवं ज्ञानमपि स्यात् । सत्तासंशयादिविरोधिस्वभावत्वाभावाविशेषात् । अपिच न ज्ञानद्वययौगपद्य सम्भवति, एकदैकत्रैकावच्छेदेनैकजातीयोद्भूतपरिणामद्वयायोगात् । पञ्चावधानादौ च नानेकज्ञानाना यौगपद्य, न्यायिभिः क्रमिकत्वोपगमात् । सिद्धान्ते चैकस्यैव भिन्नावच्छेदवैचित्र्योपगमात् । भेदेऽपि करणाना स्वस्वविषययौगपद्ये गन्धरसादिप्रकाशाभेदानुभवात् । तान्त्रिकस्यापि करणवृत्तियौगपद्ये नानाविषयविचित्रैकज्ञानविकासोपगमाच्च । न च विनश्यदवस्था पूर्वसविदुत्तरयानुभूयते, सत्त्वानुभवविरोधात् । स्थितिसमयावच्छिन्नसविद्विषयैवोत्तरोत्पद्यते । उत्पत्त्यैव सविद· सविषयत्वादिति चेत् । तथापि सा यदि बुभुत्सित[2]ग्राह्या, तर्हि बुभुत्सान्तरितत्वाद् न पूर्वसवित्सत्तानुभवः, तज्ज्ञानाज्ञानाभ्या बुभुत्सानुपपत्तिः, ज्ञेयत्वनियमाभावेन कदाचित् स्वानुभवसशयाद्यापत्तिश्च अबुभुत्सितग्राह्यत्वे सुखादिवदवश्यज्ञेयतया तत्तदनन्तसविदावलीसमुदयस्यावर्जनीयत्वेन विषयान्तरसञ्चारो न स्यात् , अन्यज्ज्ञानमबुभुत्सितग्राह्यं न ज्ञानज्ञानमिति न कश्चि-

१ 'नसयोजक स', २ 'तं' ख पाठ .

न्नियमहेतु. । कस्यचिज्ज्ञानस्य ग्राहकसामग्र्यमेलनसम्भवाद् न ज्ञानपारम्पर्याविरतिरिति चेत् । न । तद्विषयाधिकतदुत्पादकसामग्र्या एव तद्ग्राहकत्वाद्, अतिरेके गौरवाद् मानाभावाच्च । सामग्र्यन्तरबलवत्तया विषयान्तरसञ्चार इति चेत्, तथापि यदेव ज्ञानमज्ञातं तदसिद्धौ तद्विषयासिद्धिसंशयादिप्रसङ्ग. ।

अग्रिमस्य स्वतः सिद्धे. प्रसङ्गो यदि वार्यते ।
प्रथमस्य तथाभावे प्रद्वेषः किन्निबन्धनः ॥

एतेन ज्ञान मानसप्रत्यक्ष क्षणिकात्मविशेषगुणत्वात् सुखादिवदिति प्रत्युक्तम् । क्षणिकत्वगुणत्वासिद्धे , सुखादावन्यतरमते साध्यसाधनासम्प्रतिपत्ते. , साध्याप्रसिद्धेश्च । अपर आह — संविदो मानसप्रत्यक्षत्वे सुखादिवदबुभुत्सितग्राह्यत्वं नियतमिति ज्ञानज्ञानपरपराविराम । न च स्वापादौ जीवनप्रयत्ने व्यभिचार', तदा तदभावात् । देहधारणादयश्च तदानीमीश्वरसङ्कल्पाधीना एव । 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तर'' इति परमात्मविषयत्व 'अन्तरा भूतग्रामवत् —' (ब्र० ३. ३. ३५) इत्यधिकरणे स्थितम् । जागरे हि प्राणनादौ परायत्तो जीवोऽपि कर्ता । स्वापादौ तु परमात्मैव स्वसङ्कल्पेनेति दशमशकादिभिरङ्गप्रत्यङ्गतोदादल्पबोधे देहपरिवर्तनादिप्रयत्नश्च धीविषय एवेति न व्यभिचारः । किञ्च मानसप्रत्यक्षत्वे सुखादिवदुपलभ्यत्वनियमात् बुभुत्सितग्राह्यत्वेऽपि संविदो बुभुत्सानियमोऽपि कल्प्येतेति बुभुत्सान्तरितज्ञानानवस्थैवेति ॥

---

**ज्ञाततानिरासः ।**

नापि ज्ञाततया संवित्सिद्धि' । स्वसत्तायां प्रकाशाव्यभिचारेण लैङ्गिकत्वायोगात् ।

ननु संविदुदये विषयमात्रमवभासते घटोऽयमिति । न हि कश्चिदपि तदैव तामविषयभूतामनिदम्भावामनुभवति घटो मयानुभूयत इति । न च यत् प्रकाशक तज् ज्ञाततयैवेति नियमः, चक्षुरादौ व्यभिचारात् । तथाचालोकलिङ्गादेर्ज्ञाततया चक्षुरादेरज्ञाततया च प्रकाशकत्वेऽनुभवानुरोधादनुभवः सत्तया प्रकाशककोटिमनुप्रवेक्ष्यति । स त्वनन्तरमर्थगतकादाचित्कप्रकाशाति-

शयलिङ्गेनानुमीयते। कादाचित्कं हि कार्यं कारणमनुमापयति। तस्य च प्राकट्यस्यार्थगतस्यापि स्वव्यवहारोपपादिनः स्वसम्बन्धितया स्वसमवेतज्ञानानुमानोपपत्तेः। अनुमानप्राशुभावेन तु प्रत्यासत्त्यतिशयाद् घटोऽनुभूयत इति वर्तमानव्यवहारः। न चैवमनुभवस्य जडत्वापातः। ज्ञानविषयत्वमात्रस्येष्टत्वात्। अज्ञानत्वं तु नापाद्यम्। तन्मात्रव्यावृत्तिसौलभ्येनातिप्रसङ्गात्[1]। ज्ञेयत्वे सुखमसुखं स्यादित्यापादनसम्भवात्। प्रकाशाव्यभिचारित्वं तु सुखादिसाधारणमनुभाव्यत्वेऽपि न विरुध्यते। उत्पत्त्यैव तदव्यभिचारित्वमसिद्धं ज्ञानस्येत्यावेदितामिति।

तदिदं कर्मजडिमास्कन्दितचित्तसत्त्वस्यानुभवविभवविवेचनमश्रोत्रियदण्डग्रहणमनुसरति[2]। न खल्वनुभवातिरेकी विषयधर्मः प्राकट्यमुपलब्धमुपपन्नं वा, येन ज्ञानमनुमीयेत। तथाहि — किं तज्जननेऽनुभवः कारक एव तद्व्यापारो वा स्यात्। आद्ये व्यापारो वाच्यः। क्रियानिविष्टस्यैव कारकत्वात्। 'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्' (जै० १ १. ४) इत्यत्र बुद्धिः प्रत्यक्षमिति वक्तव्ये जन्मग्रहणं कुर्वन् जैमिनिर्जनिमेव क्रियामभिप्रैतीति चेत्। न। जन्मना लब्धात्मकस्यैव चक्षुरादेः कारकतया दृष्टविपरीतकल्पनायोगात्। ननु संयोगादिकारिका क्रिया न क्रियान्तरनिवेशिनी। एवमनुभवोऽपि क्रियैवेति चेत्। सा किमात्मनोऽन्यस्य वा स्यात्। अन्यस्य चेद् आत्मनो न किञ्चित् प्रकाशेत। तदीयानुभवजन्यप्रकाशाश्रयस्तस्य भासत इति नियमोपगमात्। अन्यथा कस्यचिदनुभवे[3] सति विषयप्रकाशसाधारण्यप्रसङ्गात्। मनःप्रभृतिषु तदीयतासम्बन्धस्य पुत्रादिव्यावृत्तस्य दुर्निरूपत्वात्। आत्मनश्चेदमूर्तस्य न परिस्पन्दः। परिणाम इति चेद्, एवं तर्हि मृत् परिणमते घटः फलमिति परिणामफलयोरेकार्थसमवायनियमादात्मन्येव प्रकाशफलमस्तु। अनुभवपरिणामोऽपि वा विषयेष्वस्तु। न तु तयोरदृष्टा भिन्नाश्रयता युक्ता कल्पयितुम्। ततो वेद्यात्मनोरात्मानात्मत्वविनिमयः[4]। एतेन कारकव्यापारोऽनुभव इति निरस्तम्। अपिच विषयधर्मः प्राकट्यमतीतादौ न सम्भवति। उक्तं हि—

---

१ ष्येऽनति', २. 'वि', ३. 'देवानु', ४ 'नियम। ए' ख पाठ

"अतीतेऽनागते चार्थे कथ प्राकट्यसम्भव. ।
न हि धर्मिण्यसत्येव धर्मः सम्भवमृच्छति ॥"

इति । द्वित्वादिवत् स्यादिति चेद्, न । अपेक्षाबुद्धिविषयतोपाधिना जननीयस्य द्वित्वादेस्तदुपाधिनैव सत्यतीतादावुपपत्तेः । ज्ञानविषयतोपाधिना च सत्त्वमतीतादेरविप्रतिपन्नम् । अन्यथा तस्यानवभासप्रसङ्गात् । न चैव ज्ञानविषयतोपाधिना जननीयस्य प्राकट्यस्यापि तदुपाधिनैव धर्मिसत्त्वापेक्षा, न स्वरूपेण, तेन ज्ञान प्राकट्यमुत्पादयत् स्वविषयत्वोपाधिना धर्मिसत्तामापादयदेवोत्पादयतीति वाच्यम् । प्राकट्यस्य विषयतानिर्वाहकत्वोपगमविरोधात् । विषयताप्राकट्ययौगपद्येऽपि विषयतोपाधिना सति प्राकट्यजन्मानिरूपणाच्च । गुणादेरपि ज्ञानजन्यधर्माश्रयत्वे द्रव्यत्वापत्तेश्च । अपिच एकत्ववद् द्वित्वादेरपि यावद्वस्तुभाविनः परत्वादिवदपेक्षाबुद्धिव्यङ्ग्यत्वमात्रमुपगम्यते । अतीतादावनुत्पत्तावपि तस्य बुद्ध्युपारूढतयातीतादिवदेव व्यवहारसम्भवात् । सयोगादिवदन्यतरविनाशेऽपि तन्निरूपितद्वित्वविनाशोपपत्तेश्च । अत एव अमी मम सुतास्त्रिचतुरा पुरासन् । एकद्वेषु नष्टेष्विदानी द्वित्रा इत्यतीतादितुल्ययोगितया लोके सख्याव्यवहारः । न च प्राकट्यमपि यावद्विषयभावि ज्ञानेनाभिव्यज्यत इति शक्यमुपगन्तुम् । ज्ञानसाधारण्ये तदभिव्यक्त्य नियमात् ।

अपिच न तदप्रकाशमान विषयप्रकाशः, प्रकाशमानस्यैव सौरादिप्रकाशस्य विपयप्रकाशत्वात् । असशयाय ज्ञानानुमितौ लिङ्गभानावश्यम्भावाच्च । प्रकाशमानं च न स्वगोचरधीजन्यप्रकाशान्तरेण, अनवस्थानात् । नापि स्वेन, अङ्गुल्यग्रस्येव स्ववृत्त्यसम्भवात् । प्रकाशतावन्मात्रस्य चान्य प्रति भानाप्रयोजकत्वाद्, आत्मसम्बन्धाभावात् । अपिच विषयधर्म. सन् प्रकाशो योग्योऽन्यैरपि कि नोपलभ्येत रूपादिवत् । अपेक्षाधीजन्यद्वित्वादेरिव तदनुभवजन्यप्रकाशस्य तदेकवेद्यत्वनियम इति चेद्, युक्त द्वित्वादेर्यावद्वस्तुभाविन एव व्यञ्जकापेक्षाबुद्धिनियमात् सिद्धाञ्जनव्यञ्जनीयनिधेरिव त प्रत्येवाभिव्यक्तिनियमः । प्राकट्यस्य पुनः प्रकाशात्मनैवोदितस्य साधारण्यमनिवार्यम् । स्वहेतुज्ञानसमवायिन एव भासते नान्यस्येति प्रकृतैकविषयनियमकल्पनस्य प्रबलप्राकट्यसाधकाभावे निर्मूलत्वात् ।

अपिच विषयगत प्राकट्य किमर्थमुपेयते । विषयतानिर्वाहार्थमिति चेत् । को विषयताया निर्वाहः । न तावदुत्पत्तिः, तस्याः स्वहेतुसिद्धविषयस्वरूपानतिरेकात् । अतिरेके वा गुणादेरपि विषयतया जन्यधर्माश्रयत्वे द्रव्यत्वापत्तेः । अपिच अनुभवादेवाहत्य विषयतोत्पत्तिसम्भवे किमन्तर्गडुना प्रकाशेन । अथ ज्ञानसाधारण्ये सति नियमो विषयताया निर्वाह इत्युच्येत, स प्रकाश एवानियतः कथं विषयतां नियन्तुमीशीत । तन्नियमश्चानुभवसाधारण्ये दुर्घटः । अनुभवकारणव्यवस्थया प्रकाशाश्रयनियम इति चेद्, विषयतैव तया नियम्यतामावश्यकत्वात् । नापि विषयव्यवहारार्थम्, उभयसिद्धानुभवादेव तदुपपत्ते । एव तर्हि ज्ञानविषयसम्बन्धाभावाच्चेतनस्य विषयो न प्रकाशेत । असम्बद्धभाने चातिप्रसङ्ग इति चेत् । किमेवं प्रकाश एव सम्बन्ध इत्यभिप्रायः । तथा सति सम्बन्धस्य सम्बन्धिसमानतया ज्ञानस्य तदनुमेयत्वमेव हीयेत । न च तटस्थेन प्राकट्येन ज्ञानार्थसम्बन्धो जन्यते । सति सम्बन्धिद्वये सयोगातिरिक्तजन्यसम्बन्धाभावात् । अनेन स्वस्वामितेव प्राकट्येन विषयविषयितेति चेद्, न । विनापि तेन तदुपपत्तौ तत्कल्पनागौरवात् । परमते स्वभावादेव विषयविषयितोपगमात् । सिद्धान्ते चानुभवतादात्म्यादेव विषयोऽवभासत इति स्वावसरे वक्ष्यामः ।

अपिच प्रकाशकार्येण कारणमात्रमनुमीयेत । कथ तस्य ज्ञानत्वसिद्धिः । प्रकाश इत्येव ज्ञानानुमानमसम्भावि, व्याप्त्यसम्प्रतिपत्तेः । अनुभवप्रकाशसाहचर्यप्रत्यक्षासम्भवेन पूर्वपूर्वानुभवप्रकाशोदाहरणस्यान्धपरम्परामात्रत्वात् ॥

---

### स्वप्रकाशत्वनिरुक्तिः ।

तत् सिद्ध सवित् स्वप्रकाशा संवित्त्वादिति । स्वप्रकाशत्व च स्वसजातीयानधीनस्वकर्तव्यविषयाभिव्यक्तिजातीयाभिव्यक्तिनियतत्वमालोकानुभवसाधारणम् । अनुभवासाधारणं तु सविद्विषयतानधीनभाननियतत्वं, स्वसत्तासशयादिविरोधिसत्ताकत्वम्, अनन्याधीनस्वसत्तासंशयादिशून्यत्वं वा । अवेद्यत्वे सत्यपरोक्षावभासित्वमित्यपरे । तत्राद्यं विषयाभिव्यञ्जकत्वादालोकवदि

त्यन्वयिनापि । इतरदुक्तव्यतिरेकिणा । विपक्षे च संविदसिद्ध्या विषयासिद्धौ सर्वशून्यत्वप्रसङ्गो बाधकस्तर्कः । यथाह परोऽपि —

"तदेवापश्यता सर्वशून्यत्वाद् बिभ्यता सताम् ।
गतिः स्वयम्प्रकाशत्वादृते नान्योपलभ्यते ॥"

इति । यत्तु — प्रथम विषय एवावभासते न संविदिति । तन्न । तस्या विषयप्रकाशानतिरेकात् । अप्रकाशे च प्रकाशस्योलूकादेरिव तदा विषयाप्रकाशो मा प्रसञ्जीति प्रकाशमानत्वावश्यम्भावात् । अक्ष्यादेरविषयप्रकाशत्वेन सत्तयैव प्रकाशप्रयोजकत्वोपपत्तेः । शब्दव्यवहारस्य विवक्षाधीनतया तदभावे घटोऽनुभूयत इत्याद्यव्यवहारोपपत्तेः ।

अपर आह — अनुभूतिः स्वजन्यपरगतधर्मात्यन्तसजातीयधर्मभाक्त्वे स्वात्यन्तसजातीयापेक्षानियमरहिता, स्वविजातीये स्वावश्यम्भाविधर्मात्यन्तसजातीयस्वसम्बन्धतुल्यकालधर्महेतुत्वात् । घटादौ चाक्षुषत्वधर्महेतुशुक्लादिवत् । ज्ञानान्तरेण घटादिवदेव प्रकाशधर्मभाक्त्वोपपत्तेरर्थान्तरं मा भूदिति स्वात्यन्तसजातीयेत्यादि । अनुभूतित्वसत्तादेः स्वाभाविकतया धर्मभाक्त्वे परगतधर्मात्यन्तसजातीयधर्मभाक्त्वे वा स्वात्यन्तसजातीयानपेक्षतया सिद्धसाधनं मा भूदिति स्वजन्येत्यादि । अन्यापेक्षानियमराहित्योक्तौ दृष्टान्ते रूपे चक्षुरपेक्षया चाक्षुषत्वभाजि साध्यवैकल्यम् । अतः स्वात्यन्तसजातीयेति । तदनपेक्षत्वमात्रोक्तौ परकीयेऽतीतादौ च ज्ञाने बाधः । तस्य प्रकाशनधर्मभाक्त्वे स्वात्यन्तसजातीयानुमित्यादिसंविदन्तरसापेक्षत्वात् । अतस्तदपेक्षानियमरहितेति । तेन वेद्यत्वाविरोधिसंविदन्तरानपेक्षप्रकाशार्हत्वमात्र स्वप्रकाशत्व सिध्यति । द्रव्यस्य द्रव्यान्तरे स्वजन्यसयोगात्यन्तसजातीयसंयोगभाक्त्वे स्वात्यन्तसजातीयद्रव्यापेक्षानियम इत्यव्यभिचाराय स्वविजातीय इति । पुरुषे दण्डित्वहेतोर्दण्डस्य दण्डित्वभाक्त्वे स्वात्यन्तसजातीयदण्डापेक्षानियमादनतिचाराय स्वावश्यम्भावीति । न च दण्डित्वमापादयतो दण्डस्य तदवश्यम्भावीति । पितृविजातीये पुत्रे पुत्रत्वहेतौ पितरि पुत्रत्वभाक्त्वे स्वात्यन्तसजातीये पित्रन्तरापेक्षानियम इति तदव्यभिचाराय स्वसम्बन्धतुल्यकालेति । न पितृसम्बन्धतुल्यकाल पुत्रत्वं, प्रमीते च प्रोषिते च पितरि तद्भावादिति ।

अत्रेदं चिन्त्यम् । अनुभूतेरेव प्रकाशतावन्मात्रतया तद्धर्मकत्वंबाधात् तत एव व्यवहारादिसिद्धौ विषये तज्जन्यप्रकाशातिशयस्यानुपगम्यत्वात् । हेत्वभावनिबन्धनसंशयाद्यभावस्य विषयेऽनुभवाजन्यत्वाद्, अनुत्पन्नसंशयादौ तन्निवृत्तेरजननीयत्वाच्च । अपिच स्वात्यन्तसजातीयानपेक्षत्वमेव साध्यताम् । न चांशतो बाधः, एकतया नित्यतया च संविदोऽनुमानाद्यगम्यत्वस्य वक्ष्यमाणत्वात् । एतेन धर्मपदस्थाने सर्वत्र व्यवहारपदावापेन प्रयोगो व्याख्यातः । अपिच नेदानीमनुभवस्य विषयप्रकाशनदशाया प्रकाशधर्मोऽवश्यम्भावीति सिद्धमस्ति, ज्ञानजाड्यविप्रतिपत्तेः । अत एव न स्वावश्यम्भाविधर्मनिबन्धनत्व व्यवहारस्य स्वावश्यम्भावित्वं सम्भवतीति दिक् ।

यत्तु स्वसत्ताया प्रकाशाव्यभिचारित्वात् संवित् स्वप्रकाशा । व्यतिरेके हि घटादिवदन्याधीनप्रकाशा स्यात् । यथा संवित्सिद्धौ

"यद्यप्रकाशमाना धीः कदाचिदवतिष्ठते"

इत्यारभ्य

"घटादाविव तत्रापि कल्पनीय प्रकाशकम्"

इति । न च सुखादावनैकान्त्यं, संवित्त्वात् । यथाह लक्ष्मणः — 'ज्ञानमेव ह्यनुकूलमानन्द इत्युच्यत' इति । श्रुतप्रकाशिकाकारश्च 'सुखादेर्ज्ञानविशेषत्वेने'ति । तदतिरेकेण हेतुविशेषणाद् वेति । तदेतद् रज्जुसर्पाज्ञानादिभिरनैकान्त्यादयुक्तम् । परस्योत्पत्त्यैव प्रकाशाव्यभिचारित्वासिद्धेः, सुखादावनैकान्त्याच्च । न च सुखादिरपि सविदेव, विषयप्रकाशत्वतदप्रकाशत्वरूपभेदात् । अन्यथा स्वसम्बन्धिभविष्यद्दानादिज्ञानमिदानी सुखमिति तदुत्कण्ठानुपपत्तेः । विषयापरोक्षमनुकूल सुखमिति चेद्, दयिताहितलाभादिश्रवणे सुखानुभवो न स्यात् । अथ सुखजनने या ज्ञानभेदे व्यवस्था सा सुखात्मत्व एव स्यात् । न स्यात् । तत्र परोक्षापरोक्षत्वादिजातिभेदाननुभवात् । इष्टविषयज्ञानजातिभेदानुभवः सुखस्यैवेति[3] शक्य शाक्याविनेयेनोपगन्तु, नान्येन । अनुकूलात्ममात्रेण तस्य सर्वजनीनानुभवविरोधात् । न च सुखादिव्यतिरेकविशेषणं, दुःखरज्जुसर्पादिसाधारणावच्छेदकदुर्वचतया व्यक्तिभेदव्यतिरेकस्य दुर्ज्ञानत्वात् । शङ्कितव्यभिचारगोचर इत्युक्त्वा तदतिरेकविशेषणे च साधुन्यायकौशलं तान्त्रिकस्येति ।

---

१ 'त्वा', २. 'दा', ३. 'ति तु श' ख. पाठः.

अन्ये तु संविदनन्याधीनासत्त्वादिव्यवहारहेतुविरहनियता, स्वसम्बन्धादन्यत्र तद्विरहप्रयोजकत्वात् । यत् स्वसम्बन्धादन्यत्र यद्विरहप्रयोजकं तत् स्वत एव तद्विरहनियतम् । यथालोकस्तमोविरहनियत', वह्निर्वा हिमविरहनियतः, हिम वोष्मविरहनियतमिति । अत्र स्वसत्तानिश्चयः स्वयमेवेति पर्यवसानान्नियतंग्रहणेनान्याधीनतद्विरहनिषेधान्नार्थान्तरता । न च संविदस्वप्रकाशा, वस्तुत्वाद् घटादिवत् । सविदसिद्ध्यादिप्रसङ्गेन वेद्यत्वबाधोन्नीतस्य पक्षेतरस्याप्यसवित्त्वस्यैवोपाधित्वात् । न चैव संवित् सत्यसती वा स्वाभावं ग्राहयति, विरोधात् । नाप्यन्या, तद्भेदासिद्धेः । संविदोऽपि वेद्यत्वे घटादिवदसंवित्त्वादिप्रसङ्गाच्च । तस्मादभिन्नस्वप्रकाशसविदेकरससत्तामात्रात्मनि दृश्यत्वाभावान्नानैकान्त्यमिति ॥

---

## संविदोऽवेद्यत्वे शङ्का ।

अत्राह— सत्यं ज्ञातुरात्मनो विषयप्रकाशदशापन्ना संवित् स्वयम्प्रकाशेति । न च तावता सर्वदा सर्वेषामवेद्यैव । अतीतादिसविदोऽनुमेयत्वात् । परसंविदोऽपि हानादिलिङ्गगम्यत्वेन व्युत्पत्त्याद्युपपत्तेः । आचार्यादेर्ज्ञानवत्त्वानुमानेन तदुपगमादिव्यवहाराच्च । इयदेव हि सविदः संवित्त्वं स्वप्रकाशत्वं च यदुत विषयसम्बन्धदशाया सत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम् । तथैव स्वाश्रय प्रति विषयप्रकाशत्व वा संवित्त्वम् । स्वसत्तायामनन्याधीनप्रकाशत्व च स्वप्रकाशत्वम् । तच्च वेद्यत्वेऽपि न विरुध्यते । तद्रूपविरहाच्च घटादेरसंवित्त्वाद्युपपत्तेः । अन्यथा वेद्यत्वेनैव घटादिवदसंवित्त्वादिप्रसङ्गे सविदोऽवेद्यत्वेन खपुष्पादिवदसत्त्वमसंवित्त्वमज्ञानाविरोधित्वमस्वप्रकाशत्वं च किमिति न प्रसज्येत । न चैको नित्यश्चानुभवः, विषयप्रकाशात्मनः करणव्यापारानुविधायित्वात् । अथ ज्ञानपदाभिधेया बुद्धिवृत्तिभेदा एव तथेति तदुपधेयानुभवस्यापि तथात्वविभ्रम इति चेत् । न । तेषामेव विषयप्रकाशत्वोपपत्तौ विषयप्रकाशानुभवस्य नित्यस्यान्यस्याकल्पनीयत्वात् । ननु नित्य ज्ञानमनित्य च तवापि सम्प्रतिपन्नम् । सत्यं सम्प्रतिपन्नम् । किन्तु आत्मरूपमाश्रयभूत नित्यं ज्ञानं स्वात्ममात्रावसितावभासम् । आश्रितं च नित्यं ज्ञानं न स्वरूपेणैव स्वयमप्यवभासते,

---

१. 'म' ख. पाठः.

विषयविकासपरिणामेन स्वस्वविषयप्रकाशत्वोपगमात् । अथैवमुभयसम्प्रतिपन्ननित्यज्ञानस्यैव स्वतः स्वात्मपरिसमाप्तस्वभावस्यापि व्यञ्जनीयविषयाञ्जनबुद्धिवृत्त्यविभागवृत्तितया व्यवस्थितविषयप्रकाशत्वसम्भवे सत्युपजनापायधर्मकानेकवृत्तिभेदानामर्थप्रकाशत्वकल्पना न युक्तिमतीति चेद्, न । विषयप्रकाशपूर्वापरावध्यनुभवस्यौपाधिकत्वकल्पनागौरवेणानन्यथासिद्धत्वात् ॥

---

### पररीत्या विषयसंविदः स्वरूपस्वभावादिविचारः ।

यत्तु सत्यसती वा संविद् न स्वाभावमवभासयतीति । तन्न । नहि संविदेव वा प्रमाणसंविद् वा प्रत्यक्षसंविद् वा स्वसमसमयवर्तिनमेव विषयीकरोतीति नियमः, स्मृत्यनुमानागमयोगिप्रत्यक्षादेरतीतादिविषयत्वात् । न च संवित् स्वाभावमेव तथाभूतं विषयीकरोतीति नियमग्रहः सम्भवति । अन्यथा तत एव तदभावसिद्धेः । न च तत्प्रागभावादिस्तत्समसमयस्तया गृह्यत इति केनचिदुपगम्यते । किन्तु भिन्नकालो योग्यानुपलब्ध्या संविदन्तरेण, स्वयम्प्रकाशत्वेऽपि संविदोऽभावनिरूपकतयानुभाव्यत्वाविरोधात् । अन्यथा संविदमविषयीकृत्य प्रागभावनिरासस्याप्यसिद्धेः । यद्यपि विषयसंविदः सत्त्वे स्वप्रकाशतया स्वयमेवोपलब्धिः प्रसज्यत इति योग्यानुपलब्धिस्तदभाव एवापद्यते, तथापि पिण्डाद्युपलब्धिरिव घटस्य संविदोऽवस्थान्तरोपलब्धिरेव योग्यानुपलब्धिरुपगम्यते । अभावश्चावस्थान्तरमेव, सङ्कोचोऽर्थान्तरज्ञानं वा । अतस्तत्कालस्य स्वापादेर्घटादिज्ञानस्य वा प्रतिसन्धानं गजादिज्ञानस्य योग्यानुपलब्धिः । सा च लिङ्गतया तदभावनिश्चायिकेति । अथवा सैव संवित् तत्कालपरिच्छिन्नस्वस्वविषयसत्त्वावभासा पूर्वापरकालासत्त्वमात्मनो गमयति, इदानीमेवेदमहं वेदेति तथैव व्यवहारात् । विषयसंविदो घटादिवदज्ञातसत्त्वानुपपत्तेः । यदि च कालानवच्छिन्नावभासा घटादिसंविन्नित्या स्याद्, घटाद्यवभासकादाचित्कत्वानुपपत्तिः । अपिच प्रत्यक्षसंविदः सद्विषयत्वनियमेन तन्नित्यत्वे घटाद्यनित्यत्वानुपपत्तिः । अपिचैवं सर्वसंविद्विषयनित्यत्वप्रसङ्गः । अनुमानादिसंविदामतीतादिविषयत्वसम्भवेऽपि विषयाणामेव निरवधिकातीतत्वाद्यसिद्धेः । न च संविदवधिः, तव नित्यत्वात् । न च निमेषादिः, तस्यापि प्रत्यक्षस्य नित्यत्वसिद्धेः ।

---

१ 'र', २ 'मताना', ३. 'च प्रा', ४. 'तं का' ख॰ पाठ॰.

ननु निर्विषयाञ्जना संवित् स्वतो निर्विकल्पावभासा नित्यैव। तस्यास्तु विषयाञ्जनोपाधिना कालपरिच्छेदावभासेऽपि न स्वतः पूर्वपरावधिसिद्धिरिति चेत्। न। स्वप्रकाशत्वाभिमताया विषयप्रकाशसंविदो निर्विषयसत्त्वप्रकाशायोगात्। ननु संवित्त्वादेव संवित् स्वप्रकाशा, न विषयप्रकाशत्वात्। न। संवित्त्वं हि न स्वसिद्धत्वं, साध्याविशेषात्। नापि स्वसत्ता[1]नियतप्रकाशत्वम्। सुखादावस्वयम्प्रकाशे तवानैकान्त्यात्। मम निर्विषयसंविदः स्वापा[2]दावस्वप्रकाशत्वाच्च। विषयप्रकाशत्वं चेत्, तथैव स्वप्रकाशत्वापत्तावुक्तदोषानुषङ्गात्। न चान्तरिक्षालोकस्येव निर्विषयसंविदः सत्त्वप्रकाशसिद्धिः। युक्तं तत्रात्रत्यविषयाभिव्यक्त्या गगनसत्त्वमालोकस्यानुमीयते। नेह, तदैवोत्पत्त्यापि विषयप्रकाशनिर्वाहात्। न च स्वापादिदशासु निर्विषया केवलैव संविदवभासते। आश्रयविषयशून्यसंविदोऽनुपलब्धिहतत्वात्। तास्वपि दशास्वनुभूता चेत्, प्रतिबु[3]द्धेनानुसन्धीयेत। यद्यपि नायं नियमोऽनुभूतमवश्यमनुसन्धेयमिति। विषयान्तरव्यासङ्गाद्, ग्राह्यविषयवैचित्र्याद्, अफलत्वेन तदनादरात्, तादात्विकतीव्रसंवेदनान्तराद् अनुभवानभ्यासाद् वा,

"प्रायणान्नारकक्लेशात् प्रसूतिव्यसनादपि।
चिरातिवृत्ताः प्राग्जन्मभेदा न स्मृतिगोचराः॥"

इत्युक्तहेतोर्वानुभूतास्मरणस्य सर्वसम्प्रतिपत्तेः। तथाप्युक्तसंस्कारतिरस्कारकाभावे कदाचिदपि स्मरणावश्यम्भावेन तदभावे व्यापकविरुद्धोपलब्ध्या प्रागननुभवं मन्यामहे। अपिच प्रतिबुद्धस्य न किञ्चिदवेदिषमिति प्रत्यवमर्शः संविदोऽप्यनुभवाभावं दर्शयति। न चास्मरणमभावावमर्शश्च संविदोऽहङ्कारविषयासंश्लेषेण निर्विकल्पावभासत्वाद्, न त्वनवभासादभावाद् वेति वाच्यम्। अहङ्कारादिसंश्लेषस्यानुभव इव स्मरणेऽप्यहेतुतया अनुभूतस्मरणस्यानिरोधनीयत्वात्। इदानीमहमर्थविषयानालिङ्गितसंविदनवभासेन स्वापादावपि तदसम्भवाच्च। तत्राप्यहङ्कारानुवृत्तेश्च। स चात्मा प्रत्यक्त्वानुकूलत्वादिविशेषेणैव स्वयमवभासते। तस्य चावभासः स्फुरणं व्यवहारानुगुण्यं व्यवहारप्रतिसम्बन्धितादिहेतुत्वं स्वाभाविको धर्मो दीपस्येवौज्ज्वल्यम्। तस्यैव धर्मभूतापरा संवित् प्रभेव दीपस्य। तत्स्फुरणं तु विषयसम्बन्धनिबन्धनं तदानी-

---

१. 'ताविषयप्र', २. 'पाव', ३. 'द्धेन ना' ख पाठ

मेवेति तदवस्था सा विषयप्रकाशरूपा पूर्वोत्तरावधिमती भवति । अत एव सुप्तौ सत्या एव केवल संविदोऽभिव्यक्तिं जागरादावसूत्रयत् 'पुंस्त्वादिवत् त्वस्य सतोऽभिव्यक्तियोगात्' (ब्र० २. ३. ३१) इति स्वापादौ कर्माविद्यासकुचितवृत्तिनया संविदो यावद्विषयसम्बन्धप्रतिबन्धादस्फुरणमेव । न त्वसत्त्वमात्मनो ज्ञातृत्वस्वभावत्वोपगमात्[1] । तदेवं निराश्रयविषयसंविदोऽप्रामाणिकत्वाद् विषयप्रकाशसंविदश्चानित्यत्वादनुपलब्ध्या स्वतः परतो वावधिग्रहणसम्भवादुत्पादविनाशवती संविद् नानैव । तथाच संवित्सिद्धौ

"प्रतिप्रमातृविषयं परस्परविलक्षणाः ।
अपरोक्षं प्रकाशन्ते सुखदुःखादिवद् धियः ॥"

न च ज्ञातृज्ञेयभेदोपाधिको भेदः, स्वतस्तु संविदभिन्नैव व्योमवदिति वाच्यम् । यतः

"सम्बन्धिव्यङ्ग्यभेदस्य संयोगेच्छादिकस्य तु ।
नहि भेदः स्वतो नास्ति नाप्रत्यक्षश्च सम्मतः ॥"

इति । तथाच

भिन्नस्वरूपसत्तैव यस्य नान्यानपेक्षया ।
भिद्यते तत् स्वभावेन संयोगेच्छादिकं यथा ॥
अनन्याधीनसत्ताकं यदन्याधीनभेदवत् ।
तत् तु स्वतो न भिद्येत घटाकाशादिकं यथा ॥
न संविद्रूपसत्ता च वेद्यवेदित्रनाश्रया ।
संयोगादिवदेवातः सा स्वभावेन भिद्यते ॥

स्वगताश्चास्याः संवित्त्वस्वप्रकाशत्वादयो भेदा न निवार्याः । न चेदृशी संविदात्मा, कादाचित्कत्वादनेकत्वाच्च घटादिवत् । यदि हि वेद्मयहमवेदिषमिति प्रतीतकालपरिच्छेदा प्रतिविषयोदयभङ्गा प्रकाशमात्रसंविदात्मा स्याद्, आत्मनोऽन्यस्य वा प्रत्यभिज्ञा भज्येत । अन्यान्यस्यातद्विषयत्वाद्, अन्यानुभूतेऽन्यस्य तदसम्भवाच्च । संविन्मात्रस्याप्रतिसन्धातृत्वाच्च । अपिच ज्ञानावगत्यादिपर्याया संवित् सकर्मिका संवेदितुरात्मनो धर्मः, न त्वात्मैव । घटमहं जानामि इममवगच्छाम्यमुं संवेद्मीति सर्वसाक्षिकानुभवात् । न च चैतन्य-

---

१ 'तृत्व' क. पाठ..

प्रकाशादन्यदेव वृत्तिज्ञान तथानुभूयत इति शङ्क्यम् । आत्मन' स्वयम्प्रकाशत्वं साधयता ज्ञातृज्ञेयसम्बन्धिप्रकाशस्यैव तत्साधनात् । न च संविदेव संविदाश्रयः, स्ववृत्तिविरोधात् । तथाच यदि संविदात्मा स्याद्, आत्मधर्मो न स्यात् । अवेदिता चात्मा प्रसज्येत । न च सवित् प्रतीची, येन सैवात्मा स्यात् । प्रत्यक्त्वं हि स्वस्मै प्रकाशमानत्वम् अहमिति । संविच्च सुखादिवदन्यस्मै भासते संवेद्मीति ॥

---

**संविद्रूपज्ञातुरात्मनोऽहमर्थत्वम् ।**

ननु 'विज्ञानात्मा पुरुषः', 'हृद्यन्तर्ज्योतिः पुरुषः', 'अत्रायं पुरुष. स्वयं ज्योतिः', 'कृत्स्नः प्रज्ञानघन एव' ज्ञाता स्वधर्मभूतप्रकाशनिरपेक्षसिद्धिः, भासमानतयैव साक्षात् परम्परया वा धर्म्यन्तरापरोक्षावभासहेतुधर्मकत्वात् । तथाभूतप्रभाधर्मकदीपस्य स्वधर्मभूतप्रभानपेक्षप्रकाशत्वदर्शनादिति । श्रुत्यादिकमनुरुन्धानस्य तवापि निर्विषयाश्रयस्वयम्प्रकाशचिद्रूप आत्मा सम्प्रतिपन्न इति चेत् । सत्यम् । स एवाहमर्थो ज्ञातोपेयते मया । ज्ञात्रतिरिक्तसविदश्च निराश्रयविषयाया असत्त्वमनात्मत्व च । त्वया तु विपरीतमिति वैषम्यम् । तत्राहमुपलभे जानामीति प्रत्यक्षाद्, 'एष हि द्रष्टा श्रोता', 'यो वेदेद जिघ्राणीति स आत्मा', 'विज्ञातारमरे केन विजानीयात्', 'न पश्यो मृत्युं पश्यती'त्यादिश्रुतेः,

"एतद् यो वेत्ति त प्राहुः क्षेत्रज्ञ इति तद्विदः"

इति स्मृतेः, 'ज्ञोऽत एव' (ब्र० २. ३ १८) इति सूत्राच्च ज्ञाताहमर्थ एवात्मेति युक्तम् । ज्ञातृत्व च ज्ञानगुणाश्रयत्वमात्मनः स्वाभाविको धर्मः । न विक्रिया । नित्य हि ज्ञान नित्यस्यात्मनो धर्मः । 'अविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा', 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इत्यादिश्रुतेः । ज्ञान हि स्वतोऽपरिच्छिन्न नित्यमेव कर्माविद्यावरणापावरणाभ्या हैतुकसङ्कोचविकासशीलम् अत एवोदितास्तमितव्यपदेश्य ब्रह्मतत्त्वदर्शनविधूते सर्वाविद्यावरणे सर्वविषय स्वरूपेण विशदीभवति । यावदात्मभाविनो ज्ञानस्य पर ज्योतिरुपसम्पद्य स्वेन रूपेणाविर्भावोपगमात् । यथाह शौनकः—

---

१ 'प' क. पाठः.

"यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥
यथोदपानकरणात् क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिमसतः सम्भवः कुतः ॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥"

इति । अक्षादिहेतुकज्ञानप्रसरे तु कर्तृत्वेऽपि नात्मनो विक्रिया । अचेतनवद्-परिणामित्वात् । नापि तत् स्वाभाविकं, कर्माविद्यानिमित्तत्वात् । विकारनिषेधस्य चात्मनि स्वाभाविकविकारविषयत्वात् । न च कर्तृत्वेऽप्यनात्मत्वं, यत्नाधारत्वस्य घटादावप्राप्तेः । परिस्पन्दाश्रयत्वं तु परमात्मन्यसिद्धम् । जीवस्योत्क्रान्त्यादिश्रवणेन तदनात्मत्वसाधने बाधः । धात्वर्थमात्राश्रयत्वं च नानात्मत्वहेतुः । आत्मन एव तव भ्रमाश्रयत्वात् । भ्रमाश्रयत्वमात्मनोऽन्यद्वा मिथ्येति चेद्, न । ब्रह्मातिरिक्तसर्वमिथ्यात्वमते तात्त्विकधात्वर्थाश्र(या॰यत्वा)-भावाद्व्यावर्तकत्वात् । 'अन्तः प्रविष्टं कर्तारमेतं', 'कर्तारमीशं पुरुषं ब्रह्मयोनिं', 'कर्ता विज्ञानात्मा पुरुषः', 'साधुकारी साधुर्भवति', 'स हि कर्ता', 'कर्ता शास्त्रार्थवत्त्वात्' (ब्र० २. ३. ३३) इत्यादिश्रुत्यादिविरोधाच्च । तथापि ज्ञानप्रसरे कीदृशं कर्तृत्वमात्मनः, तदवस्थज्ञानाश्रयत्वमेवेति गृहाण ॥

---

## परीत्या ज्ञातुरात्मनो ज्ञानसम्बन्धभानोपपादनम् ।

अथ ज्ञातृज्ञानसम्बन्धः कथमवभासताम् । तदभाने चात्मनो ज्ञातृत्वासिद्धेः, स्वपरज्ञानविभागासिद्धिप्रसङ्गाच्च । तत्र ज्ञाता ज्ञानमपि प्रत्यक्त्वेनानुकूलत्वेनैकत्वेन च स्वतो भाति नार्थान्तरं विषयीकर्तुमलमिति भवतोपगम्यते । विषयज्ञानं पुनरात्मानमविषयीकृत्य न तत्सम्बन्धमवभासयितुं शक्नोति, सम्बन्धस्य सम्बन्धिनिरूप्यत्वात् । सम्बन्धिनः सम्बन्धवित्तिवेद्यत्वाच्च । तदवभास्यत्वे चात्मनः स्वयम्प्रकाशत्वमनपेक्ष्य स्यात् स्वापादावात्मा मावभासिष्टेति, प्रतिबुद्धप्रत्यवमर्शोऽन्यथासिद्धेः । ज्ञानान्तरेण तदुभयसम्बन्धग्रहे च तस्य तस्य ज्ञातुश्च सम्बन्धग्रहानवस्थानात् सर्वस्यैव ज्ञानस्याहं जानामीति ज्ञातृसम्बन्धभानस्य सर्वजनीनत्वादिति ।

नैवम् । सम्बन्धभानं हि सम्बन्धिभाननियत न तद्विषयत्वमपेक्षते, गौरवात् । सम्बन्धिजाड्यात् तु सुरभि पुष्पमित्यादौ तदपेक्षते । तथाच विशेष्यतैकस्वभाव आत्मा विशेषणतैकस्वभाव ज्ञानं च स्वयमेव सह भासमाने परस्परप्रतियोगितयैव भासेते अपेक्षणीयान्तराभावादित्युपपन्नम् ॥

---

### ज्ञानस्य ज्ञानाश्रयत्वम् ।

ननु न ज्ञान ज्ञानाश्रयम् । कोऽभिप्रायः । आत्मा न ज्ञानमिति, आगमादिविरोधः । अथ ज्ञानमनाश्रयमनात्माश्रय वेति, जानामीत्यनुभवादिविरोधः । अपिचैवं यदि व्याप्तिमात्रमुपजीव्येत, ज्ञान साश्रयमेव स्याद्, न स्वतन्त्रमात्मा। श्रुत्या तु ज्ञानाश्रयतापि स्यात् । न च ज्ञान गुणः, येन गुणे गुणो न स्यात् । द्रव्य तु, प्रकाशगुणत्वात् । एकजातीयद्रव्ययोरनुपादानोपादेयत्वेऽपि धर्मधर्मिता न नोपपद्यते दीपप्रभयोरिव । न च प्रभा दीपस्यैव रूपगुणः, अतिरिक्तदेशव्यापित्वात् । गन्धस्य च विशरारुपुष्पाद्यवयवाश्रयस्यैवान्यत्रोपलम्भसम्भवात् । 'यथा वृक्षस्य सम्पुष्पितस्य दूराद् गन्धो वाति'

"गृहीत्वैतानि सयाति वायुर्गन्धानिवाशयात्"

इति चोपलब्धौ तत्प्राधान्याद् व्यपदेशः । गन्धवन्तो वा गन्धा उच्यन्ते, अजन्तत्वोपपत्तेः । अत एव गन्धस्याश्रयानतिक्रमाद्

"उपलभ्याप्सु चेद् गन्धं केचिद् ब्रूयुरनैपुणाः ।
पृथिव्यामेव त विद्यादपो वायु च सश्रितम् ॥"

इति स्मर्यते ।

अपर आह — चक्षुरिव घ्राणमपि दूरप्रसृतस्वरश्मिसम्बद्धगन्धग्राहि[1] कृष्ण्य,

"नह्यात्मा शक्यते द्रष्टुमिन्द्रियैः कामगोचरैः ।
प्रवर्तमानैरनयैर्दुर्धर्षैरकृतात्मभिः ॥
तेषा तु मनसा रश्मीन् यदा सम्यङ् नियच्छति ।
तदा प्रकाशते ह्यात्मा दीपो दीप्यन्निवाकृतिः ॥"

---

1. 'न्व' ख. पाठः.

इतीन्द्रियाणामविशेषेण भारते रश्मिमत्त्वस्मरणादिति । अथ ज्ञानमालोको वा परायत्तस्थित्यादितया गुण उच्येत । 'गुणाद् वालोकवत्' (ब्र० २. ३. २५) इत्यादौ न काचिन्न. क्षति., द्रव्यत्वाविघातात् ॥

---

## दीपप्रभास्वरूपाविवेक. ।

अथ सततोदयव्ययशीलस्य दीपस्य विशीर्यन्तोऽवयवा एव प्रभा । न धर्मः । सन्ति हि विशीर्यन्तोऽवयवा दहनस्य जलादावनुप्रविशन्तः । अन्यथा तत्रौष्ण्योपलम्भासम्भवात् । तत्र विजातीयदहनोत्पत्तिकल्पनाया निर्मूलत्वात् सौरातपतातपितशिलादौ च सूरकिरणभुक्ताग्न्यवयवानुप्रवेशेनैवौष्ण्योपलम्भात् ।

"वसन्ते ग्रीष्मके रश्मिशतैः सन्तपाति त्रिभि. ।
शरद्यपि च वर्षासु चतुर्भि. सम्प्रवर्षति ॥
हेमन्ते शिशिरे चैव हिममुत्सृजाति त्रिभिः । "

इति मात्स्ये रवि· स्वकिरणापीतमुक्ताप्यावयवैर्जगतः सौहित्यमिवाग्नेयावयवै. सन्तापमपि करोतीत्यवगमात् । अत्र[2] च रश्मिशतै सन्तपति त्रिभिरिति प्रागुपात्ताग्न्यवयववर्षेणेति पूरणीयम् । उत्सर्गप्रकरणस्वारस्यात् । 'उद्यन्तं वा वादित्यमग्निरनुसमारोहती'त्यग्न्यवयवानामशुभिरादित्येनोपादीयमानत्वश्रवणाच्चेति । अत्र यद्यपि वर्षजलानि हिमकणा वा न[3] विशीर्यन्तो रविकिरणा एव, वैजात्यात् । सन्तापन तु किरणैरेव सम्भवति । तेषामेवोपचयापचययोगितया विशरणसम्भवेन शिलादौ तदवयवानुप्रवेशोपपत्तेरिति वय पश्यामः । नैवम् । मणिद्युमणिप्रभादावुक्तगत्यसम्भवात् । न च मण्यादिरपि विशीर्यते, अनन्तरानुपलम्भप्रसङ्गात् । दीपस्य स्नेहदशावयवभेदवदन्यस्य प्रतिकलोदयसामग्र्यस्याभावेन प्रत्यभिज्ञाबाधायोगात् ।

"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् "

'नाग्नीषोमौ न सूर्यः' इत्यादिनियतकालोत्पत्त्यप्ययाम्नायाच्च । अथ तेजस्त्वादिना सूर्यादि क्षणिकमनुमीयेत, जगदेव सत्त्वादिना । व्यतिरेके शून्योदाहरणसम्भवात् । प्रत्यभिज्ञा तु बाधिका परत्रापि । अपिच्च चरमदशादिविनाशेऽपि दीपस्य विशीर्यदवयवानपायेन प्रभोपलम्भप्रसङ्गः । अथ स्नेहदशाव-

---

१. 'बात् । वसन्ते', २. 'त्र र', ३. 'न ची' ख पाठ·.

ष्टम्भविनाशे दीपस्यैव विनाशेन सावष्टम्भस्यैव तस्य सा विशीर्यन्तोऽवयवा इत्युच्येत, नियतारोहपरिणाहस्य दीपावयविनोऽनुपलम्भप्रसङ्ग.। सक्तूनामाप्यावयवावष्टम्भादिव विशरणस्वभावस्यैव तस्य पार्थिवावयवावष्टम्भात् पिण्डीभूतावयविनो नोपलम्भानुपपत्तिरिति चेत्, तर्हि यावदवष्टम्भमवयवविशरणानुपपत्तिः। अत एव न निमित्ताभिघाते कतिपयावयवविशरणमुपपद्यते। नियतोत्सेधाद्यनुपलम्भप्रसङ्गादेव। अपिच निवातस्तिमितदीपस्य वातानभिघातेनावयवाविशरणे प्रभा न स्यात्। अपिच पासव इव वायुना दीपस्य विशीर्णावयवा विक्षिप्य विकीर्येरन्निति नियतदेशा प्रभा नोपलभ्येतेत्यादि बहुदोषे[१]दूषणाद् न विशीर्यन्तोऽवयवा दीपस्य प्रभेति युक्तम्। तदेवं दीपस्य प्रभेव चिद्रूपस्यैवात्मनो ज्ञानं सजातीयद्रव्यमेव धर्मो गुण इत्युपगम्यते। अन्यथा अहं जानामीति ज्ञातृत्वानुभवनिर्विषयत्वप्रसङ्गात्॥

---

### अहङ्कारस्याहमर्थत्वे शङ्का।

ननु न वयमहमर्थस्य ज्ञातृत्वमपह्नुमहे। न चाहङ्कार आत्मा, संविदतिरेकिणस्तदधीनप्रकाशस्य पराक्त्वाद् घटादिवद्, अहम्प्रत्ययविषयत्वादेव वा, देहादिवत्। न चैवं पराचोऽचेतनस्य प्राकृतस्य पराक्स्याहमर्थस्य घटादिवद् न ज्ञातृत्वमनुभूयेत, कल्पनामात्रत्वात्। अथापि निर्विषया न कल्पनेति वक्तव्या विषयोपपत्ति.। उच्यते—बुद्धिसत्त्वस्य चित्प्रतिबिम्बग्राहितयाहङ्कर्तु[२]र्ज्ञातृत्वाभिमान· यावकप्रतिबिम्बग्राहिस्फटिकादेरिव रक्तत्वाभिमान इत्येके। अग्निसम्पर्कादयसो दग्धृत्वाभिमान इव चित्सम्पर्कादहङ्कर्तु[३]र्ज्ञातृत्वाभिमान इत्यपरे। स्वात्मस्थतया चिदभिव्यञ्जकत्वाद् जालकालोकाभिव्यञ्जककरतलादिवत् तस्य तदाश्रयत्वाभिमान इत्यन्ये। कथञ्च स्वापादावननुगच्छन्नहमात्मा येन ज्ञातैवात्मा स्यात्। अन्यथा जागरवदवभासेत अहमिति, स्वस्मै स्वयम्प्रकाशत्वोपगमेनापेक्षणीयाभावात्। अथावभसेत, 'नाह खल्वयमेव सम्प्रत्यात्मानं जानात्ययमहमस्मी'ति श्रुतिर्विरुध्येत। मामहं नावेदिषमिति प्रतिबुद्धप्रत्यवमर्शश्च। स्मृतिश्च—

---

१. 'षाद् न', २, ३. 'र्तृज्ञातृ' ख. पाठ.

"महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च"
"एतत् क्षेत्रं समासेन सविकारमुदाहृतम्"

इत्यहङ्कारं क्षेत्रेऽन्तर्भावयति । तस्मादहम्प्रत्ययगोचरादेव देहादेरतिरिक्तः पारलौकिक इवाहङ्कारादपि तदवभासात्मा दृशिमात्रः प्रामाणिकैरात्मैषितव्य इति ॥

---

## परदीत्याहमर्थस्य ज्ञातुरात्मत्वनिरूपणम् ।

नैवम् । प्रत्यगर्थ एवात्मा न परागर्थ इति तावत् सर्वसम्प्रतिपन्नम् । तत्र यद्यपि विषयप्रकाशा संवित् स्वसत्तायामियमिति नावभासते, तथापि न प्रतीची, परस्मै भासमानत्वात् । तद्धि पराक्त्वं घटादावपि । अन्यथा तव पराग्हङ्कारो न स्यात् । न च दृश्यत्वमेव पराक्त्वं, प्रत्यगर्थाभावप्रसङ्गात् । न चान्याधीनासत्त्वशङ्काशून्यत्वम्, अहङ्कर्तुरपि स्वयम्प्रकाशचिद्रूपत्वात् । न चेदमेव प्रत्यक्त्वम्, एकत्र प्रत्यगर्थद्वयापत्तेः । आत्मभूतं[1] हि ज्ञानं स्वस्वधर्मप्रत्यक्त्वानुकूलत्वादिव्यवहारप्रतिसम्बन्धिताहेतुत्वात् स्वप्रकाशम् । विषयसंविच्च तथा, स्वस्वगतैकत्वपराक्त्वादिविषयव्यवहारानुगुण्यापादनशक्तिमत्त्वात् । तच्च ज्ञानत्वादिति । प्रत्युतात्मभूतज्ञानसम्बन्धाधीनभाननियमाद् घटादिवदप्रतीची संविदिति युक्तम् । अपि च

प्रत्यगात्मा ह्यहंबुद्ध्या परागर्थाद् विविच्यते ।
अहमर्थातिरिक्ता च प्रतीची ते कथं चितिः ॥

अस्मदर्थेऽनिदम्भूतमहङ्कारातिरेकिणम् ।
तदाभासं चिदात्मानं न विविञ्च्मः कथञ्चन ॥

अतः स्वस्मै स्वयम्भातः प्रत्यगात्माहमेव नः ।
अहमर्थो न चेदात्मा शास्त्रं कस्य प्रमाणतु ॥

तत्राधिक्रियमाणस्य विरहे मुक्तिकाम्यतः ।
न चाधिक्रियते संवित् केवला शास्त्रवर्त्मनि ॥

---

१. 'तं ज्ञहि' क. पाठ.

अहमर्थानुषङ्गेण सुखप्रेप्सादिदर्शनात् ।
निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट् ॥
भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ।
अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति ॥
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ।
मयि नष्टेऽपि मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता ॥
इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ।
ज्ञप्तेः सत्ता ज्ञप्तिता च कर्तृकर्मानुबन्धिनी ॥
कर्तृरूपविनाशे च का ज्ञप्तिरवतिष्ठताम् ।
छेत्तुश्छेद्यस्य चाभावे छेदनं न हि तिष्ठति ॥
अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति गृह्यताम् ।
विज्ञातारमरे केन न पश्य इति च श्रुतिः ॥
एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति च स्मृतिः ।
सूत्रकृज्ज्ञोऽत एवेति विज्ञात्रात्मत्ववर्त्मना ॥
ज्ञातारमहमर्थं नः प्रत्यगात्मानमब्रुवन् ।
कोऽहमित्येव निपुणो भूत्वा चिन्तय पार्थिव! ॥
शब्दोऽहमिति दोषाय नात्मनीत्यपि च स्मृतिः ।
विज्ञातारमहङ्कारमात्मानं प्रब्रवीति नः ॥
अन्यथा वो युष्मदस्मत्प्रत्ययेत्यादि कुप्यति ।
अस्मत्प्रत्ययसिद्धोऽहं युष्माकं युष्मदर्थताम् ॥
यातीति वदतां वन्ध्या ममाम्बेति न दुर्भणम् ।

न च प्रकाशस्वभावस्य तस्य पराधीनप्रकाशता, येन तद्वलनिर्भासतया लक्षणतो युष्मदर्थः स्यात् । नहि दीपः प्रभाधीनप्रकाशः, प्रकाशगुणकत्वात् । एवमहङ्कारोऽपि । न चाहम्प्रत्ययविषयत्वादहमनात्मा देहादिवत् । मा भूद् रजतं रजतधीविषयत्वादरजतं शुक्तिवत् । अबाधश्चाहमात्मत्वेऽपि समानः । न चैव चिद्रूपेणापि प्रादेशिकेनात्मना असम्बन्धिविषयव्यवहारः, अतिप्रसङ्गात् ।

तत्रादेशिकदीपस्य प्रभेव विषयप्रकाशाय मानवृत्तिनिबन्धनविषयसम्बन्धमात्मनो धर्मभूतमपि ज्ञानमवश्यमेषितव्यम् । मा निर्विषयो ज्ञातृत्वानुभवो भूदिति च । अहमोऽनात्मत्वे घटादिवदज्ञातृत्वात् ॥

---

### ज्ञातृत्वस्याध्यस्तत्वनिरासः ।

न च केवलसंविद एव तव ज्ञातृत्व, येनालक्तकरक्तिमेव स्फटिके तद्बिम्बग्राहिण्यहमिति भ्राम्येत । अत एवायोदग्धृत्वनिदर्शनमपि निरस्तम्, अग्नेरिव[2] दग्धृत्वस्य संविदोऽहमो वा तव ज्ञातृत्वस्यानुपगमात् । अपिचैव यदि निर्विषयाश्रया सविद् ज्ञातृतया भ्राम्येत, संविदहमिति प्रतीयेत । न त्वहमनुभवामीति, वैयधिकरण्येन भ्रमस्यारोप्यविषयसामानाधिकरण्यावभासित्वादिद रजतमिति । दिक्षु मालिन्य नभसि राग इत्यारोपेऽपि दिक्त्वमालिन्यनभस्त्वरागैकाधिकरण्यभानाद् दिशो मलिना रक्त नभ इत्यतोऽविशेषात् । शब्दगतं तु वैयधिकरण्यमहेतु । सवित्तत्त्वमहमध्यासे मा भासिष्ट, विरोधाद्, रूप्यारोपे शुक्तितत्त्वमिव । न, निरंशतया सविद. शुक्तिवदशभेदेनाप्यनवभासे तद्विषयारोपानुदयात् । अपिचाहं सवेद्मीति भासमान एव सवित्स्वरूपे ज्ञातृत्वावभासोऽनध्यास इति युक्तम् । न हि निर्विषयाश्रया संविदस्ति । विषयसंविदेव च स्वप्रकाशा भवतात्मेष्यते । अतिरेके वा यथागमानुभवं विषयानुभवाश्रयोऽहमर्थो ज्ञातात्मेष्यताम् । यद्यविद्यावतोऽवभासाद् ज्ञातृत्व मिथ्या, सविदपि स्यात् । तत्त्वज्ञानाबाध्यता च ज्ञातृत्वस्यापि । 'सर्व ह सर्व पश्यती'त्यादौ मुक्तावपि ज्ञातृत्वश्रवणात् ॥

---

### संविन्मात्रात्मनोऽन्तःकरणप्रतिबिम्बितत्वतद्व्यङ्ग्यत्वनिरास. ।

यत्तु—उभयत्र ज्ञातृत्वाभावेऽप्यादर्शवदहमि मुखस्येव सविदः प्रतिबिम्बात् तस्य ज्ञातृत्वाभिमान. । अथवा करतलादिकमालोकमिवात्मसन्निदमात्मस्थतयाभिव्यञ्जयत्यहमिति ज्ञातृत्वाभिमान इति । तदत एव निरस्तम्, अचाक्षुषत्वादव्यवधानाच्च प्रतिबिम्बायोगात् । अलातचक्रस्येव कल्पितरूपस्यैवाकाशस्य प्रतिबिम्बोऽनुभूयत इत्यनुदाहरणम् । अन्यथा कालादिप्रतिबिम्बोऽपि स्यात् । करतलादिक च नाभिव्यञ्जकमालोकस्य, प्रतिस्फालनपरावृत्त्या द्वैगुण्येन बाहुल्यमात्रहेतुत्वात् । अपिच,

---

१. 'व विषयप्रभेव विषय', २. 'प्ति' ख. पाठ..

"शान्ताङ्गार इवादित्यमहङ्कारो जडात्मकः ।
स्वयज्योतिषमात्मान व्यनक्तीति न युक्तिमत् ॥"

अपिच चिदात्मानमनुदितानस्तमितप्रकाशस्वभावमहमाद्यशेषविशेषापरोक्षावभासमात्रमचिदहङ्करोऽभिव्यनक्तीत्यात्मविदः परिहसन्ति । अपिचाहङ्कारस्य चिद्व्यङ्ग्यस्य तद्व्यञ्जकत्व तत्पुत्रस्य तत्पितृत्वमिवायुक्त, स्वभावविरोधात् चिदात्मनोऽचित्त्वप्रसङ्गाच्च । तदुक्त—

"व्यङ्क्व्यङ्ग्यत्वमन्योन्य न च स्यात् प्रातिकूल्यतः ।
व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्याद् यथा घटे ॥"

इति । न च व्यञ्जनमुत्पादन प्रकाशन वा, आत्मनो नित्यत्वात्, स्वप्रकाशत्वाच्च । अत एव न तद्ग्रहसामग्र्यनुग्रहः । न हि करणानुग्रह, अनैन्द्रियके नित्यप्रकाशात्मनि व्यक्तेरिव जातावादर्शस्येव मुखादाविन्द्रियसम्बन्धघटकत्वानिष्टेः । यथाहु —

"करणानामभूमित्वान्न तत्सम्बन्धहेतुता"

इति । न च बोद्धनुग्रहः शमादिना हि कल्मषापनयोऽनुग्रहः शास्त्रकृतः, नाहमा । अपिचाहमर्थस्य बोद्धृत्वान्न स तेनैव शोध्यते, स्वरूपस्य सार्वदिकत्वेन दशाभेदायोगात् । न चालोकेन घटादौ तमस इवाहमा चिदात्मन्यज्ञानस्यापनयोऽनुग्रह, यतो ज्ञानमज्ञानस्य निवर्तकमुपगम्यते । सविन्मात्रे स्वयम्प्रकाशे ज्ञानसमानाश्रयविषयाज्ञानायोगाच्च । अन्यथात्मनो ज्ञातृज्ञेयभावप्रसङ्गाद्, घटादिवदज्ञातुरज्ञानानाश्रयत्वाच्च । अपिच ज्ञानमप्यविषयसविदात्मनोऽज्ञान न विरुन्धीत, शुक्तिज्ञानस्य रज्ज्वज्ञानाविरोधात् । तद्विषयत्वे वा वेद्यत्वापात. । अपिच स्वप्रकाशचिदात्मनि नाहङ्कारापनेयमनाद्यनिर्वचनीयमज्ञानमुपपद्यते, मानाभावात् । ज्ञानप्रागभावश्च नात्मन्यपनेयः, तज्ज्ञानापरिपन्थित्वात् । तस्माद् नाहङ्कारः सविदात्मनोऽभिव्यञ्जक' । न चाभिव्यञ्जकमभिव्यङ्ग्यमात्मस्थतयाभिव्यनक्तीति नियमः, घटादिव्यञ्जकालोकादिष्वदर्शनात् । न चादर्शो निदर्शनम् । चाक्षुषरश्मिप्रतिहतिहेतुतया नस्याव्यञ्जकत्वात् । व्यक्तेस्तु जातिराकार इति तदाश्रयतया गम्यते, न तु व्यक्तिव्यङ्ग्येति । न चाहङ्कारे तदुभयमस्ति, येन ज्ञातृत्वारोपो निरुध्येत' । तस्मात् स्वत एव ज्ञातृतया सिध्यन्नहमर्थ एव प्रत्यगात्मा न ज्ञप्ति-

---

१ 'द प्र', २. 'व', ३ 'कानि', ४. 'माश्र' का पाठ

मात्रम् । अज्ञातृत्वेऽनहन्त्वे च घटादिवदप्रत्यक्त्वात् । अत एव न ज्ञातृत्वादिरात्मधर्मः, दृश्यत्वाद् रूपादिवदिति निरस्तम् । तदनुभवस्य निर्विषयत्वप्रसङ्गाद्, आत्मनोऽपि दृश्यत्वोपगमेनाप्रयोजकत्वाच्च ॥

---

## सुषुप्तावहमर्थानुवृत्तिसमर्थनम् ।

यत्तु सुप्तादावसन्ननुलब्धोऽहमनात्मेति । तन्न । असत्त्वानुपलम्भयोरसिद्धेः । तमोगुणाभिभवाद्धि सुखादिब्राह्मणत्वाद्यन्तर्बहिर्विशेषणवैशिष्ट्येन विशदावभासाभावेऽप्याप्रबोधमहमित्येकाकारेण स्फुरणात् । सविदात्मवादेऽपि ज्ञातृज्ञेयोपश्लेषविरहेणाविशदावभासत्वोपगमात् । अत एव मामपि[1] नाज्ञासिषमिति जागरानुभूतजात्यादिविशिष्टाहमज्ञानमेव परामृश्यते । अन्यथाहं नाज्ञासिषमित्यहमनुवृत्त्यनुभववचनविरोधात् । 'नाह खल्वयमि'त्यादिश्रुतिरपि दिमेवानुवदति । 'अयमहमस्मी'ति विशेषणात् । न च कश्चिदपि प्रतिबुद्धोऽहंभावरहित निर्विशेषज्ञप्तिमात्रमज्ञानसाक्षितयावतिष्ठत इत्यवमृशति । किन्तु न किञ्चिदहमवेदिष सुखमहमस्वाप्समित्येव । तत्र विषयविज्ञानमात्राभाव' स्वापोऽतीतकालसम्बन्धो वा प्रागनुभूतार्थप्रत्यभिज्ञायोग्यानुपलब्धिभ्यामनुमीयत इति तद्वैशिष्ट्येनाहमर्थोऽनुकूलतया प्रत्यक्तया च प्रागनुभूत एव प्रत्यभिज्ञायते सुखमहमस्वाप्समिति । यथा प्रगे चत्वरगजाभावपरामर्शे प्राक् प्रतियोग्यस्मरणादननुभूतस्यैव योग्याननुस्मृतिलिङ्गानुमितस्य तस्य विषयत्व, चत्वरे तु प्रागनुभवसम्भवाद्[2] न प्रकारान्तरमाश्रीयते । तद्वत् । मन्दमगमं मधुरमगासिषमित्यत्र गतिगानसहभावेन तदानीन्तनमान्द्यमाधुर्ययोरिव स्वापसहभावेनाह सुखमस्वाप्समिति प्रत्यक्त्वानुकूलत्वयोरपि तत्कालतयानुसन्धानात् । स्वापादौ चागतिकमनुमानम् । नहि सुप्तादिविनाश्य. प्रबोधाद्युत्पाद्यश्चाहमर्थ , येन सुखमहमशेऽपि प्रतिबुद्धदशानुभव एव स्यात् । अहमिदमकरवम्, अदोऽवेदमेतदवचमिति ह्यस्तनानुसन्धान हि न स्यात् । न च सुप्तावहमोऽनुभवसामग्र्यभाव', स्वयम्प्रकाशत्वात् । 'अत्राय पुरुष. स्वय ज्योतिरि'ति बोद्धुरहङ्कारस्य पुरुषसशब्दितत्वात् । 'बोद्धा कर्ता विज्ञानात्मा पुरुषः' इति श्रुत्यन्तरात् ।

---

1. 'मामोऽपि', २ 'वाद्' ख पाठः.

लोके च ज्ञातरि पुरुषशब्दप्रसिद्धेः । न च न किञ्चिदवेदिषमित्यहमवभासव्यासेधः । नावेदिषमहमिति तदनुवृत्त्यैव वेद्यभानाभावावगमात् । अन्यथा अविशेषनिषेधः संविन्मात्रावभासस्यापि स्यात् । अपिच प्रगे गजाभावाश्रयतया चत्वरस्येव सुप्तावज्ञानाश्रयतयानुसन्धेयस्याहमोऽभाववचनमुन्मादोद्घोषणमात्रम् । मामपि नाज्ञासिषमित्यस्य च गतिरुक्ता । अपिचाज्ञानसाक्षी सुप्तौ भवदुपेतात्मा न ज्ञातुरतिरेकमर्हति, तत्रैव साक्षिशब्दप्रसिद्धेः । स्मरति च भगवान् पाणिनिः 'साक्षाद् द्रष्टरि संज्ञायाम्' (५. २. ९१) इति । स चायं साक्षी साक्षाद् ज्ञाता जानामीति प्रतीयमानोऽस्मदर्थ एव । अपिच स्वप्रकाश आत्मा न परस्मै प्रथत इति तवापि सम्प्रतिपन्नम् । तथाच सौप्तिकात्मा अहम्भावानुगतप्रकाशः, स्वस्मै स्वयम्प्रकाशत्वात् सम्प्रतिपन्नजागरात्मवद् व्यतिरेकेण घटादिवच्च । तस्मात्

सुप्तावविशदाभासादविशिष्टावमर्शनात् ।
अहम्भानोपपत्तेश्च सौप्तिके पुरुषश्रुते ॥

अहमर्थानुसन्धानात् प्रतीपानवमर्शनात् ।
अज्ञानाश्रय[त्व]।च्च साक्षित्वोपगमादपि ॥

न सुप्तावहमोऽभावो भवता शक्यशङ्कनः ।
स च स्वस्मै स्वयं भातः प्रत्यगात्माहमिष्यताम् ॥

---

## मुक्तावहमर्थानुवृत्तिसमर्थनम् ।

अत एव मुक्तावप्यहमर्थोऽनुवर्तते, स्वस्मै स्वयं भासमानस्याहमित्येव भाननियमात् । न च सुखभाजो दुःखनिविवृत्सोरहमात्मनो विनाशोऽपवर्गः पुरुषार्थो भवति, मुक्तावहमर्थाननुवृत्तावधिकारिविरहात् । शास्त्राप्रामाण्यादिदोषाश्च प्रागुक्ताः । न चात्मनोऽहमारोपितो धर्मः, येन तद्विलयेऽपि स्वरूपमवशिष्येत । स्वरूपमेव ह्यहमिति । अहं जानामि मम ज्ञानमिति ज्ञानस्यैव तद्धर्मत्वप्रतीतेः । न चैवं कदापि पुनरज्ञत्वससारित्वप्रसङ्गः ।

---

१ 'सुषुप्ता' ख. पाठः.

"न पश्यो मृत्यु पश्यति न रोगं नोत दुःखताम्"

इत्याम्नायबाधात् । अन्यथा सहचारदर्शनमात्रेण तत्प्रसङ्ग· सविन्मात्रात्मवादेऽपि स्यात् । अत एव नाज्ञत्वप्रयुक्तमप्यहन्त्व संवित्त्व वा । नह्यहमित्यज्ञानमन्यथाज्ञान विपरीतज्ञान वा, येन मुक्तावपि तन्मूलः ससारः प्रसज्येत । अहमित्येव ह्यात्मन स्वरूपमिति तस्मिन् तद्रूपावभासिनः सम्यग्ज्ञानस्याज्ञानादिविरोधित्वात् । श्रूयते च ब्रह्मभावापरोक्षनिर्धूतनिरवशेषाविद्यादीनामपि वामदेवादीनामहम्भावानुगमः 'अह मनुरभव सूर्यश्च', 'मामेव विजानीहि', 'अहमेव वर्तामी'त्यादौ । यदुपासनया चामीषामविद्यासंसारात्यन्तापगमः, तस्यापि परमात्मन· 'बहु स्या प्रजायेय', 'हन्ताहमिमास्तिस्रो देवता·' इत्यादौ । स्मर्यते चाहम्भाव ईश्वरस्य 'यस्मात् क्षरमतीतोऽहम्', 'अहं सर्वस्य जगत· प्रभव·', 'अहमात्मा गुडाकेश !', 'अह सर्वस्य प्रभवः', 'तेषामह समुद्धर्ते'त्यादौ । न च मुख्यसम्भवे सर्वत्राहमिति चिन्मात्रलक्षणा युक्ता यत्तु 'महाभूतान्यहङ्कार·' इति तस्य क्षेत्रान्तर्भाववचन, यच्च

"अथ चेत् त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि"

इत्यनर्थहेतुतावचनं, यच्च 'अहङ्कारं बलं दर्प विमुच्य ब्रह्मभूयाय कल्पते' इति मुक्तौ त्याज्यत्ववचन , यच्च

"अहङ्कारविमूढात्मा कर्ताहमिति मन्यते"

इति तदात्मभावस्य मोहत्ववचन , तत् सर्वमहमश्च्व्यन्तात् करोतेः करणे भावे च घञि योऽनहम्यहम्भावकरणमव्यक्तपरिणाम· यश्चानहम्युत्कर्षगर्भोऽहमभिमानात्मा 'गर्वोऽभिमानोऽहङ्कार' इति पर्यायनामा प्रकृष्टजनावमानहेतु 'अनात्मन्यात्मबुद्धिर्या' इत्यादिस्मरणादविद्यालक्षणः तद्विषय व्याख्येयम् । सर्वत्र स्वरूपोपदेशप्रतिपत्त्योरहमित्येवानुगमो न विरोत्स्यते । यद्यपि च 'अथातोऽहङ्कारादेश' इत्यादिषु शुद्धस्वरूपाभिधानमुपगम्यते, तथापि तत्र च्विप्रत्ययमनुत्पाद्याहमिति कारः करणमस्मिन्निति व्युत्पाद्यते [१]विवक्षाभेदात् । न चाहङ्कारपदवाच्यत्वादेवाहमर्थजाड्यमनुमेयम् ।

"तथाच हरिशब्दस्य दृष्टा मण्डूकवाचिता ।"
इति तच्छब्दवाच्यत्वात् सिंहो मण्डूक एव किम् ॥

---

१ 'न वि' क. पाठ..

तथा गोशब्दवाच्यत्वाच्छब्दश्चापि विषाणवान् ।"

इति ह्युक्तम् । अपिच

अनात्मन्यात्मविज्ञान शब्दो वा भ्रान्तिलक्षणः ।
ज्ञप्तिमात्रात्मवादे स्याद् देहे तन्मात्रगोचर ॥

ज्ञात्रहमर्थगोचरस्तु स मनुष्योऽहमिति ।

तस्मादबाधिताहन्तानिर्भासश्चेतनः स्वदृक् ।
ज्ञातैवात्मानहम्बोधा सवित् तु न घटादिवत् ॥

तथाचात्मसिद्धौ —

"अत. प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात् ।
अविद्यायोगतश्चात्मा ज्ञाताहमिति भासते ॥"

इति । तथा

"देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्न. स्वतः सुखी ॥"

इति । धीभ्योऽन्यः न विषयसवित् । अनन्यसाधनः स्वप्रकाश. । व्यापी अणुरपि क्रमेण सर्वाचेतनान्तःप्रवेशी । धर्मभूतज्ञानेन वा व्याप्तिरत्रैवोक्ता । व्याप्तिरपि चैतन्यमात्रेण रूपेणेति । तदेव संविदात्मनानात्वेन जीवपरयोरपि दृश्यत्वे भेदापारमार्थ्यसाधनानैकान्त्यम् । अन्यथा शास्त्रानर्थक्यात्, 'तरति शोकमात्मवित्,' 'ब्रह्मविदाप्नोति परमि'त्यादिविरोधाच्चेति ॥

---

## सिद्धान्तः ।

अत्राभिधीयते — स्वयम्प्रकाशचिद्रूपस्तावदात्मा तवापि सम्प्रतिपन्नः । 'अत्रायं पुरुषः स्वय ज्योतिरि'त्यादिश्रुतेः ॥

---

## ज्योतिःपदवृत्तिनिमित्तम् ।

अत्र यदन्य आह — 'कि ज्योतिरेवायं पुरुष' इति प्रश्नस्योत्तरम् 'आदित्यज्योतिः सम्राडि'ति । न चात्रात्मनो ज्योतिष्ट्वं प्रश्नविषय । उत्तरवैयधिकरण्यप्रसङ्गात् । कि तर्हि । पुरुषस्य व्यवहारहेतुज्ञानानुग्राहक ज्योतिरेव ।

१ 'षव्य' ख पाठ..

एवमस्तमित आदित्ये चन्द्रमसि च शान्तेऽग्नौ वाचि च किञ्ज्योतिरेवायमिति प्रश्न उत्तरम् 'आत्मैवास्य ज्योतिरि'ति स्वयमेव स्वस्यासनादिव्यवहारहेतुज्ञानजनक इत्युच्यते । स्वप्नावस्थायामप्यादित्यादिज्योतिरभाव इति तदेव चात्मज्योतिष्ट्वम् 'अत्राय पुरुष. स्वयज्योतिरि'त्युपसहरति । स्वयमात्मैव वासनावशाद् ज्ञान जनयतीति । एवञ्च ज्ञानजनकवाची ज्योतिश्शब्दो न ज्ञानवाची, आदित्यादावनन्वयात् । तस्मिन्नेव प्रकरणे तस्यैवार्थभेदायोगाच्च । आह च भगवान् भाष्यकार —'ज्योतिश्चरणाभिधानात्' (ब्र० १.१. २४) इत्यधिकरणासिद्धान्ते

**"यद्वा नायं ज्योतिःशब्दश्चक्षुर्वृत्तेरनुग्राहके तेजसि वर्तते । अन्यत्रापि प्रयोगदर्शनात् । 'वाचैवायं ज्योतिषास्ते', 'मनो ज्योतिर्जुषतामि'ति च । तस्माद् यत् कस्यचिदवभासकं तद् ज्योतिःशब्देनाभिधीयते"**

इति । तस्माद् न स्वयम्प्रकाशचिद्रूप आत्मेति ।

अत्र ब्रूम·—न ज्ञानजनकत्वमेव ज्योति·पदवृत्तिनिमित्तं, विषयशरीरादावपि प्रसङ्गात् । नापि ज्ञानप्रतिबन्धपरिपन्थित्वम् । कुड्यादिव्यवधानापनायकेऽपि प्रसङ्गात् । धीसामग्रीकालीनत्वं प्रतिबन्धकविशेषणमिति चेत्, तथापि सूर्यादीना तथाभावेऽपि मनोवागात्मनामतथात्वेनाज्योतिष्ट्वप्रसङ्गात् । तस्मात् प्रकाशत्वमेव तत्पदवृत्तिनिमित्त लाघवात् । तच्च स्वससृष्टविषयप्रकाशनव्यवहारानुकूलस्वभावत्वं, स्वपरव्यवहारानुगुण्यापादकत्व वा साधारणम् । आलोकः प्रकाशते लोक· प्रकाशते ज्ञान प्रकाशते सुख प्रकाशते इति[2] सर्वव्यवहारात् । तथाचात्मनोऽपि ·ज्योतिष्ट्व प्रकाशस्वभावत्वादेव । तत् त्वालोकादौ भास्वरत्व तमोविरोधिरूपमौज्ज्वल्यम् । आत्मनि तु स्वसत्तासशयादिविरोधिस्वभावत्व सवित्त्वमिति व्यवतिष्ठते । न चात्र ज्ञानजनकविवक्षया किं ज्योतिरित्यादि प्रक्रियते, लोकसिद्धाभिधानवैयर्थ्याद्, अपुरुषार्थत्वाच्च । किन्तु कार्यकरणसङ्घातचैतन्यनिरासेन तदनन्तर्भूतज्योतिरात्मविवक्षया । अत एव वाचश्च भषणादिसाधारणरूपेण स्वससृष्टव्यवहारप्रयोजकतामात्रेण वागेवास्य

१. 'चाज्यो', २ 'ति व्य' ख. पाठ.

ज्योतिरिति व्यवहारः । तावतैव कार्यकरणसङ्घातस्य विवक्षितस्वानन्तर्भूत-ज्योतिरधीनव्यवहारत्वसिद्ध्यविघातात् । तादृशेऽपि वागादौ लौकिकज्योति-श्शब्दाप्रयोगादमुख्य ज्योतिष्ट्वम् । आत्मनि पुनरलौकिकेऽपि लोकसाधारण्येव व्युत्पत्तिरिति 'पुरुष स्वयज्योतिरि'ति मुख्यसम्प्रत्ययो युक्त । भाष्यकृतस्तु स्वससृष्टव्यवहारप्रयोजकतामात्रमाश्रित्य 'यत् कस्यचिदवभासक तद् ज्योति-श्शब्देनाभिधीयते' इत्याहुः, तावतापि तेन ब्रह्मग्रहणोपपत्तेरिति । न तु कि-ञ्चिदवभासहेतुत्व प्रवृत्तिनिमित्तमतिप्रसङ्गात् । अत एव मिश्रा वागादिव्या-वृत्त निरुक्तमेव ज्योतिश्शब्दवृत्तिनिमित्त मन्यमाना आहुः---'अथवा प्र-काशमात्रवचनो ज्योतिश्शब्दः । प्रकाशश्च ब्रह्मेति ब्रह्मणि मुख्य' इति । तस्मादय पुरुष स्वयञ्ज्योतिः स्वयम्प्रकाश इत्यास्ता तावत् । न चास्येदृ-शस्य पराधीनमेव सत्त्वभानमसत्त्वशङ्काविरहो वा । भावाभावापवादविकल्पि-तरूपभाने पराधीनेऽपि प्रकाशसत्तामात्रभाने परानपेक्षत्वात् । तच्च विवक्षित दृश्यत्वमिति कानैकान्त्यम् ॥

---

### दृश्यत्वनिरुक्तिः ।

अथवा प्रमाणाजन्यज्ञानविषयत्व दृश्यत्वम् । परमतेन दृष्टान्ते साध-नावैकल्याय वेदान्तजन्यज्ञानविषय आत्मन्यव्यभिचाराय च प्रमाणाजन्येति । न चान्यतरासिद्धिः । परमतेऽपि तादृगीश्वरज्ञानविषयत्वाभ्युपगमात् । अस्म-न्मते च प्रमाणाजन्यचैतन्यविषयत्वाङ्गीकारात् । न चैवमपि स्मृतिविषयत्वेन व्यभिचारः, प्रमात्रव्यवहितसंविदात्मनः स्मरणानुपपत्तेः । न च भ्रान्तिविषय-त्वेन, तस्यैव बाध्यविषयभानत्वेन भ्रान्तितया तद्विषयत्वासिद्धेः ।

यत्तु — एवमपि जीवस्यापि पक्षत्वे भागासिद्धिः । जडमात्रपक्षत्वे चात्मनित्यत्वादिधर्मेष्वनैकान्त्यमित्यादि । तन्न । नहि पृथिव्यादेरिव गन्धा-दयो जीवस्य नित्यत्वादयो धर्माः साध्यन्ते । किं तर्हि । तत्तद्वादिकल्पिता-नित्यत्वादिविरोधिस्वरूपोपलक्षणभूता निर्दिश्यन्ते । न च तेषा दृश्यानामपा-रमार्थ्येऽपि तद्विरोधिस्वभावस्योपलक्ष्यस्य कश्चिद् दोषः । न खलु प्राच्योप-

लक्षितं प्रतीचीन भवति । न वोपलक्षणसर्पादिमृषाभावेऽपि तदुपलक्ष्य-रज्ज्वादिररज्ज्वादि । नहि नित्यत्वयोगितया नित्य, तस्यैवानित्यत्वे वस्तुनोऽप्यनित्यत्वप्रसङ्गात् । किन्त्वनित्यत्वविरोधिस्वरूपमेव । तच्च सत्तामात्रात्मनो नित्यत्वधर्माभावेऽपि न हीयते । अपिच जीवस्य ब्रह्मसत्तैकरस्यपारमार्थ्योपगमात्, तस्य च कालातीतस्यासङ्गस्य सर्वकालसम्बन्धरूपनित्यत्वासम्भव इत्यवादिष्म[1] । एवं प्रत्यक्त्वादयोऽपि नात्मधर्माः, परागादिविरोधिस्वरूपोपलक्षणत्वादिति । अथवा स्वेतरचैतन्याधीनभानत्वमेव दृश्यत्वम् । चैतन्याधीनभानत्वं तदधीनासत्त्वशङ्काविधुरत्व तदधीनव्यवहारत्व वा । चैतन्यात्मनोऽपि स्वाधीनभानत्वाद्, अत उक्त स्वेतरेति । न च स्वयम्प्रकाशचिदात्मनोऽपि पराधीनभानत्वम्, अनपेक्ष्यत्वादमानत्वाच्च ॥

---

## आत्मनोऽवेद्यत्वम् ।

अथ 'स एतमेव पुरुष ब्रह्म ततममपश्यत्', 'यो वेद निहितं गुहायां', 'यो वेदाह ब्रह्मास्मीति', 'आत्मा वा अरे द्रष्टव्य श्रोतव्यः', 'को मोहः क शोक एकत्वमनुपश्यत', 'इह चेदवेदीदथ सत्यमस्ति', 'यद् भूतयोनि परिपश्यन्ति धीराः', 'निचाय्य त मृत्युमुखात् प्रमुच्यते', 'ब्रह्म वेद ब्रह्मैव भवति',

"ज्ञेयं यत् तत् प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते"

'य एव वेत्ति पुरुषमि'त्यादिषु वेद्यत्व ब्रह्मणो गम्यते । नन्ववेद्यत्वमपि गम्यते 'अदृश्येऽनात्म्ये', 'अगृह्यो नहि गृह्यते', 'येनेद सर्वं विजानाति तं केन विजानीयाद् विज्ञातारमरे केन विजानीयात्', 'न विज्ञातेर्विज्ञातारं विजानीयाः', 'अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यम्',

"अन्यदेव तद् विदितादथो अविदितादधि"

'यत् तदद्रेश्यमग्राह्यं', 'स वेत्ति वेद्य न च तस्यास्ति वेत्ता', 'मां तु वेद न कश्चन',

---

१. 'षु' ख पाठ

"सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् "

इत्यादिषु । अयुक्तं चान्यतराप्रामाण्यम् । तुल्यं हि साम्प्रदायिकम् । वस्तु-स्वरूपं च न विकल्प्यते । कथं तर्हि व्यवस्था । बुद्धिवृत्त्या वेद्यमवेद्यं चैतन्येन । एवमुभयत्र विद्यर्थवैरूप्यकल्पना निर्मूला । बहिरन्तःकरणजज्ञान-भेदेन स्यात् ।

"न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥
एषोऽणुरात्मा चेतसा वेदितव्यः "

'मनसैवेदमाप्तव्यमि'त्यादिश्रुतेरिति । नैवं स्यात् ।

"नैव वाचा न मनसा प्राप्तुं शक्यो[1] न चक्षुषा"

इत्यविशेषनिषेधात् । न चाशुद्धमनोविषयो निषेधः ।

"यन्मनसा न मनुते येनाहुर्मनो मतम् "

'मनसो मनः' इत्यादौ मनोवभासकत्वेन सर्वशस्तदवेद्यत्वावगमात् । लोके-ऽपि तत्प्रकाशस्य तदप्रकाशकत्वदर्शनाद् ध्यानादिद्वारा स्वरूपावभासोपयो-गात् तु 'विशुद्धसत्त्वः पश्यते' इत्यादि । अन्यथोभयत्र विषयसङ्कोचे लक्ष-णापातात् । श्रुतेरवेद्यत्वोपपादनप्रकारो हि परं भिद्यते । 'नैव वाचा न मनसा प्राप्तुं शक्यः', 'नायमात्मा प्रवचनेन लभ्यः', 'नायमात्मा बलहीनेन लभ्यः'

"नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥",

'नैषा तर्केण मतिरापनेया' इत्यादिः । हन्त तर्ह्याचार्योपदेशानुपदेशाभ्यां वेद्यत्वावेद्यत्वव्यवस्था स्यात् ।

"अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते"

'प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ !', 'आचार्यवान् पुरुषो वेदे'त्यादिदर्शनात् । नैवमपि स्यात् । 'पश्यते निष्कलं ध्यायमानः'

"एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्म धाम"

---

१ 'द्रष्टुं यो' ख. पाठः.

'यमेवैष वृणुते तेन लभ्यः', 'धैर्येण तं विद्यादि'त्यादिसाधनाव्यवस्थानादेकरूपेण वेद्यत्वावेद्यत्वव्यवस्थाया दुष्प्रज्ञानत्वात् । अथ यथोदितसाधनसम्पन्नस्य वेद्यमन्यस्यावेद्यमित्यधिकारिभेदेन व्यवस्था स्यात् । नैवमपि स्यात् । 'न च तस्यास्ति वेत्ता', 'को अद्धा वेदे'त्याद्यविशेषनिषेधात् । अपिचैवमवेद्यत्वमवचनीयम् । साधनरहितस्य तदर्थसिद्धेः । न चेत्थ महाभाग ब्रह्म यदुत बहुसाधन विना अवेद्यमिति स्तुतिपरत्व स्वरूपविधिविशेषणस्याद्दश्यमित्यादेरुपगन्तु युक्तम् । अपिच क्रियोन्मुखमात्रस्य तन्निषेधो गम्यतेऽस्पृश्यमगृह्णीति । एवमदृश्यमिति द्रष्टृमात्रस्येति गम्यते । न पुनराक्षिप्तव्यतिरेकविशेषोपसहारो युक्तः । मा भूद् भूतहिसा कर्मणि त्रैवर्णिकस्य विहितेति तदहिसाविधावत्रैवर्णिकस्योपसहार इति । एव तु स्याद् वरावराचार्योपदेशभेदेन वेद्यमवेद्य चेति,

"न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः ।
अनन्यप्रोक्ते गतिरत्र नास्ति"

इत्यादिश्रुते । नैवमपि स्यात् । 'केन विजानीयादि'त्यविशेषतो विज्ञयत्वसाधनाक्षेपात् । वराचार्योपदेशे चागतिर्नास्तीत्यज्ञानाभाववचनेन वेद्यत्वाप्रतीते । 'अस्तीत्येवोपलब्धव्यः' इति श्रुते । स्वरूपेण वेद्यमियत्तया चावेद्यमिति व्यवस्था स्यात् । न स्यात् । इयत्ताभावादेव तथावेद्यत्वाप्राप्तौ तद्वैयर्थ्यात्, स्वार्थवृत्तिसम्भवे लक्षणयेयत्तानिषेधपरत्वकल्पनायोगाच्च । तस्माद् व्यवस्था वक्तव्येति ।

उच्यते —अवेद्यत्व तावत् स्वरूपविधिविशेषणमेव सर्वत्रोपादीयते । नैव वेद्यत्वम् । हेतुफलविधिशेषतया तु तद्विशेषणम् । 'यद् भूतयोनि परिपश्यन्ति धीरा' इत्यत्रापि भूतयोनिमिति विधेयविशेषणतया दृशेः स्वरूपानन्वयात् । तथाचावेद्यत्वेन विधेयेन बलवता दुर्बलमविधेय वेद्यत्वमुदितविशेषणस्याधिकारिणो गुर्वधीनस्य विचारितवेदान्तजन्यचरमवृत्त्याभिव्यक्त्या अविद्यादिबाधे चिदात्मा स्वरूपेणावभासत इत्यतस्तत्र दौवारिक पुरुषस्य स्वातन्त्र्यमपेक्ष्योपचारिकमवस्थाप्यते । तथाच 'दृश्यते त्वग्र्यया बुद्ध्ये'ति व्याख्यातम् ॥

एव हि

"अविज्ञातं विजानता विज्ञातमविजानताम्"

इत्यादि चोपपन्नम् । अन्यथा विरोधात् ।

यत्त्वाह — विजानतां विशेषेण कार्त्स्न्येन जानीम इति मन्यमानानामविज्ञात ब्रह्म ।

"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"

इति ह्याम्नातम् । अविजानतां न विशेषेण जानीम इति मन्यमानानां विज्ञातमिति । कथ पुनरत्र मन्यति[1]रश्रुत उपक्षिप्यते । 'यदि मन्यसे सुवेदेति दभ्रमेवापि नून त्व वेत्थ ब्रह्मणो रूप', 'नाह मन्ये सुवेदे'ति च प्रक्रमे मन्यतिग्रहणादिहापि तदर्थरूपप्रत्यभिज्ञानात् । सूपसर्गेण हि वेद्यस्यैव सतः कार्त्स्न्येन वेदनायोग्यत्व गम्यते । अन्यथा यदि मन्यसे वेदेत्येवावक्ष्यत् । न वात्मतत्त्वमुपादेक्ष्यतेति ।

अत्रोच्यते—ब्रह्मणोऽविज्ञेयत्वे कार्त्स्न्येन तदुपदेशानर्थक्यम् । वाङ्मनसाविषयत्वमपि हि कृत्स्नैकदेश एव चक्षुराद्यविषयत्ववत् । तत्र नेयत्तयेत्यधिकावापो युक्तः । व्याख्यातं च निर्विशेषपरं 'यतो वाचो निवर्तन्ते' इत्यादि । अपिच 'केनेषित पतति प्रेषित मनः' इत्यादाविषितमिति विशेषणात् सन्निधिमात्रेण मनःप्राणादिप्रेरकप्रश्ने, 'श्रोत्रस्य श्रोत्र मनसो मनः' इत्यादिना तस्य तस्य स्वरूपं श्रोतव्याद्यभिव्यञ्जकभावलक्षण चैतन्यमिति लक्षणत उत्तरिते, साक्षात् तदुपदेशापेक्षाया 'न तत्र चक्षुर्गच्छति', 'न सन्दृशे तिष्ठति रूपमस्ये'ति 'न वाग् गच्छति', 'अव्यपदेश्यं',

"नामरूपादिनिर्देशविशेषणविवर्जित."

इति । अत एवाविशेषणत्वाद् 'नो मन.' तस्य तस्यात्मत्वादवभासकत्वाच्च । एव सति न विज्ञोऽविषयतया । तथाच न विजानीमो यथैतदनुशिष्यात्, वेद्य हीदमीदृशमिति शक्यमाहृत्यानुशासितुम् । नैवमात्मेत्यतो मा भूदत्यन्तासिद्ध इति

---

1. 'तिश्रु' ख. पाठ..

"अन्यदेव तद् विदितादथो अविदितादधि"

इत्यतन्निरसनोपदेशमुखेन स्वयम्प्रकाशत्वमुपक्षिप्तम् । न धर्मादिवदलौकिकप्रमाणगम्यत्वमशब्दत्वादनुपपादनाच्च । तच्च स्वयम्प्रकाशत्व

"यद् वाचानभ्युदित येन वागभ्युद्यते ।
तदेव ब्रह्म त्व विद्धि"

इत्यादिना वागादिभासकत्वेन व्यक्तीकृत्य, बोध्यस्य वागादिसम्बन्धनिर्देशेन वक्त्रादिरूपात्मनि बुद्धिर्मा पर्यवसासीदिति विचाल्यते 'यदि मन्यसे सुवेदे'ति वेद्यादिभेदेन। तद्धि तस्य सौष्ठवं लोके दृष्टम् । इयत्ताया अप्रसङ्गात्। सविषय हि वेदनमात्मन्यपि वेद मामहमित्यभिमानावहमिति 'यदि मन्यसे'. इत्युच्यते । 'दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं', यदस्य त्व वेत्थ । 'यत्रान्यत् पश्यती'त्यादि 'तदल्पमि'ति श्रुत्यन्तरात् । यदनु देवेष्वस्य रूपमात्मभूत यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति तद् भूमाख्य सत्ताप्रकाशमात्रम् । अथनु ते अविदित मीमांस्यमेव मन्ये । अथ वा अथनु मीमास्यमेव मन्ये इत्याचार्येणोक्ते विदितमिति मीमांसितवत' शिष्यस्य वचन कथ नाह मन्ये सुवेदेति । अन्यदेव तद् विदितादिति ह्युपदिष्टम् । नो न वेदेति च मन्ये, अथो अविदितादधीति ह्युपदिष्टम् । कथ तर्हि वेद च । निवृत्तावरणस्वरूपावभासमात्रेऽपि सकर्मकर्तृवद्वचन प्रकारान्तरासम्भवादहमनुवृत्त्युपाधिकृतं, 'यदि मन्यसे सुवेदे'ति 'नाह मन्ये सुवेदे'ति च मन्यतिग्रहणात् सकर्मकर्तृकवेदनप्रतिक्षेपावगमात् । तदेव दृढीक्रियते । यो नोऽस्माक सब्रह्मचारिण: मध्ये तद् विदिताविदितान्यत्व वेद, कथ, नो न वेदेति । वेद च, चकारादितिरनुकृष्यते नो वेदेति चेति। स तद् ब्रह्म वेद तस्यैवैतस्य विदिताविदितान्यस्वरूपस्य गुरुशिष्याख्यायिकारूपाद् व्युत्थाय श्रुते[3] स्ववृत्त्योपसंहारोऽयं

"यस्यामतं तस्य मत मतं यस्य न वेद सः ।
अविज्ञात विजानताम्"

इत्यादिः । तत्र विशब्दो यद्यवश्यमैकार्थ्यासम्भवेऽपि विषयविशेषपरः, तदा वेद्यादिभेदविशेषपर एव स्यात् । तथाच सूपसर्गो व्याख्यातः । न चात्र

१. 'शनमु', २. 'स्वप्र', ३ 'तो' ख पाठ.

क्वचिदपि वेद्यत्वमात्मनः सङ्गम्यते । प्रत्युत 'न विद्म' इति व 'अन्यदेव तद विदितादि'ति च 'न वेदे'ति चावेद्यत्वमेवाभ्यस्यते । अपिच

"चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति"

इत्यत्र विदित्वेत्यपेक्षितमपि नोच्यते वेद्यता माधिगमन्निति । यत्त्वेव यदि मन्यसे वेदेतीत्येवावक्ष्यदित्यादि । तन्न । विदिताविदितान्यस्वरूपावभासस्यापि वेदेत्येव व्यपदेशेन श्रोतुराकुलीभावप्रसङ्गात । आत्मोपदेशश्च स्वरूपावभासपरिशेषार्थ इत्यनन्तरमावेदितम् ॥

---

### ब्रह्मणोऽदृश्यत्वे आक्षेपपरिहारा ।

अथापि स्याद् वस्तुवृत्तमेव तादृशं यदात्मनोऽपि वेद्यत्वम् । न । जडवृत्त हि तत् । अथ परोक्षत्वे सति भानमन्यचैतन्याधीन , स्वप्रकाशस्यापि सवेदनस्यातीतादेरन्यदीयस्य चानुमेयत्वात् । यदि चाभेदादविषयत्वमपेतस्वपरविवेक सर्व सर्वस्य सर्वदा भासेतेति सर्वप्रमाणानर्थक्यमापद्येत । अथैकमपि चैतन्यमुपाधिभेदभिन्नं व्यवतिष्ठेत, जीवः प्रमाता, ब्रह्म चान्यच्च व्यवहित प्रमेयमित्यापन्नम् । अथ यथास्वभावं भावस्य चैतन्यविषयत्वमपारमार्थ्यहेतु , तथा च घटरजतादि. स्वभावेन चिदात्मव्यवधानात् । ब्रह्मात्मचैतन्य तु परोपाधिभेदभिन्न व्यवहितमपि स्वभावेनाभिन्नमव्यवहित चेति कस्यान्यस्य चैतन्यविषयो भासेतेति चेद्, एव हि स्वयमेव नित्यावभास ब्रह्मेति किमागमिकविज्ञानेन । अनादिविभ्रमव्यवधानादागमिकज्ञानविषयत्वे ब्रह्मणोऽपि दृश्यत्व दुष्परिहरमिति ।

उच्यते—सत्तामात्रब्रह्मचैतन्यमेकमेकरसमेव नित्याव्यवहितावभासमपि स्वाभाविकाविद्याविकल्पकालुष्येण तथ तथा व्यवधीयते । मानाधीनविज्ञाने सति तु उज्झितव्यवधिकमवभासते सा च बुद्धिवृत्तिः । बुद्धिस्तु येनाहङ्कृतो[२], यद्वृत्त्या बोद्धा एष्टा द्वेष्टा वर्ता सुखी दुःखी भवति. येन च स्वप्नेड्[३] नानाभावाननुभवति, यद्विलये च स्वमपीतं. सता सम्पद्यते, येन च समान एकात्मा सन्नुभौ लोकावनुसञ्चरति तत् सत्त्व[५] न त्वात्मनो धर्म.

---

१. 'तौ बि' २ 'ते', ३. 'प्नन्दानाभावमनु', ४ 'ति'' ५ 'त्य' ख. पाठ..

प्रभेव । दीपस्य अग्रे ज्ञातृत्वनिरासात् । न चैव घटादिविकल्पो बुद्धिवृत्त्युपरागे सत्येव स्वयमवभासते, येन चिदात्मवददृश्य स्यात् । जाड्येन तस्य भान हि वृत्तिस्फुटितचैतन्याधीनमेव । न च वृत्तिरेव तद्भान, सत्याश्रये भवन्त्या अप्रकाशत्वाद् ज्ञानत्ववत् । एवमपि ज्ञानपदवाच्यत्वोपपत्तेश्च । नन्वेवमपि वृत्तेरुत्पत्त्यैव चैतन्याविविक्तवृत्तितया तद्विषयत्वनान्तरीयक चैतन्यविषयत्वमात्मनोऽप्यवर्जनीयम् । न । वृत्तिविषयत्व हि तदविनाभावित्व, तदाकारत्व, भाशमानरूपेण तन्निरूपकत्वम् । ईदृश च विशेषनिषेधविकल्पितरूपेणात्मनो वृत्तिस्फुटितचैतन्यविषयत्वमपि न नो वारणीयम् । नहि तावता तस्य स्वरूपेण तदधीन भानमसत्त्वाशङ्काविरहो वा । अतद्रूपबाधे स्वयमेवभानाद्, भानमात्रेऽसत्त्वशङ्कायोगाच्च । अथ प्रमातृव्यवहितेषु तदाकारवृत्तौ तदनुगतचैतन्यप्रतिफलनमेव हि चैतन्यविषयत्वमभिमतम् । तदधीनघटादिस्फुरणस्यान्यस्याभावात् । तच्च ब्रह्मण्यपि समानम् । इदमेव हि सैद्धान्तिक वृत्तिव्याप्यत्वं यदुत वृत्तिप्रतिफलनात्मक भानम् । अन्यथा तदज्ञानानिवृत्तेः ।

"ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्ष्यते"

इति हि सम्प्रदाय इति । नैवम् । वृत्तिव्याप्यत्व हि वस्तुन स्वाकारतापादनम् । तेन च प्रमातुरव्यवधानादपेताविद्यमन्यदन्यत्र चैतन्यप्रतिफलनादवभासते । स्वत एव प्रमातृसंविदव्यवहिते चाविद्याहङ्कारादौ न वृत्तिविषयत्व तद्व्याप्यत्वमपेक्षते । स्वत एव स्वानुगतचैतन्यप्रतिफलनेनावभासोपपत्तेः । अन्यथा ज्ञानसुखादिवृत्तीनामपि वृत्त्यन्तरापेक्षायामनवस्थानात् । तत्रैव सति सत्तामात्रसंविदात्मनि नैगमिकनिर्विशेषाकारवृत्त्या प्रमातृसंविदव्यवहिते तत्प्रतिफलनमशेषविशेषबाध एव, न त्ववभास । उपशान्तसर्वभेदस्य तस्य स्वमहिमावभासत्वात् । येऽपि विशेषनिषेधताटस्थ्येन तत्त्वमादिसामानाधिकरण्यात् संविदेकरसानन्दसत्तामात्रालम्बनामखण्डाकारामेव चरमवृत्तिमिच्छन्ति, तेषामपि तत्प्रतिफलन न स्वरूपावभासः, वृत्त्यैवोपसृष्टत्वात् । किन्तु कतकरजोन्यायेन तन्निवृत्तौ स्वयमेव । घटादिस्तु वृत्त्युपसर्गाभावे नावभासत एव, व्यवधानादचैतन्याच्चेति ॥

---

१ 'त्त्व', २ 'त्र' ख पाठ

[illegible]सापिदोरकान्त्यमात्मन्व च ।

[illegible] दात्मनोऽतिरिक्ता सत्ता संनेघस्य संविन्[illegible] वा, येन सत्ता-[illegible] [illegible]नानैकान्त्य स्यात् । [illegible] वा, [illegible]घवाद, विपय-[illegible] [illegible]वभासाच्च । ननु तुच्छव्यावृत्तरूप पमाणसम्बन्धार्हत्वम-र्थक्रियासाम[illegible] [illegible] सत्त्व भावेपु भवतामपि सम्प्रतिपन्न संविदोऽपि स्यात् । विषय[illegible]तसत्तारूपिता वा सा सत्तयावभासताम् । गवादिज्ञानस्यापि विपयवि-विक्तावभासित्वात् । अन्यथा कथमिवानुभवविरुद्धो विषयोपलापो विज्ञान वादिनाऽर्थीयेत । अपिच अस्ति घटोऽस्ति चैतन्यमस्ति ब्रह्मेत्यपर्यायेण सत्ता वैशिष्ट्यमेवावबोध्यते । तथाच

स्वरूपसत्सु भावेषु सत्ता यद्यनुयायिनी ।
परमार्थोऽपि दृश्येति नानैकान्त्यमतीयते ॥

उच्यते — व्यावृत्तारोपविच्छिन्नसत्तैव सन्तो भावा उपगम्यन्ते ।

सत्ता हि सर्वभावाना सामान्यात्मेति साधितम् ।
स्वात्मना सत्तयैवातः संवित्तिरवभासते ॥

संविद्रूप तु न व्यावर्तत इति वक्ष्यते । अपिच

प्रत्यस्तमितभेद यत् सत्तामात्रमगोचरम् ।
गिरा स्वयम्प्रकाशं तज्ज्ञानं ब्रह्मेति हि स्मृतिः ॥

अस्तीत्येवोपलब्धव्य इत्येषा याजुषी श्रुतिः ।
इत्येवेति चिदात्मान सत्तैकरसमाह नः ॥

सौ चानुवृत्तव्यावृत्तरूपभेदविकल्पिता ।
गौरस्तीत्याद्यपर्यायनिर्देशमभिपद्यते ॥

बुद्धिवृत्त्यविवेकेन संविद्यावृत्तिविभ्रमात् ।
संविदस्तीति सामान्यविशेषात्मविकल्पना ॥

तद्भावान्तरताभ्रान्त्या ब्रह्मास्तीति च कल्पना ।
अस्ति गौरस्ति संवित्तिरस्ति ब्रह्मेति चेदिति ॥

---

१. 'या', २. 'याला', ३ 'स' ख पाठः.

सामानाधिकरण्यात् तु सत्तामात्रमवस्यति ।
विषयैरुपसृष्टा च सा सत्तानुगता सती ॥
तत्तत्प्रमाणवृत्तीद्धा व्यज्यते व्यञ्जयत्यपि ।
विषयोपाधिविच्छिन्ना व्यङ्ग्यत्वेन विवर्तते ॥
प्रमावृत्तिपरिच्छिन्ना व्यञ्जकत्वेन भासते ।
विषयास्कन्दिताकारा सत्ता तद्रूपवर्तिनी ॥
चैतन्यानन्यरूपापि बुद्धिवृत्त्यावभासते ।
तस्मात् संविदभिन्ना सा न दृश्या नः कथञ्चन ॥

प्रयोगश्च — सत्संवित्तिपदे अभिन्नार्थवृत्तिनी तुल्यार्थवृत्तित्वाद् घटकलशादिवत् । न चासिद्धिः । घटः सन् पटः सन् संवित् सती घटो भासते पटो भासते संविद् भासते इत्यनुभवात् । एवमपि प्रवृत्तिनिमित्तभेदेन सत्यज्ञानपदापर्यायत्वमवोचाम । अन्यथा विषयप्रकाशसंविदन्यान्यत्वे गौरवाद् भेदमाननिरासाच्च । एवञ्च सर्वात्मसत्तैकरसचैतन्यात्मनो विकल्पितविशेषांशे चैतन्यविषयत्वेऽपि न दृश्यत्वं, स्वयभानात् । अन्यथा संवेद्यत्वे संविदो घटादिवदसंवित्त्वादिप्रसङ्गात् ॥

---

## संवित्स्वयम्प्रकाशत्वनिर्वचनम् ।

ननु स्वसत्तयैव विषयप्रकाशत्वं संवित्त्वं, स्वाश्रयं प्रति प्रकाशमानत्वं च स्वयम्प्रकाशत्वम् । अतद्रूपत्वाच्च घटादेरसंवित्त्वादि नानुभाव्यत्वादित्युक्तम् । दुरुक्तं तु तत्, तदभावात् तदभाव इ[1] शक्यावगमत्वात् । वेद्यत्वस्याप्यसंवित्त्वादिव्याप्तेश्च । अपिचावेद्यप्रकाशत्वमेवाज्ञानविरोधिरूपसंवित्त्वं, स्वप्रकाशत्वं चापराधीनभानत्वमात्रं लाघवात् ।

परस्यात्मनो निराश्रयविषयचिद्रूपत्वस्वयम्प्रकाशत्वोपगमेन विशेषणायोगाच्च । यथाह तान्त्रिकः — 'न चाहमर्थोऽन्याधीनप्रकाशः', स्वयम्प्रकाशत्वात् । चैतन्यस्वभावता हि स्वयम्प्रकाशते'ति । 'चिद्रूपता हि स्वयम्प्रकाशते'ति च । 'ज्ञानत्वमेव हि ज्ञानस्य स्वयम्प्रकाशत्वमि'ति श्रुतप्रकाशिकाकारश्च ।

१ 'नु' स ख. पाठ

न च विषयसंविदोऽन्यत् संवित्त्वादि अन्यच्च चिदात्मन इति युक्तम् । स्वभावाविशेषात् । अहं संवेद्मीत्यवभासश्च परोपाधिक इति विभावयिष्यते । तच्च वेद्यत्वे विरुध्येत । यत्तु अवेद्यत्वेऽपि खपुष्पवदसत्त्वादि प्रसज्येतेति, तत् तान्त्रिकस्य वाचाटताव्यसनमुपक्रोष्टव्यम् । भानमात्रं हि सत्त्वनिबन्धनं न पराधीनमेव, गौरवात् । न च वेद्यत्वमेव संवित्त्वादि । नापि तद्व्याप्यं, घटादावपि प्रसङ्गात् । तवापि स्वसत्तायामवेद्यत्वेऽपि संवित्त्वाद्युपगमाच्च । न च संवित्त्वादिव्यापकता वेद्यत्वस्य क्वचिदवधारिता, येन व्यापकनिवृत्त्या तन्निवर्तेत । न च संविदो वेद्यत्वे मानमस्ति । येन तत्रासंवित्त्वादिप्रसञ्जनमाभाप्येत । स्वत एव हि भानमसत्त्वशङ्काविरहो वा ॥

---

## अतीतादिसंविदोऽनुमेयत्वनिरासः ।

अतीतादेरनुमेयत्वमिति चेद्, न । नहि संवित्सत्तैवानुमीयते अहमन्वभूवं, स्मृतिमत्त्वात् । प्राक्कालोऽनुभवकालः स्मृतिमदुत्तरकालावधित्वात् । अयमुपलब्धिमान् हानादिमत्त्वादित्येव परोपाधिवैशिष्ट्यांशेनैवानुमेयत्वात् । सर्वमेव हि सिद्धसत्ताकमाश्रयसम्बन्धांशेनैवानुमेयम् । अत एव न्यायिनोऽपि पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिमनुमानफलं ब्रुवते । परं तु तत्र सिद्धोऽपि साध्यधर्मो विषयीक्रियते नानुभवस्वरूपम् । अनुमितिवृत्तेरपि निर्भासकतया स्वयमवभासात् । स्मृतेरनुभवपूर्वकत्वानुमानेऽन्यत्र वा तद्घटितसाध्यके[1] प्रागनुमितेरनुभवानवभासे चानुमानस्यैवानुदयात् । न च स्मृतेर्व्यवहारस्य वा सकारणकत्वमनुमेयमर्थान्तरत्वात् । तदनुभवावभासश्च स्वत एव, हेत्वन्तरानिरूपणात् । इदानीमसन्ननुभवः कथं स्वतो भासतामिति चेद्, ननु स्मृतिवृत्त्याद्यनुभव एवास्ति तद्धेतुरन्योऽनुभव इति चेत् । तथापि यतोऽयमवभासते, तत एवान्योऽपीति वक्तव्यम् । तदा साधकान्तराभावात्, स्मृत्यनुभवतदनुभवानामन्यान्यत्वे सत्येककालत्वासम्भवाद्, भिन्नकालत्वे च साध्याधिगमकाले पक्षाद्यसिद्धेरनुमानायोगात् । साम्प्रतिकः स्मृत्यनुभवस्तदुपनीतं च स्मरणमेकज्ञाने भासेते इति चेत्, तथापि घटानुभवानुमाने कथम् ।

---

१. 'गे' ख. पाठः.

न खलु घटस्मृत्यनुभव एव घटानुभवः, घटस्याप्यपरोक्षत्वापत्ते । भ्रान्त-भ्रान्तिज्ञसङ्करापत्त्या परस्य तदसम्प्रतिपत्तेश्च । अत स्मृतिसंविदेव स्वाव भासा स्मृत्यनुभव तदनुभवानुभवो वेति कथमन्यत्वे पूर्वानुभवस्य स्मृत्यनुभवैकानुभवत्वं स्यात् । अनुभवस्य स्वस्वविषयावभासकतया तदाहितसंस्कारेण स्मृत्यैव विषयवदुपस्थितौ विषयस्मृत्या तदनुमानवैयर्थ्यात् । न च स्मृतिसंविद्रूप एव स्मृत्यनुभवे स्वयमुपतिष्ठमानेऽनुभवजात्यान्यस्यैव पूर्वानुभवस्योपस्थितेरनुमानाविरोध इति वाच्यम् । संस्कारजन्यवृत्त्युपाधौ संविद. स्मृतित्वे सत्यसदनुभवत्वावभासायोगात् । न च वेद्यांशे स्मृतित्वेऽपि स्वात्मनि सर्वापि संविदनुभव एवेति वाच्यम् । नहि विषयोपाधिक संविद स्मृतित्वम्, अनुभवस्यापि तद्विषयत्वात् । किन्तु कारणाधीनोपजनस्वरूपमेव । संविच्च स्व-स्वधर्मावभासेति स्वीकृता तव स्मृतिरूपैव भासताम् । किमशविकल्पनया । अस्माक तु मानवृत्त्युपाधिकानुभवत्वावभासविषयसंविदाहितसंस्कारसाधारण्येन विषयस्मृत्यैवोपस्थितानुभवस्य वैकल्पिकांशेनैवानुमितिविषयत्वोपगमादपर्यनुयोगः । नन्वेव स्मृतिविषयत्वमेव वेद्यत्वमनुभवस्यापन्नम् । न । स्वावभास संविद एव विषयवृत्तिभेदविच्छेदमात्रावभासित्वाद्, वृत्तिभेदाविषयत्वस्यानिवार्यत्वाच्च । अनुभवस्वरूप तु स्वयमवभासते । प्रकाशतावन्मात्रस्य तस्याभेदेनातीतत्वाद्यसिद्धे. । अतीतादिभेदस्य दृष्टिश्रुत्यादिभेदस्यान्यस्य च करणभेदाधीनवृत्तिभेदोपाधिनिबन्धनत्वोपपत्तेः ।

परस्यापि प्रकाशायुतसिद्धज्ञानवृत्तिभेदसम्प्रतिपत्तेः । परन्तु स्वतन्त्रनित्यप्रकाशाविवेकादेव तदयुतसिद्ध्युपपत्तौ तस्य पृथक् प्रकाशगुणत्वकल्पनागौरवमधिकम् । न चान्याय्योऽपि यथानुभवमर्थोऽभ्युपेय, येन प्रकाशस्यैव स्वतो निरुक्तभेदोऽवस्थाप्येत । अतिप्रसङ्गो हि स्यात् । एवमुभयसम्प्रतिपन्नस्य स्वावसितावभासस्वभावस्याप्यात्मचैतन्यस्यैव विषयाञ्जनेन तदवभासत्वोपपत्तावतिरिक्तविषयसंविदभ्युपगमे गौरवात् । 'तमेव भान्तमनुभाति सर्वमि'त्यादिविरोधाच्च । विषयसंविदमपि भान्तीमनुभानेन तमेवेत्यवधारणासामञ्जस्यात् । अत एव प्राथमिकानुपजातविरोधावधारणविरोधात् 'तस्य भासा सर्वमिद विभाती'ति न तद्धर्मभूतज्ञानेनेत्येवम्परम् । किन्त्ववधारणस्थितये विकल्पमात्रम् ॥

---

१. 'क' ख. पाठ..

## आत्मनोऽणुपरिमाणत्वम् ।

ननु नात्मस्वभावसंविदेव विषयावभासा, असम्बद्धावभासेऽतिप्रसङ्गात् । 'एषोऽणुरात्मे'त्यादिश्रुतेरणुमात्रात्मन. शरीरादनपसृतस्याक्षद्वारा विषयसम्बन्धायोगात् । अन्यथा प्रतिविषयज्ञानमजीवनप्रसङ्गात् ॥

---

## ज्ञानस्य जन्यत्ववादिमतनिरासः ।

अत एवात्मगुणो ज्ञान प्रमाणादुपजायते तदेव विषयावभासीति निरस्तम् । मनस्संयोगाद्यसमवायिदेशोपजनस्य तस्य बहिर्विषयासश्लेषात् । गुण्यात्मविभुतया तद्द्वारसंबन्धस्य साधारण्येन विषयानियमात् । न च तत्र जाति भेदा कल्प्यन्ते, येन घटपटादिजातीया इव द्रवधारणमूर्तप्रावरणादिपु गोघटादिपु व्यवतिष्ठेरन् . परोक्षत्वापरोक्षत्वादिसाङ्कर्यात् । न च विषयेपु, येन वर्षादिविषयश्चर्म न वियदित्यादिवद् व्यवतिष्ठेरन् । उपन्यासे विषयेशक्तिव्यवस्थानाद्, ज्ञानस्यै चावभासशक्तिसाधारण्यात् । न च तदुद्देश्योपजनत्वं व्यवस्थाहेतु ज्ञानोद्देश्यत्वानिरूपणात् । नहि ज्ञानमविद्यमान स्वसाध्यतयाँ किञ्चिदुल्लिख्य पश्चादुत्पद्यत इति सुवचम् । उद्दिष्टानुद्दिष्टसर्वसाधारणालोकेषु व्यापाराणै व्यभिचाराच्च । न च दृष्टे नियामके सम्भवत्यदृष्टात् स्वभावाद् वा विषयनियमो युक्त' । तद्विषयव्यवहारजनकतया तत्प्रमाणजन्यतया वा ज्ञानस्य तद्विषयत्वनियम इति चेद्, न । तद्विषयत्वातिरिक्तनिरुक्तजन्यजनकतावच्छेदकापरिचयात् । अथ स्वरूपसतैवोदीरितजन्यत्वादिना धीविषयनियमो न ज्ञानेन, येन तदवच्छेदकपरिचयापेक्षाया तद्विषयत्वातिरिक्तानिरूपणादन्योन्याश्रय. स्यात् । अनन्तर च स सन्नेव यथायोगं परिच्छिद्येतेति चेत् । एवमपि साधनादिव्यवहारजनकफलादिज्ञानस्य तद्विषयत्वप्रसङ्ग. । ज्ञानाद्वारकव्यवहारजनकत्वमिति चेत् । हानादिधीद्वारा तज्जनकघटादिसविकल्पस्यातद्विषयत्वप्रसङ्गः । गङ्गायां घोष इत्यादौ च शब्दस्य

---

१ स' २ 'चि', ३. 'स्याव', ४ 'ष्ट', ५ 'दौ श', ६ पाठ'.

तीरमात्रवृत्ततया शाब्दबोधो गङ्गासम्बन्धादिविषयो न स्यात्[१], तत्प्रमाणाजन्यत्वात् । अपिचैव विशेषणतासम्बन्धस्याभावप्रमाणतोपगमात् तज्जन्यज्ञानस्य प्रतियोग्याद्यविषयत्वप्रसङ्ग. । अपिच तत्प्रमाणत्व तद्विषयप्रमाकरणतातिरिक्त ज्ञानाज्ञानसाधारण दुर्वचमिति तज्जन्यत्वेन ज्ञानस्य तद्विषयत्वनियमपरिच्छेदमपीच्छत इतरेतराश्रयत्वम् । तदिन्द्रियसयोगेत्यादिविवक्षायामननुगमात् ॥

---

## नित्यात्मसंविदो विषयावभासकत्वाक्षेपः ।

नित्यात्मसविदा च विषयस्य सहजसम्भेदे नित्यावभासप्रसङ्गः । विषयोपाधिव्यवहितसविद आवृतत्वान्नैवमिति चेद्, नित्यानवभासप्रसङ्ग. । बुद्धिवृत्त्या तदावरणभङ्गे च बुध्यते जानाति सवेत्तीत्यनर्थान्तरत्वाद् विपयावभासात्मना बुद्धिसविद्विकासावस्थयैवोपपत्तावितरवैयर्थ्यात् । अपिच, कयापि बुद्धिवृत्त्यावरणभङ्गे सर्वविषयावभास स्यात् । तद्विषयवृत्त्या तदावरणभङ्ग इति चेत् । कि पुनस्तद्विषयत्व वृत्तेरिति वक्तव्यम् । तदवभासत्व तवानिष्टम्, असवित्त्वात् । विषयसम्भिन्नसविदभिव्यञ्जकत्वमिति चेत् । न । आवरणभङ्गातिरिक्ताभिव्यक्त्यनिरूपणात्, तेनैव तन्नियमे चात्माश्रयात् । किंविषयसविदं का वृत्तिरभिव्यनक्ति[२]त्यनियमाच्च । तदाकारत्वमिति चेत् । न । किमाकारा का वृत्तिरित्यनिरूपणात् । किञ्च नालोकादेरेव विषयतुल्यसन्निवेशविभाव्यत्व तदाकारत्वं, गन्धरसादौ सन्निवेशविशेषाभावात् । गोर्गोत्व शुक्लस्य शुक्लत्वमित्यादिराकारश्च न स्वतोऽन्यतो वा बुद्धिवृत्तेरुपपद्यते, वैजात्यात् । आहुश्च—'अनाकारामेव बुद्धिमनुमिमीमहे' इति । तत्प्रकाशकचैतन्यप्रतिबिम्बोपाधित्वं तदाकारत्वमिति चेद्, न । किंवृत्तिप्रतिबिम्बितचैतन्य कस्यावभासकमित्यनियमात् । तदाकारवृत्तिप्रतिबिम्बित चेद्, अन्योन्याश्रयात् । तद्रूषितावभासत्व तदिति चेद्, किंरूषिता कावभासतामिति नियमाभावात्, प्रमाणस्य वृत्तिस्वरूपोपजनोपक्षयात् ॥

---

१ 'त्, प्र' मा, २ 'व्यक्तिर' ख पाठ

## धर्मभूतज्ञानस्य विषयावभासकत्वम् ।

[illegible]मेव दीपस्यात्मनो धर्मो ज्ञानं सङ्कोचविकासशीलमुपेतव्यम्। न चाणुत्वे विभुत्वे वा तस्य तदनुपपत्तिः। मध्यमपरिमाणस्य च सोपादानत्वे [illegible]नित्यत्वायोगाद् अन्योपादेयं तदनात्मधर्मः स्यादिति वाच्यम्। [illegible]स्य विषयावभासतातदभावावस्थाभेदोपपत्तेः। न च विभुत्वे ध[illegible] 'अहं सर्ववेद्मि', 'सर्वं ह सर्वं पश्यति', 'विज्ञातारमि'ति चानुभ[illegible]सिद्धविशेषणतयैवात्मधर्मत्वे विभुत्वादेरतन्त्रत्वात्। अन्यस्य च [illegible]रणधर्मत्वप्रयोजकस्य दुर्वचत्वात्। तत् तु संसारे करणाधी[illegible]विकासं भवति। मुक्तौ च यावत्कर्मावरणभङ्गे परमात्मयोगध[illegible]विषयावभासविकासमिति विशेषः। नहि विषयावभासनातिरिक्तो ज्ञानस्य विकासो नाम, येन तत्स्वरूपोपजनोपश्लेषणे माने कस्य को विषयः स्यादिति परं नियामकमपेक्ष्येत। सा च ज्ञानस्यावस्थान्तरमिति ज्ञानस्य मानजन्यत्वव्यवहारः। अत एव 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुतिरुपपन्ना सङ्कोचविकासावस्थानामन्यान्यत्वेऽपि ज्ञानस्वरूपनित्यत्वानपायादिति॥

---

## धर्मभूतज्ञानस्य सङ्कोचविकासानुपपत्तिः ।

अत्राभिधीयते—कोऽर्थो नित्यस्यैव ज्ञानस्य विषयावभासताविकास इति। नहि तस्य धर्मो विषयप्रकाशो जायेत, स्वाश्रयोपाधौ प्रकाशगुणस्याजन्यत्वात्। आलोकादिना सहैव शुक्लभास्वररूपमयस्यापि प्रकाशस्योदयोपगमात्। 'उत्पन्नं द्रव्यं क्षणमगुणमि'ति परिभाषामात्रत्वात्। नापि विषयव्यापिता, ज्ञानजन्माद्यनुभवानाञ्जस्यात्। आन्ध्यसावयवत्वानित्यत्वपरिहाराय स्वत एव व्यापित्वस्योपेतत्वाच्च। अतीतादिपरोक्षविषयव्याप्त्यनुपपत्तेश्च। ज्ञानस्यावस्थान्तरपरिणामो विषयावभासतेति चेत्। न। मुक्तावपि सर्वविषयावस्थान्तरपरिणामोपजने परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते नागन्तुनेति न्यायविरोधात्। परिणामिनो नित्यत्वव्याघातादवस्तुत्वाच्च।

"यच्चान्यथात्वं द्विज याति भूयो न तत् तथा तस्य कुतो हि तत्त्वम्"

इत्यादिस्मृतेः। ततश्च नित्यत्वाभ्युपगमविरोध । तथाच सूत्र 'न च पर्यायादप्यविरोधो विकारादिभ्य' (ब्र० २ २ ३९) इति । अथ सर्वविषयावभासस्वभावस्य कर्माविद्यावरण सङ्कोच । तद्भरणभङ्गश्च विपयावभासविकास इत्युच्येत, ।वेद्यादेरिवाक्षसन्निकर्षादेरपि तत्र शक्तिरमाना कल्प्येत.। अपिचैवमात्मस्वरूपज्ञानमेव सङ्कोचविकासशीलमस्तु, तवावस्थाभेदपरिवृत्तावपि नित्यत्वानपवादात् । 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इत्यादि च शक्त्यवशेषाभावनिषेधपरमस्तु अभ्युपगमलाघवात् । तत एव ज्ञातृत्वाद्युपदेशोपपत्तेश्च । मुक्तावप्यात्मन एव सर्वावभासताविकासावस्थोपपत्तेरिति ॥

---

## आत्माणुत्वभङ्ग ।

यत्तु पर आह — अङ्गारादर्चिष इव नवनीतपिण्डाद् घृतमिवाणोरेवात्मनो विभज्यमाना सविदो विपयावभासा कारकाधीना इति न नित्योपलब्ध्यादिप्रसङ्ग इति । तन्न । अङ्गारो हि सावयवोऽशेन विभज्येत । नवनीत चाशेन विलीन विभज्येत । आत्मा तु निरवयवोऽणुमात्र कथमशेन विभज्येत । विभज्यमानो वाशो यदि खण्डेड[1] इन्दुमुपसर्पेत्, त्रिचतुरपर्यायैरात्मापचितोऽभावमापद्येत, विषयश्चात्मनो न भासेत । अथाखण्डित स चेन्न सङ्कुचति, आत्मा बहिरपकृष्येत, विषयान्तर च न भासेत । अथ विशिष्टस्यैकदेशोऽश स च सङ्कोचविकासशीलो धर्म आत्मन इत्युच्येत, पूर्वपक्षादविशेष इति ।

वय तु पश्यामः— न तावदणुरात्मा 'स वा एष महानज आत्मे'त्यादिश्रुते । यथा 'बुद्धेरात्मा महान् पर.' इत्यात्मसामानाधिकरण्यान्न साङ्ख्यीयं महत्तत्त्व गृह्यते, एव 'महत. परमव्यक्तमि'ति न प्रधानमिति तवापि 'महद्वच्च' (ब्र० १. ४ ७) इति सूत्रे विवक्षितत्वात् । न च महत्त्वमिह प्राधान्यमुच्यते, पर इत्येव तदुत्कर्षस्यापि लाभात् । अणुत्वविरोधिस्वरूपपरत्वे महच्छब्दस्यार्थविशेषलाभोपपत्तेः । यद्यपि रथिरूपकविन्यस्तो जीव इहावमृश्यते 'बुद्धेरात्मे'ति, तथापि स्वरूपविशेषणमस्य महानि-

---

१, 'त्मा', २ 'त दन्दमु' ख पाठ

त्यभ्वर्पारातिरेको मा शङ्कीति । नहि जीवो नाम ब्रह्मणोऽतिरिच्यते। 'तत् त्वमसी'त्यादिश्रुते. सत्तात्मकत्वाच्च । तथाच गुणमुख्यव्यतिक्रमे तदर्थत्वाद् एषोऽणुरात्मान्याय्यकल्पनया नेतव्य, यथा ज्यायानेभ्यो लोकेभ्य. परमात्मा अणीयान् व्रीहेर्वा यवाद् वा निचाय्यतया परोपाधिना नीयते, तद्वत् । अन्यथा 'एषोऽणुरात्मा', 'आराग्रमात्रो ह्यवरोऽपि दृष्ट.',

"वालाग्रशतभागस्य शतधा कल्पितस्य य ।
भागो जीव स विज्ञेय. स चानन्त्याय कल्पते॥"

'अङ्गुष्ठमात्रो रवितुल्यरूप.', 'स एष इह प्रविष्ट आनखाग्रेभ्य', 'एष प्राज्ञ आत्मेद शरीरमात्मानमनुप्रविष्ट आलोमभ्य आनखेभ्य.', 'अस्य सोम्य! महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेत् स एष जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठत्यस्य यदेका शाखा जीवो जहाती'त्यादिपरिमाणविप्रतिषेधस्यासमाधेयत्वात् । नहि स्वाभाविकेऽणुत्वे महत्त्वादि शक्योपपादम्। न[२] च सर्वस्याप्यात्मोपग्रहाविशेषे स्वरूपेणाणुत्व, हृदयद्वारकमङ्गुष्ठमात्रत्व, स्वधर्मद्वारकमपरमिति व्यवस्थापयितु शक्यं, स्वारस्यहानात् । हृदयस्यात्मापृथक्सिद्धविशेषणत्वे मानाभावेन ज्ञानधर्मत्वे च तद्द्वाराङ्गुष्ठमात्रत्वाद्ययोगाच्च । महत्त्वे तु स्वाभाविके कयाचित् कल्पनया सर्वं सूपपादम् । महत्त्व ह्यात्मनस्त्रिविधपरिच्छेदविरोधिस्वरूप सर्वव्याप्त्यनुरूप, न परिमाणभेद । 'अस्थूलमनण्वि'त्यादिनिषेधात् ॥

---

### अणुत्वश्रुत्युपपत्तिः ।

तदस्य 'यदणुभ्योऽणु च', 'अणीयान् ह्यतर्क्यमणुप्रमाणादि'त्यादौ निरवधिपरमाणोरप्यणुपरिमाणावगमायोगादणुत्वमनन्तराबाह्यत्वे सति सर्वान्तरतारूपमुच्यते । सलिलानलानिलनभसां सौक्ष्म्यतारतम्येन व्याप्तितारतम्योपलम्भात् । आत्मा तु सर्वात्मा परमसूक्ष्म इति 'एषोऽणुरात्मा चेतसा वेदितव्यः' इति । एवमाराग्रशब्दिततोत्रप्रोतलोहशलाकाग्रोपमितत्व वाला-

१ 'प' क पाठ २ 'ननु च' ख पाठ.

अशततमभागशततमभागोपमितत्व च न परिमाणत', परस्परविरोधात , तत्रै-वाङ्गुष्ठमात्रत्वविरोधाच्च । किन्त्वौपाधिकाल्पत्वमात्रोपलक्षणम् । एकत्र 'बुद्धे-र्गुणेने'ति परत्र 'जीव' इत्येवान्यत्र 'सङ्कल्पाहङ्कारसमन्वितो य' इति चोपा-धेरुपादानात् ॥

---

## स चानन्त्याय कल्पते इतिश्रुत्यर्थः ।

अत एव विरोधादणुत्वेऽनवस्थिते स चाविद्यया प्रागल्पीभूत सन्ना-नन्त्याय 'सत्य ज्ञानमनन्त ब्रह्मे'ति श्रुतानन्तब्रह्मभावाय 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिश्रुताय कल्पते विद्ययेत्युच्यते । एतेनानन्तब्रह्मैक्यमशब्दार्थ, आरोग्याय कल्पत इत्यत्रान्यारोगैक्यवत् । नित्यस्य च विलयनेन घृतादि-वत् प्रसर्पणमयुक्तम् । सङ्कुचितपटस्येव वितायनं चाप्रामाणिकमित्य-नन्यगत्या ज्ञानद्वारकमानन्त्यमिति तान्त्रिकस्य प्रलापः । आनन्त्यमात्मनः स्वभाव इत्युक्तगत्यानन्त्याय कल्पत इत्यनन्तरायोपपत्तौ व्यवधिक्लृप्तेरन्याय्यत्वात् ॥

---

## अङ्गुष्ठमात्रत्वाद्युपपत्ति ।

स चाय जीवोपाधिर्बुद्धिसत्त्वं सङ्कोचविकासशीलमवस्थाभेदेनाग्निरि-वाय.पिण्डमखिलमङ्गमभिव्याप्नुवदविद्यास्कन्दितमात्मानमवगृह्णातीति स लिङ्ग-मयो जीव' प्राणाना धारको बोद्धादिरूप. शरीरमात्रो भवति । हृदयायत-नावच्छिन्नबुद्धिपरिच्छेदेनाङ्गुष्ठमात्र उच्यते । 'हृद्यपेक्षया तु मनुष्याधिका-रत्वात्' (ब्र० १ ३. २५) इति च सूत्रम् । केशसहस्रतमभागसम्मितासि-रासरणार्हातिसङ्कुचितबुद्धिसवलनेन चाराग्रमात्र इति । अविद्या तु जीवस्य परम उपाधिरिति तदनुवृत्त्या सर्वानुगतोऽपि स शक्तिवृत्तिभ्यामापीतेरनुवर्त-मानबुद्धिसत्त्वादविविक्तवृत्तितया विच्छिद्यत इवबुद्ध बुभुत्सतेऽलब्ध च लि-प्सते । न च 'एष आत्मा निष्क्रामती'ति केवलात्मनो निष्क्रमणमुच्यते

---

१ 'च्चौ', २. 'चायवि', ३ 'करसे' ४ 'त्त्वविं' ख. पाठ

येन तेन स्वाभाविकमणुत्वमाक्षिप्येत । 'एकीभवति न पश्यतीत्याहुरि'त्यादिप्रकृतसम्पिण्डितकरणैक्यापन्नमेव ह्यवमृशत्येष इति । न च 'तमुत्क्रामन्त प्राणोऽनूत्क्रामती'ति व्यतिरेकवचनमपि 'स समान सन्नुभौ लोकावनुसञ्चरती'ति प्रकृतविज्ञानोपाधिकात्मनोऽवमर्शमुपरुन्धे, अनन्तरप्रकृतकरणैक्यापन्नस्यैव वा 'कस्मिन् न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामी'ति परोपाधिकत्वश्रुतिविरोधात् । किन्त्वभिषेण्यन्त राजान परिजनोऽन्वभिषेणयतीतिवत् प्राधान्यविवक्षाभेदेनावयुत्यनुवादमात्र 'तमुत्क्रामन्त प्राणोऽनूत्क्रामती'ति । लक्षणार्थो वा गता भविष्यति । तेन सकृत् सलिङ्गस्यैवोत्क्रमण गंस्यते । एतेन गत्यागती च व्याख्याते ।

अन्यथा 'सर्वमाप्नोति सर्वेशः', 'स इद सर्व भवती'ति मुक्तौ सर्वात्मत्ववचन, येन सर्वमिद ततमि'ति स्वरूपेण सर्वव्याप्तिवचन,

"नित्य. सर्वगत स्थाणुरचलोऽय सनातन."

"पुमान् सर्वगतो व्यापी आकाशवदसयुतः ।
कुतः कुत्र क्व गन्तासीत्येतत् स्यादर्थवत् कथम् ॥
सोऽह न गन्ता नागन्ता नैकदेशनिकेतनः ।"

(विष्णुपु० अं० २ अ० १५ श्लो० २४, २५)

इत्यादि चलनगत्यागतिविरहवचन च वञ्चनपरमापद्येत । अल्पत्वेनात्मनः घटादिवदनित्यश्च प्रसज्येत, 'अथ यदल्प तन्मर्त्यमि'ति श्रुतेः ।

अपिचैव मुक्तव्यूढकाया निरात्मान प्रसज्येरन् । तत्र च 'प्रदीपवदावेशस्तथाहि दर्शयति' (ब्र०. ४. ४ १५) इति विरुध्येत । अथ प्रभयेव दीपस्य विषयेषु ज्ञानेनात्मनोऽपि कायेष्वहमभिमानानुगुणस्वसङ्कल्पादावेशः स्यात्, किमतः । नह्येव तस्य तत् । कुतो भोग स्यात । मित्रस्याहमभिमानानुगुणज्ञानव्याप्तावपि मित्रके हिताहितातिहानार्थस्पन्दादृष्टेः । प्रदीपदृष्टान्तवैरूप्याच्च । न च स्वरूपस्यैकदेशस्थत्वेऽपि धर्मस्य प्रदेशान्तरे कार्यकर-

त्वमात्र दृष्टान्तोपजीव्यमिति युक्तम् । एवं[1] हि कथमनेकशरीरेष्वेकस्याणो-रात्मनोऽहमित्यनुभव इति चोद्यपरिहारे यत्नान्तरमन्विष्येत । तस्मादस्मिता-लक्षणाहमात्मन एवैकस्याविद्यकस्यानुगतस्य निर्माणचित्तभेदानुषङ्गेण नानादेहे-ष्वहमित्यावेश. प्रदीपस्यैकस्यैव स्नेहदशाभेदेष्विव स्वरूपावेश इति युक्तम् ।

अपिचैव सर्वाङ्गीणशैत्याद्यनुपलम्भप्रसङ्ग । न च आ नखाग्राद् आ च केशान्तादात्मधर्मो ज्ञानमहमभिमानात्मकाविकासमुपेतमपि विषयविकासावस्था-न्तरमापद्यत इति क्षममुत्प्रेक्षितुम् । पिण्डघटादिषु प्रागवस्थाविरोधिनी हि परावस्था दृश्यत इति आत्मधर्मस्य ज्ञानस्य नानावस्थाभेदिनोऽसम्भवाच्च । अपिचैवमात्मनो न विषय. प्रकाशेत, व्यवधानात् । ननु विषयप्रकाश ज्ञानमात्मनो धर्म' । तत. किं, सम्पश्योऽपि हि जात्यन्धस्य बन्धु । सम्बन्धि च तद् विषयस्यापीति स्वस्यापि विषय प्रकाशेत । आत्मापि हि तव खद्यो-तवदात्मावसितद्योत उपेयते । कथ चासावणुमात्र एव सन् विपुलविषयप्रकाश विचक्षीत । लक्षिते वा तेनैव सविषयविज्ञानवृत्तिभेदे किं तत्स्वयम्प्रकाशत्वो-पगमेन ।

तस्मात् प्रकाशसत्तामात्रात्मसंविदविद्यादेरान्त्यात् कार्यात् तादात्म्येन सर्वविषयानुगतापि न विषयप्रकाशात्मा प्रमातुरवभासते । तत्र यद्यपि न प्रका-शः स्व प्रत्येवावृतः, जगदान्ध्यप्रसङ्गात् । नहि व्यवहितालोकेन गवादिरिद्धिः । नापि विषय प्रति । किं हि तदनावरणेऽपि विषयस्य जडस्य स्यात् । नापि चेतन प्रति । तस्यैव प्रकाशसत्तामात्रसंविदेकरसत्वोपगमात् । तस्यैव त प्रत्यावरणे चा-त्मानमपि न चेतयेत । तथाप्याविद्यकानेकविधविषयोपधानभेदेन भिद्यमानात्म-संवित् 'तन्मनोऽकुरुतात्मन्वी स्यामि'ति श्रुतमनोबुद्धिपर्यायान्तःकरणोपाधिसं-म्भेदापादितप्रमातृभावा बुद्धिवृत्त्यनास्कन्दितविषयसंविदो व्यवधत्त इवेति प्रमातु-रात्मनो विषयो न प्रकाशीभवति, निर्विशेषसत्तामात्रसंविदात्मक च स्वरूपमवि-द्यादिनानोपाधिकलुषावभासत्वात् । यद्यपि विषयात्मसंविदो विषय इव निर्विशे-षस्वरूपसंविदो न प्रमातृविच्छेदोपाधिरतिरिच्यते, तथापि प्रमात्रुपाधिरेव स्वस-

१ 'व क' ख पाठ

'निर्माणचित्तान्यस्मितामात्रात् । प्रवृत्तिभेदे प्रयोजक चित्तमेकमनेकेषाम्' (पा० ४. सू० ४. ५) इति पातञ्जलयोगसूत्रम् ।

[illegible] विच्छेदावभासनिमित्तं भवतीति संविदात्मानमपि विच्छिन्नम् इव [illegible]विभेद इव कालमित्युपपन्नम् । तस्य च देहेन्द्रियादिष्वहम्म-म[illegible]ातु प्रत्यक्षादिप्रवृत्तौ विषयाकारा प्रमावृत्तिरुपजायते, यत्रे-दम[illegible] ‘[illegible]नाय चक्षुः’, ‘गन्धाय घ्राणमि’त्यादि । न च मानाधीनो-[illegible]वृत्तिपरिणामस्य सतो विषयाकारता, येन तन्नियामकमपरमपे-[illegible] तु बुद्धिर्मानतो विषयाकारविकारा सम्पद्यते । तदाकारत्वं च [illegible] तदविनाभाविरूपभेद इति नोक्तदोषः । इच्छादेरपि तदा-[illegible]द्रूपगतानिरूपणात् । तदुपाधिकश्च दृगात्मा ‘ध्यायतीवे’त्या-दिश्रुतेः [illegible]ानुपश्यतया विषयाकारवृत्त्यवभासस्तदाकारतयैव विषयमव-भासयति [illegible]नेन दौवारिकविषयसामान्यावभासमभिप्रेत्य प्राचां परोक्षे सु-[illegible]मात्रं क्रियत इति व्यवहारः । अपरोक्षे तु बुद्धिसत्त्वस्य जालका-लोकवदक्षद्वारा विषयव्याप्तौ तदेकोपाधितया विषयात्मसंविदपि प्रमातृसंविदे-वेति [illegible]द् वृत्तिरिव विषयोऽपि सामान्यतो विशेषतश्चावभासते । तथाच श्रुतिः ‘प्रज्ञया वाचं समारुह्य सर्वाणि नामान्याप्नोति’, ‘प्रज्ञया चक्षुः समारुह्य सर्वाणि रूपाण्याप्नोती’त्याद्या । अत एव बुद्धिसुखादीनां स्वभावादेव प्रमातृ-संविदव्यवधाने योग्यत्वे च तदाकारवृत्तिमनपेक्ष्यावभासात् परस्य स्वप्रकाश-ज्ञानरूपत्वविभ्रमः । न चैवं घटवृत्तौ गन्धादेरपरोक्षत्वप्रसङ्गः, तत एव प्रमा-तृसंविद[illegible]दसंविदव्यवधानात् । तदाकारवृत्त्युपधानापेक्षाया बुद्धिसुखाकार-वृत्त्य[illegible]नवस्थेति वाच्यम् । प्रमात्रव्यवहितसत्ताकस्य सर्वस्यैव तत्त-दा[illegible]वृत्त्यपेक्षयैवापरोक्षत्वाद्, बुद्ध्यादेस्तु सत्तयैव प्रमातृसंविदव्यवधानात् [illegible]जकेनापरोक्षत्वम् । आकाशश्च नीरूपोऽपि स्वाकारचाक्षुष-व[illegible]रोक्ष इत्युपलब्धिव्यवस्थाप्यम् । अथवा स नापरोक्षः । ‘**अप्रत्यक्षेऽपि** ह्याकाशे’ इति ह्युक्तं भाष्ये । अपरोक्षालोकाद्यभेदवृत्तितया त्वपरोक्षावभासत्व-विभ्रम इति ।

यत्तु — बुद्ध्यादेरपि तदाकारवृत्त्युपधानादेवापरोक्षता । न चानवस्था, अ[illegible]भावात् । न चैवं ज्ञानधाराद्यननुसन्धानप्रसङ्गः, अर्थस्मरणादिना तदनुमानात् । यथाहुः —

“वृत्तयस्तु तदानीमज्ञाता अप्यात्मगोचराः ।
स्मरणादनुमीयन्ते व्युत्थितस्य समुत्थितात् ॥”

इति ।

तन्न । यदि हि विषयमात्रं स्मर्येत, प्रहरादिकालाकलितज्ञानधारा नानुसन्धीयेत । न च ज्ञानधारामनन्तर्भाव्य विषयस्य तावत्कालावच्छिन्नत्वं शक्यस्मरणं, येन तावत्कालावच्छिन्नज्ञानमनुमीयेत । अत एवानुभवकालादौ स्मृतिकालावधिकातीतत्ववद् विषयसंस्कारसामर्थ्यादेव धाराया अनुसन्धानं स्यादिति निरस्तम् । प्रकारान्तरसम्भवेऽनुभवेऽसत्यनन्तभातबहुविषयशक्ति-कल्पनायोगात् । तस्मात् प्रागनुभूतैव ज्ञानधारानुसन्धीयत इति युक्तम् । वृत्तयस्त्विति तु *समाधौ ध्यानमर्थमात्रनिर्भासंन्यग्भूतं स्वरूपशून्यमिव भवतीति प्रागनुभूताया अपि ध्यानरूपवृत्तिसन्ततेः प्राधान्येन स्वरूपानुमा-नपरं व्याख्येयम् । तावदनुभूतध्येयेतराज्ञानस्मरणलिङ्गात् । तदनुभवश्च न धाराविरामसमये । नहि पक्ष्मपरिस्पन्दादिरक्षसन्निकर्षसमयापवर्गी सन्ननन्तर-मध्यक्ष्यत इत्येतावता यामादिव्यवहितकालातीतधाराद्यादिवृत्तिप्रत्यक्षं शक्यो-त्प्रेक्षम् । न वा लवादिकालोपाधिक्रियाभेदोऽध्यक्ष्यते, अध्यक्षस्य स्वपरिच्छि-तसमयसम्बन्धिरूपवर्तमानविषयत्वात् । सहैव वा प्रमातृवृत्तिरिन्द्रियरश्मिभि-प्रवृत्ता विषयेण सम्बध्यताम् । तद्धेतुरिन्द्रियसन्निकर्षस्तु तदव्यवधानेन यो-ग्यविषयसत्त्वमेवेन्द्रियरश्मिसम्बन्धेऽपि तस्य नियामकत्वात् । ततश्च क्रि-याभेदोऽपि तत्काल एवाध्यक्ष्यताम् । अथैव तत्तत्स्थितिसमयभवानुव्यवसा-यवृत्तिधाराप्यनुवर्तताम् । विनश्यन्ती च पूर्वपूर्वव्यवसायवृत्तिमन्वारभ्यैवोत्त-रोत्तरोत्पादेन तद्धारानन्तरायादिति । नैवम् । बुभुत्सितग्राह्यत्वे विजातीयबुभु-त्सान्तरायाद्, अन्यथा चाप्रामाणिकानन्ततद्वृत्तिधारावलिकल्पनाप्रसङ्गात् । तस्मात् स्वोपधेयसंविदवभास्या एव वृत्तयः । एवं सति परोक्षार्थसिद्धिरुप-पन्ना । स हि वृत्त्याकारतया तदुपधेयसंविदवभास्य इति । अत एवैतावन्तं कालमुपाध्यायनिकटमध्यासीन उच्चैरधीयानस्तन्मुखमवलोकयन्नेवासमिति च तत्तद्विषयरूषितज्ञानानामनुगतसाक्षिणानुभूतत्वात् तत्तत्संस्कारमेलकेन जाय-मानं स्मरणं तावद्विषयमेकमुत्पद्यते । न चामी प्रागननुभूता विषयाः, परन्तो-ऽनुमीयन्ते मानाभावादित्यास्तां तावत् ।

एवं विषयप्रकाशोपाधिवृत्तिकादाचित्कतया तदुपजनापायावभासा सं-विदपि तथा विभाव्यते । प्रकाशस्य ह्येष स्वभावो यत् प्रकाश्यरूपावभास-

* 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' (पा० ३ सू० ३) इति पातञ्जलयोगसूत्रम् ।

- । यथा रक्तमवभासयन्नालोको रक्तो भासते, शुक्ल शुक्लो, वृत्त वृत्तो, वक्र वक्र इत्यनुभवात् । परस्य तु सविदुत्पादविनाशानुभवो न तावत् तयैव, प्रागभावाद्यवध्यो स्वरूपविषयबाह्यत्वात् । सविदन्तर च नात्मैव, तस्य स्वाव-भासकावभासत्वोपगमात् । आत्मधर्मज्ञानस्य च विषयाकारविकासे सति तदैव तदुदयाद्याकारविकासायोगात् । अन्यदा च तदाद्यक्षणसम्बन्धरूपोदयस्या-भावात । योग्यानुपलब्ध्यापि ह्यभावमात्र सिध्यति, साधारण्यात् । नोदयादि. प्रागभावादिर्वा । स्वरूपसामग्रीसमवहितानुपलब्धि प्रागभाव साधयति, उप-लब्धोपलब्धिसामग्रीसमवहिता च प्रध्वसमिति चेद् , न । तव लिङ्गत्वमता-नुपलब्धौ तत्सामग्रीसमवधानस्य दुर्ज्ञानत्वात ।

अपिच सा यदि सविन्मात्रस्य प्रागभावादि साधयेत् , का पुन प्रा-गभावादेरपि सिद्धि. स्यात् । अथ विषयसविद', नहि सविदो विषयोपराग-विच्छेदादृते विषयमविदिति काचिदेका सविदस्ति । एकथैवोपपत्तावतिरेके मानाभावात् । इतरथा तयैव ज्ञातृत्वान्यथासिद्धेरात्मनो नित्यज्ञानाभ्युपगमवि-रोधात । एवञ्च सविद्रूपानुवृत्तौ विषयसश्लेषाभावेनार्थान्तरत्वम् । स च क्वचिद् विषयस्यैवाभावात , तदुपरञ्जकवृत्त्यभावाद् वा । तथाच श्रुति 'यद् वैतन्न पश्यति पश्यन् वैतन्न पश्यति', 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति दर्शनादिवृत्त्यनुगतसविन्नित्यत्वमाम्नाय विषयानवभासस्तु तदभावनिबन्धन इत्याह 'नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्त यत पश्येदि'त्याद्या । क्वचित् वृत्त्यभावेऽपि विषयावभासाभाव दर्शयति 'अन्यत्र मे मनोऽभूदित्याह', 'नाहमेतन्नाम प्राज्ञासिषमि'त्याद्या । नह्यत्रात्मधर्मो ज्ञान मनश्शब्दमप्रसिद्धेः । 'मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' इत्यत्रापि ब्राह्मलौकिकस्य मनोवालिङ्गत्वोपगमात् । मनसोऽन्यत्र भावश्च प्रकृतविषयवृत्त्यभावोऽन्यविषयवृ-त्तिश्चेति । अन्यथा प्रागभावादिसाधकसविदन्तरविषयत्वे सविद' स्वयम्प्रकाश-त्वव्याघात. । अस्माक तु स्वसिद्धामेव सविदमालम्ब्य प्रागभावादिनिरासो विकल्प्यत इति वैषम्यम् । स्वसत्तायामेव स्वप्रकाशत्वमिति तु न विशेषयितु शक्यम् , अद्यापि सविदनित्यत्वासिद्धेरव्यावर्तकत्वात् , सवित्त्वेन व्यतिरेकिणा नित्यत्वानुमानाच्च ।

१ 'स्य म' ख पाठ ,

अपिच गजादिज्ञानस्य योग्यानुपलब्ध्या कथमभावोऽनुमीयेत । यावद्विषयविज्ञानाभावरूपस्वापप्रतिसन्धानात्मा हि सा परस्य न सम्भवतीत्यनन्तरमेव वक्ष्यते । तत्कालघटादिज्ञानप्रतिसन्धानमात्रात्मा च सा न तदभावप्रयोजिका । प्रागुभयानुभवेऽप्यन्यतरप्रतिसन्धानोपपत्ते, संस्कारोद्बोधस्य नियामकत्वात् । अत एव न प्रतिसन्धीयमानघटादिज्ञानमपि लिङ्गम्, अहं प्रागज्ञातगज, तत्काले घटादिज्ञानत्वादिति । अप्रयोजकत्वाद्, घटादिमात्रानुभववत्त्वं वा तदनुभवमात्रवत्त्वं वा दुर्ज्ञानं, प्रकृतसाध्यगर्भत्वात् । अस्माकं तु तत्कालगजाज्ञानादिप्रतिसन्धानात् तदात्मैव तज्ज्ञानाभावानुभवो नानुपपन्न इति ।

यत्तु — सैव संवित् तत्कालपरिच्छिन्नावभासा स्वाभावं गमयति, अन्यथा घटाद्यवभासादिकादाचित्कत्वानुपपत्तिरित्यादि । तन्न । संविदः स्वस्वविषयबहिर्भूतकालपरिच्छेदानवभासित्वाद्, अन्यथा घटादेरपि तदवभासे प्रत्यक्षत एव क्षणिकत्वापत्ते. । अपिच कालपरिच्छेदावभासो यदि तत्कालसत्त्वमात्रावभास । नान्यदा तदभावसिद्धि । कालान्तरसत्त्वेऽप्ययं घट इत्यवभासवदविरोधात् । तत्कालमात्रसत्त्वावभासत्वं तु न सम्भवति कालान्तरासत्त्वस्य ज्ञानावस्थाभेदस्यान्यस्य वा स्वरूपविषयबहिर्भावादित्युक्तम् । तथाभूतस्यापि विषयत्वेऽतिप्रसङ्गात् । अन्यदा स्वस्वविषयानवभासानुपपत्त्या तदभावसिद्धिरिति चेत् । तदनवभासो हि तव तत्तत्संविदभाव एव । तत्सिद्धौ तदसिद्धौ च किं तदनुपपत्त्या । तत्सिद्धिश्च न स्वतोऽन्यतो वेत्युक्तम् । इदानीमेवेदमहं वेदेति चानुभूतानुसंहिताज्ञानानुविद्धावभासमात्रं, न तु सैव संवित् प्रागज्ञानमवभासयति । भावरूपाज्ञानं हि सविषयं तदुपहितसंविदैवानुभूतमनुसन्धीयते । यच्चोच्येत — घटादिसंवित् स्वयं सिध्यन्ती पटादिसंविदमपेक्ष्य तदभावः सिध्यतीति, तर्हि तदा पटसंविदेवास्तीति कथं तदभावं सिध्यतु, विना विषयोपाधिं संविद्रूपभेदानाकलनाच्च । एवं सति प्रत्यक्षसंवेदनस्य नित्यत्वे विषयनित्यत्वप्रसञ्जनं तान्त्रिकस्य निर्मूलस्वसमयाचाराडम्बरं विडम्बयति, संविद्भेदसविषयत्वादिविभ्रममूलत्वात् । नहि घटसंवित् पटसंविद स्वतो भिद्यते संवित्त्वाद्, अनुपाधिपरामर्शमविभाव्यमान-

---

१ 'नोपपन्नोप', २. 'स्वीव', ३. 'पि का', ४ 'लस', ५ 'दवि', ६. 'प' ख. पाठ.

भेदत्वाद् वा पटसंविद्वत् । सामान्यतो घटमणिकाद्याकाशवद्वा । इच्छादेरुदयास्तमयानुभवे भेदस्य स्वाभाविकत्वे तत्रोपाधिपरामर्शस्य तन्निरूपणार्थत्वात् । परोक्षत्वापरोक्षत्वादिभेदश्च संविदो जनिविनाशानुभवोपाधिकृत एव । तदुपाधिबुद्धिवृत्तेरपरोक्षत्वं च स्वाकारविषयव्यापित्वं, स्वव्याप्त्या विषयस्य प्रमातृसंविदव्यवधानोपाधित्वं वा । परोक्षत्वं च स्वाव्याप्यविषयाकारत्वं, स्वाकारतयैव विषयस्य प्रमातृसंविद्व्यवधानोपाधित्वं वा । तदवभासा च संवित् तथा विकल्प्यत इति । एवमन्येऽपि दृष्टिश्रुत्यादिभेदा ऊहनीयाः ।

यत्तु — स्वप्रकाशत्वाभिमता विषयसंविन्न निर्विषयसत्त्वावभासमर्हति, सविषयस्वभावत्वादिच्छादिवत् अज्ञानत्वस्य पक्षमात्रव्यावर्तकत्वेनानियामकत्वादित्यादि । तन्न, असिद्धेः । नहि विषयप्रकाशत्वोपाधिकमेव स्वप्रकाशत्वम् । 'चैतन्यस्वभावता हि स्वयम्प्रकाशते'त्यादिस्ववचनविरोधात् । किन्तु संवित्त्वादेव । तच्चाजडप्रकाशत्वमित्युक्तम् । न च प्रकाशमाना संवित् सविषयैव भासते, तवाप्यात्मसंविदो निर्विषयप्रकाशत्वोपगमात् । न च सैव प्रत्यक्त्वादि. स्वधर्मोऽस्य विषयः, संविद्विषयस्य तद्धर्मत्वानुपपत्तेरनन्तरमेव वक्ष्यमाणत्वात् । संविदस्वयम्प्रकाशत्वे च तिमिरस्येव विषयोपरागेऽपि स्वयम्प्रकाशत्वायोगात् । नह्यन्तरिक्षालोकोऽपि स्वयं न प्रकाशते । तमोविरोधिस्वरूपोज्ज्वल्यस्य स्वाभाविकत्वात् । किन्तु विषयोपरागेण संवेद्यते, संवित् तु संवेदनमेव, स्वतो न संवेद्येति विशेषः । सा च स्वापादावप्यवभासत एव । किन्तूपसंहृताखिलकरणविषयसंस्कारमात्रपरिशेषतमोमात्रविषया, अहमर्थसंश्लेषाभावादविशदमवभासते । अन्यथा न किञ्चिदवेदिषमिति प्रतिबुद्धप्रत्यवमर्शानुपपत्तेः । यत्तु — अत एव प्रतिसन्धानात् सर्वसंविदभावसिद्धिरिति । तन्न, विरोधात् । न खल्वसावनुमितिर्लिङ्गाभावादित्यविद्यानिरूपणे निपुणतरमुपपादयिष्यते । न च सुप्तौ स्मृतिहेत्वनुभवे सति सर्वसंविदभावः शक्योऽधिगन्तुम् । यद्यप्येवं सुप्तौ सविषयावभासैव संवित्, तथापि विषयव्यभिचारेऽपि स्वरूपानुवृत्त्या निर्विषयस्वभावैव सा । विषयाञ्जनेन तु परमेव सविषयावभासेति शक्यं निरूपयितुम्, एवं सति लाघवात् । परस्य तु चिद्रूप आत्मा नियतं च तस्य स्फुरणं धर्मः । धर्मभूतं च ज्ञानमन्यत् । तस्य चानन्ता विषयप्रकाशावस्थाभेदा इत्यप्रामाणिकं गौरवमिति । एतेनेदानीमिवान्यदापि निरहमाश्रय-

---

१. 'न'. २. 'धिरू' ख पाठ.

विषयसंविदवभासासम्भव इति निरस्तम्, उदितन्यायविरोधात् । सुप्तादावहङ्काराभावश्च वक्ष्यते ।

यत्तु — अहमर्थातिरिक्ता संवित् स्वापादौ सत्येव केवलं जागरादौ विषयसम्बन्धादेव स्फुरतीति । तत् तु निरस्तम् । सत्याश्रये प्रकाशगुणानुत्पत्तेः । स्वतःप्रकाशगुणत्वे च तदप्रकाशायोगात् । अन्यथा तिमिरस्येव विषयसम्बन्धेऽपि प्रकाशायोगादिति । 'पुंस्त्वादिवत् —' (ब्र० २ ३ ३१) इति च न सुप्तावनभिव्यक्तसतो ज्ञानस्य जागरादावभिव्यक्तिपरमनुपपत्तेरेव । किन्तु 'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रः' इति *स्वशब्दोन्मानसूत्रविषयसन्निहिता या बुद्धिः तद्गुणसारत्वाद् विज्ञानमयस्यात्मनोऽल्पत्वोत्क्रान्त्यादिसंसारेऽभिहिते, सुप्तौ बुद्धिसत्त्वविलये सति कैवल्याशङ्कायां, 'यावदात्मभावित्वात् —' (ब्र० २. ३. ३०) इति सूत्रितम् । न चेहात्मशब्दः केवलात्मपरः, येन तद्धर्मभूतज्ञानातिरिक्तबुद्धिसत्त्वस्य यावदात्मभावित्वं विरुध्येत । संसार्यात्मा हि[1] प्रकृतो जीवः । तथाच यावत् संसार्यात्मा आ मोक्षात् तावदस्य बुद्ध्यवियोग इत्युक्ते, कथं तर्हि सुप्तादौ तदप्रबोध इत्यत इदमुच्यते पुंस्त्वादिवच्छक्तिरूपेण स्थित्वा पुनरुद्भवतीति । तस्मात् सदैव स्वप्रकाशैव संवित् सुप्तादावज्ञानादिसंश्लेषात् तदवभासा प्रकाशत इत्यतो नित्यप्रकाशा निरवधिरनुदितानस्तमिता न स्वतो भेदमर्हति, प्रतिप्रमातृविषयं भेदावभासस्य परोपाधित्वात् । नहि संविदात्मलब्धिरेव पराधीना, येन संयोगादिवत् स्वतो भिद्येत । परेणापि हि नित्यावभासा संविदुपगम्यते । सैव तु विषयावभासेत्यप्यस्माकमुपगमः ।

न चास्याः संवित्त्वादिरज्ञानादिविरोधिस्वभावातिरिक्तः स्वगतो भेदः, दृशेर्दृश्यधर्मत्वायोगात् । को दोषः । घटादिवददृशिः स्यात् । ननु विप्रतिषिद्धमिदं दृशित्वाददृशिः स्यादिति । न विप्रतिषिद्धिः, दृश्यधर्मा हि स्वयमपि दृश्या स्याददृशिश्च । ननु दृशिरेव स्वस्वधर्मावभासा स्यात् । स्वस्वविषयावभासा ह्युपगम्यते । दृश्यते चालोकः स्वस्य प्रकाशः स्वधर्मसंयोगादेश्चेति । नन्वत एव विषयवदतद्धर्मः संवित्त्वादिः । नहि स्वधर्मतया भास्येत । निरू-

१ 'हि कृ', २ '-यु' ख पाठः

* 'स्वशब्दोन्मानाभ्यां च' (ब्र० २, ३, २२)

प्र. ८ तदन्तर्भावे स्वस्य ,वविषयत्वापत्त । तच्च स्वस्कन्धारोहनर्तनमश-
क्यानुष्ठानं तुम् । सयोगस्त्वालोकाय धर्मोऽन्यत संवेद्येतेत्यनुपन्यास । अत
एव न स्वसम्बन्धितया विषयतया वा विषयोऽवभास्यते विषयताया स्वस्व-
रूप... । सम्बन्धावभासस्य सम्बन्धिभानहेतुकत्वेन द्विर्व्यापारप्रस-
ङ्गाच्च किन्तु स्वसम्बन्धसत्तयैव स्वरूपेण । कथमेवमनुभवावच्छिन्नो[1] विषयो
विषयावच्छिन्नोऽनुभवो वा स्मर्येत, विषयप्रकाशाहितसंस्कारसामर्थ्यादेव । सं-
स्कारसामर्थ्यबलेन हि स्मृतिरननुभूतामपि तत्ता स्वकालावधिकातीतकालस-
म्बन्धरूपामवगाहते । एवं संविद्विषयवैशिष्ट्यमप्यवगाहताम् । हेतुसामर्थ्य-
स्य ...यत्वात् । घटं जानामीति विषयताव्यवहारश्च घटसंविदैव स्याद्,
...सविदेव दण्डो पुमानिति तत्सम्बन्धवैशिष्ट्यव्यवहारवदिति ।

यत्तु —

"न वेद्यं वित्तिधर्म स्यादिति यत् प्रागुदीरितम् ।
तेनापि साधितं किञ्चित् संविदोऽस्ति न वा त्वया ॥
अस्ति चेत पक्षपात. स्यान्न चेत् ते विफल श्रमः । "

... । ... । तत्तद्विकल्पेन तत्तद्वादिविकल्पितविरोधिस्वरूपमात्रोपलक्षणात् ।
... ...काशादिशब्दपर्यायता तु नापद्यते पदार्थभेदादित्यवादिष्म । संवित्ता-
... च संवेद्यते वेद्यमिति निर्भेदा संविदेव न आत्मा । एवञ्च यत्
...न्तिकत्वादिना विषयप्रकाशसंविदोऽनात्मत्वमनुमीयते, तद् यदि तद्रूपेणैव,
सिद्धसाधनम् । अथ स्वरूपेण, हेत्वसिद्धि । अत एव तदात्मत्वे प्रत्यभिज्ञा-
भज्येतेति परस्य व्यामोह । न च प्रतिसन्धातृत्व ज्ञातृत्व वात्मत्वे तन्त्रम् ।
किन्तु ज्ञानत्वमजडप्रकाशत्वमेव लाघवात् । अजडत्व च सत्तयैव स्वासत्त्वा-[2]
ज्ञानविरोधिस्वरूपमवेद्यत्व वा । अहङ्कारश्च नाजडप्रकाश इति नानैकान्त्यम् ।
अनात्मा हि स इति वक्ष्यते ।

एतेन न तावदजडत्व स्वसत्ताप्रकाशकत्वं, तव प्रकाशसत्तामात्रत्वेना-
सिद्धे । अन्यथा निर्विशेषत्वविरोधाद्, अनैकान्त्याच्च । दीपादेरपि भासमान-
त्वेन साक्षात् परम्परया वार्थान्तरापरोक्षव्यवहारानुगुण्यापादकत्वात् । अत
एव नाव्यभिचारितप्रकाशसत्ताकत्वम् । सुखादौ व्यभिचारात् । स्वसै प्रका-

१ 'न्नोऽनुभवा , २ 'त्त्वा ख. पाठ.

शमानत्वं चासिद्धम् । सुखादिवदहमर्थस्य ज्ञातुरवभासात् । अत एव न स्वस्मै स्वयम्प्रकाशमानत्वमपि, आश्रयाय विषयसम्बन्धेन प्रकाशमानत्वादहमिदं जानामीति । स्वयम्प्रकाशत्वं च यदि वेद्यत्वमन्तरेण व्यवहारानुगुण्यं, तदहमर्थे ज्ञातरि तवानात्मनि व्यभिचरितम् । ज्ञानान्तरनिरपेक्षप्रकाशत्वं चासिद्धम् । अहमात्मस्वरूपज्ञानसम्बन्धायत्तप्रकाशत्वादित्यादिविकल्पास्तान्त्रिकस्य मुग्धदासजनसबहुमानावलोकनलालसोल्लासा उपहास्याः । परोपाधिकं च संविदात्मनोऽपि ज्ञातृत्वादिकमुपगम्यते । प्रतिसन्धानं च शक्तिवृत्त्यनुवृत्ताहङ्कारसङ्कलितस्वपरावभासाहितसंस्कारसहकारादुपपन्नम् । स्वात्मनो विषयस्य चानुभवितुरेकत्वात् । न च संविदेव सकर्मकर्तृकानुभूयते, स्वरूपमात्रावभासित्वात् । घटमहं जानामीत्याद्यनुभवस्य परोपाधिकतयान्यथासिद्धेः । न च क्रियात्वेनच्छेदनादिवत् स्वतः सकर्मकर्तृकत्वमनुमेयम् । परस्याप्यात्मासंविदोऽक्रियात्वात् । सैव तु विषयसंविदित्यणुत्वभङ्गेनास्माकमुपगमात् । न चैव सविषयत्वेनैव यावत् सत्त्वं तदनुमीयेत, इच्छादिवत् । तथाचात्मनोऽतिरिच्यते विषयसंविदिति वाच्यम् । संविन्मात्रस्य सविषयत्वासिद्धेः । विषयसंवित्त्वोपाधौ च स्वतस्तदनुमाने सिद्धसाधनात् । नहि विषयसंविदः सत्याः पुनरौपाधिकं सकर्मकर्तृकत्वमुपेयते । किन्तु तदेवौपाधिकमिति । शाब्दी तु व्यवहाराधीना जानात्यादिसकर्मत्वादिव्युत्पत्तिः । दृश्यते हि पच्यन्ते तण्डुलाः विक्लिद्यन्ते तण्डुला इति । न च विक्लित्तिरुभयत्र सकर्मिकाकर्मिका वा । एवं करोतियतत्यादिरुदाहार्यः । अथवा क्रियाभावि ज्ञानं सकर्मकर्तृकमस्तु । तच्च मम बुद्धिवृत्तिः । परस्य त्वात्मधर्मभूतज्ञानवृत्तिरित्यन्यदेतत् । तदवभासा त्वात्मसंविदेव तथानुभूयमाना स्वप्रकाशा साध्यतेऽस्माभिरित्यतः संविदात्मा चेदात्मधर्मो न स्यादित्यादिराभासः । यत्तु — प्रकाशत्वादेव कस्यचिदेव स्याद् दीपप्रकाशवदिति । तन्न । अज्ञानतमोविरोधिस्वरूपस्यातल्लक्षणत्वात्, प्रकाशतेरकर्मकत्वाच्च । आत्मसंवित्प्रकाशस्य परेणापि विषयेण साक्षात् सम्बद्ध्य साक्षात् परम्परया वा ज्ञायमानत्वेनापरोक्षव्यवहारानुगुण्यहेतुत्वानुपगमात् । स्वसम्बन्धिन्यपरोक्षावभासपरिपन्थिविरोधिरूपस्यानुगममात्रत्वात् ॥

---

न च संविदप्रत्यक्त्वादनात्मा । प्रत्यक्त्वं हि न तावदहन्त्वमेव, पराक्त्वं चेदन्त्वम् । प्रकृतिपरिणामभेदस्यापि तत्प्रसङ्गात् । अत एव नाहमिदंधीविषयत्वे ते देहादेरपि प्रत्यक्त्वप्रसङ्गाद्, अयमहमस्मीत्यात्मनोऽपि पराक्त्वप्रसङ्गाच्च । नहि 'युष्मदस्मत्प्रत्ययगोचरयोरि'ति भाष्येऽस्मत्प्रत्ययविषयत्वं प्रत्यक्त्वं विवक्षितमिति वक्ष्यते । नापि ज्ञातृत्वं प्रत्यक्त्वमज्ञातृत्वं च पराक्त्वम् । किन्तु ज्ञानत्वमज्ञानत्वं च लाघवात् । स्वस्मै प्रकाशमानत्वं तु स्वावसितप्रकाशत्वं संविदो न नास्ति । परोपाधिना तु परस्मै भासमानत्वविभ्रम इति । अथैवमहमर्थो ज्ञातैवात्मास्तु । एवं हि संवेदनस्य साश्रयत्वं सकर्मकत्वं जातिभेदं कादाचित्कत्वमन्यस्मै भासमानत्वमित्यादि सर्वमनुभवसिद्धमगाञ्जसमुपपद्येत । औपाधिकत्वकल्पने गौरवाद् मानाभावाच्च । मैवम् । आत्मनो वा तद्धर्मस्य वा ज्ञानस्य विषयावभासपरिणामे विकारिणो नित्यत्वादिविरोधादात्मधर्मनित्यज्ञानासिद्धिप्रसङ्गाद्, ज्ञानोदयाद्यनुभवायोगादात्मनो विषयासिद्धिप्रसङ्गाच्चेत्युक्तम् । ज्ञातृत्वानुभवागमयोश्चान्यथासिद्धिरग्रे वक्ष्यते ।

तत्र यद्यपि नित्यज्ञानाश्रयत्वमात्मानमविकुर्वदेव भवति । तत् तु सुप्तौ सदपि न सिध्यति । विषयावभासपरिणामश्च धर्मभूतज्ञानस्यैवेति तदीयपराक्त्वमिव नात्मधर्मतामर्हति । विषयावभासतया विकसन्ती सङ्कुचन्ती वा संविदात्मन एव प्रभेव दीपस्येति चेत्, तथापि व्यवधानानुद्धारात् । तदवस्थसंविदाश्रयत्वमेव ज्ञातृत्वमवभासते संवेद्मीति चेद्, अवस्थातद्वद्भेदे क्रियाभाविज्ञानाश्रयत्वं कादाचित्कमात्मनो विकारः स्यात् । न चायं प्रामाणिकः । अनुभवाद्यन्यथासिद्धेः । तद्भेदे चावस्थाभेदोऽपि न विद्येत्[1], तदाश्रयतैवानुभूयेत, संवेद्मीति सम्बन्धावभासस्योत्सर्गतः साक्षात्सम्बन्धविषयत्वात् । अथ न संवित्, संविच्च न स्वरूपेण प्रथत इति संवेद्मीत्यनुभवविरोधः । यत्तु -- प्रसृतज्ञानकर्तृत्वं कर्मनिमित्तं, स्वाभाविकविकारस्त्वात्मनि निषिध्यत इति, तत्रास्तां तावन्निषेधोपपत्तिः । आत्मनः स्वरूपविक्रिया पुनरनित्यत्वहेतुः प्रसज्यत एव । नह्यनन्यनिमित्तो विकारोऽनात्मनोऽपि, स्वभाववादप्रसङ्गात् । नाप्यकर्मनिमित्तः, सर्वस्यैव विकारस्य प्राणिकर्मनिमित्तत्वात् । अत एव कर्तृत्वस्वरूपविकल्पेन तदनात्मत्वप्रयोजकत्वनिरासो निष्फलः । क्रियाश्रयत्वरूपेऽपि कर्तृत्वे विका-

---

१ 'र्क्त्वं न', २. 'रुमनु' ख. पाठ.

रित्वादिप्रसञ्जनात् । नन्वात्मनि नित्यत्वागमबाध कादाचित्कत्व चानित्यत्वप्रयोजकम् । न । नह्यागमो विकारित्वमा(त्मनो) गमयित्वा नित्यत्वमामनति । नित्यत्वमात्र पुनरामनन्न प्रसङ्ग विरुन्धीत । कादाचित्कत्वमपि तु विकारित्वादेवापद्येत , पक्षादन्यत्र व्याप्त्यविशेषात् । मृषाधात्वर्थाश्रयता पुनरस्मदात्मनो न विकारित्वादि प्रसञ्जयति । यद्यपि सा सर्वस्यैव मृषा किन्त्वन्यत्र धर्मिसमस्वभावा तदविद्यानुपादेया तदवधिबाधाविषयो वेति विशेष. । अकर्तृत्व चात्मन. प्रपञ्चयिष्यते । एवञ्चाविकारित्वागमो न विशेषयितव्य । अस्माकमाविद्यकविकारित्वस्य निषेधाविरोधित्वादिति । न च स्वतः परतो वा ज्ञातृत्व मात्मनः सिध्यति ।

यत्तु — सविदात्मानौ स्वय भासमानौ स्वभावादेव विशेषणविशेष्यभावेन भासेते इति । तदयुक्तम् । विशेषणविशेष्यभावो हि न स्वरूपमेव संविदात्मनो । पृथगवसितावभासत्वेन ज्ञातृत्वासिद्धिप्रसङ्गात् । अथान्योन्यनिरूप्यो धर्मभेद, न स तर्हि स्वभावादवभासेत, अजाड्यनित्यत्वादिवत् । अथापि प्रतियोगिभानमात्रमपेक्ष्य तत्तदंशावभासौ संविदात्मानौ स्याताम् । तथापि सविदात्मससर्गानुभवानिर्वाह. । अपिच यदि सम्बन्धादेव स्वयमात्मने संविदवभासेत, विषयायापि किं नावभासेत, सम्बन्धमात्राविशेषात् । ज्ञानगोचरज्ञानत्वाभावस्य तद्गोचरज्ञानवत्त्वाभावस्य च विषयात्मनोस्तुल्यत्वात्, सम्बन्धभेदमन्तरा गुणगुणिभावाद्यनिर्वाहाच्च । अपृथक्सिद्धिश्चासिद्धा, सविदहमित्यप्रतीतेः । अपिचानुपादानोपादेयद्रव्ययोराश्रयाश्रयिभावे संयोगो निबन्धन दृष्टम् । न च तव द्रव्याभिमतज्ञानात्मनो. सयोगो युज्यते, अनवयवत्वेनापरिच्छिन्नज्ञानसयोगव्याप्तावात्मनोऽनणुत्वप्रसङ्गात् । पञ्चीकरणशास्त्रादशेषभूतभौतिकस्य सावयवत्वेन घटाकाशादिसंयोगाव्याप्तेः । ज्ञानस्य सावयवत्वे च नित्यत्वोपगमविरोधः । आत्मा च विक्रियेत ।

“उपयन्नपयन् धर्मो वि(का[४]क)रोति हि धर्मिणम्”

इति ‘अविकार्योऽयमुच्यते’ इत्यादि च विरुध्येत । अणुरात्मैव ज्ञानमवच्छिन्दन्नेव सयुङ्क्ते इति चेत् । एव विषयस्याणुमात्रमपि न प्रकाशेत । आत्मस-

---

१ ‘त्मनित्य’, २. ‘रागम’, ३ ‘त्रै’, ४ ‘त्र’, ५. ‘याधि’, ६. ‘क्तमिति’ ख. पाठ.

म्बन्धपरिच्छिन्नस्य विषयासम्बन्धात् । अपिचात्मानुपादेयत्वे सति ज्ञानद्रव्यस्य नियततद्धर्मत्वानुपपत्तिः, आत्मान्तरवत् । न च प्रभाया दीपोपादेयत्वे तदतिवृत्त्ययोगादतदुपादेयत्वेऽपि तद्धर्मनियमो दृष्ट इति वाच्यम् । दीपसम्बन्धसहभावनियमेऽपि तस्यास्तद्धर्मत्वासिद्धेः । उभयोरपि पृथगुपादानोपादेयतया नियतधर्मधर्मिभावानुपपत्तेः । दीपावष्टम्भतया तु दीपप्रभेति व्यपदेशो न तद्धर्मत्वमाक्षिपति । न हि पार्थिवस्य मणेस्तेजोद्रव्य प्रभा धर्मः । अथ च व्यपदिश्यते मणिप्रभेति, तदवष्टम्भत्वात् । एव घृतदीप इत्यादिव्यपदेशा उदाहार्याः । न चापृथक्सिद्धविशेषणत्वेन ज्ञानमात्मधर्मः, तदसिद्धेः ।

अपिच नात्मा ज्ञानाश्रयः, ज्ञानत्वाद् विषयज्ञानवत् । न च बाधः, जानामीत्याद्यनुभवस्यौपाधिकविषयत्वात् । ज्ञातृत्वश्रुतौ तु वक्ष्यामः । न चाप्रयोजकत्वम् । उक्ततर्कानुगृहीतव्याप्तिविरोधाद्, धर्मभूतज्ञानत्वस्य गौरवेणाप्रयोजकत्वाच्च । अपिचात्मा यदि ज्ञातृत्वस्वभावः स्यात् सुप्तावपि ज्ञातैवानुभूयेत । न च ज्ञानस्य सतो विषयासम्बन्धापराधेनाप्रकाशता । नहि विषयसम्बन्धेन सतो ज्ञानस्य प्रकाशो जनितुमर्हतीत्युक्तम् । न च तदवस्थाभेदोऽपि सप्रकाशः स्यात् । न खलु मेघादेरवस्थाभेदो विद्युदादि । किन्तु तत्सम्भिन्नतेजस एव, परिणामेषु परिणामिसालक्षण्यस्य सर्वसिद्धत्वात् ॥

---

## सङ्कोचासम्भवनिरूपणम् ।

यद्युच्येत — सुप्तौ कर्माविद्यासङ्कुचित ज्ञान न प्रकाशत इति । कोऽयं सङ्कोचः । यदि शक्तिमात्रावस्था, तर्ह्यात्मन एव स्यादिति स ज्ञानवृत्तिपरिणामी विक्रियेत । अथ दिवा दीपालोकस्येवाभिभवमात्र, सदैव तर्ह्यपरिच्छिन्नं तत् सर्वविषयसम्बद्धमिति किमिन्द्रियादिद्वारेण । नहि मानार्थसम्बन्ध एव कर्माविद्यापावरणहेतुरुपगम्यते, मानाभावात् । अथ यावदात्मपरिमण्डलता सङ्कोचः, तावन्मात्रस्यापि स्वतो भानापेक्षया कथं न ज्ञातृताव‌भासः । दीपपरिमण्डलापि हि प्रात प्रभा प्रकाशत एव । तत् सुप्तावात्मनोऽननुभूयमान ज्ञातृत्व न स्वभावः । अपिच ज्ञेयसम्बन्धोपाधिकमात्मनो ज्ञातृत्वमनुभूयते ।

तद्भावे सुप्तौ मुक्तौ च 'न तु द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् पश्येत्', 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदि'त्यादिज्ञातृत्वाभावाम्नानात् । न च ज्ञानस्य ज्ञेयसम्बन्धनियमः, तत्राप्यात्मनि व्यभिचारात् । न चास्यापि प्रत्यक्त्वादिरात्मधर्मो नित्यज्ञेयं, ज्ञानस्य ज्ञेयधर्मानुपपत्तेरुक्तत्वात् । स्थिते च कालापरिच्छेदे ज्ञानस्य घटादिविषयव्यभिचारवत् सर्वविषयव्यभिचारस्याप्यनुमातुं शक्यत्वाच्च । न च ज्ञेयं किञ्चिन्नित्यमस्ति, 'अतोऽन्यदार्तमि'त्यादिश्रुतेश्च ॥

---

## जडाहङ्कारानात्मत्वम् ।

एवमहङ्कारोपाधौ ज्ञातृत्वमनुभूयमानमात्मनो न स्वभावः । न चाहङ्कार आत्मा, दृश्यत्वेन पराक्त्वात् । नह्यहन्त्वमहमित्यवभासमानत्वं वा प्रत्यक्त्वमित्युक्तम् । न चाहंबुद्धिरित्येव तया प्रत्यगर्थविवेकः, तत्रापि प्रकृतिपरिणामस्याप्यहमित्येव भानात् । किन्तु दृश्यव्यतिरेचिकेति । एवञ्चाहङ्कारादिसर्वदृश्यावभासा दृशिरेव प्रतीची व्युदपादीति न तदभावप्रसङ्गः । अत एव च नैकत्र प्रत्यगर्थद्वयापत्तिः । अपि च,

व्यतिरेकी विकारी च नाहङ्कारः स्वयं दृशिः ।
येनात्मानं तदाभासं प्रत्यगर्थमपह्नुवे ॥

प्रत्यक्चितिरहङ्कारतद्वृत्तिविषयाञ्जना ।
साश्रयेव परार्थेव विपर्यस्तावभासते ॥

येनैषानिदमाभासाप्यप्रतीचीति ते मतिः ।
परागर्थव्यपेक्षा च प्रतीचीति विकल्पना ॥

निरस्तोपाधिकालुष्या सैवात्मा नः स्वयं दृशिः ॥
न च स्वस्मै स्वयम्भानमहमित्येव नीयते ।

तद्धि स्वावसिताभासभावान्नान्यान्निरूप्यते ।
स चाहङ्कारतादात्म्यादहम्भावाभिमानवान् ॥

अहमित्येव मोक्षीयञ्छास्त्रेऽधिक्रियते न किम् ।
नित्यानन्दानुभूरस्तममस्ताधिरसान्यहम् ॥

इति कामयमानोऽपि साहम्मान स एव न' ।
नाय प्रागहमर्थस्य नाश मोक्षमवस्यति ॥

येनात्मनाशशङ्की सन् बिभीयान्मोक्षसस्तवात् ।
नाहमस्मि न मे किञ्चिदित्यहममतानुदि ॥

अहङ्काराश्रये बोधे केवलात्मावशिष्यते ।
अहं ब्रह्मेति विज्ञानमप्यहङ्कारसश्रयम् ॥

परोक्षत्वपरिच्छेदौ व्युदस्यति दृगात्मनि ।
परिणामपरिच्छेदपरितापैरुपप्लुतात् ॥

प्रकाशसत्तानन्दात्मा सोऽहङ्काराद् विवेचितः ।
स्वयम्भानोऽनहम्भूत केवल परिशिष्यते ॥

सर्वानुबन्धबाधेऽपि संविन्निर्विषयाश्रया ।
सत्तानन्दस्वभावात्मा स्वप्रकाशावतिष्ठते ॥

विषयाश्रयसश्लेषादृते ज्ञान न सिध्यति ।
इतीदं दुर्भण नित्यचिद्रूपात्मानमिच्छताम् ॥

अहम्भाववियुक्तत्वे घटादिवदनात्मता ।
न चितो यदसवित्त्वप्रयुक्ता तदनात्मता ॥

नासवित्त्वमहम्भाववियुक्तस्य घटादिवत् ।
शक्यशङ्कमतद्रूपविषयज्ञानवादिनाम् ॥

स्वप्रकाशोऽयमालोक. सविदात्मापि ते तथा ।
अविशेषोऽनहमाबादात्मनः प्रसजेद् यदि ॥

आलोकश्चाहमात्मा च प्रकाशगुणकौ तव ।
अविशेषादहम्भाव केन वा विनिगम्यते ॥

स्वभावभेदोपगमे कथमालोकसविदोः ।
अविशेषत्वशङ्का ते यतः स्यादहमात्मता ॥

विज्ञातृत्वागमादीनामुपपत्तिस्तु वक्ष्यते ।
नात. स्यादहमात्मा ते विज्ञात्रात्मत्ववर्त्मना ॥

कोऽहमित्येव निपुण इत्यादि यदुदाहृतम् ।
न तदप्यहमात्मत्वमुपपादयितु क्षमम् ॥

अदूरविप्रकर्षेण चिदात्मान दिदिक्षताम् ।
अहङ्कारमनादाय नात्मादेशो हि सिध्यति ॥

आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज ! ।
इति क दोषमाशङ्क्य प्रत्यषेधद् रहूगणः ॥

शब्दोऽहमिति दोषाय नात्मन्येष तथैव तत् ।
इति वा भरतः कस्य दोषस्याभावमन्ववक् ॥

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृत पाप चोरेणात्मापहारिणा ॥

इति दोषो हि मा ज्ञायि राज्ञानात्मविदा तदा ।
येन ते प्रत्यगात्मैव तन्निषेधादह भवेत् ॥

स्वनामग्रहवद् दोष प्राप्तोऽहमिति शब्दने ।
अबोधकत्वदोषो वा निषिद्धानूदितो यदि ॥

नैतावताहमात्मा ते कथञ्चिदपि सिध्यति ।
अहंशब्दो ह्यबुद्धस्य बुद्धस्य च चिदात्मनः ॥

शक्त्या लक्षणया वापि बोधको मम सम्मतः ।
तत्त्व चात्मानहन्त्वेऽपि युज्यतेऽहमुपाधिना ॥

अपिच,

पिण्ड पृथग् यतः पुस. शिर:पाण्यादिलक्षण. ।
तदाहमिति कुत्रैता संज्ञा राजन् ! करोम्यहम् ॥

इत्यूचे कार्यकरणसम्पिण्डात् पृथगात्मन· ।
अनहन्त्वमहशब्दविषयत्व क्षिपन्मुनिः ॥

---

युष्मदस्मदित्यादिभाष्यार्थः ।

न च युष्मदस्मत्प्रत्ययगोचरयोरिति भाष्यस्यायमर्थः — युष्मत्प्रत्ययगोचरोऽनात्मा अस्मत्प्रत्ययगोचरत्वात्मेति, बुद्ध्यादेरात्मत्वप्रसङ्गात् । युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वमुपेत्यैव **'न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वाद्'** इत्यहव्यक्तावभासत्वमात्राभिधानात् । अन्यथा इदमहम्प्रत्ययगोचरयोरित्यवक्ष्यत् । युष्मदस्मत्प्रत्ययगोचरयोरिति तु ब्रवीति । तदयमर्थः — युष्मदस्मदिति प्रत्यक्परागर्थावुपलक्षयति । तौ च प्रत्ययश्च गोचरश्च प्रत्ययगोचरौ । व्युत्क्रमेण सामर्थ्यात् पाठक्रमबाधाद् 'उपहूतापहूयस्वे'त्यादिवत् । तदेव विवृत परेण **'विषयविषयिणोरि'**ति । अथवा युष्मदस्मदी एव प्रत्ययौ गोचरौ च । एकः प्रतीयते गोचर्यते चेति प्रत्ययगोचरः । अपरः प्रत्यय एव गोचरयति । तेन दृश्यत्व परमक्त्वं दृशित्वमेव प्रत्यक्त्वमिति लक्षणविवक्षा लक्षितेति न विरोधः । अत एवास्मद्धीसिद्धोऽहङ्कारो युष्मदर्थ इति जननीवन्ध्यावचनवदिति निरस्तम् । तादृश एव दृश्यस्य देहादेरप्रत्यक्त्वात् । न चाबाधिताहन्धीविषयत्वं हेतुः, असिद्धेः । इदम्प्रत्ययाविषयत्वं च तवाप्यनात्मनि विषयसंविदि व्यभिचारि । न चास्याभ्युपगतमज्ञातृत्वं प्रसञ्जनीयम् । न च ज्ञातृत्वादिर्दृगात्मनो धर्मः, दृश्यत्वात् । अन्यथात्मनोऽपि दृश्यत्वेऽदृशित्वापत्तेः । अहङ्कारोपरागेण ज्ञातृत्वकल्पनोपपत्तिश्च वक्ष्यते । तस्मादहम्भावबाधानवधिरहमर्थो नात्मा, दृश्यत्वाद्, अदृशित्वादप्रत्यक्त्वात् । किन्तु केवलसंविदेव, लाघवेन घटादावदृशित्वस्यैवाप्रत्यक्त्वप्रयोजकत्वाद्, व्यतिरेकाच्च ॥

---

सुप्तावहमभावः ।

नह्यहमर्थः सुप्तादावस्ति, उपलभ्यानुपलब्धेः । न च तदाप्यहमित्येवाविशदमवभासते । गाढं सुप्तोऽहमित्येव नावेदिषमिति ब्राह्मणत्वश्रमणत्वसुखदुःखादिविशेषमनन्तर्भाव्यैव पृथगहमज्ञानपरामर्शात् । 'न बाह्यं किञ्चन वेद नान्तरमि'ति चाविशेषेण सहाहन्त्वेनान्तराज्ञानानुवादात् । प्रियासम्परिष्वङ्गेऽपि सुखमूर्छनयाहमित्यप्यनवभासोपपत्त्या दृष्टान्तानाञ्जस्याभावात् । एवञ्च श्रुतौ 'अयमहमस्मी'ति 'न जानाती'ति यावदन्यानुभूताज्ञानानुवाद

एव, ब्राह्मणत्वादितदेकदेशविषयव्यवस्थाहेत्वभावात् सुप्तावहमज्ञाने बाधकाभावात् । न च प्रत्यभिज्ञाविरोधः, अहमः शक्तिवृत्तिभ्यामापीतेरनुवृत्त्युपगमात् । अवस्थाभेदे व्यावर्तमानेऽपि तव ज्ञाननित्यत्वसम्प्रतिपत्तेः । न च प्रतिबुद्धस्याहमनुविद्धप्रत्यवमर्शविरोधः, अवमर्शदशायामहम्भावात् । न ह्यहमस्वाप्समिति स्वापकालसम्बन्धोऽहमि प्रतीयते, किन्तु स्वाप एव, आख्यातबोध्यकालभेदस्य सर्वत्र धात्वर्थसम्बन्धावगमात् । मन्दमगममित्यादौ हि गत्यादिक्रियाविशेषणं मान्द्यादि तत्कालतयानुभूतमनुसन्धीयेत । न त्वह न्त्वमस्वापक्रियाविशेषण तत्कालतयाननुभूतं च । स्वापे तु कथञ्चिदतीतकाले गम्यमानेऽहमः सन्निधानादहमस्वाप्समित्यवगमः । न तु गजाभावे गम्यमानेऽनुभूतचत्वरस्येवाहमोऽवमर्शः, सौप्तिकाहमज्ञानावमर्शविरोधात् । अन्यथाहमिति जानन्नेवास्वाप्समित्यवमर्शापत्ते । अहन्त्ववत् तदवभासस्यापि स्वधर्मतयात्मनः स्वधर्मावभासत्वोपगमात् । न च तव स्वस्वविषयावभासत्वेऽपि न किञ्चिदवेदिषमित्येवावमर्शो नाज्ञान जानन्नस्वाप्समिति । एवमस्माकमहमित्येव स्यादवमर्श इति वाच्यम् । ज्ञातृत्वाभिमानस्यास्माभिरहमुपाधिकत्वोपगमेनाहमभावे सुप्तौ तदभावोपपत्तेः । आलोकवदात्मा स्वभावादेव स्वस्वधर्मावभासो न विषयविषयिभावात् । अतो न विषयज्ञानवदवमर्श इति चेद्, न । अप्रकाशस्य ज्ञानविषयतयैव भाननियमाद्, जागरेऽप्यहमिति जानन्नेवासमित्यननुभवप्रसङ्गाच्च । अथापि कथमतीतकालस्वापसम्बन्धानुभवोऽहमस्वाप्समिति, न चासौ विना बाध विभ्रम इति युक्तम् । नैवम् । स्वापो हि निश्शेषविशेषविज्ञानोपरमात्मा शक्तिस्थोऽहङ्कारावस्थाभेद एव । तदनुगतस्य चाविद्याशक्त्युपधेयस्यात्मनोऽहवृत्त्युपधानेऽहमस्वाप्समिति प्रतिबोधाविरोधात् । बालस्थविरशरीरभेदेऽपि कस्याप्यनुगतस्य स्थविरोऽह, बालोऽभूवमित्यनुसन्धानदर्शनात् । न चैवमपि ह्यस्तनाहङ्काराभेदप्रतिसन्धानविरोध, विनष्टघटाया मृदः पुनस्तदुत्पत्तौ स एवाय घट इत्यप्रतिसन्धानादिति वाच्यम् । कार्यज्ञेयशेषप्रतिघटनानुकूलप्रतिसन्धानबीजसंस्कारसम्भिन्नशक्तिरूपानुवृत्त्याहङ्कारवृत्तिभेदाप्रत्यक्षतया च घटादिवैषम्यात् । योऽहमास सोऽहमस्मीति सतोऽप्यभेदज्ञानस्य यो बालोऽभूव स स्थविरोऽस्मीतिवत् तदुपधेयात्मानुगतिनेयत्वाच्च । अत एव सौप्तिकाज्ञानानुभवसंस्कारोऽप्यहङ्कार-

शक्तिसम्भेदेनैवाधीयत इत्यहं नावेदिषमित्याद्यनुसन्धानमुपपन्नम् । यस्यानुभवसंस्कारस्तस्यैव स्मृत्युपपत्तेः ।

यत्तु — सुप्तौ स्वयञ्ज्योतिः पुरुषशब्दोऽहमात्मेति । तन्न । नहि 'बोद्धा कर्ता विज्ञानात्मा पुरुषः' इति पुरुषस्य बोद्धृत्वादिकं विधीयते, 'एष हि द्रष्टे'ति सिद्धवदुपन्यासादनुभवसिद्धत्वाच्च । तस्य च परोपाधिकत्वेऽप्युपपत्तेः । अहमभावेऽपि तदनुविद्धानुसन्धाने घटिते च सुप्तावहमवभासाभावे सविन्मात्रावभासोऽपि मा भूद्, न किञ्चिदवेदिषमित्यवमर्शाविशेषादिति निरस्तम् । अवमर्शहेतुतयैव सविन्मात्रावभासोपगमात् । न च स एवाहमवभासः, तस्याहन्त्वविकल्पताकल्पने मानाभावात् । न चाहमाश्रयमज्ञानमिति वक्ष्यते । तदाश्रयतानुसन्धानं चोपपादितम् । न चाज्ञानसाक्षी द्रष्टा अहमेव, अनहम एव स्वाश्रयदृश्योपाधिविभक्तदृष्ट्याश्रयतयैव साक्षित्वादिव्यपदेशोपपत्तेः । अत एव दृष्टेर्द्रष्टा श्रुते श्रोतेत्याद्याम्नायते मा भूदात्मनः स्वाभाविकं द्रष्टृत्वादि । नहि दृष्टिगोचरा दृष्टिरपरा श्रुतिगोचरा च श्रुतिरात्मधर्मो जायते, चाक्षुषादिवृत्तिभेदो हि स इति तदवभासिचैतन्यस्य तदविविक्तवृत्तितया तदाश्रयतोपाधिकमेव स्यादिति । यत्तु — स्वस्मै स्वयम्प्रकाशत्वादात्मनः सुप्तावहमित्यवभासः साध्यते । तन्न । अप्रयोजकत्वात् । तेन विनापि ह्यात्मनोऽनन्यदीयप्रकाशत्वेन तदुपपन्नम् । देहादिवदहमवभासस्यात्मनि परोपाधिकत्वतर्कसम्भवाच्च ।

अपिच सुप्तावहम्भावे 'सता सोम्य[1] तदा सम्पन्नो भवती'ति विरुध्येत । नह्यत्र 'कन्या कनकसम्पन्ना', 'बुद्धिविज्ञानसम्पन्न' इत्यादिवदुपश्लेषमात्रं सम्पत्तिः, तस्य सदंशे जीवे सदातनत्वेन तदेति विशेषानर्थक्यात् । किन्त्वभेदगमनम् । 'समभेदे च सम्यक्त्वे' इति समर्थानुगमात् । स्वप्नादौ ह्यहङ्काराद्यविविक्तवृत्तिरसम्पन्न इव सता भवति । तद्विलये तु घटादर्शादिविलये घटाकाशप्रतिबिम्बाविव महाकाशबिम्बाभ्यामात्मा सता सम्पद्यते । परन्तु तत्राविद्याशक्त्युपाधिसंस्कारानुवृत्त्या, नात्यन्तं यथा कैवल्ये । 'सति सम्पद्य न विदुः', 'सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढा' इति सुप्तावविद्याशक्तिसद्भावश्रुतेः । अत एव सुषुप्त्युत्क्रान्त्योर्भेदेन

---

१. 'तिव' ख पाठः.

व्यपदेशः 'प्राज्ञेनात्मना सपरिष्वक्त.', प्राज्ञेनात्मनान्वारूढ' इति च । अविद्याशक्त्युपाधिकजीवपरविभागस्यामोक्षमनुवृत्त्युपगमात् । अत एव पुनरपरिमुषितसस्कारास्तया तया वासनया तथा तथैव प्रतिबुध्यन्ते पृथिव्या इव मण्डूकवासनया मण्डूकाः, 'त इह व्याघ्रो वा सिहो वा वृको वे'त्यारभ्य 'यद् यद् भवन्ति तदा भवन्ती'ति श्रुते. । 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' (ब्र० ३ २ ९) इति च न्याय· । तथा 'स्वमपीतो भवती'त्यतोऽपि सुप्तावहङ्काराभावो गम्यते । न च स्व स्वीय सदात्मानमपीत उपगतो भवतीनीयदेवोच्यते, नित्योपगतत्वेन तदेति विशेषणानर्थक्यादेव । एव सत· स्वाप्ययादचेतनव्यावृत्त्यासिद्धेश्च । 'भवाप्ययौ हि भूतानामि'त्यादावपीतेर्लयार्थत्वप्रसिद्धेश्च । 'यज्ञो ब्रह्मण्वाम् अप्येतु देवानि'त्यादौ च क्रियावस्थाविलयेन यज्ञस्य देवप्रीत्यवस्थादिपरिणामविवक्षोपपत्तेरव्यभिचारात् । सोऽयमप्ययो विलयः स्वरूपेण पुरुषस्यासम्भवन्नुपाधितन्त्रः । विलीयमानोपाधिश्च स्वप्नानुगतोऽहङ्कार एव । तथा 'सर्वे एते आत्मानो व्युच्चरन्ती'ति प्रबोधे जीवसर्गवचन स्वरूपेणासम्भवदहङ्कारोपाधिकमाश्रयितव्यम्, अहामित्येव प्रथमत्वात् करण कलेबराहम्भावस्य चरमत्वात् । अथ सुप्तौ जीवस्य बहिर्मुखज्ञानविरहावस्था स्वाप्ययो नाम, 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि'ति लिङ्गात् । व्युच्चरण च बहिर्मुखज्ञानप्रसरावस्थैवेति नाहङ्कारविलय इति चेत् । एव हि तद्धर्मज्ञानस्योदयाप्ययावात्मन्युपचर्येते इत्यापन्नम्, दौवारिकौ वा- आत्मान्वितौ च तावाम्नायेते । न च शब्दस्य स्वार्थे सम्भवत्युपचार. पारम्पर्य वा युज्यते । अस्माक तु परोपाधिकोऽपि विलयो वोदयो वा अविद्ययात्मान्वित एवेष्यते । एव सति 'चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्' (ब्र०१. ३. १६) इति सूत्रविरोधः । न । जातेष्ट्यादिसस्कारकर्मविधयो हि जन्मान्तरीयफलसाधनकर्मसम्बन्धयोग्यताफला नित्यमात्मान संस्कार्यमाक्षिपन्तीति प्रतीतभेदतया तत्र जन्मादिव्यपदेशस्य भाक्तत्वाभिधानोपपत्तेः । न त्वात्यन्तिकी भक्तिः, परोक्षविवेकस्यापरोक्षतादात्म्यविभ्रमाविरोधित्वात् । पुत्रे जाते 'वैश्वानर द्वादशकपाल निर्वपेदि'त्यादिषु पुत्रादिशब्दस्य देहाविविक्तालम्बनत्वाच्च । नित्यत्वाम्नान तु तस्य स्वरूपेणेत्यवादिष्म । स्वरूपेण ब्रह्ममात्रोऽपि जीवः पृथङ्नित्य आम्नायते चिदानन्दात्मा

च तदानित्यत्वादिशङ्कया ब्रह्मात्मताप्रतिपत्तिर्मा विरोधीति । न चैव जीवरूपेणोत्पादविनाशे कृतनाशादिप्रसङ्ग., अनाद्यविद्यामायाशक्तिवृत्त्यवस्थानुवृत्ताहङ्कारोपाधिकस्य कर्तुर्भोक्तुरनादित्वोपगमात् । तदेवमहङ्कारोपाधिनैवात्मन्यहम्भावोपपत्तौ पृथगहन्त्वकल्पना न मानवतीति ॥

---

### कामादिमनोधर्मता ।

अपिच परस्य कामादयोऽहमात्मधर्मा उपगम्यन्ते । ते तु मनोधर्मा आम्नायन्ते 'काम. सङ्कल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत सर्व मन एवे'त्यादौ । मृद् घट इत्यादाविव वृत्तिवृत्तिमदभेदेन सामानाधिकरण्यमुख्यत्वोपपत्तावायुर्घृतमित्यादिवदभेदोपचारत्वकल्पनायोगात् ॥

---

### उपादानोपादेयाभेदः ।

ननु नोपादानोपादेयाभेदो युक्त., द्रव्ययोर्द्रव्यगुणयोर्वा पौर्वापर्येण विरुद्धधर्मत्वात् । अपिच मृन्मयी मृदिति न प्रयुज्यते । कि कारणम् , अभेदात् । एव मृन्मयो घट इति न प्रयुज्येत । अथ कुण्ड बदरमिति न प्रयुज्यते, कस्य हेतोः । भेदात् । एव मृद् घट इति न प्रयुज्येत शुक्लः पट इति च । न । मृज्जातीयत्वेन घटेऽपि मृत्पदवृत्ते., गुणवचनेभ्यो मतुपो लुगनुशासनेन द्रव्येऽपि शुक्लपदवृत्तेश्च । अथवा सिहमाणवादिवदभेदोपचारो वा इदरजतादिवद् अभेदभ्रमो वा निबन्धन मृद् घट इत्यादिसामानाधिकरण्य इति ।

उच्यते —

> विवर्त परिणामो वा विकार. कारणस्य नः ।
> आरम्भस्तु न सम्भाव्यो विकारस्य कथञ्चन ॥

अन्यथोपादानोपादेयद्रव्यभेदे रूपरसगुरुत्वादिभेदस्तदुपलम्भप्रतिबन्धश्च कल्प्येत । पौर्वापर्य चावस्थाभेदोपाधिक नानुगतवस्तुस्वभाव भेत्तुमुत्सहते । तदालम्बन च मृद्घटादिसामानाधिकरण्य युक्तम् । यदि हि मृज्जातीयो घटः, शरावोऽन्यश्च मृदेवेति घटत्वशरावत्वादिव्यवस्था न स्यात् । अपिच

---

१. 'अ', २. 'प' ख. पाठ..

मृन्मयी मृदिति न प्रयुज्यते। किं कारण, मृत्त्वादेव । एव मन्मयो घट इति न प्रयुज्येत । ननु तवापि न प्रयुज्येताभेदादित्युक्तम् । दुरुक्त तत् । नहि मृदिति च घट इति चाभेद ब्रूम. । किं तर्हि, तदुभयानुगतस्य सत्तामात्रस्येत्यवोचाम । तस्य चाय विशेषो मृदिति घट इति चेति । एवं शुक्लपटादिसामानाधिकरण्यमपि ।

एकस्यैव हि वस्तुन शुक्ल इति पट इति च विशेष इति । एव सामानाधिकरण्यमुख्यत्वोपपत्तावौपचारिकत्वमकल्प्य भ्रममूलत्वं वा । लौकिकाना मृदो घटो जायत इति कुलर्करसिकाना चोपादानोपादेयभेदस्यैवावगमाद्, 'एतत् सर्वं मन एव' इत्युपदेशे तदसम्भवाच्च । कुतस्तर्हि मनः काम इत्यादिशब्दप्रत्ययौ लौकिकौ न[1] स्याताम् । अहमित्येवात्मतादात्म्येन आत्मधर्मत्वविभ्रमात् । अथाप्यह कामः सङ्कल्प आकाश शब्द' पृथिवी गन्ध· इत्येव कस्मान्न भवति । लोकव्युत्पत्त्यैव तेपा निष्कृष्टविषयत्वविज्ञानात्, स्वरूपासम्भेदग्रहस्य तद्रूपोपस्थितसामानाधिकरण्यप्रत्ययपरिपन्थित्वात्। अत एव न मनुष्योऽह गौरोऽहमित्यादिवद् देहोऽहं गौरिमाहमित्यादिसामानाधिकरण्यप्रत्यय', देहादिशब्दस्य निष्कृष्टवृत्तित्वविज्ञानात् । अत एव च तावन्मात्रेऽपि शिलापुत्रकस्य शरीरमित्येव व्यपदेशो न तु शिलापुत्रकः शरीरमिति । वस्तुवृत्तेन तु वृत्तिवृत्तिमदभेदाद् 'एतत् सर्वं मन एवे'ति श्रौतं सामानाधिकरण्यम् ।

यत्तु अपर आह—'मनसा ह्येष पश्यति मनसा शृणोति मनसा विजानाति' 'मनसा हि कामान् कामयते', 'तानह कामये हृदा', 'ते मा कामयन्ता हृदे'त्यादितृतीयाश्रुत्यान्त करणत्वप्रसिद्ध्या च न कामाद्युपादान मन इति । तन्न । मृदा घट कटमेरकाभिः करोतीति व्यपदेशात् साधकतमत्वप्रसिद्धेश्च मृदादेरपि घटाद्यनुपादानत्वप्रसङ्गात् । हेतुतामात्रेण तदन्तरङ्गतया च तदन्यथासिद्धिस्तु मनस्यपि स्यात् । अपिच कषायेण रज्यति पट इति व्यपदिश्यते । न च कषायकरणकः पटधर्मो रक्तिमा जायते, मानाभावात् । अथ च

कषायाभेदविभ्रान्ते रक्तद्रव्यात्मना पटे ।
रक्तिमाश्रयताबुद्धिर्लोकसिद्धोपपाद्यते ॥

---

१. 'नमस्या' ख पाठ.

मनस्तादात्म्यविश्रान्ते कामयित्रात्मनात्मनि ।
कामाद्याश्रयताबुद्धिस्तद्वदेवोपपाद्यते ॥

न खल्वात्मनि प्राणादिकरणकोऽन्यः प्राणनादिव्यापारः। अथ च निर्दिश्यते 'य प्राणेन प्राणिति', 'योऽपानेनापानिती'त्यादि । तत्रापि प्राणाद्यभेदाध्यासात् प्राणितीत्यादिविभ्रम. । एवञ्च,

रक्तिमप्राणनादीनामाश्रयत्वे पटात्मनो ।
उपाधित्वात् कषायेण प्राणेनेति च भण्यते ॥

एवं मानसकामादिसम्भेदे नश्चिदात्मन· ।
उपाधिभावान्मनसो मनसेति निगद्यते ॥

इयानेव तु विशेषः—यदात्मतादात्म्येनैव मनसः कामादयो विकाराः । कषायादौ तु स्वत एव रक्तिमादिरिति ।

अथवा

बुद्धिसत्त्व च तद्वृत्तिभेदश्च मन उच्यते ।
आद्य कामाद्युपादान द्वितीय करण तु नः ॥

एव चैतन्मनः सर्व मनसेति च युज्यते ।
मनो महान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः ॥

प्रज्ञा संविच्चितिश्चैव स्मृतिश्चेति स्मृतौ स्मृतम् ।
अव्यक्तात् पूर्वमुत्पन्नो महानात्मा महामतिः ॥

इति प्रकृत्य—

य उत्पन्नो महान् पूर्वमहङ्कार· स उच्यते ।
इत्युक्त्वा मनसो बुद्धेर्महतोऽहङ्कृतैकता ॥

उद्भवर्हात्मनश्चैत्र मन· सदसदात्मकम् ।
मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम् ॥

इति भेदविकल्पश्च वृत्तिभेदे विनीयताम् ।
अहङ्कारगताः कामसङ्कल्पाद्याः स्वमाक्षिकाः ॥

महतो बुद्धिसत्त्वस्य वृत्तिभेदाः पृथक्क्रिया. ।
मनो बुद्धिरहङ्कारश्चित्त चेति श्रुतौ श्रुताः ॥

'मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहङ्कर्तव्यं च चित्तं च चेतयितव्यं चे'त्यादौ । न चैवं कर्तृकरणभेदे शब्दभेदेन मतानुज्ञा, अभ्युपगमभेदात् । अग्निसंयोगेन सुवर्णादौ द्रवत्वादिवदात्मनि मनोयोगेन कामसङ्कल्पादिविक्रिया लौकिकप्रज्ञेन 'अज आत्मा महान् ध्रुव.' इत्यादिशास्त्रबाह्येन परेणोपगम्यन्ते । अस्माभिस्तु कषायोपाधिक इव रक्तिमसम्भेदः पटे स्वभावविशदे चिदात्मनि कूटस्थे बुद्ध्युपाधिकः कामादिसम्भेद इति । तदेव तृतीयानिर्देशाविरोधात् । अग्रे च 'प्राणोऽपान' इत्याद्यनुक्रम्य 'एतत् सर्वं प्राण एवे'त्यभेदवृत्तिसामानाधिकरण्यसमभिव्याहारात् । प्राणादीनां तत्त्वैकत्वे सति वृत्तिभेदमात्रत्वान्मनसोऽपि वृत्तिभेदा एव कामादयो भवितुमर्हन्ति । 'पञ्चवृत्तिर्मनोवद् व्यपदिश्यते' (ब्र०. २. ४ १२) इति च सूत्रम् । वृत्तिभेदवत्त्वे चाय दृष्टान्तो मनोवदिति । न च 'यः कश्च शब्दो वागेवे'ति कामादिवाक्यानन्तरवाक्ये वागिन्द्रियशब्दसामानाधिकरण्यवद् निमित्तनैमित्तिकत्वेन 'एतत् सर्वं मन एवे'त्यपि स्यादिति शङ्क्यम् । मुख्यसम्भवे सत्युपचारायोगेन प्रत्युक्तत्वात् । अथवा नेह वागिति वागिन्द्रियमुच्यते, 'वाक् तन्तिर्नामानि दामानी'ति श्रुतशब्दसामान्यग्रहणोपपत्ते । 'सैषा वाग् वनस्पतिषु वदति, या दुन्दुभौ, या तूणवे, या वीणायामि'ति दीक्षितदण्डदानार्थवादे च वाक्छब्दस्य शब्दसामान्यपरत्वात् । नहि वागिन्द्रियं दुन्दुभ्यादेरिति । अत एव 'वागित्येतदेषामुक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्त्येतदेषां सामैतद्धि सर्वैर्नामभि सममेतदेषां ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ती'ति नाम्ना प्रकृत्यादिरूपा वाङ् निर्दिश्यते । अथापि कथञ्चिद् 'अतो हि नामान्युत्तिष्ठन्ती'ति च 'एतद्धि नामानि बिभर्ती'ति च निमित्तेऽपि वागिन्द्रिये नीयेत, 'एतद्धि नामभि. सममि'ति तु दुर्नयम् । नहि सममिति साधारणमित्यर्थः, सर्वैर्नामभिरिति तृतीयानाञ्जस्यात् । समं तुल्यमन्यूनाधिकमभिन्नमेकमित्यर्थतोऽपि सामञ्जस्यसम्भवे दारादिबहुवचनादिवच्छब्दस्वभावायत्तत्वाश्रयणायोगात् । न चैवमत्र प्रकरणे वाचस्तादर्थ्ये सति 'वाङ्मयो मनोमयः प्राणमय' इति निर्देशविरोध., वागिन्द्रियग्रहणेऽपि 'य कश्च शब्दो वागेवे'ति निर्देशविरोधात् । वेणुवीणादिशब्दस्यावागिन्द्रियनिमित्तत्वेन सामानाधिकरण्योपचारस्याप्यसम्भवात्, शब्दगोचरवृत्त्युपाधौ वाङ्मयत्वोपचारोपपत्तेश्च । वस्तु

तस्तु 'य. कश्च शब्दो वागेवे'ति वागिन्द्रियमेवोच्यताम् । वाक्पदवृत्तिनिमित्त च शब्दकरणेन्द्रियत्वम्, अन्यानिरूपणात् । तथाच विशिष्टोपस्थितौ सामर्थ्यात् 'सविशेषणे हीति' न्यायेन वागिन्द्रियविशेषणीभूतशब्दसामान्याभेदालम्बन तद्वृत्तिभूतयावद्विशेषशब्दसामानाधिकरण्यं सङ्घटिष्यते । अन्ये तु — शब्दसमष्टिरेव वागिन्द्रियमिति सामानाधिकरण्यमुख्यतामाहुः । तस्माद् वृत्तिवृत्तिमदभेदेन सामानाधिकरण्यान्मनउपादानाः कामादय इति युक्तमुत्पश्यामः । एवञ्च 'कामा येऽस्य हृदि श्रिताः', 'मनसि मे सुख' 'तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य', व्येतु ते मनसो व्यथेत्यादिव्यपदेशाः पादे मे वेदनेत्यादिवद् न गौणा नेतव्याः । न चात्मधर्मो ज्ञान मनः क्वचिदुच्यते, येन तान्त्रिकमत्या ज्ञानवृत्तिभेदा एव कामादय स्युरात्मधर्माः । तद्धर्मकाहङ्कारस्य मनोबुद्ध्यादिसामानाधिकरण्य च दर्शितम् ।

कथ पुनरीश्वरस्यामनस कामादि[1] सङ्गच्छेत । मा सङ्गत, अस्यैव एतानि सर्वाणि नि.श्वसितानीति कामसङ्कल्पाद्यनपेक्षमेव सृष्टिश्रवणात् । तथाच श्रुति 'देवस्यैष स्वभावो ही'ति । 'सोऽकामयत', 'सत्यकामः सत्यसङ्कल्पः' इत्यादेश्च लोकदृष्ट्या कार्यसिद्धिमपेक्ष्य ज्ञानस्यैव कामादित्वोपचारोपपत्तेः । 'यस्य ज्ञानमयं तपः' इत्यादिलिङ्गात् । अथवा अन्त करणसमष्टिशक्तिमयमायोपाधिक. स भविष्यति । तस्या एव तदवच्छेदेन मनश्शब्दत्वाविरोधात् । न चैव कामसङ्कल्पादिमूलकार्यस्य स्वप्रयोजनाभिसन्धिपूर्वकत्वनियमाद् 'लोकवत् तु लीलाकैवल्यम्' (ब्र० २. १ ३३) इति न्यायविरोधः । प्रेक्षापूर्वक[2]कार्यस्यैव तथात्वनियमात् । प्रयोजनाभिसन्धिमात्रापेक्षा तत्रेति चेत् । अन्यत्रापि स्याद्, भूतानुग्रहस्य प्रयोजनत्वात् । यथाहुः साङ्ख्या 'तस्य स्वप्रयोजनाभावेऽपि भूतानुग्रह. प्रयोजनमि'ति ।

यद्येवमात्मनो न कामादिः, कस्य तिरोधानं 'पराभिध्यानात् तु तिरोहितम्—'(ब्र० ३. २. ५) इति सूत्र्येत । सतो हि तिरोधान नामेति । उच्यते— मायोपाधिकस्तावदीश्वरस्य सत्यकामसङ्कल्पादिरुपेयते । अस्याश्च सत्यकामादिशक्तिमय्या खिलो घनो बुद्धिरङ्गारकण इवाग्निना तदुपहितात्मना अविभक्त-

---

१. 'दि. ', २ 'र्वका' ख. पाठ .

वृत्तिरेव भवति । तथाचेश्वरांशस्य जीवस्य सैन्धवखिल्यस्य तद्रसाभिव्यक्तिवत् सत्यकामाद्यभिव्यक्तिशङ्कायामिदमुच्यते तिरोहितमविद्ययेति । परमेश्वराभिध्यानात् तु तिरोधानापनये सत्यकामत्वाद्याविर्भवति, यत्रेदमाम्नायते 'स यदि पितृलोककामो भवती'त्यारभ्य 'य कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठती'ति । अथवात्माभेदादेव मायोपाधिकमपि ज्ञानैश्वर्यादि जीवस्याशङ्क्याविद्ययाहमभिमानलक्षणया तिरोहितं पराभिध्यानादाविर्भवतीत्युच्यते । यत्रेदमाम्नायते—

"तस्याभिध्यानात् तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः"

इति । तस्मात् स्वावधिबाधाविषयकामादिधर्म्यहमनात्मा । कादाचित्कधर्मबाधानवधिभूतस्य विकारिणोऽप्यात्मत्वे 'अविकार्योऽयमुच्यते' इत्यादिविरोधात्, परिच्छेदाच्च घटादिवत् । न चाज्ञानत्वमनहन्त्वं वोपाधि, स्वतः परिच्छिन्नस्याज्ञानत्वनियमाद् अहन्त्वेऽपि प्रकृतिपरिणामभेदस्यानात्मत्वाच्च ॥

---

## मुक्तावहमभावः ।

अत एव न मुक्तावहम्भावोऽनुवर्तते, अविद्ययाहम्भूतस्यात्मनो विद्यया तद्बाधे केवलस्वरूपपरिशेषात् । स्वस्मै स्वयं भानं चानन्यदीयप्रकाशत्वादित्युक्तम् । अहमित्येव मोक्षीयत इति स्वरूपानुगमेन मोक्षस्य पुमर्थत्वोपपत्तेः । अहङ्काराननुगमेऽपि चाधिकारिसिद्ध्या शास्त्रप्रामाण्यं चोपपादितम् । न च ज्ञानादिधर्म्यहमित्येव स्वरूपं, तस्यानर्थोपादानतया मुक्तस्यापि कदापि तदुन्मेषप्रसङ्गात् । 'न पश्यो मृत्युं पश्यती'त्यादिशास्त्रस्य प्रसङ्गापरिपन्थित्वात् । केवलसंविदात्मवादे तु नायं प्रसङ्गः । अविद्याहङ्काराद्यनर्थोपादानबाधात् । परस्य पुनरहमित्येव ह्यविद्यानुवर्तेत । 'अहं ममेत्यविद्येयम्', 'अविद्याहम्मति स्त्रियाम्' इत्यादिदर्शनात्, अतद्रूपप्रतिष्ठत्वाच्च । अहमित्येवात्मेति हि नाद्यापि निर्व्यूढं मानानिरूपणात् । यत्त्वन्यार्थं दर्शनमुक्तं तत्र ब्रूमः—वामदेवादीनां हि प्रागहङ्कारसम्भेदेनैवात्मव्यवहाराद् विद्याविषयेऽपि तेनैवोपलक्ष्यव्यवहारोऽहं मनुरभवमित्यादिः, केवलप्रत्यगात्मविषयशब्दान्तराभावात् । तथाच स्मृतिः—

"ममेति यन्मया चोक्त न सदेतन्न चान्यथा ।
नरेन्द्र ! गदितु शक्यमपि विज्ञेयवेदिभि. ॥"

इति । कारणात्मनश्चाहङ्कारसमष्टिशक्तिमयमायोपाधिक एव तद्व्यवहारो हन्ताहमित्यादि. ।

यद्वा योऽयमहवादो दर्शितः परमात्मन ।
लोकदृष्ट्यनुरोधेन श्रुतेर्वचनमेव तत् ॥

अह पतेयमित्येषा शिला पतति पर्वतात् ।
इत्यन्ययत्नानपेक्ष्याज्जडमप्युपचर्यते ॥

एव परात्मा मायावी जगदात्मा विवर्तते ।
स्वय कर्तेति न प्राह श्रुतिर्लोकानुवर्तिनी ॥

अवतारेष्वहवादस्त्वहङ्कारोपसङ्ग्रहात् ।
तत्त्वविद्वामदेवादेरिवानहमि युज्यते ॥

न च मुख्यसम्भव. । 'ममेत्युक्तं न सदि'त्यात्मन्यस्मत्प्रयोगस्यासाधुत्वस्मरणात् । अत एव 'अनात्मन्यात्मबुद्धिर्या' इत्यविद्यास्थाने 'पञ्चभूतात्मके देहेऽहमिति मतिं कुरु' इति निवेशाद्

"आकाशवाय्वग्निजलपृथिवीभ्यः पृथक्स्थिते ।
आत्मन्यात्ममय भाव क. करोति कलेबरे ॥"

इति व्यतिरेकवचने चात्मग्रहणादहमेवात्मेति निरस्तम् । किं देहे केवलात्मभावाभिनायकशब्दान्तराभावादहमिति मतिरित्याहेत्येवमर्थमात्मग्रहण व्यतिरेकवचने, कि वा अहमित्येवात्मेत्येत्रमर्थमिति नियामकापेक्षाया, 'ममेत्युक्त न सत्', 'न चान्यथा गदितु शक्यमि'त्यतः प्रथमकल्पव्यवस्थानादिति ।

केचित्तु — हिरण्यगर्भादीनामेवाय ब्रह्मात्मना सर्वकारणत्वाभिनयरूपः श्रुतिस्मृतिप्रपञ्च इति तदुपाधिक. परमात्मन्यहंव्यवहारः

"ओ नमोऽहपदार्थाय पराहन्तास्वरूपिणे ।
नमो हिरण्यगर्भाय हरये शङ्कराय च ॥"

इति पाद्मोक्तेरिति वदन्ति ।

---

१. 'परमात्मोक्ते' घ पाठ

एवञ्च नह्यहङ्कारो नामरूपव्याकर्ता, न वा क्षराक्षरातीत., नापि जगत्प्रभव., न वा चिदचिदन्तरात्मा, न वा मुक्तिप्रद इत्युपालम्भो डिम्भदासजनविस्रम्भणसम्भ्रम एवेत्युपहास्य ।

यत्तु — प्रकृतिपरिणामभेदोऽन्यो वाहङ्कार क्षेत्रान्तर्भूतोऽन्यथा वास्मदर्थ एव तु नात्मेति । तत्र वदाम. । प्रत्यगात्मनोऽपि तावदहङ्कारशब्दत्वमिष्टम् 'अथातोऽहङ्कारादेश.' इत्यादौ । किमसावहमिति कारोऽस्मिन्निति योगकल्पनयात्मनि वर्तताम्, उत स एवाहङ्कार[1]शब्द· कथमपि वर्तताम् । वय तु पश्यामः — योगकल्पनातो वर रूढिपूर्विका लक्षणा, प्रथमप्रत्ययाविघातात् । दृष्टा च कालविशेषवाचिदर्शादिशब्दस्य तत्सम्बन्धनिमित्ता कर्मविशेषवृत्तिः । एवमिहाप्यहङ्कारोपधाननिमित्ता तत्पदवृत्तिरात्मनि स्यात् । सम्भवाद्, 'अहङ्कारोऽध्यात्ममहङ्कर्तव्यमधिभूतम्', 'अहङ्कारश्चाहङ्कर्तव्य च'

"मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम्",
"अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा"

'महाभूतान्यहङ्कारः', 'अहङ्कारे तथा मनः' 'अहङ्कार तथा बुद्धौ',

"अहमित्येव सम्भूतो द्वितीय. सर्ग उच्यते"

इत्यादिषु प्रयोगप्राचुर्येणाहङ्कारशब्दस्याव्यक्तपरिणामभेदे रूढत्वाच्च । यदिकाम च्विप्रत्ययमन्तर्भाव्यान्यथा वा तत्रैवाय व्युत्पाद्येत, प्रवृत्तिनिमित्तवैशद्यफलत्वात् । न त्वन्यत्र वृत्तिभेदकल्पना, गौरवात् । अत एवाहङ्कारपर्याया विज्ञानादिशब्दा अप्यात्मनि प्रयुज्यन्ते 'विज्ञानं यज्ञ तनुते', 'प्राणबन्धन हि सोम्य! मन.' इत्यादौ । एवमात्मनोऽहम्भावोऽपि तदुपाधिक एव स्याद्, न स्वतः । अहङ्कारान्यत्वे सत्यहशब्दप्रत्ययविषयत्वाद् देहादिवत । त्वयैव तस्यानहम्यहम्भावकरणत्वेनाहङ्कारशब्दत्वोपपादनात् । अत एव

"अह ममेत्यविद्येय व्यवहारस्तथानया"

इत्यात्मन्यहम्बुद्धेरविद्यात्वमुक्त्वा,

"परमार्थस्त्वसलाप्यो गोचरे वचसा न स"

१ 'र' ख पाठ.

इति विशुद्धचिदात्मनोऽहशब्दाद्यविषयत्व दर्शयति। अहम्भावस्य स्वाभाविकत्वे च तदयोग । 'परमार्थस्तु सलाम' इति पाठे तु परमार्थं सत्तानन्दप्रकाशात्मान सम्यक् फलतया व्यवहाराद् निशिपस्तत्राहमिति व्यवहारहेत्वविद्याभावं दर्शयतीति गमयितव्यम् । कौर्मे च

'एक एव महानात्मा सोऽहङ्कारोऽभिधीयते ।
स जीव सोऽन्तरात्मेति गीयते तत्त्वचिन्तकैः ॥"

इति । प्राणधारणोपाधित्वाज् जीव इत्युपचारादात्मनोऽहम्भावादिरपि तदुपाधिक इति गम्यते ।

"तेनाविवेकजस्तस्य संसार पुरुपस्य तु"

इति वाक्यशेषे संसारस्य तदुपाधिकत्वाभिधानाच्च । 'अहमित्येव सम्भूत' इत्यादिदर्शनात् तस्मिन्नेवास्मदर्थेऽनुगमादात्माप्यस्मदर्थ उच्यते ॥

---

अहङ्कारादेशवाक्यार्थः ।

अन्यथा 'अथातोऽहङ्कारादेश' इत्युक्त्वा 'अथात आत्मादेश' इति पृथङ् नाम्नायेत । अहङ्कारस्यैव तवात्मत्वात् । 'स एवा नस्ताद्' इत्यादिना परमात्मनोऽपि पृथगुपदेशात् । तथोपदिष्ट एपात्मा केन रूपेण ग्रहणीय इत्यपेक्षितेऽहमित्येव ग्रहणीय इत्यहङ्कहविविपरम् 'अथातोऽहङ्कारादेशः' इत्यादि,

"मत्तः सर्वमहं सर्वं मयि सर्वं सनातने ।
सर्वगत्वादनन्तस्य स एवाहामिव स्थितः ॥"

इत्यादिदर्शनात् । तदुपयोगितया च 'अथात आत्मादेशः' इति तस्यैवान्तर्यामित्वेनोपदेश इति त्रिविधोऽप्युपदेशः परमात्मविषय एवेति चेत् । न । अहमिति कारः करणमिति सामानाधिकरण्ये करोतेः 'उदरमन्तर कुरुते' इत्यादौ तव ज्ञानार्थत्वमनिच्छत इह तदुपगमविरोधात् । कारशब्दस्य कर्मवृत्तावहमिति विकल्पस्य क्रियमाणत्वविशेषणेन ध्यानरूपत्वलाभेऽप्यहङ्कहस्याधुनैव विधेयत्वेनाहमिति क्रियमाणस्यादेश इति सिद्धवद्वचनानुपपत्तेः ।

---

१ 'छमेवा' स पाठः.

अहीमित्यस्य प्रत्ययस्य कार करणमादिश्यत इति प्रकृत्य 'अहमेवाधस्तादह-मुपरिष्टादह पुरस्तादह पश्चादह दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्वम्' इति स्वरूपोपदेशोपसहारविरोधात्। न खल्विद 'मत्त सर्वमि'त्यादिवदुपासकस्या-भिनयरूप, येन शास्त्रीया दृष्टिरेषेति स्वत एव प्रतीयेत। आत्मतत्त्व जिज्ञा-समानाय हि नारदाय सनत्कुमारोपदेशरूप प्रकरणम्। तत्राहमेवेदं सर्वमिति धारयेदिति गौरवाय पर निर्निदानं कल्प्येत। न च 'तरति शोकमात्मवित्', 'भूमा त्वेव विजिज्ञासितव्य.', 'स वा एप एव पश्यन्नेव मन्वान' इत्याद्युप-क्रमोपसहारादिना ज्ञानविधिपरत्व प्रकरणस्यावगन्तव्यम्। अत्र प्रकरणे ह्युपा-सने विधित्सिते नाम ब्रह्मेत्युपास्स्वेत्यादिवद् भूमानमुपास्स्वेति श्रूयेत। 'तरति शोकमात्मविदि'ति तु 'स एवाधस्तादि'त्याद्युपदेशे प्रधाने स्वरूपमात्रावसायिनि फलार्थवाद। 'भूमा त्वेव विजिज्ञासितव्य' इति च न विधि, भूमस्वरूपो-पदेशग्रहावधानमात्रफलत्वात्। 'भूमान भगवो विजिज्ञासे' इत्युत्तरे तदावि-ष्करणात्। समभिव्याहृतस्य च फलावचनादविधित्सितेऽपि ज्ञाने विज्ञान त्वेव निजिज्ञासितव्यं, मतिस्त्वेव विजिज्ञासितव्या'इत्यादेरनन्यफलत्वाच्च। न च 'एव पश्यत एव मन्वानस्यैव विजानत आत्मत' प्राणः' इत्यादिना विधे-याहङ्ग्रहफल जीवस्य प्राणादिहेतुत्व प्रतिपाद्यते। उपासकस्य मुक्तस्य जग-द्व्यापारवर्जं भोगमात्रसाम्याभ्युपगमाद्, ब्रह्मणश्चापश्यतोऽप्यात्मन प्राणादि-हेतुत्वेन 'एव पश्यत' इति विशेषणानर्थक्यात्। किन्त्वात्माभेदे विवक्षिते मा जगत्कारणत्वादि वैधर्म्यमाशङ्कीति तदात्मन एव विजानत इति केवल-मपदिश्यते, न तु तत् प्रतिपिपादयिषितमित्यसकृदावेदितम्॥

---

भूमवाक्यार्थः।

अपिच 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा' इति प्रतिषिद्धाशेषभेदे न शक्यमुपासनं विधातु, विधेरधिकारिविषयादिभेदसा-पेक्षत्वात्। न चात्र यत्र सकलविभूतिविशिष्टे विपुलतमे ब्रह्मण्यनुभूयमाने नान्यत् पृथग्भूत स्वतन्त्र पश्यतीत्याद्यर्थकल्पनावकल्पते, अयथाश्रुतेरगवि-कावाधाच्च। विशिष्टाभेददर्शन च सर्वभेदापवादेन प्रत्यवोचाम।

---

१. 'विज्ञा' ख पाठ

यत्तु अत्र केनचिदुत्प्रेक्षित — यथा लोके किञ्चिद्विषयसुखमनुभवन्नप्यधिकसुखलिप्सया नृत्तगीतादिविषयान्तरदर्शनाकर्णनादिपु व्यासजति, एव यत्रास्वाद्यमानेऽन्यन्नृत्तगीतादि न पश्यति न शृणोति न विजानातीति भूम्न· सुखस्य विगलितवेद्यान्तरमास्वादनीयत्वप्रतिपादनमुखेन निरतिशयोत्कर्ष प्रतिपाद्यते । 'नाल्पे सुखमस्ती'ति कीटादिहिरण्यगर्भान्ते सुखमात्रनिषेधायोगेन निरतिशयसुखे निषेध्ये 'भूमैव सुखमि'ति निरतिशयसुखत्ववि-धिलाभात् । अथवा यत्र दृष्टे नान्यत् प्रकृतसुखविरोधि दुःखं पश्यतीत्याद्युच्यते । तथाचोपसंहार —

"न पश्यो मृत्यु पश्यति न रोगं नोत दु खताम्"

इति । सर्वथैव न भेदप्रतिषेधः, प्रकृतार्थाननुगुणत्वादिति ।

तदसारम् । 'श्रुत ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदि'ति 'सोऽह भगव· शोचामि तं मा भगवान् शोकस्य पार तारयतु' इत्युपसन्नाय नारदाय 'आनन्द ब्रह्मणो विद्वान् न बिभेती'ति श्रुत्यन्तरात् 'सुख त्वेव विजिज्ञासितव्यम्' इत्यवतारिते तज्जिज्ञासमानाय 'यो वै भूमा तत् सुखं नाल्पे सुखमस्ति भूमैव सुखमि'त्यादिक्षत् सनत्कुमारः । यद् बहु तत् सुखमित्युक्ते मा सविशेष बोधीति बहोर्भावः सत्तामात्रं भूमा निर्दिश्यते । 'धातु. प्रसादान्महिमानमीश', 'स य एषोऽणिमैतदात्म्यमि'त्यादावपि तुल्योऽय चर्च' । एव प्रत्ययार्थवत्त्वे सम्भवति बह्वन्न पच्यते यत्राल्पं वा बहु वा यस्य श्रुतस्योपकरोति य इत्यादिवदल्पप्रतिद्वन्द्वितया निर्देशलिङ्गमात्रादधिकवचनो बहुरेव भुमेति न भावभवित्रभेदोपचारकल्पना युक्ता । न खलु 'नाल्पे सुखमस्ती'ति जीववर्गे निरतिशयसुख प्रतिषिध्यते, येन भूमैव सुखमिति निरतिशयसुखत्वविवक्षा लक्ष्येत । अल्पं परिमित परिच्छिन्नमिति ह्यनर्थान्तरम् । सप्तमी च नाधारे, भूमा सुखमिति सामानाधिकरण्यप्रक्रमात् । किन्तु निर्धारणे । तथाच नाल्पे परिच्छिन्ने प्रपञ्चे किञ्चिदपि सुखमस्ति । सर्वस्य दु·खान्तत्वादापेक्षिक तु तत् । भूमैव सुखं, स्वभावानन्त्यादिति सर्वदु.खहेतूपशमापेक्षयावधार्यते, तदुपपादनाय भूमजिज्ञासामवतार्य तस्येदं लक्षणमुच्यते 'यत्र नान्यत् पश्यती'त्यादि । कथ चैवं, नारद शोकपार तार्यते, यदि सदन्यदशक्य द्रष्टु श्रोतु विज्ञातु चेति

भेदमात्रापवादोऽभिप्रेयेत । द्वैतदर्शनमूलो हि सकल शोक । तदभावे तीर्णो हि तदा सुप्तौ सर्वान् शोकान् हृदयस्य भवति । श्रुतिश्च द्वैतदर्शनादिमूल भयादि दर्शयति 'द्वितीयाद् वै भय भवति', 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भय भवति',

"मृत्यो. स मृत्युमाप्नोति य इह नानेव पश्यति"

इत्याद्या । एवञ्च यत्रास्वाद्यमान इत्यधिकारापेन नान्यदिति सामान्यशब्दस्य नृत्तादिविषयविशेषसङ्कोचेन च क्लिश्यन्तो दुर्बुधा शोचितव्या । 'यत्र त्वस्य सर्वमात्मैवाभूदि'ति श्रुत्यन्तरैकार्थ्येन यत्र सत्यन्यस्मिन् विद्याविषये नान्यत् पश्यतीति दु खहेतुद्वैतमात्रनिषेधेऽपि निरतिशयसुखत्वलाभात्[1] । एवञ्च 'नपश्यो मृत्यु पश्यती'त्याद्युपसहारोऽपि घटते, द्वैताबाधे तदयोगात् । ननु स्वानुकूलतमभगवल्लीलोपकरणतया[2] तदंशतया वा सदेव जगदनुभूयमान सुखमेवेति दु.खादर्शनमुपपन्नम् । स्वप्रियतमस्वामिलीलोपकरणत्वेन तदंशतया वानुभूयमानोद्यानतदङ्गगुणादे. सुखत्वदर्शनात् । नहि किञ्चित् स्वभावतः सुखमेव दुःखमेव वा ।

"वस्त्वेकमेव दुःखाय सुखायेर्ष्योद्भवाय च ।
कोपाय च यतस्तस्माद् वस्तु वस्त्वात्मक कुत. ॥
तदेव प्रीतये भूत्वा पुनर्दु खाय जायते ।
तदेव कोपाय पुनः प्रसादाय च जायते ॥
तस्माद् दुःखात्मकं नास्ति न च किञ्चित् सुखात्मकम् ।"

इत्यव्यवस्थास्मरणाच्चेति चेत् । न । व्यभिचारात् । प्रियतमात्मलीलोपकरणतया तदंशतया चानुभूयमानदुष्कृतशरीरादेर्दु खत्वदर्शनाद् , दु खत्वेऽप्यव्यवस्थास्मृतेरविशेषात् । कर्मणा परिमितरूपानुभवनिमित्तं तद्दु खत्वमिति चेद्, अल तदंशत्वाद्यनुभवबलमाश्रित्य । कर्माभावे पृथगनुभूयमानस्याप्यदु.खत्वोपपत्तेः । भयशोकादि च भेददर्शनमात्रतन्त्रमित्यावेदितमिति भेदबाधादेव दु.खादर्शनमिति युक्तमिति ।

---

१. 'खला', २ 'या म' ख पाठ

एवमशेषभेदनिषेधेन सुखामृतात्मनि भूम्न्युपदिष्टे 'स भगवः कस्मिन् प्रतिष्ठितः' इति नारदस्य प्रश्न उपपद्यते। भावो हि भवितृप्रतिष्ठितो गोत्वादिर्लोकदृष्टः, सुख च विषयप्रतिष्ठितं तदधीनमिति। तत्राद्यस्योत्तरं 'स्वे महिम्नी'ति। स्वशब्द आत्मवचन.। ङे. स्मिन्नभाव आर्षः। महतीत्युक्ते सविशेष मावगामीति महिम्नीति भावो निर्दिश्यते। अत्र 'स्वयदासास्तपस्विन.' इत्यादौ दासान्तरादिवदाश्रयान्तरस्य व्यावृत्तिर्विवक्षिता। भावो हि सत्तात्मा भवितृप्रतिष्ठित इति विभ्रम। भाव एव त्वनुगतात्मनि महति भवितारो विशेषा अल्पे प्रतितिष्ठेयुरिति 'यदि वा न महिम्नी'ति। द्वितीयस्य कथ 'गोऽश्वमिह महिमेत्याचक्षते', 'नाहमेव ब्रवीमि' न विषयसुखमिवामुष्मिन् प्रतिष्ठित भूमसुख ब्रवीमि नित्यत्वादिति। अपिच 'अन्यो ह्यस्मिन् प्रतिष्ठित' भूमानन्दस्तु निरस्तनिखिलभेदत्वाद् न क्वचित् प्रतिष्ठितः, सर्वात्मा हि स इत्युपपादनाय 'स एवाधस्तादि'त्यादि प्रबन्ध इति नात्र शक्यमुपासनाविधानमवगन्तुम्। प्रकरणस्य निर्विशेषात्मपरत्वात्। किन्तु 'स एवेद सर्वमि'त्युक्त्या मा भूदुपदेश्यस्य भूम्नि पारोक्ष्यभ्रम आत्मनोऽपि मिथ्यात्वसंशयो वेति 'अथात आत्मादेश' इति वक्तव्ये, तस्य प्रत्यगात्मन. स्वरसतः सर्वैरहङ्कारगृहीतत्वात कथ सर्वात्मा भूमेति मा शङ्कीत्यहङ्कारादेशेनैव पारोक्ष्यभ्रममाक्षिप्य सैव पुनराशङ्का मानुवृतदिति अहङ्कारादात्मानं विवेचयितु पृथगादेश. 'अथात आत्मादेश' इति श्लिष्टतरम्।

केचित्तु—'स एवाधस्तादि'ति बिम्बस्य तत्पदार्थस्य 'अहमेवाधस्तादि'ति प्रतिबिम्बस्य त्वम्पदार्थस्य चोपदिष्टे सार्वात्म्ये, तुल्यलक्षणतया तयोरभेदोपपत्तौ शुद्धस्य लक्ष्यस्य वाक्यार्थस्य सार्वात्म्यमुपदिश्यते 'अथात आत्मादेश' इत्यादिनेति व्याचक्षते। तदयुक्तमिव। 'यत्र नान्यत् पश्यती'-त्यादिप्रतिषिद्धाशेषभेदस्यैव भूम्न. प्रकृतस्य 'स एवाधस्तादि'त्यवमर्शात्। पारोक्ष्यविभ्रमस्तु तच्छब्दप्रसञ्जितो निरसनीय.। भूमैवाधस्तादित्यादिनिर्देशोऽपि शब्दगत्या प्रमात्रव्यवधानाप्रत्ययात्। तद्व्यापरोक्ष्यं वस्तूनाम्। यद्यपि देहोऽहङ्कारगृहीत, तथापि नियमहेतुविरहादहङ्कारगृहीतमात्रादेव विविक्तस्यात्मनोऽहम्भावो न शक्यसम्पादः। नापि तस्याहमात्मन्वे परिमितस्य

१ 'मपाक्षि' ख पाठ,

सार्वात्म्यमिति । यद्यपि चाहङ्कारादेशो हिरण्यगर्भविषयेऽपि शक्यः परिणेतुम्, 'आत्मैवेदमग्र आसीत् पुरुषविध. सोऽहमस्मीत्यग्रे व्याहरदि'ति श्रुतेरहङ्कारपदस्याभिमानवाचिनोऽजन्ततया वा तद्वदभेदोपचारेण वा अहमिति कृतिरभिमानो यस्येति व्युत्पत्त्या वा तत्र कथञ्चिद् वृत्तिसम्भवात्, तथापि न प्रकृतोपयोग[1] । नहि बोध्यस्य हिरण्यगर्भो हि सर्वात्मा न भूमेति शङ्का समुन्मिषति, तस्य तदप्रसिद्धेः । अथवा समुन्मिषति तस्य पुन. सार्वात्म्योपदेशे किमुक्त स्यात् । प्रत्युत स एव भूमेति मतिपर्यवसानं वा स्यात्, 'तरति शोकमात्मविदि'ति प्रकृतात्मवेदनाय तत्रैव भूम्नि वात्मादेशवृत्त्युपपत्ते । तस्मादापरोक्ष्याय भूमानमहङ्कारविविक्तं प्रत्यगात्मानमवसाययितुमेवाय पृथगुपदेश इति नाहमात्मेति ॥

---

आत्मानहन्त्वानुमानम् ।

तथाचाय प्रयोग.—आत्मा न स्वाभाविकाहम्भाव सत्यपि सामग्र्ये तद्व्यभिचरितावभासत्वाद् व्यतिरेकेणाहङ्कारवत् । चिदात्मैव तदवभासे सामग्र्यमुभयसम्प्रतिपन्नम् । सुप्तादौ च तद्व्यभिचार निरचैष्म । 'यस्य नाहङ्कृतो[2] भाव.' इति च स्मृतिः । अथवा यज्ञदत्तान्याहम्भावो न तस्यानौपाधिकधर्म, अहम्भावत्वाद् यज्ञदत्ताहम्भाववत् । अन्यथा सुप्तादावपि तदवभासप्रसङ्गः । अथवा आत्माहम्भावबाधानवधिभिन्नस्वभाव[3], तद्भेदे बाधकाभावे सत्यबोधनीयतदभेदत्वे सति वा, पृथङ्निर्दिश्यमानत्वात्, फलान्तरवैधुर्ये सति पृथक् तुल्योपदेशत्वाद् वा, खण्डा कुण्डोध्नी बहुधस्या सुदोहा गौर्मुण्डा कुण्डोध्नीत्यादिव्यपदेशवत् । सामान्यव्याप्तौ भूम्नोऽप्यात्मनः पृथङ्निर्देशाद् मा भूद् व्यभिचार इति सर्वत्र सत्यन्तम् । तद्भेदे हि द्वयोः सार्वात्म्यविरोध. ॥

---

स एवाधस्तादित्यादिश्रुत्यर्थ ।

यत्तु—'स एवाधस्तात् स उपरिष्टात्', 'आत्मैवाधस्तादात्मोपरिष्टात्' इत्यादिना सर्वगतत्वमुपदिश्यते, न सार्वात्म्यमिति । तन्न । उक्तानुक्तो-

---

१ 'तो यो', २ 'वनत', ३ 'शाविषयव' ख पाठ

पसङ्ग्रहेण 'स एवेदं सर्वम्', 'आत्मैवेदं सर्वमि'ति सार्वात्म्योपसंहारविरोधात्। अथानुपजातविरोधसर्वगतत्वोपक्रमेण *वेदोपक्रमन्यायादुपजातविरोधसार्वात्म्योपसंहारं कथञ्चिन्नीयेत। न च '—सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' (५ ३. २७) इत्यविशेषस्मरणादुपक्रमे सन्दिग्धे 'सन्दिग्धे तु वाक्यशेषात्' (जै० १ ४. २९) इति न्यायादसन्दिग्धाभेदपरसामानाधिकरण्योपसंहारेण सार्वात्म्यपरत्वावधारणमिति वाच्यम्। व्यवहारप्राचुर्येण 'अधस्तादि'त्यादौ सप्तम्यर्थोपस्थितिप्राशुभावेन तदर्थसन्देहाभावादिति। नैवम्। अर्थान्तरेऽपि सत्यधोदेशे 'स एवे'त्याद्यवधारणविरोधेन किं नियन्तृतासम्बन्धेनेत्यध्याहृत्य नियन्त्रन्तरनिषेधार्थमवधारणमस्तु, उत यथाश्रुति सामानाधिकरण्यावगतस्वरूपाभेदे नीलमुत्पलमित्यादाविव पदोपस्थापितरूपभेदवैशिष्ट्यबाधार्थमवस्थाप्यतामिति तदर्थसन्देहोन्मेषात्। एवं च यदा 'त्रिवृद् बहिष्पवमानम् आदित्यं प्रायणीयं पयसि चरुः आश्ववालः प्रस्तरः' इत्यादौ त्रिवृच्चर्वाश्ववालादेस्त्रैगुण्यस्थालीवाजिवालादावेव सिद्धामपि लौकिकप्रतिपत्तिमपहृत्य स्तोत्रीयानवकौदनकाशादावप्रसिद्धापि वाक्यशेषस्था प्रतिपत्तिराद्रियते 'शास्त्रस्था वा तन्निमित्तत्वात्' (जै० १ ३. ९) इति। तत एव तदर्थो व्युत्पत्स्यत इति। तदा किमङ्ग[1] पुनर्व्याकरणानुशिष्टलोकानुगता प्रातिपदिकार्थमात्रप्रतिपत्तिरिति। तस्माद् भेदे भूमात्मनोः सार्वात्म्यविरोधादभेदस्य चानवगतत्वेन बोधनीयत्वा[2]ल्लौकिके चाहङ्कारसम्भेदेनाप्यात्मनो भेदे तुल्योपदेशस्याभेदपरत्वाद् भूमात्मनोरभेद एव। तत्र च फलं भूम्नः पारोक्ष्यनिवृत्तिः। नैवमहङ्कारस्य सार्वात्म्यमुपदिश्यते, प्रकृतिपरिणामस्य तदयोगात्। आत्मनश्च द्विस्तदुपदेशानर्थक्यात्। नह्यस्मादुपदेशात् प्रागहङ्कारभेदः प्रतिपन्नः, येन तुल्योपदेशस्तदभेदफल उत्प्रेक्ष्येत। अहङ्कारमुपादायात्मन एव सार्वात्म्योपदेशप्रयोजनं त्वावेदितम्। न च लौकिकोऽहमभेदो बोधनीयः। एवं सति नात्मनोऽहङ्कारव्यतिरेकादन्यत् पृथक् तुल्योपदेशफलमालक्षयितुं शक्यमिति। न चैवम् 'अहं ब्रह्मास्मी'त्या-

१ 'पणम्म', २ 'ल्लोके' ख पाठ

* जैमिन्नाये तृतीयस्याध्यायस्य तृतीयपादे प्रथमाधिकरणम्।

द्युपदेशविरोधः, सत्तामात्रवाक्यार्थव्यवस्थापनात्। यत्तु — अहङ्कारात्मानौ परस्पर भिन्नौ, अज्ञातभेदत्वे सति पृथङ्निर्दिश्यमानत्वाद् व्यतिरेकेण ब्रह्मात्मवदिति। तदयुक्तम्। 'यजति', 'ददाति', देवो देवदत्तः, खण्डो मुण्ड' इत्यादाविव शब्दान्तरत्वादहङ्कारात्मभेदस्य ज्ञातत्वादसिद्धेः। प्रागस्मादुपदेशादज्ञातभेदत्वे सतीति विशेषणे च भूमात्मभेदोऽपि तर्हि प्रागस्मादुपदेशादज्ञात एव, प्रतियोगिनो भूम्नोऽविज्ञानादिति व्यभिचारात्, सोऽयमित्यादावज्ञातभेदत्वे सति पृथङ्निर्दिश्यमानत्वेऽपि तदेतयोरभेदेनानैकान्त्याच्च, अभेदमानविधुरत्वस्योपाधित्वाच्च। न चाहमात्मा, ज्ञातृत्वाद् व्यतिरेकेण घटादिवदिति युक्तम्। अहवृत्तेरस्मन्मते ज्ञानपदवृत्तिनिमित्तस्य तव ज्ञानत्ववदज्ञानत्वात्। सविदाश्रयत्व चासिद्धम्, ज्ञानपदाभिधेयाश्रयतामात्रस्य तवानात्मनि विषयसविदि व्यभिचारात्। लाघवेन घटादावज्ञानत्वमेवानात्मत्वप्रयोजकमित्यावेदितम्॥

---

## कर्मकर्तृविरोधचिन्ता।

अपिचाहमात्मत्वे मामहं जानामीति कर्मकर्तृत्वानुभवविरोधः। स्यादेतत्। न तावत् तदनुभवयोरनैकान्त्यानुमेयज्ञानवत्स्वभावविरोधकल्पनाहेतुं पश्यामः। न च विषयविरोध', नहि परसमवेतक्रियाफलशालित्व कर्मत्व, परत्र फलहेतुक्रियाश्रयत्व वा कर्तृत्व, येनैकत्राहमात्मनि ते विरुध्येयाताम्। वृक्षात् पर्ण पततीत्यादौ पर्णपतनक्रियाजन्यविभागफलशालिनो वृक्षस्यापि कर्मत्वापत्तेः। अथ।स्तिभवतियततितिष्ठत्यादय कर्तृस्थभावा। करोतिपचतिपठतिपश्यत्यादय कर्मस्थभावा। तत्रान्त्या परत्र स्वजन्यफलावच्छिन्ना धातुभिरभिधीयन्ते, नाद्या। तथाच परसमवेतक्रियाप्रतिपत्त्यनुबन्धि तत्फलशालित्व कर्मत्वमनतिप्रसङ्गीति चेद्, न। कुठारमुद्यच्छतीत्यादौ उद्यमनक्रियाप्रतिपत्त्यनुबन्ध्यूर्ध्वदेशसयोगफलशालिनो देशस्यापि तत्प्रसङ्गात्। किन्तु करणव्यापारविषयत्वं कर्मत्व, प्रकृतक्रियाश्रयत्वं च कर्तृत्वम्। तच्च मनोव्यापारविषयस्याहमो ज्ञातुरविरुद्धम्। न च तस्यैव तदैव तस्यामेव क्रिया-

यामेकस्य कर्तृतया कर्मतया च गुणप्रधानभावप्रत्ययविरोधः, रूपभेदोपपत्तेः। अन्यथा तस्मिन्नेव यागे तस्यैव कर्तृतया गुणत्वमधिकारितया प्राधान्य चेति वादरिनियस्थितिव्याकोपादिति ।

अत्रोच्यते—'कर्तुरीप्सिततमं कर्म', 'तथायुक्तं चानीप्सितम्' (१. ४. ४९, ५०) इति पाणिनीयं दर्शनं कर्तृसमवेतक्रियाविषयः कर्मेति पर्यवस्यति । अन्यथा इतरेतरमव्याप्तेः । तत्त्वं च तत्क्रियोद्देश्यतया तद्व्याप्यतया वा । साध्यत्व स्वरूपेण वा स्यात् स्वगतविशेषेण वा । गामिच्छति द्वेष्टीत्यादौ च स्वसम्बन्धितयान्यथा च गवादेरपि साध्यत्वात् । 'अकथितं च' (१. ४. ५१) तद्रूपता न व्यभिचरति । इच्छादिकरणमनोव्यापारविषयत्व तु गामिच्छतीत्यादावव्याप्तम् । विषयसौन्दर्यादिज्ञानमपि तत्करणमिति चेत्, तथापि तस्य तद्विषयव्यापारान्तराभावादव्याप्तम् । कर्तृत्व च न प्रकृतक्रियाश्रयत्वमेव, शरेण शूरेण हन्यत इत्यादौ हन्तिक्रियाश्रये करणेऽतिव्याप्तेः । प्रतिपत्त्यनुबन्धितत्क्रियाश्रयताकत्वमपि ह्यत्र न विशिष्यते, कर्मनिबद्धक्रियया कर्तृकरणान्वयाविशेषात् । किन्तु 'स्वतन्त्रः कर्ता', 'तत्प्रयोजको हेतुश्च' (१. ४. ५४, ५५) इति क्रियोपकरणप्रयोजकः कर्तेत्युच्यते । तत्प्रयोजकत्व च फलावधिक्रियानुकूल्यापादन क्रियया सङ्कल्पेन सान्निधिनैव वा स्यात् । तत्रैवं सत्यहङ्कारः कर्ता स्वसमवेतज्ञानक्रियया न साध्यः, स्वरूपेण प्रागेव सत्त्वात् । नापि ज्ञाततया, ज्ञानजज्ञातत्तानिरासात् । अज्ञाननिवृत्तिश्च न ज्ञानादतिरिच्यते । अतिरिच्यमानयापि तया न ज्ञानक्रियाया उद्देश्यतया साध्यः । कर्तुस्तत्साध्यतोल्लेखन ह्युद्देशोऽहमि ज्ञातेऽज्ञाते वा न युज्यते । अत एव न तद्व्याप्यतयापि विषय । स्वयम्प्रकाशचिदात्मनो नित्यापरोक्षस्याज्ञाननिवृत्त्या स्वरूपावभासेन वा रूपान्तरेणापि साध्यत्वायोगात् । अहमात्मजाड्यमतेऽपि न ज्ञानादज्ञाननिवृत्तिरवभासो वातिरिच्यते, प्रागभावनिवृत्ति प्रतियोगी अर्थप्रकाशो बुद्धिरिति चोपगमात् । नहि ज्ञानमुत्पद्याहमा सम्बध्यते, येन स्वसमवेतज्ञानसम्बन्धितयापि साध्येत । सम्बध्यैव तूत्पद्यते । निर्विषयाश्रयविषयसवित्सत्त्वानभ्युपगमात् । अपिचैकत्रैकदैकस्य गुणप्रधानभावप्रत्ययो विरुध्यते । अत एव भिन्ननिरूप्योऽपि गुणप्रधानभावस्तस्यैव तदैवाशक्यज्ञानो

---

१ रव्या', २ 'त् ज्ञा' ३. त्ता' ख पाठ

विरोधादिति *'वाजपेयेन यजेते'त्यत्र द्रव्यपरतामपहाय वाजपेयपदस्य नामधेयत्वमाश्रितम् । 'सोमेन यजेते'त्यादौ मत्वर्थलक्षणा च । अत एव च भेदलिङ्ग 'कर्मकर्तृव्यपदेशाच्च' (ब्र० १ २. ४) इति सूत्रितम् । न च वयमेकस्यैकत्र रूपभेदेन गुणप्रधानभाव स्वतो विरुद्धमातिष्ठामहे, अपि तु प्रत्ययत. । तथाच यागे पुरुषस्याधिकारितया प्राधान्यप्रत्यये सत्याक्षेपात् कर्तृतया गुणत्वप्रत्यय इति नास्माक बादरिनयविरोधः । तस्मादहङ्कारस्य ज्ञाता नाहमात्मेति सिद्धम् ॥

---

## ज्ञातृत्वोपपत्तिः ।

कथ पुनरेव मामह जानामीत्यनुभव , कथं च कर्तृसमवेतक्रियया साध्योऽहङ्कार इति ।

उच्यते — अहङ्कारोपाधिकमात्मनो ज्ञातृत्वमित्यनन्तरमेव वक्ष्यते । अहङ्कारविशिष्टस्य ज्ञानात्मन एव च तदुपधेयरूपभेदेन स्वाश्रितत्वावभासेन व्याप्त्या जडोऽहङ्कारोऽवभासेन साध्यते । यद्यपि तदभिव्यक्त्या तदवभासात्मनः स्फुरणस्य फलस्यैवाश्रितत्वावभासो न तदुपधेयमात्ररूपभेदस्य, तथाप्यस्याहमनुषङ्गादेव तदवभासस्फुरणाविवेकेन मामह जानामीत्यवभासो न विरुध्यत इति । एतेनाज्ञानादिसाक्षित्व व्याख्यातम् ।

यत्त्वेवमनहसंविन्मात्रात्मवादेऽह जानामीत्याद्यनुभवानुपपत्ति, आरोपस्याप्यसम्भवादिति । तन्न । अनाद्यविद्योपादानाहङ्कारात्मसम्पिण्डस्यास्मदर्थस्यैव ज्ञातृत्वोपपत्ते, नीरक्षीरसम्पिण्डस्योभयत्राभूतपरिमाणविशेषसम्प्रतिपत्ते. । न च तत्र द्रव्यान्तरमधिकपरिमाणमूनपरिमाणाभ्या नीरक्षीराभ्यामेक क्षीरजातीयमारभ्यते, वैजात्यात् । न च विजातीयमेवारभ्य, प्रभूतं क्षीरमिति सर्वजनीनानुभवविरोधात् । न च नीरसम्भेदे क्षीरस्य प्रचयात् परिमाणभेदोपजन , क्षीरसम्भेदे नीरस्यापि तदुपजने समपरिमाणनीरक्षीरसंयोगे परिमाणचातुर्गुण्यप्रसङ्गात् । तस्मादाविद्यके नीरक्षीरतादात्म्ये परिमाणविशेषवदहङ्कारात्मतादात्म्ये ज्ञातृत्वादेरनुभव उपपन्नः । यद्वा तस्यैवास्मदर्थस्याहङ्कारांशेन विकारोपजने संविदनुषङ्गादुभयसम्पिण्डस्य ज्ञानसंशब्दितस्य वृत्त्यंशेनाश्रयत-

---

* जैमिनीये अध्या० १. पा० ४ सू० ६, ७, ८.

याहङ्कारस्य ज्ञानाश्रयत्वं चिदात्मोपाधिकमारोप्यते दाहात्मकाग्न्युपाधिकमिव
वायसो दग्धृत्व, यतोऽहं जानामीत्यनुभव । तथाच स्मृतिः—

"आद्यो विकार. प्रकृतेर्महानात्मेति कथ्यते ।
विज्ञानशक्तिर्विज्ञाता ह्यहङ्कारस्तदुत्थित. ॥"

इति । अहमाश्रयवृत्त्यनुषङ्गावभासिसंविदाश्रयत्व चिदात्मनि वाहमुपाधिकमारोप्यते लोहोपाधिकमिवाग्नौ चतुरश्रत्वादि, यत आम्नायते 'एष हि द्रष्टा श्रोते'त्यादि । एतदुक्त भवति—अहम आश्रयता स्वभावः । औपाधिकी तु ज्ञानाश्रयता, तदाश्रितवृत्तेर्ज्ञानसशब्दनस्य संविदनुषङ्गाधीनत्वात् । चिदात्मनस्तु ज्ञान स्वभावः । तदाश्रयता पुनरौपाधिकी, संविदनुषङ्गवृत्त्याश्रयाहङ्कारसम्भेदाधीनत्वादिति । यत्तु एव संविदहं वेदेति प्रतीयेत । अन्यथा निर्विशेषचिदात्मन शुक्तिकादिवदशभेदेन भानाभानायोगाद् निरधिष्ठानविभ्रमापत्तिरित्यादि । तत्र वदाम.—नह्यधिष्ठानज्ञानमारोपहेतु., नील नभो नीला बलाकेत्याद्यारोपात् । न चात. प्रागधिष्ठानद्रव्यमात्रदर्शनमुपपन्नम्, तस्य रूपदर्शनपूर्वकत्वनियमात् । रूपारोपेण तु नभोवलाके गृह्येते । एवमहमारोपेणैवात्माप्यवभासताम् । संशये कोटद्युत्कटत्वस्य विपर्यये चारोप्यनियमस्य धर्मिधीहेतुत्वोपपादकस्य कपोताकाशादौ रूपसंशयारोपाभ्यामेव परिसंख्यानात् । तथाच कुतो निरधिष्ठानविभ्रमापत्तिः ॥

---

### अहमितिद्विरूपावभासत्वम् ।

यद्येव द्विरूपोऽहङ्कारो भासेत । ओम् । अधिष्ठान हि प्रकाशात्मा भासत एव, अन्यथाहमनवभासप्रसङ्गात् । विषयो हि प्रकाशमानमेव प्रकाशमनुप्रकाशते । अन्यथा तिमिरमनुप्रकाशेत । [1]नचाहमेव स्वयम्प्रकाश इत्यावेदितम् । 'अत्रायं पुरुष स्वय ज्योति'रिति ह्यात्मविषय पुरुषशब्दो न तस्याहन्त्वमनहन्त्व वापेक्षते, 'पूर्पु शेते तस्मात् पुरुषः', 'पूर्वमेवाहमिहासमिति तत् पुरुषस्य पुरुषत्व', 'स यत् पूर्वोऽस्मात् सर्वस्मात् सर्वान् पाप्मन औषत् तस्मात् पुरुष' इत्यादावन्यनिमित्तत्वश्रवणात् । ननु पुरुषशब्दो लोके वेदे च सङ्घातभेदे रूढ. प्रयुज्यते 'स्त्री पुरुष', 'पुरुषाः पूरुषा नराः'

---

१. 'नाह' ख. पाठ.

'ताभ्यः पुरुषमानयत्', 'अन्नात् पुरुष' इत्यादौ, आत्मनि गौण' स्यात् ।

"गौण लाक्षणिक वापि वाक्यभेदेऽपि वा स्वयम् ।
वेदो यमाश्रयेदर्थं को नु त प्रतिकूलयेत् ॥"

इति हि तन्त्रविद । स चाज आत्मा महान् ध्रुव. स्वस्य चोपचयापचयधर्मिणोऽहङ्कारस्य च रूपद्वयस्याहमित्येवैकरूपोऽवभासः, तन्निबन्धनो व्यवहारश्च, अनात्मनि देहादावात्मभावस्याहमित्येवैकरूपस्य सर्वसम्प्रतिपत्तेः । अन्यत्रापि तादात्म्यारोपे रूप्य सर्प इत्येव शुक्तिरज्ज्वादेरप्यवभास., अन्यथा निरात्मकरूप्याद्यवभासायोगात् । ख्यातिभेदा हि कणेहनिष्यन्ते । किन्तु तदेव पराग्भावादिदमित्यप्यारोप्यते, इदमिति शुक्त्यवभासव्यवस्थाहेत्वभावात् । दिशो मलिनाः नीलं नभः पीतः शङ्ख शुक्तिः रजतं चेत्याद्यारोपे च दिगादि न भासमानविशेषात्मनाधिष्ठानम्, आरोपस्याज्ञातविषयत्वात् । किन्तु स्वरूपेणानुगतात्मना । तच्च मलिना नीलमित्येवमेकरूपावभास चेति । वस्तुतस्त्वस्मि भामि प्रियोऽहमित्यत्रापि द्विरूपावभासो गमयितव्य. । अहमोऽद्विरूपावभासत्वे तदाश्रयकामसङ्कल्पादिवृत्तिभेदोपजनापायानवभासप्रसङ्गात् । अपिच,

सुप्तिबोधप्रवाहेषु सर्गप्रलयसन्ततौ ।
लीनोत्पन्नेऽप्यहङ्कारेऽनुसन्धातानुवर्तते ॥

व्यावृत्तावनुवृत्तौ चाहमात्मानौ सम्पिण्डितावहमित्येवावभासेते युगपद् दुःखितया परमप्रेमगोचरतया च द्विरूपोऽहमवभासत इत्यप्याहु' ।

यत्त्वह सवेद्मीति विशेषणभानायां सविदि ज्ञातृत्वाध्यासो न युक्त इति । तदसारम् । तथाभानस्य विषयवृत्त्यवच्छेदोपाधित्वात् । न खलु वय विषयप्रकाशावस्थैव सविदात्मेत्युपगच्छामः, यतस्तद्भाने भासमान ज्ञातृत्वमनध्यासः स्यात् । किन्तु निर्विषयाश्रयस्वभावात्मसविदेव यथायोगं विषयावभासेति । तत्र चोक्तगत्या ज्ञातृत्वाध्याससम्भव इति । अवश्यं च ज्ञातृत्वमध्यासः, अविद्यावद्विषयत्वात् । **'देहेन्द्रियादिष्वहंममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ'** इत्यादि ह्युपपादित भाष्ये । अहंममाभिमानहीनस्य हि प्रमातृत्वादि सुप्तादौ विनिवर्तते । सवित् पुनरविद्याविषये 'तद्बाधे च

सकृादिव सिद्धा नाऽध्यासः स्यात् । नहि सुप्तौ मुक्तौ वा ज्ञातृत्वमनुवर्तते, अननुभवात् । नहि नित्य ज्ञानमात्मधर्म इति च व्युदपीपदाम । एवञ्च यद् ज्ञातृत्वे श्रुतिरिति, तदपास्तम् । उपपत्तिविरोधेऽनुवादमात्रादर्थाव्यवस्थानात् । 'एष हि द्रष्टे'त्यादि हि न विधिरित्यगासिष्म । 'अथ यो वेदे'त्यादौ च घ्राणादिवृत्तिसाक्षितयानूदितया तदुपलक्ष्यस्यात्मतत्त्वविधानमनाबाधमवबुध्यते । एवं बोध्यबुद्ध्यनुरोधाददूरविप्रकर्षेण 'विज्ञातारमरे केने'त्यादिव्यपदेशाः 'न वाचं विजिज्ञासीत वक्तार विद्यादि'त्यादिवत् । न खलु वक्तृत्वमात्मनः स्वभावः । अथ च व्यपदिश्यते 'वक्तार विद्यादि'ति । तद्वदुपलक्षणत्वोपपत्ते. । 'दृष्टेर्द्रष्टा श्रुतेः श्रोते'त्याद्या', 'न दृष्टेर्द्रष्टार पश्ये.', 'न श्रुतेः श्रोतारं शृणुयाः' इत्याद्याश्च व्यपदेशा द्रष्टृत्वादिकमौपाधिकमन्तर्हित्यानुयन्त 'अदृष्टो द्रष्टा अश्रुत श्रोते'त्यादौ न तत् स्वाभाविकमुपाजेकर्तुमुत्सहन्ते ॥

---

### अविनाशीवेत्यादिश्रुत्यर्थः ।

न चात्मा 'अनुच्छित्तिधर्मे'ति नित्य ज्ञानमात्मधर्मः प्रतीयते, येन ज्ञातृत्व सदातनमिष्येत । 'प्रज्ञानघन एवे'त्यात्मनो ज्ञानकैवल्यमाम्नाय 'न प्रेत्य सञ्ज्ञास्ती'त्युक्ते स्वरूपनाशो मा शङ्कीति ह्याम्नायते 'अविनाशी वा' इत्यादि । 'विनाशशीलो हि गुणप्रवाहः कदाचिदुच्छिद्यत' इत्युच्छित्तिः धर्मोऽस्येत्युच्छित्तिधर्मा, नैवमात्मेति । तत्र चानपेक्ष्यं धर्मनित्यत्वमिति । न हि तवापि सुषुप्तौ दृष्टिश्रुत्यादिविज्ञानावस्थाभेदा व्यवतिष्ठापयिषिता., सुप्तिव्याघातात् । अतो 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते नहि श्रोतु. श्रुतेर्विपरिलोपो विद्यते' इत्यादिवृत्तिविषयानुषङ्गविलयेऽपि सवित्स्वरूपाविपरिलोपमेव सुप्तावुपदिशति । 'न तु ततोऽन्यद् विभक्तं यत् पश्येच्छृणुयान्मन्वीत विजानीयात्', 'न बाह्य किञ्चन वेद नान्तर', 'यत्र सुप्तो न कञ्चन स्वप्न पश्यती'त्यादिप्रवृत्तिविज्ञानाभावाम्नानाच्च । मुक्तौ च 'यत्र नान्यत् पश्यति', 'न शृणोति न विजानाति', 'यत्र त्वस्य सर्वमात्मैवाभूद्' निरस्तज्ञातृज्ञानज्ञेयभेदः प्रकाशकेवलः स्वमहिमप्रतिष्ठ. । न तदा द्रष्टा श्रोता

---

१. 'त्मतवि' ख. पाठ..

मन्ता विज्ञाता वा प्रतिज्ञातुमात्मा शक्य. । 'सर्व ह सर्व. पश्यती'ति चैक-विज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनेन व्याख्यातम् । 'एतद् यो वेत्ति त प्राहु क्षेत्रज्ञ इती'ति तु पदवृत्तिनिर्वचनमात्र 'यदरोदीत् तद् रुद्रस्य रुद्रत्वमि'त्यादिवत् । न ज्ञातृत्वपरम् ॥

---

## ज्ञोऽत एवेतिसूत्रार्थ. ।

'ज्ञोऽत एव' (ब्र० २ ३. १८) इति सूत्रे च घञर्थे कविधानमाश्रीयताम् । न खलु 'स्थास्नापाव्यधिहनियुध्यर्थसि'ति परिगणनम्, उदाहरणं तु । कृञ्क्लिदक्नसा के द्वित्वविधिसम्प्रत्ययात् । घञर्थश्चेद् भाव इति । अथवा यद्यपि ज्ञातृत्व प्रत्ययबलात् प्रतीयते, तथापि तन्न साधनीयम् । देहात्मवादिनोऽपि तदविगानात् । साङ्ख्यस्यापि प्रत्ययानुपश्यतया ज्ञातृत्वोपगमात् । न च तत्स्वभावत्वमिह साध्यते, अध्याहारप्रसङ्गात् । यद् ज्ञान तन्न ज्ञात्रिति व्याप्तिभङ्गेन ज्ञातृत्वे तस्य स्वाभाविकत्वे च श्रुतितात्पर्यवर्णने वाक्यवृत्तिभेदप्रसङ्गात्, क्रियाभाविज्ञानाश्रयत्वस्य[1]ासार्वदिकत्वेनास्वभावत्वाद्, अक्रियाभाविज्ञानाश्रयत्वेन च ज्ञातृत्वानिर्वाहाद्, धात्वर्थाश्रयत्वस्यैव कर्तृत्वपदार्थत्वाद्, उक्तन्यायविरोधाच्च । किन्त्वनया वचनभङ्ग्या ज्ञानात्म्यमेव साध्यते । एव विषयवृत्त्युपधेयभेदेन सविदात्मा ज्ञाता नाम स्यात् । अन्यथा आत्मनो विषयतज्ज्ञानानवभासप्रसङ्गात् । एव सति यद् ज्ञो जीव आगमादनुभवाच्च, तदत एव येनोपाधिविविक्तस्वरूपेण नित्य. साधितः 'नात्माश्रुतेर्नित्यत्वाच्च ताभ्य.' (ब्र० २ ३ १७) इति, एतस्मादेव चिद्रूपाद् न तु स्वधर्मत इति सूत्रयोजना च समञ्जसा भवति । परस्य तु ज्ञानात्मत्वस्यानिरस्यत्वाद् ज्ञोऽपीति स्यात् । नात्माश्रुतेरित्यत्र श्रुतेरितिच्छेदेऽपि तदनुत्पत्तिश्रुतेरिहात एवेति परामर्शेऽनन्वयात् । श्रुतिसामान्यद्वारा तद्विशेषलक्षणाया गौरव च स्यादिति ।

एव च यदवबोधादयो गुणा नित्या एवात्मन इति शौनकवचनमिति । तदपहेयम् । अथवा 'सत्य ज्ञानमनन्त ब्रह्मे'त्यादिविशेषणविशेष्यभावनिर्दे-

---

१ 'स्य' ख. पाठः

शय्यपेक्षया नेयम् । अन्तर्गुणा भगवती परदेवतेनि[1] हि द्रमिडभाष्यमुदाहरन्ति । अथवाहङ्कारस्यैव चैतन्यबिम्बोद्ग्राहितया तदभिव्यञ्जकतया वा ज्ञातृत्वमारोप्यताम् । मुखबिम्बे बहिर्दर्पणस्येवालोकाभिव्यञ्जककरतलस्येव वा तद्वत्त्वम् ।

नन्वचाक्षुषस्य प्रतिबिम्बानुपपत्ति । को दोष. । कालादेरप्यस्तु प्रतिबिम्ब । चाक्षुषस्तु मा भूद्, अचाक्षुषीयत्वात । अथवा इदानीमिहायमिति गृह्यमाणमेव कालादि प्रतिबिम्ब. स्याद्, बाधकाभावात् ॥

---

आत्मनः शब्दादेश्च प्रतिबिम्ब ।

किमेव शब्दादिरपि प्रतिबिम्बतु, किं निमर्शेन । गिरिगुहादिषु प्रतिध्वनिरूपप्रतिबिम्बोपलम्भात । अन्यथा प्रतिलोम प्रतिभासानुपपत्तेः । प्रतिलोमवातेन प्रतिस्रोत प्रवृत्तिकल्पनेऽपि शब्दस्य निःस्पर्शस्याभिघातायोगेन परिवृत्त्यनियमात् परागाहूतिवदुपलभ्येत । नियमतश्च प्रत्यगाहूतिवदुपलभ्यते । तिश्रुदिति स शब्दस्य प्रतिबिम्ब इति युक्तम् । एतेन गन्धादिप्रतिबिम्बोऽपि वाय्वादिषु व्याख्यात ।

विदूरे केसरा[illegible] निकटे वा तथं यदि ।
मरुति प्रतिबि[illegible]स्य प्रतिमुद्रोपलभ्यताम् ॥

एवं हि वाय्वादौ [illegible]नोऽनन्तकुसुमस्फुटगन्धोपलम्भोऽवयवह्रासे तुलितकस्तूरिकादा[illegible] [illegible]न्याचनरूपं कल्पयितुं शङ्कितं स्यात् । उपपन्नं च

"पृथिव्यामेव त विद्यादपो वायु च संश्रितम्"

इति, बिम्बप्रतिबिम्बैरान्वयोपपत्तेः । अन्यथा अप्सु वायौ चोपलब्धमिति परिणम्येत । अपो वायु च संश्रित संश्रितत्वेनोपलब्धमिति वा पूर्येत । आस्तां वा शब्दादिप्रतिबिम्बोपपत्ति । अशक्यमात्मनस्तु प्रतिबिम्बोऽनाश्रयितु,

"यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥"

---

१ 'न्ति', २ 'त्पमत्प' ख. पाठ.

"एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥"

"आकाशमेकं हि यथा घटादिषु पृथग् भवेत् ।
तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥"

इत्यादिश्रुतिस्मृतिदर्शनात् । 'अत एव चोपमा सूर्यकादिवत्' (ब्र० ३. २. १८) इति सूत्रम् ॥

---

आभास एव चेतिसूत्रार्थः ।

'आभास एव च' (ब्र० २. ३. ५०) इति सूत्रम् । न चात्र प्रतिबिम्बभावोऽसन्ततेर्भोगाव्यतिकरहेतुरपेक्षितो न सूच्यते. प्रकृतानपेक्षिताप्रसक्तब्रह्माज्ञानप्रकाशतिरोधानादिकल्पनाहेत्वाभासता किन्ति न्यायविदामनुरूपम् ।

यत्तु — नात्रात्मन प्रतिबिम्बत्व विधेयम्, एवकारोपहतविधिशक्तित्वात् । किन्तु तदर्थ. साक्षाद् न ब्रह्म जीव इति निषेध, अश्वमेधे 'षड्विंशतिरित्येव ब्रूयादि'ति हि 'चतुस्त्रिंशद् वाजिन' इत्यादिविशेषिकाभ्रिगुवचननिषेधार्थं व्यवस्थापितमिति । तन्न । एव हि किमप्रसिद्धेनाभासग्रहणेन । कुतश्च स न साक्षाद् ब्रह्म । आभास इति हेतुगर्भमिति चेत्, प्राप्त तर्हि तदर्थतात्पर्यम् । वृद्धिह्रासभाक्त्वस्य प्रतिबिम्बसादृश्यस्यानूदितस्य हेतुतामात्रतात्पर्यमिति चेद्, न । उपाध्यन्तर्भावेन तदनुविधायिन एव प्रतिबिम्बत्वात् । एव सत्येवकारस्य न ब्रह्मैव जीव. न चात्यन्तमन्य इत्युभयार्थोपपत्ते । दृष्टान्ते चैवकारोऽप्यनुवाद. । 'न चतुस्त्रिंशदिति ब्रूयादि'ति प्रतिषेधविधे प्रथमत्वात् । यदाहु — 'न चतुस्त्रिंशदित्येव प्रतिषेध विधत्ते' इति ॥

---

**प्रवेशशब्दार्थ ।**

अपिच 'पुर· पुरुष आविशत्', 'तदेवानुप्राविशत्', 'स एष इह प्रविष्ट·' इत्यादिश्रुते प्रवेशो नात्मनोऽहेरिव बहि स्थानावस्कन्दमन्तर्निलयनं, व्यापित्वात् । नापि व्यापिनामेव भूताना गण्डशिलादौ मण्डूकादिभावेनेव जीवभावेन परिणाम·, अविकारित्वात् । नापि गन्धरसादेरिव द्रव्ये गुणभावेनानुषङ्ग·, स्वातन्त्र्यात् । किन्तु तदभिव्यक्तावभासत्वलक्षणः प्रतिबि-

म्बभाव एव । अथ सर्वाव्यवधानादात्मन प्रतिबिम्बानुपपत्ति[1], दर्पणादौ तदवयवाद्यप्रतिबिम्बनात् । भेदकल्पनया व्यवधाने वात्मनो बिम्बभूतस्येश्वरस्यासर्वगत्वासर्वज्ञत्वादिप्रसङ्ग । नैवम् । सर्वत. प्रसृतसवित्रालोकादेरादर्शादौ स्फटिकादौ चान्तर्गतयावकादे प्रतिबिम्बदर्शनाद्, वस्तुशक्तिवैचित्रीवैषम्यस्यातर्क्यत्वाच्च । चाक्षुषप्रतिबिम्ब एव व्यवधानापेक्षा नान्यत्रेति वा व्यवस्थाप्यताम्, उदाहृतमानानन्यथासिद्धे. । प्रकृते च तदन्तर्भावेन तदधीनवृद्धिह्रासाभ्यामुपाधिषु स्फुटावभासित्व प्रतिबिम्बनमवलम्बामहे । तथाच सूत्रितम् 'अम्बुवदग्रहणात् तु न तथात्वम्' (ब्र० ३ २. १९) 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्' (ब्र० ३. २. २०) इति । नेह प्रतिबिम्बता जुगौणयिषिता । किन्त्वन्यत्रान्यथा सा आत्मनः पुनरीदृशीति विशिशेषयिषितेति ॥

---

## अहङ्कारात्मनोर्व्यङ्ग्यव्यञ्जकत्वनिर्वचनम् ।

आलोकसविदात्माभिव्यञ्जकत्व च करतलाहङ्कारादे स्वाकारविकल्पावभासत्वापादन, केवलस्यालोकस्य सविदात्मनो वा निर्विकल्पावभासत्वात् । इयास्तु विशेष. । चिदात्मन स्वत एवावभास. । तदधीनस्त्वालोकस्येति । विषयव्यञ्जकता पुनरालोकात्मनोर्विषयसत्त्वभानव्यवहारानुगुण्यापादकता तत्प्रकाशैतत्र अतत्सम्बन्धे तमसि जडस्य स्वरूपेणैवानवभासात् । सा तु साक्षादेव चिदात्मन । आलोकस्य तु तद्द्वारा, विषयेषु चाक्षुषाहवृत्त्युपरक्तचित्प्रकाशव्यपेक्षत्वात् । एवञ्च यत् करतलमालोकस्य प्रतिहत्या बाहुल्यमात्रहेतु न व्यञ्जकम्, बहुलश्च स स्वयमेव स्फुटतरमुपलभ्यते जडश्चाहङ्कारो न नित्यापरोक्षाचिदात्माभिव्यञ्जक इति युक्तम्, अन्योन्यव्यङ्ग्यव्यङ्ग्यता च विरुद्धा अभिव्यञ्जन चोत्पादन प्रकाशन करणानुग्रह कलुषापनयो वा नाहङ्कारेणात्मनि सम्भवतीत्यादि । सोऽयमस्थाने प्रत्यवस्थानसम्भ्रम. स्वविनेयदासेरकापशदपरिभवभयभरपर्याकुलचेतसो बालिशैरपि हसनीय । निरुक्तव्यङ्ग्यव्यञ्जकत्वविवेकानाकलनात् । स्वाकारविकल्पावभासत्वापादन हि व्यञ्जकत्व व्यङ्ग्यस्यापि जडस्याहङ्कारस्य स्वयज्योतिरात्मन्युपपन्नम् । न चेत्थ व्यङ्ग्य-

---

१. 'त्ति' ख पाठः

स्यापि चिदात्मनः स्वव्यञ्जकाहङ्कारव्यङ्क्तृता तत्प्रकाशता विरुध्यते। न च तादृशमहङ्कारव्यङ्ग्यत्वमात्मनोऽचित्त्वमावहति, घटादावचित्त्वप्रयोजकव्यङ्ग्यत्वभेदात्। अन्यथा व्यञ्जकत्वेनैव ज्ञानस्यालोकवदज्ञानत्वप्रसङ्गात्। व्यञ्जनरूपविकल्पदूषणस्याभ्युपगताभ्युपगमत्वात्। निर्विवक्षित च निरुक्त व्यञ्जकत्वम्। अथवा अनावरणत्वापादनमेवात्मन्यहङ्कारकृतमभिव्यञ्जनमस्तु। तत् पुनरहमवभासात्मनि सहजम्। अन्यत्र तु मानवृत्त्यायत्तम्। न चैतदाहत्योपगम्यते। स्वतो वृत्त्या वा तदुपरागे हि सति संविदैव वस्तुरूपावभासे तदज्ञानमपोद्यते।

यत्तु—एवमात्मनोऽज्ञानाश्रयविषयत्वे ज्ञातृज्ञेयत्वापत्तिः, इतरथा अतदाश्रयविषयत्व वेति। तन्न। घटादावज्ञानानाश्रयत्वादेरज्ञातृत्वाद्यप्रयोज्यत्वात्। पराचीनत्वाचित्त्वादिप्रयुक्तं हि तत्। अन्वयप्रतिबन्धस्य च क्वाप्यसम्प्रतिपत्तेः। न चैवमज्ञानस्य समानाश्रयविषयज्ञाननिवर्त्यत्वानियमादन्यस्य[1] ज्ञानेऽन्यस्याज्ञान न स्यात्। तत्स्वरूपावभासस्तदज्ञानविरोधीति प्रमात्रव्यवहितविषयाज्ञाननिवृत्ताविष्टाया समानाश्रयविषयज्ञानापेक्षणात्। सामान्यसामग्र्यनुपपाद्ये हि कार्ये विशेषसामग्री कल्प्यते, यथा भ्रमादौ दोषादिः। आत्मनस्त्वहङ्काराश्रयेणापि ज्ञानेन स्वरूपावभासे तदज्ञानापनयोपपत्तौ न ज्ञातृज्ञेयताप्रसङ्गः। स्वप्रकाशचिदात्मन्येव चाज्ञानमुपपादयिष्यते।

यत्तु—एवमपि व्यञ्जकस्यात्मस्थतया व्यङ्ग्याभिव्यञ्जनानियमादहमो न ज्ञातृत्वानुभवनिर्वाह इति। तन्न। प्रतिबिम्बन तावदादर्शादावुपाधिस्थमुपलब्धम्। तडाकतरुपतिबिम्बोपलम्भो हि तन्निकटमटतो न नायनरश्मिगतिप्रतिहत्या तटतरूपलम्भ एव, अनभिमुख प्राध्वप्रसृताभिहतिविष्वग्गत्यादिकल्पनस्याभिनिवेशमात्रमूलत्वात्। अपिच प्रतिबिम्बिताभिव्यञ्जिता वा संविदहमोऽवभास इति तस्य तद्धर्मत्वाभिमानः। अत एव हि विषयस्यावभासः स्फुरण प्रकाशः प्राकट्य ज्ञातताख्यं तदाश्रयमेवास्थित कौमारिलैः। करतलादिप्रकाशालोकस्य च लोके तदाश्रयत्वोपलम्भाच्च। विषयाश्रयताभिमानस्तु न तद्व्यञ्जकालोकसंविदोः। विषयस्य ह्यन्यदभिव्यञ्जकत्वम्, अन्यच्च विषयिण इति निरङ्कुशाम॥

---

१ 'स्य'ज्ञान', २. 'ज्ञस्या' इ पाठ

नन्वेवं सर्वोऽपि विषयः स्वाविकल्पेन सावेदवभासहेतुरिति न ज्ञातृत्वाभिमानो व्यवतिष्ठेत । न । व्यवस्थितोपलब्धेर्हि तत्र निमित्तमुपपाद्यते । अपि चान्यस्य संविदभिव्यञ्जनेऽहङ्कारमत्रापेक्षणात् तस्य चानन्यापेक्षतया वैशेष्यात् प्राणेन्द्रियादिवृत्त्या भोगपरिणामित्वाच्च पञ्चवृत्तिः प्राणो हि बुद्धेरेव क्रियाशक्तिवृत्तिभेदः । 'यो वै प्राणः सा प्रज्ञे'ति प्रज्ञाशब्दितबुद्ध्यभेदाम्नानात् । 'यः प्राणः स वायुरि'ति चाम्नानात् वायुविशेष प्राणो गम्यत इति चेद्, न । तस्य वायुस्वभावत्वेऽप्यनियतोक्तत्वात् । इन्द्रियाणि च बुद्धेरेव वृत्तिभेदा इत्युपपादितम् । यथापि तानि स्तुमत्योपादेयानि,

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च"

इति श्रुतेः । भौतिकानि वा, 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागि'ति लिङ्गात् । तथापि तदुपकरणाया बुद्धेरेवाहम्भूताया भोगपरिणामिन्या ज्ञातृत्वाभिमानो नान्येषामिति व्यवस्थितोपलब्धेः तत्र विनिगमकमुन्नीयताम् । एवञ्च स एवायमात्मनोऽपि तादात्म्यगृहीतस्य तदुपाधिको ज्ञातृत्वाभिमान इति, अनात्यन्तिकत्वादज्ञातृत्वस्यानहन्त्वस्य वा न घटादिवत्त्वप्रसङ्गः ॥

---

### आत्मनोऽकर्तृत्वम्—यथा च तक्षेतिसूत्रार्थः ।

एवमेष्टृत्वकर्तृत्वादयोऽप्यहङ्कारोपाधिका व्याख्याताः । तथाच सूत्रं 'यथा च तक्षोभयथा' (ब्र० २ ३ ४०) इति । न चात्रेच्छानिच्छाभ्यां कर्तृत्वानैयत्यं बुद्धिकर्तृत्वव्यावृत्तये शक्यं वदितुं, सहकारिवशेन बुद्धेरेवेच्छया कर्तृत्वादिकादाचित्कत्वोपगमसम्भवात् । न चैवं तक्षेव करणोपादानानुपादानाभ्यामात्मैव कर्त्रादिरापादि । अन्यथा तक्षापि न कर्तैव स्यादिति वाच्यम् । करणोपादाने कर्तृत्वादि[1] नान्यथेत्येतावति दृष्टान्तात् । तत्रैकस्य क्रियामयं वास्याद्युपादानम्, अन्यस्य च मनोबुद्ध्युपादानमहमभिमानमयम् । अन्यथा क्रियामये तत्रापि करणोपादानापेक्षायामनवस्थानात् । तथाच स यथा देहोपादानेन तादात्म्याभिमानमयेन व्याप्रियते, एवमात्मा बुद्ध्युपादानेनाहमभिमानमयेन करोति कामयते वेति । 'प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्य-

---

१ 'कर्तृत्वादि' ख. पाठः.

श्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मन' इति प्राणितृत्वादौ तत्तदभेदव्यपदेशलिङ्गात् । अन्यथा मनोयोगेनात्मन एव कर्तृत्वादिविकारेऽनित्यत्वप्रसङ्गात् । न खल्वादिमत्त्वमेव विकारोऽनित्यत्वहेतुः, विकारमात्रं तु लाघवात् । नित्यत्वागमश्च नातत्प्रसङ्गं विरुन्धीतेत्यगदिष्म । अपि च विकारित्वलिङ्गस्यागमस्य चार्थविरोधे व्यवस्था वाच्या । जन्मवदन्यस्यापि विकारस्य व्याप्तिस्तावदुपलब्धा । अव्यक्तकालादेरप्यस्माभिरन्तोपगमात् । तत्रानात्मत्वे सतीति विशेषणमयुक्तम् । अपेक्षत्वे सतीति सर्वहेतुसुलभत्वात् । अस्माकं तु यस्य विकारित्वमौपाधिकस्यात्मनोऽपि तस्यान्तवत्त्वमिष्टमेव, ध्रुवत्वश्रवणस्य स्वरूपविषयत्वात् । तत्र च करणसम्बन्धकर्तृत्वादिविकाराभावात् । ननु सर्वोऽपि विकार आत्मन्येव कल्पितः । वस्तुविकारश्च तव न क्वापि । तत् कथमात्मनो विकारित्वादनित्यत्वं मा प्रापत् । स्वावधिबाधाविषयविकारस्यानित्यत्वहेतोरभावात् । अन्यत्रापि तत्र बाध्यस्यापक्षधर्मस्यालिङ्गत्वव्यवस्थानात् । आम्नायते चात्मनः क्रियाकारकासम्बन्धेनाकर्तृत्वं 'स यत् तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष' इति । कर्ता हि कृतेन कर्मणानुगम्येत,

"यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
एवं पूर्वकृतं कर्म कर्तारमनुविन्दति ॥"

इति स्मृतेः । न त्वात्मा केवलोऽसङ्गत्वादकर्ता स्वप्नान्ते बुद्धान्ते वा दृष्टेन कृतवदुपलभ्यमानेन कर्मणानुगतो भवतीति ॥

---

## असङ्गश्रुत्यर्थः ।

ननु "स यथाकामो भवति तत्क्रतुर्भवति, यत्क्रतुर्भवति तत् कर्म कुरुते, यत् कर्म कुरुते तदभिसम्पद्यते । तदेष श्लोकः —

तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य ।
प्राप्यान्तं कर्मणस्तस्य यत् किञ्चेह करोत्ययम् ।
तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे ॥

इति नु कामयमान'' इति कामकृतकर्मणो बन्धकत्वमुक्त्वा 'अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येती'त्यकामकर्मणो बन्धकत्वाभाववचनात् कामत्यागो मोक्षोपाय इति विवक्षिते कामाभावे कर्माबन्धकत्व स्वप्नोदाहरणेन दर्शयति 'स यत् तत्रे'त्याद्यसङ्गोऽकामो ह्यय पुरुप इती'ति चेद्, एव हि 'स वा एष तस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पाप च पुनः प्रतिन्याय प्रतियोन्याद्रवति स्वप्नायैव स यत् तत्रे'त्यादौ स आत्मा यत् पुण्यं पाप वा सम्प्रसादोपलक्षिते पूर्वस्वप्ने पश्यति, तेनानन्वागतो भवत्यस्मिन् स्वप्ने, अकामो ह्यय पूर्वस्वप्ने पुरुष इत्यर्थविवक्षायामस्यानर्थक्यमापद्येत । 'स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वे'त्याद्याद्रवति बुद्धान्तायैव 'स यत् तत्रे'त्यादिनैव यदि हि स्वप्ने काम स्यात् तत्र कृत कर्मानुवर्तेत प्रबुद्धस्य जागरितेऽपि दिनान्तरकृतमिव । न चानुवर्तते, प्रबुद्धस्य श्राद्धस्यापि स्वप्नस्तेयादिप्रायश्चित्तानाचरात् । स्वप्ने स्तेनमपे(य पिब ? य पिबन्त) वात्मानमाचक्षाणे विचक्षणानामविगानाच्च । नहि स्वप्नेऽगम्यामगमदित्येव प्रायश्चित्तीयते । किन्त्वयोनावस्कान्त्सीदित्येवेत्युपक्षिप्तोपपत्तिना कामाभावे विवक्षितकर्माबन्धकत्वसिद्धे । अस्माक तु क्रियाकारकसम्बन्धानर्हस्वभावतया कर्तुरात्मनः स्वप्ने जागरे वा कृतवदुपलभ्यमानकर्मानन्वयो विवक्षित इत्युभयमर्थवत् ।

ननु च 'न ह्यत्रानूयाजा इज्यन्त' इति हेतुनिगदादातिथ्येष्टेरन्यत्रापि व्याप्त्यैवानूयाजाभाववत्यष्टगृहीताभाववदत्रापि 'असङ्गो ह्ययमि'ति हेतुव्यपदेशादवस्थान्तरेऽपि व्याप्त्यैवाकर्तृत्वादिसिद्धौ 'स वा एप एतस्मिन् स्वप्ने रत्वे- त्यादि व्यर्थमिति चेत् ।

उच्यते । अस्ति तावत् स्वप्ने कामः, अनुभवात् । 'यथाकामं परिवर्तते', 'स ईयते मृतो यत्र काममि'ति श्रुते. । कामप्रतिभासाभिप्रायत्वकल्पने गौरवाद्, अनन्वयाच्च । कामो हि चेष्टाहेतुः न तत्प्रतिभास. । अन्यथासिद्धेः, वासनामयविषयविज्ञाने सति कामोद्भवसम्भवाच्च । तदुपादानबुद्ध्यविवेकस्य तदानीमप्यनपायात्, 'स धीः स्वप्नो भूत्वे'ति श्रुते. । 'तदेतत् सत्त्वं येन स्वप्न पश्यती'ति स्वप्नदर्शनस्य सत्त्वसंशब्दितबुद्ध्युपाधिकत्वावगमात् ।

'गृहीता वाग् गृहीत चक्षुर्गृहीत श्रोत्र गृहीत मन' इति मनोविरामवचनस्य प्रायदृष्ट्या करणविषयत्वाद् , बहिर्विषयवृत्त्यपेक्षत्वाद् वा । अन्यथा स्वाप्ययापत्ते । न च 'तद्वा अस्यैतदतिच्छन्दा अपहतपाप्मा अभय रूपमि'ति स्वप्नज एव कामाभाव उच्यते । 'अहमेवेद सर्वोऽस्मीति मन्यते सोऽस्य परमो लोक' इति प्रकृतात्मस्वरूपस्य कामकर्मफलात्ययपरत्वात् । अतिच्छन्दा इति ह्याह, न त्वसच्छन्दमिति । तच्च सत्यपि कामे असङ्गस्य स्वभावादुपपद्यते । न च 'यत्र सुप्तो न कञ्चन काम कामयते न कञ्चन स्वप्न पश्यती'ति न विशेष्येत यदि स्वप्ने काम स्याद्, 'यत्र न कामयत' इत्येव स्वप्नव्यावृत्तेरिति वाच्यम् । नहि स्वप्नजागराभ्या सुप्त व्यावर्तयामीत्येव विशेषयति श्रुति', अनतिप्रयोजनत्वात् । किन्तु सुप्तौ कामकर्मविवेकेनासङ्गमात्मान कार्यकरणसंयोगजक्रियाफलश्रमविधुर दर्शयिष्यामीति । मृत्यु कामकर्मादिलक्षण तद्रूप च क्रियाफलमतिक्रान्तस्य विशुद्धस्यात्मन प्रकृते मुमुक्षवे दिदिक्षितत्वात्[2] । तथाच 'असङ्गो ह्यय पुरुष' इत्यसङ्गता अकर्तृत्वे हेतुरुक्ता । उक्त च पूर्व कर्मवशात् 'स ईयते मृतो यत्र काममि'ति । कामश्च सङ्गस्ततोऽसिद्धो हेतुरित्याशङ्कार्थ 'स वा एष एतस्मिन् स्वप्ने रत्वे'त्यादि । तथाच वार्तिकम्—

"असङ्गत्वादकर्तेति नन्वसिद्धोऽयमुच्यते ।
स्वप्ने कामस्य दृष्टत्वाद् यत्र काममिति श्रुते' ॥
इत्यस्य परिहारोऽयं स वा इत्यादिक वच. ।"

इति । स्वप्ने सन्नपि कामो नात्मनः । यदि स स्वप्ने कामी सङ्गवान् स्यात्, तत्सङ्गजैर्दोषैरद्रुतो[3] बुद्धान्तायापि लिप्येतेति । यद्यपि कामकर्तृत्वाभिमान. स्वप्ने जागरे वा न विशिष्यते, तथापि रूपान्तरावेशेन स जागरितादौ बाध्यत इति दृष्टम् । एव तात्त्विकरूपापेक्षया श्रौते असङ्गत्वे सह कामेन क्रियाकारकसम्बन्धानर्हत्वे अकर्तृत्वादौ चेयतैव सिद्धे अल वा स्वप्नमालम्ब्य, जागरेऽप्येवमित्युच्यते—'स यत् तत्र बुद्धान्ते किञ्चित् पश्यत्यनन्वागतस्तेन भवति असङ्गो ह्यय पुरुष' इति ।

---

१ 'त्वाफलात्य', २ 'दित', ३ 'रं' ख पाठ

अपिच यदि कामाभावेनैव स्वप्ने कर्तुरेवात्मनोऽकर्मानुगमो विवक्ष्येत, अकामकृतेन प्रामादिकहिंसादिना नानुबध्येत। तत्र प्रायश्चित्ताद्युपदेशानर्थक्यं चापद्येत। कर्तृत्वादेव च कर्मानुगमे 'असङ्गो ही'ति हेतुनिगदानर्थक्यमसाधकत्वात्। बुद्धान्ते च कामकृतेनानुबध्येत। तत्र च बुद्धान्तविषयमुदाहृतानन्वागमवचनमुपरुध्येत। न चात्र तत्रेति स्वप्नपरामर्शः, व्यवधानाद् बुद्धान्तस्य च सन्निधानात्। स यत् किञ्चित् पश्यतीत्येव प्रकृतस्वप्नाधिकरणलाभे तत्रेति वैयर्थ्याच्च। बुद्धान्तस्य पुनरधिकरणत्वलाभः प्रयोजनम्। एवम् 'आद्रवति स्वप्नायैव स यत् तत्रे'त्यत्रापि स एव स्वप्नः परामृश्यते, सन्निधानात्। तत्र शब्दार्थवत्त्वोपपत्तेश्च। अथापि स्यादुभयत्र व्यवहितावमर्शः। कथमात्मा कामकर्तृत्वाभिमानाविशेषे स्वप्नकृतेन नानुगम्येत, जागरे बाधात्। अश्रौतो ह्ययं हेतुः 'असङ्गो ही'त्याह श्रुतिः। स्वप्नसत्त्वमते च तदयोगः। तस्मादात्मस्वभावालम्बनोऽसङ्गत्वादिवादो बुद्धान्तेऽपि तुल्यन्यायनेयः।

अपिच, द्विरुच्यते 'स एष सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च स्वप्नायागतो यत् तत्र सम्प्रसादे किञ्चित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः', 'स एष स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च बुद्धान्तायागतो यत् तत्र किञ्चित् पश्यती'त्यादि। सम्प्रसाद इति हि पूर्वस्वप्नो लक्ष्यते, रतिचरणाद्युपपत्तेः। किं प्रयोजनं, बुद्धान्तात् स्वप्नं स्वप्नात् सम्प्रसादं सम्प्रसादात् स्वप्नं स्वप्नाद् बुद्धान्तमित्यनुगच्छन् विगच्छद्भिरवस्थाभेदैः सह प्रकारैः कामकर्तृत्वादिभिः कथमात्मा सबुद्धो बुध्येतेति। एवमन्वयव्यतिरेकापेक्षया 'असङ्गो ही'ति सिद्धवदुपन्यासः सङ्गस्यते।

अपिच 'आत्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपर्येती'त्यात्मज्योतिषः सङ्घातव्यापारानुग्राहकतया कौटस्थ्यमनुश्रूयते। न चायमित्यात्मा गृह्येत। 'किं ज्योतिरेवायं पुरुषः' इति प्रश्ने 'आदित्येनैवायं ज्योतिषास्त' इत्युत्तरे च सङ्घातरूपस्य प्रसिद्धपुरुषस्य प्रस्तावात्। 'कतम आत्मे'त्यग्रे दर्शनाद्, अनात्मज्ञजनकप्रश्ने 'अयं पुरुषः' इति शुद्धात्मपरिग्रहानुपपत्तेः। स एव च 'आत्मनैवायमि'त्यत्रापि स्याद्, ऐकार्थ्यसम्भवात्। तस्मादसङ्गतया अकर्तृभोक्तृस्वभाव आत्मा। अन्यथा यदि यत्नाधारत्वं[1] कर्तृत्वं यदि वा स्पन्दा-

1. 'त्व य' ख. पाठः.

श्रयत्वं यदि वा धात्वर्थमात्राश्रयत्वं, सर्वथैव तस्य स्वाभाविकत्वे स्यादात्मनो विकारित्वादनित्यत्वं घटादिवदित्युक्तम् । नचैवमेवाकर्तृत्वादनात्मत्व, सुप्तेऽपि प्रसङ्गात् । सार्वदिकत्वेन प्रतियोग्यसामानाधिकरण्येन वा विशेषणे च गौरवात् । भवनादिक्रियाकर्तृत्वेन घटादौ साधनवैकल्याद् लाघवेनाचित्त्वस्यानात्मत्वोपाधित्वाच्च ॥

---

## कर्तृत्वश्रुत्याद्यन्यथासिद्धि ।

नन्वागमिकमात्मनः कर्तृत्वम् 'अन्तः प्रविष्ट कर्तारमि'त्यादि चोदाहार्ष्म । न । अन्यमिते चाफले चातात्पर्यात् । तदुपन्यासमुखेनात्मस्वरूपमुपलक्षयिष्यति, सफलत्वादनधिगमाच्च । हन्तैवं कर्तृत्वादेरनुभवः शास्त्रं वा निर्विषयमापद्येत । न च बुद्धि कर्त्री भोक्त्री वा, अचैतन्यात् । साङ्ख्यपरिसङ्ख्यानाच्च आत्मन एव प्रयोज्यौपाधिकं सन्निधिमयमहमादिप्रयोजकत्व कर्तृत्व भविष्यति । सुखादिपरिणमयितृत्व च भोक्तृत्वम । न कश्चिद् दोषः । अथवा ज्ञातृत्वक्रमोऽत्र सङ्क्रमणीय । करणीयोपाधिना ह्यहङ्कारे कृतिवृत्त्या विक्रियमाणे व्याप्रियमाणे[1] वा शरीरादौ तादात्म्येन तदनुपश्यतयात्मापि कर्तेत्यभिमान , सुप्तादौ केवलव्यतिरेकात् । चिदचिद्ग्रन्थिनिबन्धन वा कर्तृत्वादि स्याद्, अह जानामि कामये करोमीत्याद्यनुभवात् । 'कर्ता शास्त्रार्थवत्त्वात्' (ब्र॰ २. ३. ३३) इति चात्मनि परोपाधिकमपि कर्तृत्वाद्यनिच्छत साङ्ख्यस्य दूषणम् । औपाधिकेऽपि कर्तृत्वे शास्त्रार्थवत्त्वादिकमुपपादित भाष्ये । किन्त्वात्मशुद्ध्युपयोगितया 'पिप्पल स्वाद्वत्ती'तिवत् 'कामः सङ्कल्प' इत्यादि 'एतत् सर्वं मन एवेति' निगम्यते । अन्यथा कामादेश्चेतनधर्मत्वानुभवस्य 'स यथाकामो भवती'त्यादिश्रुतेश्च विरोधात् । अथ किमचिदन्तर्भावेन, आत्मन्येवाहन्त्वमन्यच्चारोप्यताम्[2] । न । कामादिमनोधर्मत्वाम्नानात् । व्यतिरेकानुगमादेश्च प्रकृतिपरिणामाहङ्कारतादात्म्यादेव, देहादिवदात्मनोऽहन्त्वाद्यवभास इति प्रमाणबलायातत्वात् । तथाच श्रुतिः— 'स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीवे'ति ॥

---

१. 'क्रि', २. 'मन्यारो' ख. पाठ

**ससमानःसन्निति श्रुत्यर्थः।**

यत्तु पर आह — समानशब्द एकतावचन । एक. सन्निहपरलोकावनुसञ्चरति । अत्र दृष्टान्तः ध्यायतीव लेलायतीवेति । यथा कश्चिद् ध्यायति नदीं गत्वा स्नात्वा सन्ध्यामुपास्य गृहमुपेत्याग्निहोत्र करिष्यामीति, तथैव च करोति । अन्यो लीलयोद्यान गत्वा विहृत्य पुनर्गृहमेति । एवमय जीवोऽस्माल्लोकादमु लोकं गत्वा पुनरिमं लोकमागच्छतीति । न तु बुद्धितादात्म्याद् ध्यानचलनादिमानिव भवतीति ।

तदिद देवगुह्य देवानांप्रिय एव वेदितुमर्हति । न तु पण्डिताः प्रमाणकृतबुद्धिशरणा. । समानशब्दो हि न क्वचिदेकत्वसङ्ख्यापर. प्रयुज्यते । प्रयुज्यते त्वभेदपर. । 'समान वृक्ष परिषस्वजाते' समानाधिकरणमित्यादौ । यस्तु समानशब्दपर्याय एकशब्द प्रयुज्यते एकाधिकरणमित्यादौ सोऽभेदपर. । 'स यश्चाय पुरुषे यश्चासावादित्ये स एक', 'एकशीलाश्च मित्रत्व भजन्ते' इत्यादिदर्शनात् । तथाच 'योऽयं विज्ञानमय' इति प्रक्रमाद् विज्ञानशब्दितया बुद्ध्याहमेकतापन्नः सन्निति शक्यमवगन्तुम् । एव हि 'समान. सन्नि'त्यर्थवत् स्यात् । बुद्धितादात्म्यभवनस्य सञ्चरणादिहेतुत्वात् । अन्यथा सन्निति वैयर्थ्यात् । 'एकः प्रसूयते जन्तुरि'त्यादिवत् । अथवा समानशब्द. सदृशपरः, प्रसिद्धे । तत्र सन्निधानाद् 'विज्ञानेने'ति गस्यते, तदभेदेन तत्क्रियत्व च सादृश्य, तत् प्रत्यक्षं दर्शयति 'ध्यायतीव लेलायतीव' न तु स्वतो ध्यायति लेलायति वेति । अन्यथा दृष्टान्तपरत्वे यथा कश्चिदिति कल्पनाप्रसङ्गात् ।

कश्चित्त्वाह — स्वय ध्यायतीव लेलायतीव न त्वेवमिति जीवस्य स्वव्यापारे परमेश्वरतन्त्रता सूच्यते । यद् वा विकल करोतीवेत्यादिवत् प्रायशो जीवस्य ध्यानादिवैफल्यं सूच्यत इति । तन्न । स्वतन्त्रोऽनन्यप्रयुक्त इव ध्यायतीत्यध्याहारप्रसङ्गात् । आख्यातानाख्येयत्वेऽपि साक्षात् कर्तृत्वस्य ध्यानादौ स्वातन्त्र्यस्य सम्प्रतिपत्त्या परस्यानिवार्यत्वात् । विकल करोतीवेत्यादौ सफलकारिण सकलस्येव प्रकृते सफलध्यायिनोऽसन्निधानाच्च । अपिचैवमत्र मते केन समानः सन्ननुसञ्चरतीत्युच्यते । ईश्वरो हि न प्रकृत । अपिच सन्नित्यनर्थकम् । नहीश्वरपत् स्वतन्त्रभवन सञ्चरणादिक्रियाया लक्षण हेतुर्वा । उपगतपारतन्त्र्येऽपि भृत्यादौ तददर्शनात् ।

---

१ 'नी' ख. पाठ,.

एतेन 'उत मोऽपवदेयु' । 'उत मे पाप्मानमपहन्युरि'ति 'वीव नृत्येत्', 'प्रेव चलेदि'त्यादावपवादप्रयोजकविनृत्यादिहेतून्मादाभाव इवेह ध्यायतीवेति ध्यानादिहेत्वभाव सूच्यत इति निरस्तम् । हेत्वभावे क्रियानुपपत्ते. । अपारतन्त्र्यादेस्तदहेतुत्वाच्च । तस्मात् तादात्म्येन विज्ञान बुद्धिमहङ्कारमनुविदधानोऽनुसञ्चरति न स्वयमित्यस्य प्रदर्शनाय 'ध्यायतीवे'त्यादीत्येव युक्तमिति ॥

---

अकर्तृत्वे स्मृति ।

तथाच स्मृति —

"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वश ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥"

"तथात्मा प्रकृतौ सङ्गादहमानादिदूषित. ।
भजते प्राकृतान् धर्मान् यतस्तेभ्यो हि सोऽव्ययः ॥"

इत्याद्या परोपाधिकमेवात्मन कर्तृत्वादि दर्शयति ।

"प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वश ।
य पश्यति तथात्मानमकर्तार स पश्यति ॥"

"निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः ।
दुःखाज्ञानमला धर्मा. प्रकृतेस्ते न चात्मन. ॥"

इति विशुद्धात्मनि तद्व्यतिरेकस्मरणात् ।

"अधिष्ठानं तथा कर्ता करण च पृथग्विधम् ।"

इत्यत्र कर्तेत्येवाहङ्कारमुपादाय

"तत्रैवं सति कर्तारमात्मान केवल तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मति ॥"

इति शुद्धात्मनि कर्तृत्वदर्शनापवादाच्च ।

यत्त्वाह — अधिष्ठानादिदैवान्तापेक्षया कर्तारमेवात्मान केवल कर्तृत्वे तदनपेक्षं यः पश्यति, न स पश्यति इत्युच्यत इति । तन्न । उदाहृतकैवल्यवचनविरोधात् । अधिष्ठानादिसापेक्षमेव कर्तार पश्येदिति पर्यवसाने फलाभावाच्च ।

---

१ 'प्र' ख. पाठ .

"यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमाल्लोकान् न हन्ति न निबध्यते ॥"

इत्युत्तरानाञ्जस्याच्च । असङ्गस्यात्मनोऽकर्तृत्वेन बन्धाभावाभिधानात् ।

यदपि 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि', 'प्रकृत्यैव च कर्माणि क्रियमाणानि',

'नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति"

इत्यादि नात्मकैवल्यपर्यवसानाभिप्रायम् । किं तर्हि सांसारिकप्रवृत्तिषु कर्तृत्वमात्मनः सत्त्वादिगुणसंसर्गकृतं न स्वतः,

"कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते"

इत्यादिलिङ्गात् । तद्गुणानामेव कर्तृत्वोपचार इति । तदपि वैदिकसमयहट्टाटनचटुलस्य स्वमनीषितचरणाजीवतान्त्रिकसारमेयस्य परीक्षकोद्यतात्मतत्त्वविषयवचनदण्डशतपातपरिहारव्यग्रताविष्करणमेव ॥

---

हन्ताचेदित्यादिश्रुत्यर्थः ।

"हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥"

इत्यादिनिषेधात् । यदि हि हैतुकमपि स्यादात्मनः कर्तृत्वं, हन्तिविषयमपि स्यादिति न निषिध्येत नायं हन्तीति । न चायमर्थः हन्ता स्वेन हतं मन्यमानः, हतश्च हन्तुं, हन्तेस्तुन् । हन्तारं मन्यमानो न विजानीतः । कुतः, नायं हन्ति न हन्यते । किं तर्हि, परमात्मा । तथाच स्मृतिः —

"कः केन रक्ष्यते जन्तुर्जन्तुः कः केन हन्यते ।
हन्ति रक्षति विश्वात्मा जगत् सर्वं चराचरम् ॥"

इति । न चात्यन्तमहन्तैव जन्तुः । प्रायश्चित्तादिविधिविरोधात् । स्वातन्त्र्यं तु कर्तृत्वेऽवक्षिप्यते नायं हन्तीति । तथाच सूत्रं 'परात् तु तच्छ्रुतेः' (ब्र० २ ३ ४१) इति । 'अन्तः प्रविष्टः शास्ता जनानाम्', 'एष ह्येव साधु कर्म

कारयती'त्याद्या च श्रुतिरिति । अन्वयव्यवधानात् । हन्ता चेदात्मानं हन्तुं मन्यते हतश्च हतमात्मानमित्युपस्थितिलाघवेनान्वयार्जवे सम्भवति मन्यतिकर्मविनिमितोपस्थितिकल्पनायोगात् । उभयथा हन्तृत्वनिषेधस्यानतिप्रयोजनत्वेन हन्तव्यत्वनिषेधस्याप्यवश्यवाच्यत्वात् । अत एवात्मनो नित्यत्वेन हन्तव्यत्वाभाव एवोच्यत इति निरस्तम् । 'नायं हन्ति न हन्यत' इत्युभयवैफल्यात् । हन्ता हत इति चानुवादस्थं यथाप्राप्तसाम्पिण्डविषयमिति हन्ता हन्तुं हतश्च हतं मन्यमानौ न विजानीत इति न विप्रतिषिद्धम् । तन्निषेधस्य विशुद्धात्मविषयत्वात् ।

"य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥"

इति हि भगवानगायत् । नायं हन्तीति च नानन्यप्रयुक्तत्वनिषेधः सम्भवति, अप्रसक्तेः । साक्षात्कर्तृत्वं च स्वातन्त्र्यं प्रत्याख्येयामिति चाख्याम । 'कः केन रक्ष्यते' इत्यादि परहन्तृत्वादौ जन्तोरीश्वरायत्तत्वपरम्, अन्तर्यामिविषयत्वात् । प्रकृतं च विशुद्धात्मविषयमित्यनैकार्थ्यादनुदाहार्यम् ।

"नवद्वारे पुरे देही[2] नैव कुर्वन्न कारयन् ।"
"न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥
नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः ।"
"अनादित्वान्निर्गुणत्वात् परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय! न करोति न लिप्यते ॥
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥"

इत्यादि च विशुद्धात्मविषयमसङ्गाकर्तृत्वादिवचनमुदाहरणीयम् । तस्मादात्मनो ज्ञातृत्वमेष्टृत्वं कर्तृत्वमन्यद् वा यच्च किञ्चन धर्मत्वेनोत्प्रेक्ष्यते, तत् सर्वमेव न स्वधर्मिभावानापन्नपरोपाधिकं, दृश्यत्वात् । मनुष्यत्वादिवत् । न चाप्रयोजकता, स्वरूपेणैव दृश्यत्वे ज्ञातृत्वादेरात्मधर्मत्वासिद्धेः । तद्धर्मतया दृश्यत्वे

१ अयथा', २. हे' ख पाठ.

च तन्निरूपकतया दृगात्मनोऽपि दृश्यत्वापत्तावदृशित्वप्रसङ्गात् । व्याक्षिप्म चेद संविदः स्वगतभेदं निरस्यन्त. । दृश्यत्व च दृगात्मनः प्रागुदसीषदाम । ननु सर्वमेव दृश्यमात्मनो धर्म., तदुपादानत्वात् ।

"तस्मिल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन"

इत्यादिश्रुतेश्च । न, स्वरूपेण तद्धर्मकत्वानुपगमात् । अविद्याश्रयत्वमपि ह्यविद्ययैवेति वक्ष्यते । उपादानावस्थः पुनरात्मा मायोपाधिः सर्वदृश्यधर्मक उपेयत एव, तत्र तदबाधात् । तदेवम् —

अहङ्कारोत्तीर्णा विगतविषयाश्लेषकलुषा
दृशिः सत्तामात्रस्फुरणपरिशेषात्ममहिमा ।
गिरा दूरे तत्त्व किमपि परमात्मेति तमसः
परस्तादात्मा मे जगदपगिरन्ती विजयते ॥

स च न दृश्य इत्यव्यभिचारात् । सिद्धमव्यक्तादिविशेषान्त मिथ्याबाध्य[2] दृश्यत्वात् शुक्तिरूप्यादिवदिति । न चायमासुरवाद.,

"असत्यमप्रतिष्ठ ते जगदाहुरनीश्वरम्"

इति स्मरणादिति शङ्क्यम् । सदायतनतया सदात्मतया वा सति साधु सत्य, सज्जगत् । असत्य तद्विपरीतम् । अत एव शून्यावधिकमप्रतिष्ठमिति वदतामेवासुरत्वाभिप्रायात् ॥

---

### मिथ्यात्वे सूत्राविरोधः ।

ननु तदेव तत्रैव सदसत्त्वपर्यवसायि मिथ्यात्वं बाध्यत्व निराकारि सूत्रकृता । 'नैकस्मिन्नसम्भवात्' (ब्र० २. २. ३३) इति उपलभ्यमानस्यार्थस्याभावश्च सुगतोक्तो निरासि 'नाभाव उपलब्धे.' (ब्र० २. २. २८) इति, 'वैधर्म्याच्च न स्वप्नादिवत्' (ब्र० २. २. २९) इति च सूत्रितम् । सर्वमिथ्यात्वे च स्वप्नवैधर्म्यायोग इति ।

१. 'श्यत्वश्च', २. 'ध्य' ख पाठः

अत्रोच्यते — देशकालमानसम्बन्धार्हत्वमर्थक्रियासमर्थत्व वा सत्त्व, विपरीत चासत्त्वमनुपाधिकमेकस्मिन्निराचिकीर्षितम् । नान्यत्, तादृक्सत एव तद्देशकालनिषेधप्रतियोगित्वस्य बाध्यत्वस्याविरोधेन सम्भवात् । एवञ्च ख्यातिबाधौ न व्यवहितविषयौ कल्प्येयाताम् । किमेवमुक्त भवति । नैकत्र भावाभावौ विरोधेनासम्भवादिति । किमेव सति ख्यातिर्बाधो वा व्यवहितविषयः कल्प्यताम्, विरोधो वा समसत्ताकभावाभावविपयोऽवस्थाप्यताम् । नान्त्य. कल्प, वस्तु च मिथ्या चेति सत्तावैषम्ये सति भावाभावयोरविरोधः। अविरोधे च तयोरसमा सत्तेत्यन्योन्याश्रयात् । अपिचैवमविरोधे कथमनयोरसमा सत्ता । इतरेतर· स्वदेशकालनिषेधप्रतियोगित्वाविशेषात् । अपिचैवं प्रत्ययोऽपि न विरुध्येत, सामग्रीयौगपद्यात् । दोषस्य च विरोधिधीप्रतिबन्धकत्वादिति । नैवम् । यत्र यदा यस्य प्रतिपत्त्यनुबन्धिसत्त्वं, यत् स्वरूपावभासपरिपन्थिदोषाधीन, यत् स्वरूपानवबोधाधीन वा, तत्र तदा तस्य तन्निषेधप्रतियोगित्व मिथ्यात्वमिति वैशेष्यात् । एव तदनवबोधाधीनत्वानधीनत्वाभ्यामेव सत्ताभेदादविरोधेऽनन्योन्याश्रयात् । अत एव न प्रत्यययौगपद्यापत्ति· । अन्यतरस्यान्यतरानवबोधाधीनसत्त्वात् । किमनवबोधाधीनं कस्य सत्त्वमिति को निगम· । उभय चावबुध्यते । पौर्वापर्यं चातन्त्रमिति । अय तावद् हेतुत. स्वरूपत. कार्यतो वा यस्य विसवादः तस्येतरानवबोधाधीन सत्त्वमिति । 'नाभाव उपलब्धेः' (ब्र० २. २. २८) इति च देशादिसम्बन्धार्हमर्थक्रियासमर्थं वस्तुस्वरूपमपलपतः सुगतस्य दूषण, न तदभिलपतामस्माकम् । अन्यथा सत्ख्यातावन्यथाख्यातौ वा तत्रोपलभ्यमानस्य न नाभाव इति नाभाव सत्त्वादिति विपरिणेय सूत्रमापद्येत । स्वप्नवैधर्म्यं चोभयसत्यत्ववदुभयमिथ्यात्वेऽपि कथञ्चिन्नेयम् । यत्तु पुनः '**वैधर्म्यं बाधाबाधाविति ब्रूमः**' इति भाष्यम्, '**नैवं जागरितोपलब्धं वस्तु* कस्याञ्चिदवस्थायां बाध्यते**' इति च, तत् सत्युपलब्धरीति पूरयितव्यमिति ॥

---

१ 'ध', २ 'त्वाभ्या', ३. 'न', ४. 'त । सत्य' ख पाठ

* 'स्तम्भादिकं कस्याञ्चिदप्यवस्थायामि'ति मुद्रितभाष्ये दृश्यते ।

**भेदमानजातस्य प्रबलाभेदमानबाध्यत्वनिगमनम् ।**

तदेवमागमानुमानाद्युपपाद्ये भेदमिथ्यात्वे अविद्यादिदोषमूलत्वसम्भावनया शिथिलबल प्रत्यक्षादिभेदमानजातमपवार्जितनिरवशेपदोषशङ्काकलङ्कतया निरूढबलाय निर्विशेषात्मतत्त्वनिगमाय न वैरायितुमुत्सहते । किन्तु तेन बाध्यत एवेति ॥

*निगमशिरसामन्वादेशान्निरूढरसोदया
दधति यमिना पत्यु श्रीरामभद्रगुरोर्गिर ।
विनतजनताविद्यालक्ष्मीस्वयवरमङ्गले
सु(र)भिलदलन्मल्लीमाल्यौघदृष्टिविडम्बनाम् ॥

**तृतीयो भागः ।**

---

**शुभ भूयात् ।**

* अय श्लोक. क. पुस्तके न दृश्यते ।

## READY FOR SALE.

---

| | RS | AS | P |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Sri Rama Varma Mahârâjah. | 1 | 0 | 0 |

---

### Trivandrum Sanskrit Series.

| | RS | AS | P |
|---|---|---|---|
| No 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalilasukamuni | 1 | 0 | 0 |
| No 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni | 0 | 2 | 0 |
| No 3—नलाभ्युदय (Kâvya) by Vâmana Bhatta Bâna | 0 | 4 | 0 |
| No 4—शिवलीलार्णव (Kâvya) by Nilakantha Dîkshita | 2 | 0 | 0 |
| No 5—व्यक्तिविवेक (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No 6—दुर्घटवृत्ति (Vyâkarana) by Saranadeva | 2 | 0 | 0 |
| No 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvati | 2 | 4 | 0 |
| No 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa | 1 | 0 | 0 |
| No 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin | 0 | 8 | 0 |
| No 10—मातङ्गलीला (Gajalakshana) by Nilakantha | 0 | 8 | 0 |
| No 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 4 | 0 |
| No 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda | 0 | 8 | 0 |
| No 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 0 | 0 |

| | RS | AS | P |
|---|---|---|---|
| No 14—नीतिसार (Niti) by Kamandaka with the commentary of Sankarârya | 3 | 8 | 0 |
| No 15—स्वप्नवासवदत्तम् (Nataka) by Bhâsa (Second Edition) | 1 | 8 | 0 |
| No 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhasa | 1 | 8 | 0 |
| No 17—पञ्चरात्रम् Do Do | 1 | 0 | 0 |
| No 18—नारायणीयम् (Stuti) by Narayana Bhatta with the commentary of Desamangala Vârya | 4 | 0 | 0 |
| No 19—मानमेयोदय. (Mimamsa) by Nârayana Bhatta and Narayana Pandita | 1 | 4 | 0 |
| No 20—अविमारकम् (Nataka) by Bhâsa | 1 | 8 | 0 |
| No 21—बालचरितम् Do Do | 1 | 0 | 0 |
| No 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nataka) by Bhâsa | 1 | 8 | 0 |
| No 23—नानार्थार्णवसंक्षेप (Kosa) by Kesavaswamin (Part I 1st & 2nd Kândas) | 1 | 12 | 0 |
| No 24—जानकीपरिणय (Kâvya) by Chakrakavi | 1 | 0 | 0 |
| No 25—काणादसिद्धान्तचन्द्रिका (Nyaya) by Gangâdharasûri | 0 | 12 | 0 |
| No 26—अभिषेकनाटकम् (Nataka) by Bhasa | 0 | 12 | 0 |
| No 27—कुमारसम्भव (Kavya) by Kalidasa with the two commentaries Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I 1st & 2nd Sargas) | 1 | 12 | 0 |
| No 28—वैखानसधर्मप्रश्न (Dharmasutra) by Vikhanas | 0 | 8 | 0 |
| No 29—नानार्थार्णवसंक्षेप (Kosa) by Kesavaswâmin (Part II, 3rd Kanda) | 2 | 4 | 0 |
| No 30—वास्तुविद्या (Silpa) | 0 | 12 | 0 |
| No 31—नानार्थार्णवसंक्षेप (Kosa) by Kesavaswâmin (Part III 4th 5th & 6th Kanda) | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No 32—कुमारसम्भव· (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II, 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana | 0 | 8 | 0 |
| No 34—मणिदर्पण (शब्दपरिच्छेद) (Nyâya) by Râjachûdâmanimakhin | 1 | 4 | 0 |
| No 35—मणिसार (अनुमानखण्ड) (Nyâya) by Gopinâtha | 1 | 8 | 0 |
| No 36—कुमारसम्भव (Kâvya) by Kâlidâsa with the two commentaries, Prakasikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III, 6th, 7th & 8th Sargas) | 3 | 0 | 0 |
| No 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatîya Sarvânanda (Part I, 1st Kânda) | 2 | 0 | 0 |
| No 39—चारुदत्तम् (Nâtaka) by Bhâsa | 0 | 12 | 0 |
| No 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Sri Ruyyaka with the Alankârasarvaswa of Sri Mankhuka and its commentary by Samudrabandha | 2 | 8 | 0 |
| No 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Sri Sankara Bhagavat Pada | 0 | 4 | 0 |
| No 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa | 1 | 8 | 0 |
| No 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshirasvamin and Tîkasarvaswa of Vandyaghatiya Sarvananda (Part II, 2nd Kanda 1–6 Vargas) | 2 | 8 | |

RS. AS. P.

No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Sri Vedottama 0 4 0

No. 45—प्रपञ्चहृदयम् (Prapanchahridaya) 1 0 0

No. 46—परिभाषावृत्ति (Vyakarana) by Nilakantha Dikshita 0 8 0

No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Sri Krishnananda Saraswati (Part I) 1 12 0

No. 48— Do Do (Part II) 2 0 0

No. 49—गोलदीपिका (Jyotisha) by Parameswara 0 4 0

No. 50—रसार्णवसुधाकर (Alankara) by Singa Bhupala 3 0 0

No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshiraswamin and Tikâsarvaswa of Vandyaghatiya Sarvananda (Part III, 2nd Kanda 7–10 Vargas) 2 0 0

No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvaswa of Vandyaghatiya Sarvananda (Part IV 3rd Kanda) 1 8 0

No. 53—शाब्दनिर्णय (Vedânta) by Prakâsâtmayatindra 0 12 0

No. 54—स्फोटसिद्धिन्यायविचार (Vyâkarana) 0 4 0

No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Sri Mahendravikramavarman. 0 8 0

No. 56—मनुष्यालयचन्द्रिका (Silpa) 0 8 0

No. 57—रघुवीरचरितम् (Kavya) 1 4 0

| | | RS | AS | P |
|---|---|---|---|---|
| No. 58— | सिद्धान्तसिद्धाञ्जनम् (Vedanta) by Sri Krishnananda Saraswatî (Part III) | 2 | 0 | 0 |

***Apply to:—***

*The Agent for the sale of*
*Government Sanskrit Publications,*
*Trivandrum*